।१५। आमावास्यानि पूर्वेद्युः ।१६। ऐन्द्राग्नो वा ।१७। आग्नेयो मैत्रावरुणी च पयस्यामावास्यायाम् ।१८। ऋतेन था उत वां विष्णु ।१९। पुरा शंयोर्वाकादूर्ध्वं वानावाह्य वाजिनो यजति ।२०। उत्तमे प्रयाजे निगच्छन्ति यथार्थं च सूक्तवाके ।२१। वाजिनो देवा हविर्जोषयिष्यन्ते वर्धयिष्यन्ते महो ज्यायः करिष्यन्ते ।२२। शं नो भवन्तु वाजिनो वाजेवाज इत्यूर्ध्वज्ञुरनवानं यजति ।२३। वाजिनस्याग्ने वीहीत्यनुवषट्कारः ।२४। यजमानो ब्रह्मा होताध्वर्युराग्नीध्रश्च समुपहूय भक्षयन्ति ।२५। प्रथमो जघन्यश्च यजमानः ।२६।

यन्मे रेतः प्र धावति यद्वा सिक्तं प्र जायते ।

राज्ञा सोमेन तदयमस्मासु धारयामसि ॥

वाजो ऽसि वाजिनमसि वाजो मयि धेहीति भक्षमन्त्रः ।२७। ॥८॥

दूलादधस्य ।१। आग्नेय सरस्वत्यै च ।२। अग्नीषोमीयः सोपांशुयाजः सांनाय्यं चैन्द्रं पौर्णमास्याम् ।३। प्रतानि च दाक्षायणयाज्ञिकानि ।४। आग्नेयः सरस्वते च ।५। ऐन्द्राग्नो मैत्रावरुणी च पयस्यामावास्यायाम् ।६। समानं वाजिनम् ।७। ॥ ९ ॥

सार्वसेनियज्ञे ।१। उभयानि हवींष्येकस्यामिष्टौ ।२। पौर्णमासानि पूर्वाणि ।३। अर्चन्त्स्वाराज्यमग्ने अध्वरमित्युत्तरस्याग्नेयस्य ।४। नामावास्यां यजते ।५। पिण्डपितृयज्ञं तु करोति ।६। न शौनकयज्ञे शाकंप्रस्थाय्ये च विकारो होतुरस्ति ।७। ॥ १० ॥

सार्वसेनियज्ञेन वसिष्ठयज्ञो व्याख्यातः ।१। पूर्वाणि त्वामावास्यानि ।२। न पौर्णमासीं यजते ।३। इति दर्शपूर्णमासायनानि ।४। काम्यानि ।५। पाञ्चदश्यं च सामिधेनीनाम् ।६। आग्नेयाग्नावैष्णवौ ।७। पौर्णमा-

षोडिकारः ।८। सदा यजते ऽन्यच पर्वणः ।९। सुग्ययनमित्याचक्षते ।१०। आग्नेयैन्द्रो वैश्वदेवः ।११। अमावास्याविकारः ।१२। सदा यजते ऽन्यच पर्वणः ।१३। अदीक्षितः कृष्णाजिनं प्रतिमुञ्चते ।१४। तुरायणमित्याचक्षते ।१५। संवत्सरप्रयोगे च ।१६। ॥ ११ ॥

सौमी श्यामाकेष्टिः ।१। वैणुयवी च ।२। ऐन्द्राग्न आग्नेन्द्रो वा वैश्वदेवो द्यावापृथिवीयश्च व्रीहियवानाम् ।३। सद्दद्याज्यभागे ।४। इमं यज्ञं या ते धामानि दिवीति ।५। सौम्यस्य मधुपर्को दक्षिणा ।६। इयं वामस्य शुचिं नु ।७। आ घा ये सुकर्माणः सुरुचः ।८। मही द्यौरुर्वी पृथ्वी ।९। वैश्वदेवद्यावापृथिवीयौ चोपांशु ।१०। विराजौ स्विष्टकृतः ।११। वत्सः प्रथमजो दक्षिणा ।१२। समानतन्त्रा वा दर्शपूर्णमासाभ्याम् ।१३। दर्शपूर्णमासौ वा नवानाम् ।१४। अग्निहोत्रं वा यवाग्वा सायंप्रातः ।१५। अग्निहोत्रीं वा नवानादयित्वा तस्यै दुग्धेन सायंप्रातरग्निहोत्रं जुहुयात् ।१६। गार्हपत्ये वा स्थालीपाकं श्रपयित्वाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः स्वाहाकारेणाहवनीये जुहुयात् ।१७। ॥१२॥

फाल्गुन्यां पौर्णमास्यां प्रयोगश्चातुर्मास्यानाम् ।१। चैत्र्यां वा ।२। वैश्वानरीयपार्जन्येष्टिः पूर्वस्यां पौर्णमास्याम् ।३। पर्जन्याय यस्य व्रते ।४। उत्तरस्यां वैश्वदेवम् ।५। आग्नेयः ।६। सौम्यसाविचौ ।७। सारस्वतपौष्णौ ।८। मरुद्भ्यः स्वतवद्भ्यः ।९। वैश्वदेवी ।१०। द्यावापृथिवीयश्च ।११। हिरण्यपाणिमूतय उदीरय ।१२। पूषन्तव व्रते ।१३। इहेह व प्र चित्रम् ।१४। अग्निमन्थनीयायामग्नेषु हविःषु ।१५। पश्चाद्वेदेरवस्थायाग्नये मथ्यमानायेति संप्रेषितः ।१६। अभि त्वा

देव सवितः [17] । मही द्यौः [18] । त्वामग्ने पुष्करादिति च तिस्रः [19] । उत ब्रुवन्तु जन्तव इति जाताय [20] । आ यं हस्ते न खादिनमिति हस्तेन धार्यमाणाय [21] । उत्तरे प्रह्रियमाणाय [22] । अग्निनाग्निः समिध्यते [23] । त्वं ह्यग्ने अग्निना [24] । तं मर्जयन्तेत्य[25]ग्निमन्थनीयाः ।[26]१७। नव च प्रयाजाः ।[27]१८। चतुर्थोत्तमावन्तरेण चत्वारः ।[28]१९। दुरो अग्न आज्यस्य व्यन्तु [29] । उषासानक्ता अग्न आज्यस्य वीताम् [30] । दैव्या होतारा अग्न आज्यस्य वीताम् [31] । तिस्रो देवीरग्न आज्यस्य व्यन्तु ।[32]२०। सद्वन्तावाज्यभागौ ।[33]२१। सावित्रद्यावापृथिवीयौ चोपांशु ।[34]२२। विराजौ स्विष्टकृतः ।[35]२३। वत्सः प्रथमजो दक्षिणा ।[36]२४। नवानुयाजाः ।[37]२५। प्रथमद्वितीयौ तु षलन्तरेण ।[38]२६। देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तु [39] । देवी उषासानक्ता वसुवने वसुधेयस्य वीताम् [40] । देवी जोष्ट्री वसुवने वसुधेयस्य वीताम् [41] । देवी ऊर्जाहुती वसुवने वसुधेयस्य वीताम् [42] । देवा दैव्या होतारा वसुवने वसुधेयस्य वीताम् [43] । देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्तु ।[44]२७। समानं वाजिनम् ।[45]२८। संस्थितायां पौर्णमासम् ।[46]२९। मांसानशनं ब्रह्मचर्यं प्राङ्धः शेत ऋतुकाले वा जायामुपेयात्सत्यवदनं चान्तरालव्रतानि ।[47]३०। ॥१३॥

आषाढ्यां वरुणप्रघासाः फाल्गुनीप्रयोगस्य ।१। चैत्रीप्रयोगस्य श्रवणायाम् ।२। पौष्णान्तानि वैश्वदेविकानि ।३। ऐन्द्राग्नो वारुणी पयस्या मारुती कायश्च ।४। इमं मे वरुण तत्त्वा यामि ।५। मरुतो यद्ध यूयमस्मान् ।६। हिरण्यगर्भो यः प्राणत इति ।७। आहवनीयाद्याग्नी प्रणयन्ति ।८। प्र देवं देव्येति तिसृणामासीनः प्रथमाम् ।९।

उत्तरे अनुमंथन्।१०। इलायास्त्वेति धार्यमानयोरभियोः।११। अग्ने विश्वेभिः स्वनीक सीद होतर्नि होता त्वं दूतः।१२।इत्यग्निप्रणयनीयाः ।१३। यत्र चासीनः प्रथमामन्ववोचत्ततिस्तत्वोत्सृज्यते।१४। उत्तरस्यां वेदौ होतृकर्म।१५। उपांशु कायः ।१६। गोमिथुनौ दक्षिणा ।१७। अध्वर्युर्वेदं स्तृणाति ।१८। वारुण्या निष्कासेनावभृथमवैति यथा सोमे।१९।उरुं हि राजा शतं ते ।२०। समानमन्यद्वैश्वदेवेन ।२१। ॥१४॥

कार्त्तिक्यां साकमेधाः फाल्गुनीप्रयोगस्य ।१। आग्रहायण्यां चैत्रीप्रयोगस्य ।२। अग्नये ऽनीकवते पूर्वस्यां पौर्णमास्यामिष्टिः पूर्वाह्णे ।३।

अनीकैर्द्वेषो ऽर्दयाग्ने विश्वाभिरूतिभिः।
रयिं नो देहि जीवसे ॥ [4]

मैनानीकेन। । ४ [5] । मध्यन्दिने मरुद्भ्यः सांतपनेभ्यः । ५ [6] । सांतपना यो नो मरुतः । ६ [7] । सायं मरुद्भ्यो गृहमेधिभ्यः । ७ [8] । अग्निना रयिं गयस्फान इत्याज्यभागौ । ८ [9] । गृहमेधास आ गत प्र बुध्नाः वः । ९ [10] । त्वां चित्रश्रवस्तम यदाहितमिति स्विष्टकृतः । १० [11] । न निगदमाह । ११ [12] । न सामिधेनीरन्वाह । १२ [13] । आज्यभागप्रभृतीज्येशान्ता । १३ [14] । तस्य निष्कासं प्रातः पूर्णदर्व्यं कृत्वेष्टिं मरुद्भ्यः क्रीलिभ्यः । १४ [15] । क्रीलं वः पर्वतश्चित् । १५ [16] । महाहविषि । १६ [17] । ऐन्द्राग्नान्तानि वारुणप्रघासिकानि । १७ [18] । माहेन्द्रो वैश्वकर्मणश्च । १८ [19] । वाचस्पति या ते धामानि परमाणीति । १९ [20] । उपांशु वैश्वकर्मणः । २० [21] । एकयाग्निः प्रणीयते । २१ [22] । ऋषभो दक्षिणा । २२ [23] । न वाजिनं नावभृथो भवति । २३ [24] । समानमन्यद्वरुणप्रघासैः । २४ [25] । ॥१५॥

अपराह्णे पित्र्या त्रिहविरिष्टिः ।१। सोमाय पितृमते पितृभ्यो वा सोमवद्भ्यः पितृभ्यो बर्हिषद्भ्यः पितृभ्यो ऽग्निष्वात्तेभ्यः ।२। अग्नये कव्यवाहनः स्विष्टकृद्भवति ।३। त्वं सोम प्र चिकितः सोमो धेनुं त्वं सोम पितृभिरिति सोमस्य पितृमतः ।४। उदीरतामङ्गिरसो ये नः पूर्वे इति सोमवताम् ।५। उपहूता आहं पितॄन्बर्हिषद इति बर्हिषदाम् ।६। अव सृज ये चेहाग्निष्वात्ता इत्यग्निष्वात्तानाम् ।७। एकैका याज्या द्वेद्वे पूर्वे पुरोनुवाक्ये ।८। अर्धर्चेते नानाप्रणवे ।९। ये तातृपुस्त्वमग्न ईलित इत्यग्नेः कव्यवाहनस्य ।१०। प्राचीनावीतीत्येता देवता यजति ।११। निगमस्थानेषु चानुवर्तयति ।१२। पितृमन्तं परिहाप्य ।१३। यज्ञोपवीतीति जातूकर्ण्यः ।१४। संप्रैषेषु स्वधाशब्दे क्रियमाणे ये स्वधामहे स्वधा नम इति येयजामहवषट्कारयोः स्थाने ।१५। दक्षिणान्वाहार्यपचनात्परिश्रिते चरन्ति ।१६। अग्रेण वेदिं दक्षिणा तिष्ठति ।१७। न च बर्हिराक्रामति ।१८। उत्सर्गो जपानाम् ।१९। कर्माणि तूष्णीं जपमन्त्राणि ।२०। उपसदि चेत्याचार्याः ।२१। कर्म तु न्यायः ।२२। उशन्तस्त्वेत्येकां सामिधेनीं त्रिरनूच्य नार्षेयमाह ।२३। अपबर्हिषः प्रयाजानिष्ट्वा नो अग्ने सुकेतुना त्वं सोम महे भगमिति जीवनवन्तावाज्यभागौ ।२४। उपहूयेलां न प्राश्नन्ति ।२५। अवघ्राय भागान्प्राश्नन्ति ।२६। पितृभ्यो दत्ते ।२७। ॥१६॥

अया विष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणं मध्वो अग्रं स्वां यत्तनूं तन्वामैरयत ॥

इति जपन्त उत्तरेणान्वाहार्यपचनं गत्वा ।१। सुसंदृशं त्वा वयमघवन्मीमदन्तोपो षु शृणुहीत्याहवनीयमुपस्थाय ।२। मनो न्वा

ऊवामह इति दृचेन दक्षिणाग्निम् ।३। आ न एतु मनः पुनरिति भूयः ।४। अग्निं तं मन्य इति दृचेनाग्ने त्वं न इति च द्वैपदेन गार्हपत्यम् ।५। तच्चक्षुरित्यादित्यमुपस्थाय ।६। अपबर्हिषावनुयाजाविष्ट्वा ।७। न सूक्तवाके यजमानस्य नाम गृह्णाति ।८। शंय्वन्ता च ।९। त्र्यम्बकान्संस्थाप्य मैत्रश्चरुः ।१०। अदितये वा ।११। मित्रस्य चर्षणीधृतो महाँ आदित्यः ।१२। संस्थितायां पौर्णमासम् ।१३। ॥१७॥

शुनासीर्ये ।१। पौष्णान्तानि वैश्वदेविकानि ।२। शुनासीर्यो वायव्यं पयः सौर्यश्च ।३। शुनासीराविमां शुनं नः फालाः ।४। तव वायवृतस्पते ऽध्वर्यंवयक्ष्वांसः ।५। तरणिर्विश्वदर्शतो दिवो रुक्म इति ।६। उपांशु सौर्यः ।७। अश्वः श्वेतो दक्षिणा ।८। गौर्वा ।९। सीरं वा द्वादशायोगम् ।१०। न वाजिनम् ।११। समानमन्यद्वैश्वदेवेन ।१२। पौर्णमासं त्वमध्यमाने ।१३।

इन्द्रश्च नः शुनासीराविमं यज्ञं मिमिक्षताम् ।
गर्भान्धत्तं स्वस्तये ॥[14]
ययोरिदं [विश्वं] भुवनमा विवेश ययोरानन्दो निहितो महश्च ।
शुनासीरावृतुभिः संविदाना इन्द्रवन्ता हविरिदं जुषेथाम् ॥[15] ।१४।
इन्द्राय शुनासीराय स्रुचा जुहुतना हविः ।
जुषतां प्रति मेधिरः ॥[16]
प्र हव्यानि घृतवन्त्यस्मै हर्यश्वाय भरता सजोषाः ।
इन्द्र ऋभुभिर्ब्रह्मणा संविदानः शुनासीरी हविरिदं जुषस्व ॥[17] ।१५।
शुनं हुवेमाग्यायन्तः ।[18] १६। माकमेधैरिष्ट्वान्वहं शुनासीर्यम् ।[19] १७।
माघ्यां वा पौर्णमास्याम् ।[20] १८। सोमेनोत्सर्गः पशुनेष्ट्या वा ।[21] १९।

पञ्च वर्षेषु पूर्वेद्युः शुनासीर्यमपरेद्युर्वैश्वदेवम् ।[22] ।२०। ॥१८॥

विध्यपराधे प्रायश्चित्तम् ।१। अर्थलोपे प्रतिनिधिः ।२। भूर्भुवः स्वः स्वाहा ।

अयाश्चाग्ने ऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि ।
अयासा मनसा हृतो ऽयाः सन्हव्यमूहिषे ।
अया नः कृणुहि भेषजं । स्वाहा ॥

इति प्रायश्चित्ताहुती सर्वेषु दोषेषु ।३। आहवनीयः सर्वाहुतीनाम् ।४। जुह्वश्च पात्रम् ।५। चतुर्गृहीतं प्रायश्चित्तेषु ।६। अनन्तरं दोषात्प्रायश्चित्तं न ह्यनिर्हृते दोषे प्रवृत्तिरुत्तरस्यास्ति ।७। प्रत्यक्षविहितं चैकेषु दोषेषु प्रायश्चित्तं तत्रोभे कुर्यात्सर्वप्रायश्चित्तं चाधिकारिकं च ।८। अनुद्धृतं चेदाहवनीयमभ्यस्तमियादङ्गविदा ब्राह्मणेनोद्धरणं । जातरूपं च कुशे प्रवध्यायतो हरन्ति । रजतमभ्युदिते । वरो दक्षिणा ।९। आहवनीये ऽनुगते गार्हपत्यादुद्धरणमग्नये चेष्टिर्ज्योतिष्मते ।१०। उदग्ने शुचयो वि ज्योतिषा ।११। गार्हपत्ये ऽनुगते पूर्वमध्वमायाहवनीयमन्यं प्रणीय जुहुयात् ।१२। समारोह्य वोदङ्कुदवस्येत् ।१३। उभयोरनुगतयोर्गार्हपत्योल्मुकादुत्तरारण्या मन्थनम् ।१४। उल्मुके ऽविद्यमाने ऽरणी भस्मना संस्पृश्याग्नये च तपस्वते जनद्वते पावकवत इष्टिः ।१५।

आ याहि तपसा जनेष्वाग्ने पावको अर्चिषा ।
उपेमां सुष्टुतिं मम ॥[16]
आ नो याहि तपसा जनेष्वाग्ने पावक दीद्यत् ।
हव्या देवेषु नो दधत् ॥ ।[17]१६।

इत्यभ्युदितयोरस्तमितयोर्वान्येन वा नष्टयोः कारणेनाग्न्याधेये-
नोत्पादयेत् । 18 १७। ॥१८॥

उपसृष्टा चेदग्निहोत्री वाश्येत सूयवसादिति यवमुष्टिं प्रयच्छेत् ।१।
उपविशेच्चेत ।

यस्माद्भीषा निषीदसि ततो नो अभयं कृधि ।
प्रजाभ्यः सर्वाभ्यो मृळ नमो रुद्राय मीळ्हुषे ॥

इत्यार्द्रदण्डेनोत्थाप्य

उदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् ।
इन्द्राय कृण्वती भागं मित्राय वरुणाय च ॥

इत्यनुमन्त्रयेत ।२। द्वेष्याय वा दद्यात् ।३। हविषि स्कन्ने ऽभ्युक्षाय वा

ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा ।
या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ ॥

इत्यद्भिरुपनिनीयास्कानधित प्राजनि । दिवं देवांस्तृतीयं यज्ञो ऽगा-
त्ततो मा द्रविणमष्टन्तरिक्षं पितॄंस्तृतीयं यज्ञो ऽगात्ततो मा द्रवि-
णमष्टु पृथिवीं मनुष्यांस्तृतीयं यज्ञो ऽगात्ततो मा द्रविणमष्ट्वित्यनु-
मन्त्रयेत ।४। यद्ब्राह्मणो जुगुप्सेन्न भक्षयेदेतद्दुष्टस्य लक्षणम् ।५।
तस्यापः प्रतिपत् ।६। शेषे विद्यमाने तेन समापनम् ।७। शेषाभावे
ऽन्यदुत्पादयेत् ।८। तस्मिन्द्रव्ये ऽविद्यमाने यत्सामान्यतमं मन्येत
तत्प्रतिनिदध्यात् ।९। एष प्रतिनिधीनां धर्मः ।१०। अविकारश्च
मन्त्राणाम् ।११। अप्रत्तदैवते दुष्टे नाष्टिरस्ति शेषस्यान्यद्धविः
संस्कृत्य प्रयच्छेद्देवतायै ।१२। नाष्टिः प्रत्तदोषे ऽपि लुप्यते
स्विष्टकृदिडभक्षाश्च ।१३। आज्येन परम् ।१४। अन्यासु देवता-

खिष्टासु दुष्टेन वा शेषवति तन्त्रे प्रदानमावर्तते ।१५। सर्वेष्टिरद्वेषे ।१६। क्रतस्थानावृत्तिर्गुणलोपे संनिपातप्रधानत्वात् ।१७। मन्त्रं नानुजपेत् ।१८। अनुजपेदिति जातूकर्ण्यः ।१९। अन्याभ्यो गृहीते ऽन्यासु वावाहितासु चोदिताभ्यः प्रयच्छेदाज्येनावाहिता यजेत् ।२०। ॥२०॥

इष्टिपशुबन्धेषु सोमे च प्रायश्चित्तं ब्रह्मा जुहोति ।१। ऋग्वेदे चेद्दोषः स्याद्भूः स्वाहेति गार्हपत्ये ।२। यजुर्वेदे चेद्भुवः स्वाहेत्यन्वाहार्यपचने ।३। सोमे त्वाग्नीध्रीये ।४। सामवेदे चेत्स्वः स्वाहेत्याहवनीये ।५। भूर्भुवः स्वः स्वाहेत्यज्ञायमाने दोषे ।६। अनुपस्थाय प्रसर्गे प्रतिदिशमुपस्थानम् ।७। उपस्थायाप्रसर्गे यथा प्रोष्य ।८। समारोह्याप्रसर्गे मन्थनम् ।९। नारण्योरस्त्युपस्थानम् ।१०। नाहोमेनानिष्ट्या वाग्नीनुत्सृजेत् ।११। प्रायश्चित्तं तु कालातीतानि कर्माणि प्रतिनिदध्यात्प्रतिनिदध्यात् ।१२। ॥२१॥

इति शाङ्खायनश्रौतसूत्रे तृतीयो ऽध्यायः समाप्तः ।

# ओम् ॥



पत्नीयजमानौ मत्यम् ।१। अश्नीयातां प्राग्वत्सापाकरणात् ।२। यदन्यन्मांसलवणमिथुनमाषेभ्यो येन च द्रव्येण यक्ष्यमाणः स्यात् ।३। ॥१॥

अग्नीनन्वादधातीष्टिपशुबन्धेषु पूर्वेद्युः ।१। आहवनीये महाव्याहृत्योत्तमया ।२। प्रथमया गार्हपत्ये ।३। दक्षिणाग्नौ मध्यमया ।४। देहे च तूष्णीम् ।५। आहवनीये दशमीं समस्ताभिः ।६। महाव्याहृतीनां वा स्थाने चतस्रो विहव्यस्यानुपूर्व्येण ।७। उपस्थानं च शेषेण ।८। अप नः शोशुचदघमिति सप्ताग्ने नय यस्त्वा हृदा त्वं नो अग्ने अधरादिति वा दशभिः ।९। प्राग्नये वाचमिमं स्तोममिति चोपस्थानं सूक्ताभ्याम् ।१०। तूष्णीं प्रागहीयम् ।११। महाव्याहृतिभिः पैङ्ग्यम् ।१२। कौषीतकं विहव्येन ।१३। आरुणमुत्तमम् ।१४। ॥२॥

पिण्डपितृयज्ञोऽपराह्णेऽमावास्यायाम् ।१। दक्षिणाग्नेः पुरस्ताच्छूर्पं स्थालीं स्फ्यं पात्रीमुलूखलमुसले च संसाद्य ।२। गार्हपत्यस्य पश्चाद्दक्षिणाग्रेषु कुशेषु स्फ्यं निधाय ।३। उपरिष्टाद्व्रीहीन्पात्र्याम् ।४। पुरस्ताच्छूर्पं स्थालीम् ।५। आच्य सव्यं जानु नीचा मुष्टिना व्रीहीन् गृह्णाति पितॄन्ध्यायन् ।६। यथाधोविलाश्टृतः स स्यात्[7]पत्न्या सकृत्फलीकृतान्[8]दक्षिणाग्नौ श्रपयित्वा[9]भिघार्य[10] प्रत्यक्समुद्वास्या[11]वमथ्य परिसमुह्य परिस्तीर्य पर्युक्ष्य[12] दक्षिणं जान्वाच्य[13] यज्ञोपवीती प्राङासीनो मेक्षणेन जुहोति । [14]८ । * ॥३॥

---

* Comm पत्न्या सकृत्फलीकृतानित्यारभ्य जुहोतीत्यन्तं सूत्रं तथापि ग्रन्थ-यामानि अष्टधा व्याख्यायन्ते ।

अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा यमायाङ्गिरस्वते पितृमते स्वाहेति ।१। मेक्षणमनुप्रहृत्य[2] दक्षिणा दक्षिणाग्नेरपहता असुरा रक्षांसि वेदिषद इति स्फ्येनोन्मृज्या[3]भ्युक्ष्य[4]

ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति।

परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्र णुदात्यस्मात् ॥

इत्युल्मुकमुन्मृष्टस्य दक्षिणार्धे निधाय[5] मूले कुशान्सकृल्लूनानुन्मृष्टे निधाया[6]मावनेनिक्ष्व ये च त्वामत्रान्विति पितुर्नामादिश्य कुशेष्वपो निषिञ्चत्यवाचीनपाणिना*।[7] २। एवं दक्षिणतः पितामहस्य।[8] ३। प्रपितामहस्य च।[9] ४। असावेतत्ते ये च त्वामत्रान्विति पिण्डान्यथावनेजितं निधाय।[10] ५। उभावेकस्मिन्पितृभेदे।[11] ६। न जीवपितुरस्ति।[12] ७। न जीवान्तर्हिताय।[13] ८। येभ्यो वा पिता तेभ्यः पुत्रः।[14] ९। होमान्तं वा।[15] १०।अत्र पितरो मादयध्वं यथाभागं पितर आवृषायध्वमिति।[16] ११। उदङ्पर्यावृत्य।[17] १२। चिरा तमनादामित्वा।[18] १३। अमीमदन्त पितरो यथाभागमवीवृषतेति प्रतिपर्यावृत्य।[19] १४। तथैवावनेज्य।[20] १५। ॥४॥

नमो वः पितरो जीवाय नमो वः पितरः शोषाय। नमो वः पितरो घोराय नमो वः पितरो रसाय। नमो वः पितरो बलाय नमो वः पितरो मृत्यवे। नमो व पितरो मन्यवे नमो व. पितरः स्वधायै। नमो वः पितरः पितरो नमो वः। ये ऽत्र पितरः पितरः स्थ यूयं तेषां श्रेष्ठा भूयास्थ। य इह पितरो मनुष्या वयं तेषां श्रेष्ठा भूयास्म। या अत्र पितरः स्वधा युष्माकं सा। य इह पितर

* Comm मेक्षणमनुप्रहृत्य। इत्यारभ्यावाचीनपाणिनेति सूत्रम। अथवा, प्रतिपत्तिरावबाधम्।

एधतुरस्माकं स। स्टहान्नः पितरो दत्तेति ।१। एतद्वः पितरो वासो वर्ध्म पितर इति त्रीणि सूचाण्युपन्यस्य ।२। ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्। स्वधा स्थ तर्पयत मः पितॄनित्युदकशेषं निनीय ।३। अवघ्राय पिण्डान् ।४। अवधाय प्राश्नीयात् ।५। ब्राह्मणाय वा दद्यात् ।६। अपो वाभ्यवहरेत् ।७। मध्यमपिण्डं पत्नी पुत्रकामा प्राश्नीयात्।

आ धत्त पितरो गर्भं कुमारं पुष्करस्रजम्।
यथेह पुरुषो ऽसत्॥

इति ।८। उल्मुकमग्नौ कृत्वा ।९। सकृदाच्छिन्नाननुप्रहृत्य ।१०। अग्निहोत्रं यवाग्वैव सायंप्रातः ।११। स्वयंहोमश्च पर्वणि ।१२। एतेनैव धर्मेणाहिताग्नेः पिण्डपितृयज्ञः[13] क्रियेत ।[14]१३।॥५॥

दक्षिणतोन्यायं ब्रह्मकर्म ।१। पश्चात्तु पित्र्यायाम् ।२। यजमाननिमित्तो विपर्ययः ।३। अग्रेण यजमानमासनम् ।४। समानं होत्रा तृणनिरसनम् ।५। तयोपवेशनम् ।६। कर्मादौ देशग्रहणे च ।७। प्रागग्रता विकारः ।८। बृहस्पतिर्ब्रह्मा स यज्ञं पातु स यज्ञपतिं स मां पातु बृहस्पतिर्देवो ब्रह्माहं मानुषो भूर्भुवः स्वरोमित्युपविश्य ।९। साद्यं च सर्वकर्मणाम् ।१०। मन्त्रवत्तु वाग्यमनम् ।११। सर्वासु गतिषु यथा प्रजन्यन्यथा ततः प्रत्यायन्ति ।१२। अनुसमेत्यग्नौ प्रणीयमाने ।१३। सहैषोनोपवेशनम् ।१४। अथो ब्रह्मणो ऽन्याधेये ।१५। सर्वेषां वा ।१६। कर्मप्रस्तावायामन्त्रित ओमित्युक्त्वा यथाकर्म प्रसौति ।१७। ॥६॥

प्रणीताकाले वाग्यमनम् ।१। हविष्कृता विसर्गः ।२। इष्टे च स्विष्ट-

कृत्यानुयाजप्रसवेन विसर्गः ।३। मित्रस्य त्वा चक्षुषा प्रतीक्ष इति प्राशित्रं प्रतीक्ष्य ।४। देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति प्रतिगृह्य ।५। पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ इति प्राग्दण्डं स्थण्डिले निधाय ।६। उपकनिष्ठिकयाङ्गुष्ठेन च प्राशित्रं गृहीत्वा ।७। अग्नेष्ट्वास्येन प्राश्नामीति प्राश्याखादन् ।८। शान्तिरसीत्याचम्य ।९। प्राणान्संमृशति ।१०। प्राणपा असि प्राणं मे पाहीति नासिके मुखं च ।११। चक्षुष्पा असि चक्षुर्मे पाहीति चक्षुषी ।१२। श्रोत्रपा असि श्रोत्रं मे पाहीति श्रोत्रे ।१३। इन्द्रस्य त्वा जठरे सादयामीति नाभिम् ।१४। को ऽदात्कस्मा अदात्कामो ऽदात्कामायादात्। कामो दाता कामः प्रतिग्रहीता कामैतत्त इत्यन्वाहार्यं प्रतिगृह्य ।१५। ब्रह्मन्प्रस्थास्यामीत्युक्तः ।१६। देव सवितरेतत्ते यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिं तेन मामव देवेन सवित्रा प्रसूत इति जपित्वो प्रतिष्ठेति प्रसौति ।१७। प्रणीतासु विमुक्तासूत्सर्जनं ब्रह्मणः ।१८। प्राशनं ब्रह्मभागस्य ।१९। ॥७॥

अदब्धेन त्वा चक्षुषावपश्यामि रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायाग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्नेधाम्ने मे भव यजुषेयजुष इत्याज्यमवेक्षते पत्नी ।१। तेजो ऽसि शुक्रमस्यमृतमसि वैश्वदेवमसीत्यासन्नं वेदौ यजमानः ।२। ध्रुवा असदन्नृतस्य योनौ सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिमित्यासन्नानि हवींष्यभिमृश्य ।३। * पाहि मां यज्ञन्यमित्यात्मानम् ।४। वृष्टिरसि पाप्मानं मे

* See the following annotation

वृश्च विध्यामि विध्य मे पाप्मानमित्याचम्य ।[5]२। अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । इदमहमनृतात्सत्यमुपैमीत्याहवनीये समिधमाधाय वाचं यच्छति * ।[6]३। अग्ने वायो विद्युच्चन्द्रमः सलोकतां वो ऽशीयेति ध्यायात् ।[7]४। यत्कामो वा स्यात् ।[8]५। अनुपदस्यमन्नाद्यमाप्नवानीत्याकाशं समुद्रं वा ।[9]६। ॥८॥

मयीदमिन्द्र इन्द्रियं दधात्वस्मान्रायो मघवानः सचन्ताम् ।
अस्माकं सन्त्वाशिषः सत्या नः सन्त्वाशिषः ॥

इतीन्ळायामुपह्वयमानायाम् ।१। अथ पिन्वस्व प्राणं मे पाहि प्रजां मे पाहि पशून्मे पाहि ब्रह्म मे धुक्ष्व क्षत्रं मे धुक्ष्व विशो मे धुक्ष्व दिशां क्लृप्तिरसि दिशो मे कल्पन्तां कल्पन्तां मे दिशस्तासु क्लृप्तासु राध्यासम् । अत्र पितरो मादयध्वं यथाभागं पितर आवृषायध्वमिति बर्हिषदं पुरोळाशमभिमृश्य ।२। अमीमदन्त पितरो यथाभागमवीवृषन्तेति प्रत्यवधाय ।३। प्रजापतेर्भागो ऽस्यूर्जस्वान्पयस्वानक्षितिरसि मा मे क्षेष्ठा अमुत्रामुष्मिंल्लोक इह चेत्यन्वाहार्यमभिमृश्य ।४। अनुयाजेष्विष्टेषु व्यूहति स्रुचावग्नेरग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामीत्युत्तानेन दक्षिणेन जुहूं प्राचीमग्निरग्नीषोमौ तमपनुदन्तु यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीति नीचा सव्येनोपभृतं प्रतीचीम् ।५। यथादेवतमन्यत्र ।६। अनिष्टे गृहपतौ गार्हपत्ये स्रुवेण जुहोति ।७। ॥९॥

यं वां देवा अकल्पयन्नूर्जो भागं शतक्रतू ।
इदं वां तेन प्रीणामि तस्य तृम्पतमहाहाऽहह स्वाहा

---

* Comm यच्छतीति स्वाकः। यच्छत्सूदन्ते। अथवनिमाहरण।

गन्धर्वाभ्यां नारीष्टाभ्यामहोरात्रेभ्यां स्वाहा। अग्ने पृथिव्या अधिपते वायो ऽन्तरिक्षस्याधिपते सवितः प्रसवानामधिपते सूर्य नक्षत्राणामधिपते सोमौषधीनामधिपते त्वष्टः समिधां रूपाणामधिपते मित्र सत्यानामधिपते वरुण धर्माणामधिपत इन्द्र ज्येष्ठानामधिपते प्रजापते प्रजानामधिपते देवा देवेषु पराक्रमध्वम् ।१। प्रथमा द्वितीयेषु पराक्रमध्वमित्येवमेकोत्तरमैकादशभ्यः ।२। विश्वे देवास्त्रयस्त्रिंशास्त्रिरेकादशिन उत्तरोत्तरवर्त्मान उत्तरसत्वानो विश्वे वैश्वानरा विश्वे विश्वमहस इह मावतास्मिन्ब्रह्मण्यस्मिन्क्षत्रे ऽस्मिन्कर्मण्यस्यामाशिष्यस्यां प्रतिष्ठायामस्यां देवहूत्यामयं मे कामः समृध्यतां स्वाहेति यत्कामो भवति ।३। प्रजापत इति चतुर्थी ।४। ॥१०॥

आ प्यायतां ध्रुवा हविषा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यो।
सूर्याया ऊधो ऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्॥

इत्याप्याययति ध्रुवाम् ।१। समिष्टयजुर्हूयमानमन्वारभते ।२। सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितिरसि मा मे क्षेष्ठा अमुत्रा अमुष्मिंल्लोक इह चेति पूर्णपात्रमभिमृश्य दिशो व्युदुक्षति ।३। प्राच्या दिशा सह देवा ऋत्विजो मार्जयन्ताम् ।4। दक्षिणया दिशा सह मासाः पितरो मार्जयन्ताम् ।5। प्रतीच्या दिशा सह गृहाः पशवो मार्जयन्ताम् ।6। उदीच्या दिशा सहाप ओषधयो वनस्पतयो मार्जयन्ताम् ।7। ऊर्ध्वया दिशा सह यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तामिति ।8। ।४। सकृत्सकृन्मन्त्रेण द्विर्द्विस्तूष्णीम् ।9। ।५। आपोहिष्ठीयाभिस्तिसृभिरभिमृश्य ।10। अच्छायं वो मरुत इति... प्राचीनिनीयोदीचीर्वा ।11।

समुद्रं वः प्र हिणोमि स्वां योनिमभि गच्छत ।
अरिष्टा अस्माकं वीरा मा परा सेचि नो धनम् ॥
इत्यभिमन्त्र्य[12] । अनोदेवीयाभिषुतस्त्रभिरपो ऽभिहृत्य[13] । समिन्द्र णः
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन ।
त्वष्टा सुदत्रो वि दधातु रायः
इति प्राणान्[14] ।
अनु नो मार्ष्टु तन्वो यद्विलिष्टम् ॥
इति मुखं विमृज्य[15] ॥ ११ ॥

विष्णुक्रमान्क्रमते * । [16]६ । दक्षिणाद्वेदेः श्रोणिदेशादाहवनीयात् ।१। दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा ततस्तमनु व्यक्रमि ततो निर्भक्तः स यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यभ्युद्धृत्य दक्षिणं पादं हीनतरं सव्यम् ।२। अन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसेति द्वितीयम् ।३। पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण छन्दसेति तृतीयम् ।४। दिक्षु विष्णुर्व्यक्रंस्तानुष्टुभेन छन्दसेति तिर्यग्विक्रामति ।५। समान उदर्कः ।६। अगन्म स्वरिति प्राङीक्षते ।७। सं ज्योतिषाभूमेत्याहवनीयम् ।८। समहं प्रजया सं मया प्रजा समहं रायस्पोषेण सं मया रायस्पोषो वसुर्यज्ञो वसीयान्भूयासमिति प्राङेत्य ।९। स्वयंभूरसि श्रेष्ठो रश्मि-र्रायुर्दा अस्यायुर्मे देहि वर्चोदा असि वर्चो मे देहि तनूपा असि तन्वं मे पाहीदमहमाभ्यो दिग्भ्यो ऽस्यै दिवो ऽस्मादन्तरिक्षादस्मा-दन्नाद्यादस्यै प्रतिष्ठायै द्विषन्तं भ्रातृव्यं निर्भजामि निर्भक्तो द्विष-

* Comm. चापोहिष्ठीयाभिस्तिसृभिरभिहृत्य । विष्णुक्रमान् क्रमत इत्येवमन्तं सूत्रं । एवमन्यानि सूत्राणि व्याख्यायन्ते ।

न्भ्राहव्य इत्यादित्यमुपस्थाय ।[10] * ऐन्द्रीमावृतमावर्त आदित्यस्यावृत-मन्वावर्त इति दक्षिणं बाहुमन्वावृत्य ।[11] मध्यावृदेत्य गार्हपत्यम् ।[12] अग्ने गृहपते सुगृहपतिरहं त्वयाग्ने गृहपतिना भूयासं सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूयाः ।

अस्थूरि नो गार्हपत्यानि सन्तु ।

शतं हिमा मह्यमभुय्यादिति पुत्रनामान्यभिव्याहृत्य ।[13] भूर्भुव स्व. स मा कामेन गमयेत्यस्याङ्गारमुपस्पृश्य ।[14]

यज्ञो बभूव स आ बभूव स प्र जज्ञे स उ वावृधे पुनः ।

स देवानामधिपतिर्बभूव सो ऽस्मानधिपतीन्कृणोतु ॥

इति जपित्वा ।[15] तथैवाचम्य ।[16] अग्ने व्रतपते व्रतमचारिषं तदशकं तेनाराधं य एवास्मि सो ऽस्मीत्याहवनीये समिधमाधाय ।[17] विसृज्य वाचं ।[18] ॥१२॥

यो नो दूरे देष्टि यो नो अन्ति समानो निष्ट्यो अरणश्चिदग्ने ।

इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचन ॥

इत्याहवनीयस्य विद्यामाण्युपसमस्य ।[19] गोमाँ अग्न इति तृचं जपति ।[20] ।१३।

उदयं तचक्षुः संदृशस्ते मा च्छित्सि यत्ते तपस्तस्मै ते मा वृक्षीत्यादित्यमुपस्थाय ।[1] † तथैवावृत्य ।[2] मध्यावृदुपविश्य ।[3]

इदं हविः प्रजननं मे अस्तु दशवीरं सर्वगणं स्वस्तये ।

आत्मसनि प्रजासनिभयसनि पशुसनि लोकसनि ।

अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त ॥

* Comm आदित्यमुपस्थाय । जपतीति इत्यच्छेद । न्यहमामि यवमो आप्यायस्व ।

† Comm प्रजामिच्छाम इति इत्यान ।

इति पयोभक्षं प्रजातिकामः ।१[4]। दधिक्राव्णो अकारिषमिति वा संबुभूषन्दधिभक्षम् ।२[5]। सं यज्ञपतिराशिषेति यजमानभागं प्राश्नाति ।३[6]। समिष्टयजुषा सह प्रक्रमति जुहोति ।४[7]। ॥१३॥

जीवतः कर्माणि ।१। विसमाप्ते चेदभिप्रेयादारणान्तमेकाहेषु नास्ति तस्य समापनम् ।२। आहवनीये सर्वाणि हवींष्यनुप्रहृत्य ।३। संहार्य रोमनखानि प्रेतस्य ।४। आप्लुत्यालंकृत्य ।५। दक्षिणस्यां दिशि दक्षिणाप्रवणे देशे दक्षिणप्राक्प्रवणे [न] वा ।६। अपेत वीतेति पलाशशाखया विमृज्य ।७। स्फ्येनोन्मृज्याभ्युक्ष्य ।८। प्राग्दक्षिणाचीं चितिं कृत्वा ।९। पुरस्तादाहवनीयं पश्चान्निधाय गार्हपत्यं दक्षिणतो दक्षिणाग्निम् ।१०। अन्तरेण गार्हपत्यं दक्षिणाग्निं च हृत्वा ।११। उत्तानं चितौ निपात्य ।१२। दक्षिणत. पश्चाद्वा गामनुस्तरणीमजां वा रोहिणीं दक्षिणामुखीं प्रोह्य ।१३। जीवन्त्याः संस्थायां वा वृक्कौ पृष्ठत उद्धृत्य ।१४। अन्वाहार्यपचने कवोष्णौ कृत्वाति द्रवेत्यृग्भ्यां पाण्योराधाय ।१५। प्राणायतनेषु हिरण्यशकलान्कृत्वा ।१६। अग्नेर्वर्मेति वपया मुखं प्रच्छाद्य ।१७। दक्षिणे पाणौ जुहूम् ।१८। उपभृतं सव्ये ।१९। ध्रुवामुरसि ।२०। अग्निहोत्रहवणीं कण्ठे ।२१। स्रुवौ नासिकयोः ।२२। प्राशित्रहरणं दक्षिणे कर्णे ।२३। प्रणीताप्रणयनं सव्ये ।२४। शिरसि कपालानि ।२५। अप्सु ग्रावाणः ।२६। उदरे समवत्तधानीम् ।२७। पार्श्वयोः पात्र्यौ ।२८। स्फ्यं दक्षिणे पार्श्वे ।२९। कृष्णाजिनं सव्ये ।३०। उपस्थे अरणी ।३१। ऊर्वोरष्ठीवतोश्चोलूखलमुसले ।३२। पादयोः शूर्पशकटे ।३३। पत्तो ऽग्निहोत्रपात्राणि ।३४। तानि घृतेन पृषदाज्येन च पूरयित्वा ।३५। अयं वै

त्वत्त्वमस्मादयं ते योनिस्त्वमस्य योनिः । जातवेदो वहस्वैनं सुकृतां यत्र लोकः । अयं वै त्वामजनयदयं त्वदधिजायतामसौ स्वाहेत्युपोहन्त्यग्निभिः ।२६। ॥१४॥

नैनमग्न इति संप्रदीप्ते दश जपित्वा सव्यावृतोऽनवेक्षमाणाः प्रागुदञ्चः प्रक्रामन्ति ।१। मृत्योः पदमित्यनुमन्त्रयते द्वाभ्याम् ।२। आपो हि ष्ठा यना च सोमेत्युदकं स्पृशन्ति सूक्ताभ्यामनभिमज्जन्तोऽसंधावमानाः ।३। अमावेतत्त इत्येकमुदकाञ्जलिं प्रदाय ।[4] * आपो अस्मानित्युत्क्रम्य ।[5] अहतं वासः परिधाय ।[6] तच्चक्षुरित्यादित्यमुपस्थाय ।[7] कनिष्ठपूर्वाः प्रत्यायन्ति ।[8]४। उदपात्रे दूर्वायवसर्षपाण्योप्यार्द्रे गोमये निधायाश्मन्वतीत्यभ्यक्रामन्नश्मानमग्निमुदपात्रं च संस्पृशन्ति ।[9]५। अथःशय्या हविष्यभक्षता प्रत्यूहनं च कर्मणां वैतानवर्जमेकरात्रं त्रिरात्रं नवरात्रं त्राऽ वा संचयनाद्व्रतानि ।[10]६। नाघाहानि वर्धयेयुरिति ह स्माह कौषीतकिः ।[11]७। अपरपक्षे संचित्यायुजासु रात्रिषु ।[12] † यं त्वमग्न इति द्वाभ्यां सक्षीरेणोदकेनास्थीनि निर्वाप्य ।[13] पुराणे कुम्भे शरीराण्योप्य ।[14] उत्ते स्तभ्नामीति लोष्टेनापिधाय ।[15] उच्छ्वञ्चस्वेति खाते निखाय ।[16] उच्छ्वञ्चमानेति परिमिते ऽवधाय ।[17] अरण्ये निखनन्ति ।[18]८। शरीरेष्वदृश्यमानेषु त्रीणि षष्टिशतानि पलाशवृन्तानि ।[19]९। तेषामावापस्थानम् ।१०। चत्वारिंशच्छिरसि ।[20]११। ग्रीवायां दश ।[21]१२। अंसाभ्यंसयोर्बाह्वोः शतम् ।[22]१३। उरसि त्रिंशत् ।[23]१४। जठरे विंशति. ।[24]१५। वङ्क्षणयोः ।[25]१६। शिश्ने चत्वारि ।[26]१७। ऊर्वोः

* Comm प्रदायन्तीति सूत्रच्छेदः । [illegible]।

† अरण्ये निखनन्तीति सूत्रच्छेदः ।

शतम । १८ [27]। त्रिंशज्जानुजङ्घाष्ठीवतोः । १९ [28]। पादाङ्गुलीषु विंशतिः । २० [29]। एवं त्रीणि षष्टिशतानि भवन्ति । २१ [30]। पुरुषाकृतिं कृत्वोर्णा-सूत्रैः परिवेष्ट्य यवचूर्णैः प्रलिप्य सर्पिषाभ्यज्याग्निभिः संस्कुर्वन्ति । २२ [31]। इच्छन्पत्नीं पूर्वमारिणीमग्निभि. संसृज्य सांतपनेन वान्यामानीय ततः पुनराद्धीत । २३ [32]। ॥ १५॥

शतापवर्गे परिधिकर्म ।१। आनडुहं रोहितं चर्मादग्नौवं प्राग्ग्रीवं वोत्तरलोम पश्चादग्नेरुपस्तीर्योपविशन्ति कुशान्वेवमग्रान् ।२। अन्तरे-णाग्निं चैतांश्चाभ्यन्तमश्मानं निधाय [3] * शम्याः परिधीन्कृत्वा [4] शमी-मयमिध्मं पालाशं वा [5] वारणेन स्रुवेण कांस्येन वा जुहोति । ३ [6]। उपस्थकृतः समन्वारब्धेषु । ४ [7]। इमं जीवेभ्यः

परैतु मृत्युरमृतं म आ गाद्वैवस्वतो नो अभयं कृणोतु ।

पर्णं वनस्पतेरिवाभि नः शीयतां रयिः ।

सचतां न शचीपतिः ॥

याज्ञारण्ये दशान्वाधान इति । ५ [8]। द्वादश कृत्वा [9] † यथाहानीति दक्षिणमन्वंसं द्वाभ्यां समीक्ष्य [10] अञ्जनं सर्पिषा संनिनीय [11] कुशैः स्त्रीणामवीष्यनक्तीमा नारीरिति [12] सकृत्सकृन्मन्त्रेण द्विर्द्विस्तूष्णीम् । ६ [13]। उत्तिष्ठ ब्रह्मणस्पत इति द्वाभ्यां ब्राह्मणस्य दक्षिणं बाहुमन्वारभ्यानु-त्तिष्ठतो ऽनुमन्त्रयते । ७ [14]। अनडुहो वा पुच्छम् । ८ [15]। अनड्वानहतं वासः कांस्यश्च दक्षिणा । ९ [16]। दक्षिणतो वित्तं नि वर्तध्वमिति सूक्तेन प्रत्येनाः प्रदक्षिणं त्रिः पर्येति । १० [17]। प्रत्येनमि परिधिकर्म । ११ [18]। ॥ १६॥

---

* Comm. जुहोतीति सूत्रान्त ।

† Comm तूष्णीमित्येवमन्त्रं सूत्रं । सव्याहृतु व्याख्या क्रियते ।

रुद्रं गवा यजते स्वस्त्ययनाय ।१। शूलगव इत्याचक्षते ।२। शुक्लपक्ष उपोष्य पुण्ये नक्षत्रे प्रागुदीच्यां दिशि ।३। अग्निं मथित्वा प्राञ्चं प्रणीय ।४। पुरस्तात्पलाशशाखां सपलाशां निखाय ।५। तस्या उत्तरतः पशुमुपस्थाप्य ।६। रुद्राय त्वा जुष्टमुपाकरोमि ।७। रुद्राय त्वा जुष्टं प्रोक्षामि ।८। रुद्राय त्वा जुष्टं नियुनज्मीति नियुनक्ति पलाशशाखायाम् ।९। पर्यग्निकृतमुदञ्चं नयन्ति ।१०। तं संज्ञपयन्ति प्राक्शिरसमुदक्पादं प्रत्यक्शिरसं वोदक्पादमरवमाणम् ।११।

यत्पशुर्मायुमकृतोरो वा पद्भिरा हते ।

अग्निर्मा तस्मादेनसो जातवेदाः प्र मुञ्चतु ॥

स्वाहेति रवमाणे जुहोति ।१२। वपामुद्धृत्य प्रक्षाल्य[13] पूर्वे ऽग्नौ अपयित्वाभिघार्योद्वास्य[14][15] शिवंशिवमिति त्रिः पर्युक्ष्याज्याहुतीर्जुहो-[16]ति ।१३।[17] ॥१७॥

या तिरश्ची नि पद्यते अहं विधरणी इति ।

तां घृतस्य धारया यजे संराधनीमहम् ॥

स्वाहा ।१।

यस्येदं सर्वं तमिमं हवामहे ।

स नो कामान्कामपतिः प्र यच्छतु ॥

स्वाहेति द्वितीयाम् ।२। अग्ने पृथिव्या अधिपत इति तृतीयाम् ।३। प्रजापत इति चतुर्थीम् ।४। त्रीणि पलाशपलाशानि मध्यमानि संगृह्योपमीर्य ।५। * वपामवधायाभिघार्य ।६।

---

* Comm अनुप्रहरति पलाशानीति शेषः ।

यावतामहमीशे यावन्तो मे अमात्याः।

तेभ्यस्त्वा देव वन्दे तेभ्यो नो देव मृल ॥

वेद ते पितरं वेद मातरं द्यौस्ते पिता पृथिवी माता। तस्मै ते देव भवाय शर्वाय पशुपतय उग्राय देवाय महते देवाय रुद्राये-शानायाशनये स्वाहेति वपां हुत्वा[7] अनुप्रहरति पलाशानि। ५। वपाश्रपण्यौ च। ६। दर्शाय ते प्रतिदर्शाय स्वाहेत्युत्तरामाज्याहुतिं हुत्वा तथैव पर्युक्षति। ७। पश्चिमेऽग्नौ स्थालीपाकं श्रपयति। ८। उत्तरतोऽवदानानि। ९। स्थालीपाकं यूषं मांसमाज्यमिति संनि-नीय शंयोः शयोरिति त्रिः पर्युक्ष्य जुहोति। १०। ॥१८॥

भवाय स्वाहा शर्वाय स्वाहा रुद्राय स्वाहेशानाय स्वाहाग्नये स्विष्ट-कृते स्वाहेति। १। तथैव पर्युक्ष्य। २। तान्येव संनिनीय। ३। अग्नौ पश्चिमे। ४। भवान्यै स्वाहा शर्वाण्यै स्वाहा रुद्राण्यै स्वाहेशानान्यै स्वाहाग्नाय्यै स्वाहेति। ५। समानं पर्युक्षणम्। ६। पला विकर्तनात्पला-शानि प्रागुदञ्चि निधाय* [7] तेषु लोहितमिश्रमूवध्यमवधाय [8] रुद्रसेनाभ्यो ऽनुदिशति। ९। आघोषिण्यः प्रतिघोषिण्यः संघोषिण्यो विचिन्वत्यः श्वसनाः क्रव्यादः एष वो भागस्तं जुषध्वं स्वाहेति। १०। यजमानस्योपतिष्ठते। ११। ॥१९॥

भूपते भुवपते भुवनपते भूतपते भूतानां पते महतो भूतस्य पते मृल नो द्विपदे च चतुष्पदे च पशवे मृल नश्च द्विपदश्च चतुष्पदश्च पशून्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो दुरापूरो ऽसि मच्छायो ऽधि-

---

* Comm. अनुदिशतीति सूत्रम्।

नामेन। तस्य ते धनुर्हृदयं मन इषवश्चक्षुर्विसर्गस्तं त्वा तथा वेद नमस्ते अस्तु सोमस्त्वावतु मा मा हिंसीः ।

यावरण्ये पतयतो वृको जञ्जभताविव ।

महादेवस्य पुत्राभ्यां भवशर्वाभ्यां नमः ॥१॥

कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वन इति च सूक्तानि ।२। वरो दक्षिणा ।३। उपाकरणं प्रोक्षणं पर्यग्निकरणमित्यावृतः पाशुबन्धिक्यः ।४। पलाशशाखेति देवतायै वपां देवतायै हविः स्विष्टकृते चान्येषां पशूनाम् ।५। आग्नेयः सौम्यश्चाज्यभागौ देवतायै वपां देवतायै हविः स्विष्टकृते चाज्याहुतिश्चानुमतये स्थालीपाकानाम् ।६। ॥२०॥

षलर्घ्या भवन्त्याचार्य ऋत्विक् श्वशुरो राजा स्नातकः प्रिय इति । १। उदङ्मुखः प्राङ्मुखो वा

अहं वर्ष्म सदृशानां विद्युतामिव सूर्यः ।

इदं तमधि तिष्ठामि यो अस्माँ अभि दासति ॥

इति कूर्चमध्यास्ते ऽधितिष्ठति वा ।२। विराजो दोहो ऽसि विराजो दोहमशीय मयि पद्यायै विराजो दोह इति पाद्यं प्रतिगृह्य ।३। अर्घ्यमित्युक्तो ऽपः प्रतिगृह्य ।४। आचमनीयमित्युक्त आपोहिष्ठीयाभिस्तिसृभिरेकैकयाचम्य ।५। मधुपर्क इत्युक्तो यया प्राशितं तया प्रतीक्ष्य ।६। तया प्रतिगृह्णाति। यशसे ब्रह्मवर्चसायेति विकारः ।७। प्रतिगृह्य सव्ये पाणौ कृत्वाङ्गुष्ठेनोपकनिष्ठिकया च पूर्वार्धादुपहत्य पूर्वार्धे कंसस्य निलिम्पति वसवस्त्वाग्निराजानो भक्षयन्त्विति ।८। पितरस्त्वा यमराजानो भक्षयन्त्विति दक्षिणार्धाद्दक्षिणार्धे ।९।

आदित्यास्त्वा वरुणराजानो भवयन्त्विति पश्चार्धात्पश्चार्धे ।१०। रुद्रास्त्वेन्द्रराजानो भवयन्त्वित्युत्तरार्धादुत्तरार्धे।११। विश्वे त्वा देवाः प्रजापतिराजानो भवयन्त्विति मध्यादूर्ध्वम्।१२। सत्यसत्यमन्त्रेण दिग्भिस्तूष्णीम्।१३। महाव्याहृतिभिस्तिसृभिरेकैकया प्राश्य ।१४। अनुपाय चतुर्थम्।१५। ब्राह्मणायोच्छिष्टदानम् ।१६। सर्वपानं वा ।१७। अपो ऽभ्यवहरणम् ।१८। मनोदेवीयाभिस्तसृभिरपो ऽभिमृश्य ।१९। समानं प्राणसंमर्शनम् ।२०। मुखविमार्जनं च ।२१। आ गोः प्रवदनात्तूष्णीम् ।२२। गौरित्युक्त[23] ओं कुरुत ।२३[24]। माता रुद्राणामिति जपित्वोत्सृजत तृणान्यत्त्विति वा ।२४[25]। कूर्चः पाद्यमर्घमाचमनीयं मधुपर्को गौरिति वेदयेत वेदयेत ।२५[26]। ॥२१॥

इति शाङ्खायनश्रौतसूत्रे चतुर्थो ऽध्यायः समाप्तः ।

---

ओम्।

---

आर्षेयान् यूनो ऽनूचानानृत्विजो वृणीते सोमेन यक्ष्यमाणः।१। चतुरः सर्वान्वा।२। चन्द्रमा मे दैवो ब्रह्मोत्युपांशु त्वं मानुष इत्युच्चैः।३। एवं सर्वान्।४। आदित्यो मे दैव उद्गाता त्वं मानुषः।५। अग्निर्मे दैवो होता त्वं मानुषः।६। वायुर्मे दैवो ऽध्वर्युस्त्वं मानुषः।७। प्रजापतिर्मे दैवः सदस्यस्त्वं मानुषः।८। ऋतवो मे दैव्या होत्राशंसिनो यूयं मानुषा.।९। भर्गं मे वोचो भद्रं मे वोचो भूतिं मे वोचः श्रियं मे वोचो यशो मे वोचो मयि भर्गो मयि भद्रं मयि भूतिर्मयि श्रीर्मयि यश इति वृतो जपित्वा कच्चिन्नाहीनानुदेश्यन्यस्यार्त्विज्यमीतदक्षिणानामन्यतम इति पृष्ट्वा प्रतिगृह्णोति प्रत्याचष्टे वा।१०।॥१॥

प्राचीनप्रवणं देवयजनम्।१। प्रागुदक्प्रवणं यज्ञकामस्य।२। अनुभुवन्यत्र होताहवनीयमादित्यमपश्य पश्येत्तद्ब्रह्मवर्चसकामस्य।३। शुद्धपक्षे दीक्षा पुण्ये नक्षत्रे समापन च।४। ॥२॥

अपराह्णे दीक्षणीयाग्नावैष्णवीष्टिः।१। पौर्णमासीविकारः।२। पञ्चदशसामिधेनीका।३। उपांशुहविः।४। विराजौ स्विष्टकृत.।५। नित्ये वा।६। उपहूतो ऽयं यजमानो ऽस्य यज्ञस्यागुर उदृचमशीयेत्याशास्ते ऽयं यजमानो ऽस्य यज्ञस्यागुर उदृचमशीयेत्याशास इत्याशिषां स्थान इलायां सूक्तवाके च आकार्तीयमदवनिक्याः पुरोना-

शेलायाः।७। न सूक्तवाके यजमानस्य नाम गृह्णाति प्राक् सवनीयात् ।८। पत्नीसंयाजान्ता च।९। ॥३॥

अध्वर्युमन्वारभ्योद्ग्रभणानि जुहोति याजमानं मनो मे मनसा दीक्षतां वाङ्मे वाचा दीक्षतां प्राणो मे प्राणेन दीक्षतां चक्षुर्मे चक्षुषा दीक्षतां श्रोत्रं मे श्रोत्रेण दीक्षतामिति ।१। आहुतीर्वा जुहुयात् ।२। एकदीक्षे चोपस्थानम् ।३। मनो दीक्षामुपैमीत्याहवनीयम् ।४। वाचं दीक्षामुपैमीति गार्हपत्यम् ।५। प्राणं दीक्षामुपैमीति दक्षिणाग्निम् ।६। अपरिमिता दीक्षास्तासामपवर्गे ॥४॥

प्रायणीयेष्टिः ।७। पथ्यां स्वस्तिमग्निं सोमं सवितारं चाज्येनादितिं चरुणा।१। स्वस्ति नः पथ्यासु स्वस्तिरिद्धि[2] अग्ने नयाग्ने त्वं पारय[3] त्वं सोम प्र चिकितो या ते धामानि हविषा[4] तत्सवितुर्वरेण्यं य इमा विश्वा जातानि[5] सुत्रामाणं मही मू षु।२।[6] पञ्चदशसामिधेनीका।३।[7] उपांशुहविः।४।[8] नाज्यभागौ भवतः।५।[9] त्वां चित्रश्रवस्तम यद्वाहिष्ठमिति स्विष्टकृत.।६।[10] शंय्वन्ता च ।७।[11] ॥५॥

क्रीत्वा राजानमाधाय शकटे सोमाय पर्यूह्यमाणायेत्युक्तः ।१।

भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्तु।

अथेमवस्य वर आ पृथिव्या आरे शत्रूंकृणुहि सर्ववीरः॥

इत्यन्तरेण वर्त्मनी तिष्ठन्ननूच्य।२। इमां धियं शिक्षमाणस्य वनेषु व्यन्तरिक्षं सोम यास्त इति चतस्रो ऽनुसंयन्नन्तरेण वर्त्मनी।३। शालामग्रेण शकटमवस्थाप्य प्रपादयन्ति राजानम्।४। येन प्रजेयुस्तेनानुसमियात्।५। या ते धामानि हविषेत्यनुप्रपद्य।६। अग्रेणाहवनीयं दक्षिणा तिष्ठन्नागन्देव इति परिधाय ।७। उपसृष्टोऽस्यज्यते

।८। मदन्तीभिरुदकार्थो ऽत ऊर्ध्वमाग्नीषोमप्रणयनात्।८। ॥६॥

आतिथ्या वैष्णवीष्टिः ।१। पौर्णमासीविकारः ।२। विष्णोर्नु कं प्र तद्विष्णुः।३। होतारं चित्ररथं यस्त्वा स्वश्व इति स्विष्टकृतः ।४। अग्निमन्यनीयाद्यामन्ते हविषि ।५। उपांशुहवि.।६। इलान्ता ।७।॥७॥

उपस्पृश्य सर्वे ।१। अनाधृष्टमस्यनाधृष्यं देवानामोजो ऽनभिशस्त्यभिशस्तिपाः। अनभिशस्तेन्यमञ्जसा सत्यमुपगेषं सुविते मा धा इति महिरण्यं ध्रौवमाज्यं पाचीस्थं बर्हिष्यासन्नं तानूनप्त्रं समवमृश्य ।२।
उपसृत्याग्रेणाहवनीयं परीत्यांशूननुपस्पृशन्तो राजानमाप्याययन्ते।

अंशुरंशुष्टे देव सोमा प्यायतामिन्द्रायैकधनविदे।
आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व।
आ प्याययास्मान्सखीन्सन्या मेधया स्वस्ति ते।

देव सोम सुत्यामुदृचमशीयेति ।३।

यमादित्या अंशुमा प्याययन्ति यमक्षितिमक्षितयः पिबन्ति।
तेन नो राजा वरुणो बृहस्पतिरा प्याययन्तु भुवनस्य गोपाः॥

इत्युरांस्वभिमृश्य ।४। उपस्पृश्य दक्षिणोत्तानान्पाणीन्प्रस्तरे निधाय निह्नुवते सव्योत्तानानपराह्णे। एष्टा राय. प्रेषे भगाय ऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्यामिति ।५। आप्यायनप्रभृत्युपसदुपसदि सन्स्थितायाम् ।६। ॥८॥

अप्रवर्ग्यः प्रथमयज्ञः ।१। विकल्पः श्रोत्रियस्य ।२। उत्तरेण गार्हपत्यम् ।३। महावीरपात्रेषु साद्यमानेषु पूर्वया द्वारा शालां प्रपद्य* ।

---

* अभिष्टौतीति सूत्रच्छेद ह्रानिर्देशं क्रमार्थं।

उत्तरेणाहवनीयं खरौ पात्राणि च गत्वा[5]। पश्चादुपोपविश्य[6]। होत-
रभिष्टुहीत्युक्तः[7]। अनवानमेकैकां सप्रणवामभिष्टौति ।[8] ४।

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। [1]

स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः।[9] ५।

इयं पित्रे राष्ट्र्येत्यग्रे प्रथमाय जनुषे भूम नेष्ठाः।

तस्मा एतं सुरुचं ह्वारमह्यं घर्मं श्रीणन्ति प्रथमस्य धासेः।[10] ६।

अभि त्यं देवं सवितारमोण्योः कविक्रतुम्।

अर्चामि सत्यसवं रत्नधामभि प्रियं मतिं कविम्।

ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि।

हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वःकृपा स्वरिति वा।[11] ७।
अञ्जन्ति यमिति बिले उज्यमाने।[12] ८। सं सीदस्वेति साद्यमाने।[13] ९।
भवा नो अग्ने सुमनास्तपो ष्वग्ने यो नः सनुत्य इत्यङ्गारेषूपोह्यमानेषु
।[14] १०। कृणुष्व पाज इति पञ्च।[15] ११। परि त्वा गिर्वणो ऽधि द्वयोः।[16] १२।
शुक्रं ते अर्हन्बिभर्षि।[17] १३। पतङ्गमक्तं स्रक्वे द्रप्सस्येति सूक्ते।[18] १४।
पवित्रं त इति द्वे।[19] १५।

वि यत्पवित्रं धिषणा अतन्वत घर्मं शोचन्तं प्रणवेषु बिभ्रतः।

समुद्रे अन्तरायवो विचक्षणं त्रिरक्नो नाम सूर्यस्य मन्वत।[20] १६।
अयं वेन इति सूक्तं नाके सुपर्णमित्युद्धृत्य।[21] १७। गणानां त्वेति
सूक्तम्।[22] १८। बृहद्वदेम विदथे सुवीरा इति वीरकामार्थे वीरं
ध्यायात्।[23] १९। का राधदिति नव।[24] २०। आ नो विश्वाभिरूतिभिरिति
तिस्रः।[25] २१। प्रातर्यावाणेति पूर्वाह्णे सूक्तम्।[26] २२। आ भातीत्यपराह्णे
।[27] २३। सर्वमीळेद्यावीयमुत्सृज्य वाचम्।[28] २४। उत्तमां परिशिष्य हविर्तो

घर्म इत्युक्ते ऽच्छवदित्यभिष्टुत्य।२९। उत्तमया परिधाय।३०। उपसृष्ठोत्थायावकाशानामनुवाकेन महावीरमुपस्थायोपसृष्ठोपविशति।३१ २७। ॥९॥

उप ह्वय इति गव्याह्वयमानायाम्।१। हिंङ्कृण्वतीत्यायत्याम्।२। अभि त्वा देव सवितरित्यभिधीयमानायाम्।३। समी वत्सं न वत्स इवेत्युपसृज्यमानायाम्।४। यस्ते स्तन इति स्तनं वत्से ऽभिपद्यमाने।५। गौरमीमेदित्युन्नीयमाने।६। नमसेदुप सीदत संजानाना इत्युपसीदति।७। दोहेन गां दुहन्ति सप्ता दशभिरात्मन्वत्

समिद्धो अग्निरश्विना तप्तो वां घर्म आ गतम्।

दुह्यन्ते गावो वृषणेह धेनवो दस्रा मदन्ति कारवः॥

समिद्धो अग्निर्वृषणा रयिर्दिवस्तप्तो घर्मो दुह्यते वामिषे मधु।

वयं हि वां पुरुतमासो अश्विना हवामहे सधमादेषु कारवः॥

तदु प्रयक्षतममिति दुह्यमानायाम्।८। अधुक्षदुत्तिष्ठ ब्रह्मणस्पत इत्युत्तिष्ठति।९।

उप द्रव पयसा गोधुगो षु मा घर्मे सिञ्च पय उस्रियायाः।

वि नाकमख्यत्सविता वरेण्यो ऽनु यावाम् पृथिवी सुप्रणीते॥

इत्याह्रियमाणयोः पयसोः।१०। आ सुते सिञ्चत श्रियमा नूनमश्विनोर्ऋषिरित्यासिच्यमानयोः।११। उदु ष्य देवः सविता हिरण्ययेत्युद्यम्यमाने।१२। कर्मविपर्यासे यथाकर्म।१३। प्रैतु ब्रह्मणस्पतिरिति प्रव्रजत्सु।१४। नाके सुपर्णमित्यनुसंयन्।१५। होतृषदन उपविश्य।१६। घर्मस्य यजेत्युक्तः।१७। उभा पिबतं

तप्तो वां घर्मो नक्षति स्वहोता प्र वामध्वर्युश्चरति प्रयस्वान्।

मधोर्दुग्धस्याश्विना तनाया वीतं पातं पयस उस्रियायाः ॥

इति समस्ताभ्यां वषट्कृत्य ।१८। घर्मस्याग्ने वीहीत्यनुवषट्करोतीति पूर्वाह्णे ।१९। अथापराह्णे ।२०। अस्य पिबतं

यदुस्रियास्वाहुतं घृतं पयो ऽयं स वामश्विना भाग आ गतम्।
माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं रोचने दिवः ॥

इति समस्ताभ्यां वषट्कृत्य ।२१। तथैवानुवषट्कृत्य ।२२।

स्वाहाकृतः शुचिर्देवेषु घर्मो यो अश्विनोश्चमसो देवपानः ।
तमीं विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्ति ॥

इत्यभिष्टुत्य ।२३। सखे सखायमित्यायति ।२४। गन्धर्व इत्येति साद्यमाने ।२५। तं घेमित्थेति प्रागाचिकामावर्त्येति ।२६। हविर्हविष्म इति पुरा होमात् ।२७। प्राणभक्षो होतुः ।२८। प्रत्यक्षो यजमानस्य ।२९। दधिघर्मे च ।३०। हुतं हविर्मधु हविरिन्द्रतमे ऽग्नावश्याम ते देव घर्म मधुमतो वाजवतः पितुमत इति भक्षमन्त्रः ।३१। संसाद्यमानेषु महावीरपात्रेषु

आ यस्मिन्सप्त वासवा रोहन्ति पूर्व्या रुहः ।
ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः ॥

इत्यभिष्टुत्य।३२। सुयवसादिति परिधाय ।३३। उपस्पृश्योत्सृज्यते ।३४। सुत्ये वाहन्याग्नीध्रीये प्रवर्ग्यः सुते वहिष्पवमाने माध्यन्दिने च ।३५। प्रस्तरे निह्नुत्य ॥१०॥

उपसदा चरन्ति सप्रवर्ग्ये प्रवर्ग्यं संस्थाप्य।३६। उपसद्यायेति पूर्वाह्णे तिस्रः सामिधेनीरनवानमेकैकां सप्रणवां त्रिस्त्रिराह ।१। इमां मे अग्ने समिधमिति तिस्रो ऽपराह्णे।२। तृतीयेन पूर्वस्या वचनेनोत्तरां

संधायावस्यति ।३। अग्निमावह सोममावह विष्णुमावहेति प्रणवेन संधाय ।४। स्रुगादापनेन स्रुचावादाय ।५। उपांशु यजति ।६। अग्निर्वृत्राणि य उग्र इव[7] त्वं सोम क्रतुभिरयाळ्हं युत्सु[8] यः पूर्व्याय तमु स्तोतारः ।७[9]। यावदादिष्टं कुर्यात् ।८[10]। विपर्यासो ऽपराह्णे याज्यापुरोनुवाक्यानाम् ।[11]९। इमां मे अग्ने समिधमिति द्वितीये ऽहनि पूर्वाह्णे तिस्रः सामिधेनीः ।१०[12]। उपसद्यायेत्यपराह्णे ।११[13]। यथा प्रथमे तथा तृतीये ।१२[14]। स्वकालास्तु विवर्धेरन् ।१३[15]। अहरहर्वा विपर्यासः ।१४[16]। उपवसथे प्रातरुभे चरणे संस्थाप्य ।१५[17]।॥१२॥

अग्निप्रणयनमप्रवर्ग्ये ।१। महावीरपात्रोद्वासनं सप्रवर्ग्ये।२। तत्र प्रस्तोता साम गायति ।३। तत्र होतुर्निधनोपायः ।४। व्याख्यातमग्निप्रणयनम् ।५। ॥१२॥

हविर्धानप्रवर्तनायामन्त्रितः ।१। दक्षिणस्य हविर्धानस्योत्तरं वर्त्मान्तरस्य च दक्षिणमन्तरेण तिष्ठन् हविर्धानाभ्यां प्रवर्त्यमानाभ्यामित्युक्तः।२।

अपेतो जन्यं भयमन्यजन्यं च वृत्रहन्।
अप चक्रा अवृत्सत ॥

इति दक्षिणेन प्रपदेन प्रत्यञ्चं लोगमपास्य ।३। प्रेतां यज्ञस्येति तिष्ठन्ननूच्य ।४। द्यावा नः पृथिवी इमं तयोरिद्घृतवद्यम इवेति दक्षिणस्योत्तरं वर्त्मोपनिश्रितो ऽनुसंयन्।५। अधि द्वयोरिति च्छदिष्या धीयमाने ।६। विश्वा रूपाणि प्रतीति परिश्रीयमाणयोः ।७। आ वामुपस्थमिति नभ्यस्थयोः ।८। कर्मविपर्यासे यथाकर्म।९। परि त्वा गिर्वण इति परिधाय ।१०। यत्र तिष्ठन् प्रथमामन्ववोचत्तत्स्थित्वोत्सृज्यते ।११। ॥१३॥

मितेषु यज्ञागारेष्वग्नीषोमौ प्रणयन्ति ।१। तत्प्रथत्यानूबन्ध्यायाः संस्थानादन्तरेण चात्वालोत्करौ तीर्थम् ।२। तेन प्रपद्य ।३। उत्तरेणाग्नीध्रीयं धिष्ण्यं सदश्च गत्वा ।४। उत्तरेणाध्वर्यू यज्ञपात्राणि च पूर्वया द्वारा शालां प्रपद्य ।५। शालामुखीयस्य पश्चादुपविश्य ।६। अग्नीषोमाभ्यां प्रणीयमानाभ्यामित्युक्तः ।७।

सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै ।
अथास्मभ्यं सवितः सर्वताता दिवेदिव आ सुवा भूरि पश्वः॥

इत्यासीनो ऽनूच्य ।८। उत्तिष्ठ ब्रह्मणस्पते ।९। प्रैतु ब्रह्मणस्पति. ।१०। होता देव उप त्वाग्न इति द्वचौ ।११। भूतानां गर्भमादध इति गर्भकामायै गर्भं ध्यायादुत्तरेण सदो ऽनुसंयन् ।१२। आग्नीध्रीये ऽग्निं निदधाति ।१३। अग्ने जुषस्वेत्याहुतौ हूयमानायाम् ।१४। उत्तरेणाग्निं सोमो जिगातीति तिस्रो ऽनुसंयन् ।१५। उप प्रियमित्याहवनीये हूयमानायाम् ।१६। तमस्य राजेति प्रपाद्यमाने ।१७। अन्तश्च प्रागा इत्यनुप्रपद्य ।१८। दक्षिणे हविर्धाने राजनि सन्न उत्तरतो दक्षिणा तिष्ठञ्छ्येनो न योनिं गणानां त्वास्तभ्नाद् द्याम् ।१९। एवा वन्दस्वेति परिधाय ।२०। सव्याद्धविर्धानयोः पूर्वस्यां द्वार्युपविशति ।२१। अपरया द्वारा प्रपाद्यमाने ऽनुसमेति होता ।२२। समानमनुवचनम् ।२३। दक्षिणाद्दपरया द्वारा निष्क्रम्य सव्याद्दुत्तरेण हविर्धाने गत्वा तत्रैवोपविशति ।२४। ॥१४॥

अग्नीषोमीयेणोपवसथे पशुना यजते ।१। यूपायाज्यमानायेत्युक्तो ऽञ्जन्ति त्वामित्यन्वाह ।२। उच्छ्रीयमाणायेत्युक्त उच्छ्रयस्व वनस्पते समिद्धस्य श्रयमाणः पुरस्ताज्जातो जायत ऊर्ध्व ऊ षु ण ऊर्ध्वो

नः ।३। परिवीयमाणायेत्युक्तो युवा सुवासा इति परिधाय[4] तिष्ठन्न्नाहाग्निमन्थनीयाः ।[5]४। यज्ञेन यज्ञमिति परिधाय[6] सामिधेनीरन्वाह ।[7]५। पशुदेवतामावाह्यानन्तरं वनस्पतिम् ।[8]६। अध्वर्युं संप्रेष्य तिष्ठति ।[9]७। मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामि यज्ञस्यारिष्ट्या इति यजमानो मैत्रावरुणाय दण्डं प्रयच्छति ।[10]८। तेनैव मन्त्रेण यथार्थं प्रतिगृह्य[11] दक्षिणेन होतारं दक्षिणात्पूर्वः प्रतिपद्यते ।[12]९। उत्तरेण हविर्धाने दक्षिणेनाग्नीध्रीयं धिष्ण्यं गत्वा पूर्वया द्वारा सदः प्रपद्य स्वस्य धिष्ण्यस्य पश्चादुपविश्यैकादश प्रयाजान्यजति ।[13]१०। ॥१५॥

प्रैषा मैत्रावरुणस्य ।१। सप्रैषे च पुरोनुवाक्याः ।२। तथानुवचनानि ।३। *प्रह्वाणस्तिष्ठन्दण्डे पराक्रम्य[4] समिधः प्रेष्येत्युक्तो होता यक्षदग्निं समिधेति प्रेष्यति ।[5]४। आप्रियः प्रयाजयाज्या[6] यदार्षेयो यजमानः ।[7]५। समिद्धो अद्य मनुष इति वा सर्वेषाम् ।[8]६। स्वा तु नाराशंसो तत्प्रयाजस्य ।[9]७। दशभिश्चरित्वा पर्यग्नय इत्युक्तो ऽग्निर्होता नो अध्वर इति तिस्रो ऽन्वाह ।[10]८। उपप्रेष्य होतरित्युक्तो ऽजैदग्निरित्युपप्रैषमाह ।[11]९। उक्त उपप्रैषे ऽध्रिगुं होता ।[12]१०। ॥१६॥

दैव्याः शमितार उत च मनुष्या आरभध्वमुपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम् ।१। प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्यो ऽनु सखा सयूथ्यः ।२। उदीचीनां अस्य पदो निधत्तात्सूर्यं चक्षुर्गमयतात्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरम् ।३। एकधास्य त्वचमाच्छ्यतात्पुरा

* Comm. कुब्ज इव तिष्ठन्।

नाभ्या अपिश्रमो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वात् ।४। श्येनमस्य वक्षः कृणुतात्प्रशसा बाहू शला दोषणी कश्यपेवांसाच्छिद्रे श्रोणी कवषोरू स्रेकपर्णाष्ठीवन्ता ।५। षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्याबयताद्गात्रंगात्रमस्यानूनं कृणुतात् ।६। ऊवध्यगोहं पार्थिवं खनतात ।७। अस्ना रक्षः संसृजतात् ।८। वनिष्टुमस्य मा राविष्टोरूकं मन्यमाना नेदस्तोके तनये रविता रवच्छमितार इत्यध्रिगो नवम उच्छ्वासः ।९। अध्रिगो शमीध्वं सुशमि शमीध्वंशमीध्वमध्रिगो३ इति त्रिः परिधायोपांशु अपत्नुभावपापश्चेति ।१०। न पशुं संज्ञप्यमानमीक्षेत ।११। पृषदाज्यावेक्षणं प्रायश्चित्तम ।१२। ऋचं वा वैष्णवीं जपेत् ।१३। ॥१७॥

स्तोकेभ्य इत्युक्त्वा जुषस्व सप्रथस्तममिमं नो यज्ञमिति च सूक्तमन्वाह ।१। स्वाहाकृतिभ्य इत्युक्ते होता यक्षदग्निं स्वाहाज्यस्येति प्रेष्यति ।२। आप्रीणामुत्तमा याज्या ।३। अन्तरेणोक्तमं प्रयाजं वपां च नाराशंसम् ।४। नाज्यभागौ यजति ।५। वृधन्वन्तौ वा ।६। दार्शपौर्णमासिका निगमास्तेषु निगच्छतः ।७। न प्रैषेषु ।८। अग्नीषोमाविममिति वपायाः पुरोनुवाक्या ।९। होता यक्षदग्नीषोमाविति प्रैषः ।१०। युवमेतानीति याज्या ।११। यथाप्रपन्नमुपनिष्क्रम्येदमाप इति तृचेन चात्वाले उपस्पृश्योपसृज्येते ।१२। ॥१८॥

पशुपुरोळाशायामन्विताबाग्नीध्रीयमुत्तरेण होतुश्च गत्वा यथाधिष्ण्यमुपविशतः ।१। पर्यायानि विभवादथ साधयन्ति ।२। पुरोळाशः स्विष्टकृत्समवाये ऽपि ।३। अनुख्यानामनूहेन ।४। न निगमाः सन्ति पशुतन्त्रे चोद्यमानानाम् ।५। अग्नीषोमा यो अद्येति पुरोळाशस्य

पुरोनुवाक्या।६। होता यक्षदग्नीषोमाविति प्रैषः।७। अग्नीषोमा पिप्रतमिति याज्या।८। इलामग्न इति स्विष्टकृतः पुरोनुवाक्या।९। होता यक्षदग्निं पुरोलाशस्येति प्रैषः।१०। अग्निं सुदीतिमिति याज्या।११। इलामुपहूय पशुना चरन्ति।१२। मनोतायै हविष इत्युक्त्वं ह्यग्ने प्रथमो मनोतेति मनोतासूक्तमन्वाह।१३। अग्नीषोमा य आहुतिमिति पशोः पुरोनुवाक्या।१४। होता यक्षदग्नीषोमाविति प्रैषः।१५। अग्नीषोमा हविष इत्यर्धर्चे याज्याया विरमत्या वसाहोमात्।१६। हुते वषट्करोति।१७। देवेभ्यो वनस्पत इति वनस्पतेः पुरोनुवाक्या।१८। होता यक्षद्वनस्पतिमिति प्रैषः।१९। वनस्पते रशनयेति याज्या।२०। पिप्रीहि देवानिति स्विष्टकृतः पुरोनुवाक्या।२१। होता यक्षदग्निं स्विष्टकृतमिति प्रैषः।२२। अनिगदा याज्या।२३। इलामुपहूयैकादशानूयाजान्यजति।२४।॥१९॥

देवं बर्हिः सुदेवं देवैरित्यनवानं प्रेष्यति।१। यथा चातुर्मास्येषु तथा यजति।२। अष्टमनवमावन्तरेणागन्त्।३। देवो वनस्पतिर्वसुवने वसुधेयस्य वेतु। देवं बर्हिर्वारितीनां वसुवने वसुधेयस्य वेतु।४। सूक्ता प्रेष्येत्युक्तो ऽग्निमद्य होतारमिति सूक्तवाकप्रैषमाह।५। सौमिकं सवनीये।६। शंयोरन्ते यथाप्रपन्नमुपनिष्क्रम्योत्सृज्यते मैत्रावरुणः।७। शालां होता गत्वा सर्वौषध्याज्याक्तं नक्तं संस्थापयति संस्थापयति।८। ॥२०॥

इति शाङ्खायनश्रौतसूत्रे पञ्चमो ऽध्यायः समाप्तः॥

# ओम्।

व्याख्यातो ऽग्नीषोमीयः प्रकृतिः पशूनाम्।१। आर्षमाम्नानं मन्त्राणां प्रकृतौ।२। यथार्थमुत्तरस्यां ततावर्थविकारस्योत्पत्तिरूपेणानभिधानाच्छब्दविकारमूहं ब्रुवते।३। स्वत्तु विकारो न विद्यते।४। यजमानाभ्यां यजमानेभ्यः[5]। मेधपतये मेधपतिभ्य[6]। मेधौ मेधान्[7]। आददादन्[8]। घस्तु घसन्तु[9]। अघसंदघसन्[10]। अघदन्निति वा[11]। रभीयांसाविव रभीयस इव[12]। अग्रभीदग्रभीषुः[13]। अवीवृधतावीवृधन्त[14]। अश्यासुः[15]। कश्यासु[16]। अचीकमेतामचीकमन्त[17]। इत्यर्थभेदाच्छब्दविकारः।५[18]। वर्हिश्चक्षुः श्रोत्रं प्राणो ऽसृक्त्वङ्नाभिरूष्मा ज्ञातिनामानि श्येनं शला कश्यपा कवषा सेकपर्णौवध्यगोहमग्नेति यथासमाम्नातम्।६[19]। चोदनासदेहे च।७[20]। शेषभूतान्यपूर्वाणि।८[21]। आयनिगदाश्च।९[22]। एकधैकधा[23] षड्विंशतिः षड्विंशतिरिति[24] समासेन वा।१०[25]। एष सङ्ख्यान्यायः।११[26]। एकदेवतद्विदेवतयोश्च बहुवत्।१२[27]। पुंवन्मिथुनेषु समान्याम्।१३[28]। अप्यन्यतरस्याम्।१४[29]। एवेत्यकारेण संधानं देवतानामधेयस्य स्वरादेर्द्विदेवत्यस्य।१५[30]। सकृद्धभन्यपशुभेदे।१६[31]। रूपस्याश्च।१७[32]। उदगयनस्याद्यन्तयोरैन्द्राग्नो निरूढपशुबन्धः।१८[33]। सांवत्सरो वा।१९[34]। काम्या बहवः।२०[35]। अग्निप्रणयनादयो हृदयशूलान्ताः पशवो ऽग्नीषोमीयसवनीयौ परिहाप्य।२१[36]। आग्नावैष्णवौ च वक्ष्यमाणस्य।२२[37]। निर्वचनं चाश्वियाम्।२३[38]। अन्यत्र चाग्नीषोमीयात्सूक्तवाके नामग्रहणम्।२४[39]। प्रात-

रनुवाकप्रश्न्यादिप्रदिष्टानि शस्त्रानुवचनयोः सूक्तानि। २५। एकां प्रतीयादन्यत्र। २६। ॥१॥

महारात्रे प्रातरनुवाकायामन्त्रितो ऽग्रेणाग्नीध्रीयं धिष्ण्यं तिष्ठन्प्रपदो जपति।१। भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये भूर्भुवः स्वः प्रपद्य ओम् प्रपद्ये वाचमृचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये नमो देवेभ्यो नमो देवताभ्यो नमो महते देवाय नमो गन्धर्वाप्सरोभ्यो नमः सर्पदेवजनेभ्यो नमो भूताय नमो भविष्यते नमः पितृभ्यः प्रतिनमस्कारेभ्यो वो ऽपि नमः।२। दिशो यथारूपमुपतिष्ठते।३। ॥२॥

अस्यां मे प्राच्यां दिशि सूर्यश्च चन्द्रश्चाधिपती सूर्यश्च चन्द्रश्च मैतस्यै दिशः पातां सूर्यं च चन्द्रं च म देवतानामृच्छतु यो नो ऽतो ऽभिदासतीति प्राचीम्।१। अस्यां मे दक्षिणस्यां दिशि यमश्च मृत्युश्चाधिपती यमश्च मृत्युश्च मैतस्यै दिशः पातां यमं च मृत्युं च म देवतानामृच्छतु यो नो ऽतो ऽभिदासतीति दक्षिणाम्।२। अस्यां मे प्रतीच्यां दिशि मित्रश्च वरुणश्चाधिपती मित्रश्च वरुणश्च मैतस्यै दिशः पातां मित्रं च वरुणं च म देवतानामृच्छतु यो नो ऽतो ऽभिदासतीति प्रतीचीम्।३। अस्यां म उदीच्यां दिशि सोमश्च रुद्रश्चाधिपती सोमश्च रुद्रश्च मैतस्यै दिशः पातां सोमं च रुद्रं च म देवतानामृच्छतु यो नो ऽतो ऽभिदासतीति सव्यावृदुदीचीम्।४। अस्यां म ऊर्ध्वायां दिशि बृहस्पतिरिन्द्रश्चाधिपती बृहस्पतिरिन्द्रश्च मैतस्यै दिशः पातां बृहस्पतिं चेन्द्रं च म देवतानामृच्छतु यो नो ऽतो ऽभिदासतीति प्राङूर्ध्वाम्।५। अस्मिन्म अन्तरिक्षे वायुश्च वृष्टिश्चाधिपती वायुश्च वृष्टिश्च मैतस्यै

दिशः पातां वायुं च दृष्टिं च स देवतानामृच्छतु यो नो ऽतो ऽभिदासतीत्यन्तरिक्षम्।६। अस्यां मे पृथिव्यामग्निश्चान्नं चाधिपती अग्निश्चान्नं च मैतस्यै दिशः पातामग्निं चान्नं च स देवतानामृच्छतु यो नो ऽतो ऽभिदासतीति पृथिवीम्।७। बृहद्रथन्तरे म ऊरू वामदेव्यमात्मा यज्ञायज्ञीयं प्रतिष्ठा भूरहं भुवरहं स्वरहमश्माहमश्माखणः सुचामाणमिति जपित्वा[8] दक्षिणाहदाग्नीध्रीये भूर्भुवः स्वः स्वाहाग्नये स्वाहोपसे स्वाहाश्विभ्यां स्वाहा सरस्वत्यै स्वाहा जुषाणानि सदांसि सवनान्याज्यस्य व्यन्तु स्वाहेति स्रुवेण हुत्वा सव्याहृद्धविर्धानयोः पूर्वस्यां द्वार्युपविशति।[9]८। देवेभ्यः प्रातर्यावभ्य इत्युक्तो हिंकृत्य मध्यमया वाचा प्रातरनुवाकमन्वाह।[10]९। त्रीणि पदानि समस्य पङ्क्तीनामवसेद्वाभ्यां प्रणुयात्।[11]१०। आपोरेवतीमनूच्य ॥२॥

आग्नेयं गायत्रं क्रतुम्।[12]११। उपप्रयन्तो अध्वरम्[1]। अग्निमीळे पुरोहितम्[2]। अग्निं दूतं वृणीमहे[3]। अश्वं न त्वेति दश[4]। जुषस्व सप्रथस्तमम्[5]। अभि त्वा गोतमा गिरा[6]। अग्निर्होता पुरोहितः[7]। दूतं वः[8]। अग्ने मृळ[9]। अर्चन्तस्त्वा[10]। अग्निं स्तोमेन[11]। उपसद्याय[12]। इमे विप्रस्य[13]। समिधाग्निम्[14]। अग्निं हिन्वन्तु[15]। प्राग्नये वाचम्[16]। त्वमग्ने यज्ञानामिति षड्विंशतिः।[17]१। अथानुष्टुभम्।[18]२। तेते अग्न इत्थेका[19]। होताजनिष्ट[20]। त्वं हि क्षैतवदिति नव[21]। अग्ने कदा त आनुषगिति पञ्च।[22]३। अथ त्रैष्टुभम्।[23]४। समस्य यदिति पञ्च[24]। यो मर्त्येष्विति त्रीणि[25]। प्र वो देवमिति पञ्च सूक्तानि[26]। अग्ने बृहन्निति च सप्त[27]। अगन्म महा।[28]५। अथ बार्हतम्।[29]६। एना वः[30]। प्र वो यक्रम्[31]। अग्ने विवस्वदिति द्वादश[32]। सखायस्त्वेत्यष्टौ[33]।

अदर्शीति चतस्रः[34] । समिद्धस्विदिति तिस्रः[35] । अयमग्निः सुवीर्यस्य । [36]७। अथौष्णिहम्। [37]८। त्वामग्ने मनीषिणः[38] । ईळिष्वा हि[39] । पुरु त्वा। [40]९। अथ जागतम्। [41]१०। वेदिषद इति मन्त्र[42] । एति प्र होता[43] । यज्ञेन वर्धत[44] । जनस्य गोपाः। [45]११। अथ पाङ्क्तम्। [46]१२। अग्निं तं मन्ये। [47]१३। ॥४॥

अथोषस्य[1] गायत्रम्। [2]१। कस्त उष इति तिस्रः[3] । प्रति ष्या सूनरी। [4]२। अथानुष्टुभम्। [5]३। उषो भद्रेभिः। [6]४। अथ त्रैष्टुभम्। [7]५। उषो रुरुच इति चत्वारि। [8]६। अथ बार्हतम्। [9]७। प्रत्यु अदर्शि[10] । सह वामेन। [11]८। अथौष्णिहम्। [12]९। उपस्त्विचमिति तिस्रः। [13]१०। अथ जागतम्। [14]११। एता उ त्या इति चतस्रः। [15]१२। अथ पाङ्क्तम्। [16]१३। महे नः। [17]१४। ॥५॥

अथाश्विनं[1] गायत्रम्। [2]१। अश्विना यज्वरीरिष इति तिस्रः[3] । प्रातयुंजेति चतस्रः[4] । आश्विनावश्वावत्येति तिस्रः[5] । एषो उषाः[6] । गोमदू ष्विति द्वे[7] । दूरादिहेवेति षट्त्रिंशत्[8] । उदीराथाम्[9] । आ मे हवम् । [10]२। अथानुष्टुभम्। [11]३। आ नो विश्वाभिरूतिभिः[12] । यदद्य स्थः परावतीति सूक्ते। [13]४। अथ त्रैष्टुभम्। [14]५। आ भातीति सूक्ते[15] । नासत्याभ्यामिति त्रीणि[16] । वसू रुद्रेति तिस्रः[17] । युवो रजांसीति सूक्ते[18] । तं युञ्जाथामिति सूक्ते[19] । ग्रावाणेव[20] । धेनुः प्रत्नस्य[21] । क उ श्रवदिति सूक्ते[22] । स्तुषे नरेति सूक्ते परिहाप्य पञ्चपदाम्[23] । आ वां रथो रोदसी बद्बधान इति पञ्च सूक्तानि। [24]६। अथ बार्हतम्। [25]७। इमा उ वां दिविष्टयः[26] । अयं वां मधुमत्तम इति प्रथमा तृतीया पञ्चमी च। [27]८। अथौष्णिहम्। [28]९। युवोरु षू रथ-

मिति पञ्च।[29]१०। अथ जागतम्।[30]११। चित्रिणो अथ[31]। ईलेद्या-
वीयम्[32]। घोषां च सपुत्राम्।[33]१२। अथ पाङ्क्तम्।[34]१३। प्रति
प्रियतममिति।[35]१४। उत्तमया परिधायोत्सृज्य वाचम्[36]। अथा वाज-
मिति जपति।[37]१५। इति साहस्रः प्रातरनुवाकः।[38]१६। छन्दो
ऽनन्तरेण वा प्रतिपत्समारोहणीयानां चैतस्य समाम्नायस्य त्रीणि
षष्टिशतानि।[39]१७। ऊर्ध्वं वा अनाद्यायाकामो।[40]१८। पाङ्क्तानि
नान्तरियात्।[41]१९। पुरोदयादुपांशु होष्यन्नीति स कालः परि-
धानस्य।[42]२०। आन्तर्यामादाग्रयमाम्।[43]२१। ॥६॥

अथ इत्थ होतरित्युक्तः प्र देवत्रेति द्वादशीं परिहाप्य।१। नवा-
नूच्यैकादशीमाञ्जतावप्सु ह्रयमानायाम्।२। आहृतासु दशमीम्।३।
प्रति यदाप इति दृश्यमानासु।४। समन्या इति समायतीषु।५।
आपो न देवीरिति होतृचमसे ऽवनीयमानासु।६। आ धेनव
इत्यायतीषु सर्वासूक्त्वा प्रणवेनावस्यति।७। अध्वर्यवैषीरपा३ इत्यध्वर्युं
पृच्छति।८। उतेव नम्नमुरिति प्रत्याह।९। प्रत्युक्तो निगदं ताख-
ध्वर्यवाधावेन्द्राय सोममूर्जस्वन्तं पयस्वन्तं मधुमन्तं वृष्टिवनिं वसुमते
रुद्रवत आदित्यवत ऋभुमते विभुमते वाजवते बृहस्पतिमते विश्व-
देव्यावते।

यस्य पीत्वा मद इन्द्रो वृत्राणि जङ्घनत्।
प्र स जन्यानि तारिष[10]॥

अन्वय इत्यध्वर्यामनूच्य[11] * उपोत्थायाध्वर्युमन्वारभ्योत्तरामध्यर्धा-

* Comm उपविशतीति छन्दोगः

मनूच्य ।१२। उपोत्तमां च सक्तस्य ।१३। उत्तमया परिधाय ।१४। पर्यावृत्योपविशति ।१५। ॥७॥

प्राणं मे पाहि प्राणं मे जिन्व स्वाहा त्वा सुभव सूर्यायेत्युपांशुं हूयमानमनुप्राणिति ।१। अपानं मे पाह्यपानं मे जिन्व स्वाहा त्वा सुभव सूर्यायेत्यन्तर्याममन्ववानिति ।२। उत्तरेणाहवनीयं बहिष्पवमानेन स्तुवते ।३। दक्षिणतो ब्रह्मा मैत्रावरुणश्चोपविश्य ।४। ब्रह्मन्स्तोष्यामः प्रशास्तरित्युक्तौ ।५। आयुष्मत्य ऋचो मा गात तनूपाः साम्नः स्तुत देवस्य सवितुः प्रसव इति जपित्वा ।६। ओं स्तुतेति ।७। प्रसवः सर्वेषां स्तोत्राणाम् ।८। असतो मा सद्गमय तमसो मा ज्योतिर्गमयान्तान्मानन्तं गमय मृत्योर्माऽमृतं गमयेति यजमानः पवमानानुपपरिप्यन् ।९। श्येनो ऽसि पत्वा गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा संपारयास्य यज्ञस्योदृचमिति स्तुते बहिष्पवमाने ।१०। सुपर्णो ऽसि पत्वा त्रिष्टुप्छन्दा इति माध्यन्दिने ।११। सखासि पत्वा जगच्छन्दा इत्यार्भवे ।१२। समान उदर्कः ।१३। उपहूता देवा अस्य सोमस्य पवमानस्य विचक्षणस्य भक्ष उप मां देवा ह्वयन्तामस्य सोमस्य पवमानस्य विचक्षणस्य भक्षे मनसा त्वा भक्षयामि वाचा त्वा भक्षयामि प्राणेन त्वा भक्षयामि चक्षुषा त्वा भक्षयामि श्रोत्रेण त्वा भक्षयामीति स्तुते बहिष्पवमाने होता ।१४। ॥८॥

आग्नेयः सवनीयः ।१। ऐन्द्राग्नो वा ।२। ऐकादशिना वा ।३। एकयूपेष्वैकादशिनेष्वावर्तते परिव्ययणीया रशनापृथक्त्वाच्चित्तिः ।४। नानायूपेषु ।५। अग्निष्ठे परिव्ययणीयामुक्त्वा नवसु यथाप्रहं ।६। एकादशे ऽन्तरेण परिव्ययणीयां प्रगाथं च यान्वो नर इति च

सूक्तशेषमन्वाह।७। उत्तमयोपशयमनुमन्त्रयते।८। पूर्वेद्युरच्छ्रितेष्व-
परिवीयमाणेषु पूर्वया परिदध्यात्।९। संतानार्थौ वार्धर्चेनैव कालेन
।१०। समानजातीया अनुसमियात्।११। यथोत्तमे तथोद्वेन
।१२। पशुदेवतामावाह्य वनस्पतिं च।[13] इन्द्रं वसुमन्तमावहेन्द्रं
रुद्रवन्तमावहेन्द्रमादित्यवन्तमृभुमन्तं विभुमन्तं वाजवन्तं बृहस्पति-
मन्तं विश्वदेव्यावन्तमावहेति सवनदेवताः।[14]।१३। नान्येषु निगम-
स्थानेषु[15] निगच्छन्ति।१४। सूक्तवाके वा।[16]।१५। अध्वर्यू संप्रैष्य
प्रवरानुपूर्व्येण प्रहुताहुती जुहोति।[17]।१६। जुष्टो वाचो भूयासं जुष्टो
वाचस्पतेर्देवि वाग्यत्ते वाचो मधुमत्तमं तस्मिन्नो अद्य धात्स्वाहा
सरस्वत्या इति पूर्वाम्।[18]।१७। तूष्णीमुत्तराम्।[19]।१८। ॥८॥

अग्ने नयेति तिस्रो भुवो यज्ञस्य प्र वः शुक्राय प्र कारव
इत्याग्नेयस्य।१। आ नो दिवो बृहतः पर्वतादा सरस्वती देवयन्तः
सरस्वत्यभि नः पावी रवी कन्या प्र चोदसेमा जुह्वाना इति
सारस्वतस्य।२। त्वं सोम प्र चिकितस्त्वमिमा ओषधीः सोमो धेनुं
या ते धामानि दिवि याहवं युक्तु या ते धामानि हविषेति सौम्यस्य
।३। पूषेमा आशाः प्रपथे पथां पथस्पथः शुक्रं ते यान्ति पूषन्पूषा
सुबन्धुरिति पौष्णस्य।४। आ दैव्या वेधसं बृहस्पतिः समजयत्स हि
शुचिः स सुष्टुभा स ऋक्वता स आ नो योनिमिति बार्हस्पत्यस्य
।५। विश्वे अद्य मरुतो विश्व ऊती ये देवासो अव विश्वे देवाः
शृणुत ये के च ज्मा ते हि यज्ञेषु यज्ञियास ऊमाः सीर्णं बर्हि-
षीति वैश्वदेवस्य।६। इन्द्रं नर इन्द्रो राजेन्द्र क्षत्रमृत न आ नो
विश्वाभिरूतिभिः सजोषा आ ते शुष्मो वृषभ इत्यैन्द्रस्य।७। सोम-

मनूच्य [12] उपोत्तमां च स्तुत्वा [13] उत्तमया परिधाय [14] पर्यावृत्योपविशति। १० [15]। ॥७॥

प्राणं मे पाहि प्राणं मे जिन्व स्वाहा त्वा सुभव सूर्यायेत्युपांशु हूयमानमनुप्राणिति।१। अपानं मे पाह्यपानं मे जिन्व स्वाहा त्वा सुभव सूर्यायेत्यन्तर्याममन्ववानिति।२। उत्तरेणाहवनीयं बहिष्पवमानेन स्तुवते।३। दक्षिणतो ब्रह्मा मैत्रावरुणश्चोपविश्य।४। ब्रह्मन्स्तोष्यामः प्रशास्तरित्युक्तौ।५। आयुष्मत्य ऋचो मा गात तनूपाः साम्नः स्तुत देवस्य सवितुः प्रसव इति जपित्वा।६। ओं स्तुतेति।७। प्रसवः सर्वेषां स्तोत्राणाम्।८। असतो मा सद्गमय तमसो मा ज्योतिर्गमयान्तान्मामन्तं गमय मृत्योर्मामृतं गमयेति यजमानः पवमानानुपसरिष्यन्।९। श्येनो ऽसि पत्वा गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा संपारयास्य यज्ञस्योदृचमिति स्तुते बहिष्पवमाने।१०। सुपर्णो ऽसि पत्वा त्रिष्टुप्छन्दा इति माध्यन्दिने।११। सखासि पत्वा जगच्छन्दा इत्यार्भवे।१२। समान उदर्कः।१३। उपहूता देवा अस्य सोमस्य पवमानस्य विचक्षणस्य भक्ष उप मां देवा ह्वयन्तामस्य सोमस्य पवमानस्य विचक्षणस्य भक्षे मनसा त्वा भक्षयामि वाचा त्वा भक्षयामि प्राणेन त्वा भक्षयामि चक्षुषा त्वा भक्षयामि श्रोत्रेण त्वा भक्षयामीति स्तुते बहिष्पवमाने होता।१४। ॥८॥

आग्नेयः सवनीयः।१। ऐन्द्राग्नो वा।२। ऐकादशिना वा।३। कयूपेष्वैकादशिनेष्वावर्तते परिव्ययणीया रशनाष्टयज्ञात्विस्तिः।४। ।नायूपेषु।५। अग्निष्टे परिव्ययणीयासुक्ता नवसु सप्तसप्ताह।६। कादशे ऽन्तरेण परिव्ययणीयां प्रगाथं च यान्वो नर इति च

सूक्तशेषमन्वाह ।७। उत्तमयोपशयमनुमन्त्रयते ।८। पूर्वेद्युरुच्छ्रितेष्व-परिवीयमाणेषु पूर्वया परिदध्यात् ।९। संतानार्थौ वार्धर्चेनैव काङ्क्षेत् ।१०। समानजातीया अनुसमियात् ।११। यथोत्तमे तथोहेन ।१२। पशुदेवतामावाह्य वनस्पतिं च [13]। इन्द्रं वसुमन्तमावहेन्द्रं रुद्रवन्तमावहेन्द्रमादित्यवन्तमृभुमन्तं विभुमन्तं वाजवन्तं बृहस्पति-मन्तं विश्वदेव्यावन्तमावहेति सवनदेवताः ।१३[14]। नान्येषु निगम-स्थानेषु[15] निगच्छन्ति ।१४। सूक्तवाके वा ।१५[16]। अध्वर्यू संमृश्य प्रवरात्पूर्वेण स्रुवताहुती जुहोति ।१६[17]। जुष्टो वाचो भूयासं जुष्टो वाचस्पतेर्देवि वाग्यत्ते वाचो मधुमत्तमं तस्मिन्नो अद्य धास्स्वाहा सरस्वत्या इति पूर्वाम् ।१७[18]। तूष्णीमुत्तराम् ।१८[19]। ॥९॥

अग्ने नयेति तिस्रो भुवो यज्ञस्य प्र वः शुक्राय प्र काव्य इत्याग्नेयस्य ।१। आ नो दिवो बृहतः पर्वतादा सरस्वतीं देवयन्तः सरस्वत्यभि नः पावी रवी कन्या प्र चोदसेमा जुह्वाना इति सारस्वतस्य ।२। त्वं सोम प्र चिकितस्त्वमिमा ओषधीः सोमो धेनुं या ते धामानि दिव्यषाळ्हं युत्सु या ते धामानि हविरेषेति सौम्यस्य ।३। पूषेमा आशा. प्रपथे पथां पथस्पथः शुक्रं ते यास्ते पूषन्पूषा सुबन्धुरिति पौष्णस्य ।४। आ दैव्या वेधसं बृहस्पतिः समजयत्स हि शुचिः स सुष्टुभा स ऋक्वता स आ नो योनिमिति बार्हस्पत्यस्य ।५। विश्वे अद्य मरुतो विश्व ऊती यं देवासो ऽवथ विश्वे देवाः शृणुत ये के च ज्मा ते हि यज्ञेषु यज्ञियास ऊमाः स्तीर्णं बर्हि-षीति वैश्वदेवस्य ।६। इन्द्रं नर इन्द्रो राजेन्द्र क्षत्रमुरुं न आ नो विश्वाभिरूतिभिः सजोषा आ ते शुष्मो वृषभ इत्यैन्द्रस्य ।७। गोम-

दश्यावहुये नरः शुची वो ऽरा इवेद्या वः शर्म यूयमस्मानिति मारुतस्य।८। उभा वामा इन्द्राग्नी ता योधिष्टं शुचिं नु गीर्भिर्विप्रः प्र चर्षणिभ्य इत्यैन्द्राग्नस्य।९। आ नो देवः सविता त्रायमाण आ देवो यातु सविता यत्कैवौममद्य ये ते पन्था अस्मभ्यं तद्दिव इति सावित्रस्य।१०। अस्तभ्नाद् द्यां तत्त्वा याम्यव ते हेळ एवा वन्दस्वेमां धियं शिक्षमाणस्योदुत्तमं वरुणेति वारुणस्य।११। इत्येकादशिनानाम्।१२। ये चैवंदेवताः पशवः।१३। ॥१०॥

इन्द्रा नु पूषणेत्यैन्द्रापौष्णस्य।१। सोमापूषणेति सोमापौष्णस्य।२। सं वां कर्मणेत्यैन्द्रावैष्णवस्य।३। नासत्याभ्यामित्याश्विनस्य।४। विष्णोर्नु कमिति वैष्णवस्य।५। रात्रीति रात्र्याः।६। भूरिं द्वे इति द्यावापृथिवीयस्य।७। जनीयन्त इति तिस्रः प्र वावृधे दिव्यं सुपर्णे

यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः।
यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वन्तमवसे हुवेम॥

इति सारस्वतः।८। य इमा विश्वा भुवनानीति वैश्वकर्मणस्य चतुर्थीं परिहाप्य।९। आ ते पितरिति रौद्रस्य।१०। अहं रुद्रेभिरिति वाग्देवत्यस्य।११। तिस्रस्तिस्रः पूर्वाः पुरोनुवाक्या वपायाः पुरोळाशस्य पशोस्तिस्रस्तिस्र उत्तरा याज्याः।१२। नैके पशुपुरोळाशं सवनीयस्य।१३। कर्म तु स्यायः।१४। सावित्रशाब्दवर्चो चोपांशु।१५। आवर्तते पशुगणे मनोता।१६। परिव्ययणीयादि वपान्तं प्रातःसवने पशुकर्म कृत्वा निष्क्रम्य तथैवोपस्पृश्य चात्वाले।१७। ॥११॥

धिष्ण्यानुपस्थाय सदः प्रसर्पन्ति।१। अग्रेण हविर्धाने तिष्ठन्तस्तंतमीक्षमाणाः।२। संरालसि कृशानो रौद्रेणानीकेन पाहि मा अग्ने

पिपृहि मा नमस्ते अस्तु मा मा हिंसीरित्याहवनीयम् ।३। रौद्रा-
दितदर्क. ।४। अनुदर्को वा ।५। अपिजो ऽसि दुवस्वानिति मथि-
त्वानुप्रहृतम् ।६। परिषद्यो ऽसि पवमान इत्यास्तवम् ।७। प्रतक्वासि
नभस्वानिति चात्वालम् ।८। कव्यो ऽसि हव्यसूदन इति शामित्रम्
।९। समुद्रो ऽसि विश्वभर इत्युत्करम् ।१०। दक्षिणाहृतो विभूरसि
प्रवाहण इत्याग्नीध्रम् ।११। प्रपत्स्यमानाः सदस्योपर्यभिमृशन्ति दिव-
स्पृष्ठमसि मा मा संताप्सीरिति ।१२। ऋतस्य द्वारौ मा मा संताप्त-
मिति द्वार्यौ संमृश्य [13] । उत्तरेणाग्नीध्रीयं धिष्ण्यं गच्छन्ति ये प्रत्यञ्चो
धिष्ण्यानतिक्रामन्ति ।[14]१३। सलिलसुचो ऽसि सगर इत्यासादमच्छा-
वाकस्य ।[15]१४। वह्निरसि हव्यवाहन इति होतुर्धिष्ण्यम् ।[16]१५। श्वात्रो
ऽसि प्रचेता इति मैत्रावरुणस्य ।[17]१६। तुथो ऽसि विश्ववेदा इति
ब्राह्मणाच्छंसिनः ।[18]१७। उशिगसि कविरसीति पोतुः ।[19]१८। अवस्यु-
रसि दुवस्वानिति नेष्टुः ।[20]१९। अंहारिरसि बम्भारिरित्यच्छावाकस्य
।[21]२०। शुन्ध्युरसि मार्जालीय इत्यवेक्ष्य मार्जालीयम् ।[22]२१। शुन्ध्यु-
रस्युपसद्य इति ब्रह्मसदनम् ।[23]२२। ऋतधामासि स्वर्ज्योतिरित्यौ-
दुम्बरीम् ।[24]२३। समुद्रो ऽसि विश्वव्यचा इति सदो ऽनुवीक्ष्य ।[25]२४।
अजो ऽस्येकपादिति शालामुखीयम् ।[26]२५। अहिरसि बुध्न्य इति
प्राजहितम् ।[27]२६। अन्नदास्यन्नपतिरिति प्रतप्रपणम् ।[28]२७। ॥१२॥

अग्नयः सगराः सगरा स्थ सगरेण नाम्ना रौद्रेणानीकेन पात
माग्नयः पिपृत मा नमो वो अस्तु मा मा हिंसिष्टेति सर्वान् ।१।
अध्वनो ऽधिपतिरसि स्वस्ति नो ऽद्यास्मिन्देवयाने पथि स्तादि-
त्यादित्यमुपस्थाय[2] मैत्रावरुणप्रभृतय उदञ्चो ऽच्छावाकं परिहाय

पूर्वया द्वारा सदः प्रसर्पन्ति । ३ । विश्वे देवा अनु मा प्रसर्पतेन्द्र त्रिधातु शरणं यत इन्द्र भयामहे सदसस्पतिमद्भुतमिति जपन्तो ऽग्रेणोत्तरेण सर्वान्धिष्ण्यान्गच्छन्ति । ४ । दक्षिणधिष्ण्योदक्षिणधिष्ण्यः पूर्वां गत्वा स्वस्वस्य धिष्ण्यस्य पश्चादुपविशन्ति । ५ । उत्तरेण सदो गत्वा ब्रह्मापरया द्वारा सदः प्रपद्य दक्षिणेन मैत्रावरुणं गत्वा यथायतनमास्ते । ६ । नाशंस्थिने सवने ऽपरया द्वारा निःसर्पन्ति । ७ । अन्तरेण होतुर्मैत्रावरुणस्य च धिष्ण्यावधिष्ण्यानां विसंस्थितसंचरः । ८ । उत्तरेण स्वं स्वं धिष्ण्यं धिष्ण्यवताम् । ९ । पश्चार्धेनाग्नीध्रीयस्योदञ्चः । १० । मार्जालीयस्य वा दक्षिणा । ११ । अथावर्तमानाश्च प्रत्यायन्ति । १२ । ऊर्ध्वं प्रातःसवनात्समस्तोपस्थानप्रभृतिना प्रसर्पन्ति । १३ । आदित्योपस्थानं रात्रिपर्यायेष्वाश्विने च न विद्यते न विद्यते । १४ । ॥१३॥

इति शाङ्खायनश्रौतसूत्रे षष्ठो ऽध्यायः समाप्तः ।

ओम् ।

---

प्रसुत्य पुरोळाशैः सवनीयैश्चरन्ति ।१। धानावन्तमिति पुरोनुवाक्या ।२। होता यक्षदिन्द्रं हरिवाँ इत्यनुसवनं प्रैषो यथासमाम्नातम् ।३। यथासवनं वितारयति ।४। तेनैव यजत्युद्धृत्य होतायक्षं होतर्यजं च ।५। अग्ने जुषस्व नो हविरिति स्विष्टकृतः पुरोनुवाक्या ।६। होता यक्षदग्निं पुरोळाशानामित्यनुसवनं प्रैष. ।७। हविरग्ने वीहीति च याज्या ।८। ॥१॥

ऐन्द्रवायवमैत्रावरुणाश्विनस्य द्विदेवत्याः ।१। वायवा याहि दर्शतेन्द्रवायू इम इत्यैन्द्रवायवस्य पुरोनुवाक्ये ।२। होता यक्षद्वायुं होता यक्षदिन्द्रवायू इति प्रैषौ ।३। अग्रं पिब शतेना न इति याज्ये ।४। अयं वां मित्रावरुणेति मैत्रावरुणस्य पुरोनुवाक्या ।५। होता यक्षन्मित्रावरुणेति प्रैषः ।६। गृणाना जमदग्निनेति याज्या ।७। प्रातर्युजेत्याश्विनस्य पुरोनुवाक्या ।८। होता यक्षदश्विनेति प्रैषः ।९। वावृधानेति याज्या ।१०। अनवानं द्विदेवत्यानां पुरोनुवाक्याप्रैषांश्चाह ।११। तथा यजति ।१२। ऐन्द्रवायवस्य नानाप्रणवे पुरोनुवाक्ये ।१३। याज्ये नानावषट्कारे ।१४। सकृत्पुरस्ताज्जपो येयजामहो ऽनुमन्त्रणश्च ।१५। ॥२॥

एतु वसुः पुरूवसुरित्यैन्द्रवायवं प्रतिगृह्योरौ दक्षिणे निधायान-* पिधानमसेचनं च द्विदेवत्यानामा शेषस्यावनयनात् ।१। एतु

पूर्वया द्वारा सदः प्रसर्पन्ति ।[3] २ । विश्वे देवा अनु मा प्रसर्पतेन्द्र त्रिधातु शरणं यत इन्द्र भयामहे सदसस्पतिमद्भुतमिति जपन्तो[4] ऽग्रेणोत्तरेण सर्वान्धिष्ण्यान्गच्छन्ति ।३। दक्षिणधिष्ण्योदक्षिणधिष्ण्य पूर्वा[5] गत्वा स्वस्यस्वस्य धिष्ण्यस्य पश्चादुपविशति ।[6] ४ । उत्तरेण सदो गत्वा ब्रह्मापरया द्वारा सदः प्रपद्य दक्षिणेन मैत्रावरुणं गत्वा यथासनमास्ते ।[7] ५ । नाग्नीध्रे सवने ऽपरया द्वारा निःसर्पन्ति ।[8] ६ । अन्तरेण होतुर्मैत्रावरुणस्य च धिष्ण्यावधिष्ण्यानां विसृप्तिसंचर ।[9] ७ । उत्तरेण स्वंस्वं धिष्ण्यं धिष्ण्यवताम् ।[10] ८ । पश्चार्धेनाग्नीध्रीय-स्योदञ्चः ।[11] ९ । मार्जालीयस्य वा दक्षिणा ।[12] १० । अव्यावर्तमानाश्च प्रत्यायन्ति ।[13] ११ । ऊर्ध्वं प्रातःसवनात्समस्तोपस्थानप्रभृतिना प्रस-र्पन्ति ।[14] १२ । आदित्योपस्थानं रात्रिपर्यायेष्वाश्विने च न विद्यते न विद्यते ।[15] १३ । ॥१३॥

इति शाङ्खायनश्रौतसूत्रे षष्ठोऽध्यायः समाप्तः ।

---

# ओम् ।

प्रहृत्य पुरोलाशं. सवनीयैश्चरन्ति ।१। धानावन्तमिति पुरोऽनुवाक्या ।२। होता यक्षदिन्द्रं हरिवाँ इत्यनुसवनं प्रैषो यथासमाम्नातम् ।३। यथासवनं वितारयति ।४। तेनैव यजत्युद्धृत्य होतायक्षं होतर्यजं च ।५। अग्ने जुषस्व नो हविरिति स्विष्टकृतः पुरोऽनुवाक्या ।६। होता यक्षदग्निं पुरोलाशानामित्यनुसवनं प्रैषः ।७। हविरग्ने वीहीति च याज्या ।८। ॥१॥

ऐन्द्रवायवमैत्रावरुणावाश्विनश्च द्विदेवत्याः ।१। वायवा याहि दर्शतेन्द्रवायू इम इत्यैन्द्रवायवस्य पुरोऽनुवाक्ये ।२। होता यक्षद्वायुं होता यक्षदिन्द्रवायू इति प्रैषौ ।३। अयं पिब शतेभिः न इति याज्ये ।४। अयं वां मित्रावरुणेति मैत्रावरुणस्य पुरोऽनुवाक्या ।५। होता यक्षन्मित्रावरुणेति प्रैषः ।६। गृणाना जमदग्निनेति याज्या ।७। प्रातर्युजेत्याश्विनस्य पुरोऽनुवाक्या ।८। होता यक्षदश्विनेति प्रैषः ।९। वाक्धानेति याज्या ।१०। अनवानं द्विदेवत्यानां पुरोऽनुवाक्या प्रैषांश्चाह ।११। तथा यजति ।१२। ऐन्द्रवायवस्य नानाप्रणवे पुरोऽनुवाक्ये ।१३। याज्ये नानावषट्कारे ।१४। सहापुरस्तात्प्रणवौ ये यजामहो ऽनुमन्त्रणञ्च ।१५। ॥२॥

पैतु वसुः पुरूवसुरित्यैन्द्रवायव प्रतिगृह्णाति दक्षिणे निधाधान-पिधानमनवेक्षणं च द्विदेवत्यानामा शेषस्यावनयनात् ।१। पैतु

वसविंदवसुरिति मैत्रावरुणं प्रतिगृह्य दक्षिणेनैन्द्रवायवं हृत्वा दक्षिणतः पश्चान्निदधाति ।२। एतु वसुः संयद्वसुरित्याश्विनं प्रतिगृह्य दक्षिणेन पूर्वेण पत्नोत्तरतःपश्चान्निदधाति ।३। सोमम्यामे वीर्शीत्यनुवषट्कारः सर्वासु सोमयाज्यासु द्विदेवत्यर्तुयाजान्परिहाप्यादित्यदहमाविन्नद्वी पात्नीवतं च ४। उपांशु वा पात्नीवतस्य।५। ॥३॥

उन्नीयमानेभ्य इत्युक्त आ त्वा वहन्तु हरय इत्युन्नीयमानसूक्तम् ।१। होता यक्षदिन्द्रं प्रातः प्रातःसावस्येति प्रैषः।२। इदं ते सोम्यं मध्विति यजति ।३। वृषभं त्वा वृषभाः प्रतीच इति होतृचमसं प्रतीक्ष्य[4] वयोधसं त्वा वयोधाः प्रतिगृह्णामीति प्रतिगृह्णीरः संप्रेक्ष्य चति द्विदेवत्यांश्च ।[6]४। पुनरुन्नीतानां होत्रका यजन्ति।[7]५। मित्रं वयमिति मैत्रावरुणः।[8]६। इन्द्र त्वा वृषभमिति ब्राह्मणाच्छंसी ।[9]७। मरुतो यस्येति पोता।[10]८। अग्ने पत्नीरिति नेष्टा।[11]९। उक्षान्नायेत्याग्नीध्रः।[12]१०। अयालग्नीदित्युक्ते ऽयालित्याग्नीध्रः।[13]११। स भक्षकर्ता नः सोमं पाययिष्यतीति होता।[14]१२। सोमं भक्षयिष्यन्तो याज्ञिकैर्नामधेयैरुपह्वयस्वेति कर्तारो ऽन्योऽन्यमिनुपह्वमिच्छन्ते ।[15]१३। वषट्कर्ता प्रथमो भक्षयति।[16]१४। प्रतिभक्षितं द्विदेवत्यशेषं नाराशंसवतां च ग्रहाणां होतृचमसे ऽवनयति हुते त्वा भक्षितमवनयाम्यूर्जस्वन्तं देवेभ्य आरुषन्तं मह्यमिति ।[17]१५। द्विरैन्द्रवायवशेषस्यावनयनं तत्राभ्यावर्तते मन्त्रः।[18]१६। अनवसर्जनं च द्विदेवत्यानामा शेषस्यावनयनात्।[19]१७। ॥४॥

इह वसुः पुरुवसुरित्यैन्द्रवायवमध्वर्यवे प्रयच्छोपहृतो वायुरिन्द्रवायू सह प्राणेन सह वर्चसा तयोरहमुपहूतः सह प्राणेन सह वर्च-

चेति भक्षयित्वा प्रयहणमन्त्रेण पुनः प्रगृह्य भक्षमन्त्रेण पुनर्भक्षयति ।१। इह वसुर्विदद्वसुरिति मैत्रावरुणं प्रगृह्य ।२। उपहूतौ मित्रावरुणौ सह चक्षुषा सह वर्चसा तयोरहमुपहूतः सह चक्षुषा सह वर्चसेति भक्षयित्वा ।३। आश्विनं प्रदक्षिणं शिरः पर्याहृत्यावेष्ट्य प्रतिपर्याहृत्यावेष्ट्य ।४। इह वसुः संयद्वसुरित्याश्विनं प्रगृह्य ।५। उपहूतौ देवावश्विनौ सह श्रोत्रेण सह वर्चसा तयोरहमुपहूतः सह श्रोत्रेण सह वर्चसेति भक्षयित्वा ।६। उपस्पृश्येलामुपह्वयते ।७। उपोद्यच्छन्ति चमसान् ।८। होतृचमसमन्वारभते ।९। असंस्पर्शनं सर्वत्राज्यलेपेन सोमस्य ।१०। उपहूय प्रस्थिता भक्षयन्ति ।११। तेजसे त्वा ब्रह्मवर्चसाय भक्षयामीति भक्षमन्त्रः प्रातःसवने ।१२। ओजसे त्वेन्द्रियाय भक्षयामीति माध्यन्दिने ।१३। प्रजायै त्वा पुष्ट्यै भक्षयामीति तृतीयसवने ।१४। शं नो भव हृद इत्युरोऽभिमर्शनी भक्षयित्वा ।१५। सव्ये पाणौ चमसान्कृत्वा दक्षिणेनाप्याययन्ति ।१६। आ प्यायस्व समेतु त इत्याप्यायनी प्रातःसवने।१७। सं ते पयांसीत्युत्तरयोः ।१८। प्रस्थितानाप्याययन्ति ।१९। आज्ये मरुत्वतीये च ।२०। आज्यप्रउगयोर्नाराशंसा निष्केवल्यमरुत्वतीययोर्वैश्वदेवे च ।२१। देवो ऽसि नराशंसो यत्ते मेधः स्वर्ज्योतिस्तस्य त ऊमैः पितृभिर्भक्षितस्योपहूतस्योपहूतो भक्षयामीति भक्षमन्त्रः प्रातःसवने नाराशंसानाम् ।२२। ऊर्वैरिति माध्यन्दिने विकारः।२३। काव्यैरिति तृतीयसवने ।२४। ॥५॥

अच्छावाक सीदेत्युक्तो[1] * ऽग्रेण सद उत्तरेण स्रुतिमुपविश्य[2]

---

* Comm. अथवा अच्छावाक । इत्यारभ्य अधिकारार्थम् ।

पुरोलाशं प्रतिगृह्णाँच्छावाक वदस्वेत्युक्तो ऽच्छा वो अग्निमवस इति तिस्रो ऽन्वाह।१। प्रणवान्निगदम्।२। यजमान होतरध्वर्यो ऽग्नी-द्ब्रह्मन्पोतर्नेष्टरुतोपवक्तरिषेषयध्वमूर्जोजयध्वं नि वो जामयो जिहतां न्यजामयो नि सपत्ना यामनि बाधितासो जेषथाभीत्वरी जेषथा-भीत्वर्याः श्रवद् इन्द्रः शृणवद्वो अग्निः प्रस्थायेन्द्राग्निभ्यां सोमं वोचतोपो अस्मान्ब्राह्मणान्ब्राह्मणा ह्वयध्वमिति।३। उपहवमयं ब्राह्मण इच्छते ऽच्छावाको वेत्यध्वर्युराह तं होतरुपह्वयस्वेति।४। तं होतोपह्वयते।५। प्रयेता वामा सूक्तार्थ सुन्वन्यजमानो अग्र-भीदुत प्रतिष्ठोतोपवक्त उत नो गाव उपहूता उतोपहूत इत्युप-ह्वास्यमानः।६। उत नो गाव उपहूता इत्यतो ऽनुपह्वास्यमानः।७। अनुपहूतो ऽच्छावाको निवर्तध्वमिति सूक्तस्य यावच्छक्नुया-त्तावदनुद्रवेत्।८। होता वा प्रतिक्रामिनमच्छावाकं प्रत्युपह्वय।९।॥६॥

उन्नीयमानायेत्युक्तः प्रत्यस्मै पिपीषत इत्यच्छावाकः सूक्तमन्वाह।१। प्रातर्यावभिरिति यजति।२। भक्षिताप्यायितं चमसमध्वर्यवे प्रदाय दक्षिणाद्वदपरया द्वारा सदः प्रपद्य स्वस्य धिष्ण्यस्य पश्चा-दुपविश्य पुरोलाशं प्राश्नाति।३। पूर्वः प्रस्रस्थेदच्छावाकीयां कुर्यात्स्वेन विमथितसंचरेण निष्क्रम्याच्छावाकस्य बहिष्कर्म कृत्वा स्वकर्म कुरुते।४। स्वे तु होता धिष्ण्ये।५। विकल्पो होत्रकाणां याज्यासु।६। प्रातःसवने ऽनवानन्तो यजन्त्यर्धर्चशो वा।७। अथ प्रसर्पन्ति।८। ऊर्ध्वं चौपासनेभ्यः।९।॥७॥

अथर्तुयाजैश्चरन्ति।१। होता यक्षदिन्द्रं होत्रादित्यृतुप्रैषैरनवानं

प्रेष्यति ।२। तथा यजति ।३। येन प्रेष्यति सा याज्योद्धृत्य होतायवममौयजं च ।४। मैधातिथ्यो वेन्द्र सोमं पिब ऋतुनेति ।५। योयः प्रैषान्ते श्रूयते स स यजति ।६। होतरेतद्यजेत्यध्वर्युराह ।७। गृहपतिश्च ।८। तयोर्यजति ।९। यथावषट्कृतं भक्षयन्ति ।१०। द्विरन्ततो होता ।११। लिमेद्विवैं जिवेदच द्विदेवयेषु चेति ।१२। ॥८॥

आज्यं शंसिष्यन्पिता मातरिश्वाच्छिद्रा पदोगिगमौयानुतवि-पत्तोमो नीथविन्नौथानि नेपद्बृहस्पतिरुक्थामदानि शंसिषदिति जपित्वा शोंसावो३ इत्याहावः सर्वादौ प्रातःसवने तेनाह्वयोपांशु तूष्णींशंसम् ।१। अग्निर्ज्योतिर्ज्योतिरग्निरित्यवसायेन्द्रो ज्योतिर्ज्योति-रिन्द्र इत्यवसाय सूर्यो ज्योतिर्ज्योतिः सूर्य इत्यवसाय पच्छो ऽवस-न्पुरोरुचम् ।२। अग्निर्देवेद्धः। अग्निर्मन्विद्धः। अग्निः सुषमित्। होता देववृतः। होता मनुवृतः। प्रणीर्यज्ञानाम्। रथीरध्वरा-णाम्। अतूर्तो होता। तूर्णिर्हव्यवाट्। आ देवो देवान्वक्षत्। यक्षदग्निर्देवो देवान्। सो अध्वरा करति जातवेदो३ प्र वो देवा-येत्याज्यम् ।३। तस्य प्रथममर्धर्चं पच्छो ऽनवानम् ।४। मरुत्वतीय-वैश्वदेवयोश्च ।५। सूक्तोर्ध्वं शस्त्राहयोत्तमया परिधायोक्थवीर्यं जपति भा विभा उषाः स्वर्ज्योतिः श्लोकाय लोकमवापीति ।६। उक्थवा इत्यध्वर्युराह मदोम शस्तयाम्यामु ।७। अग्न इन्द्रश्चेति यजति ।८। ॥९॥

आज्ये संस्थिते स्तुवते ।१। सोमवतां प्रस्तवाणसोमेति प्रारो-स्तमात्मगीदारादूर्ध्वमाहुय शंसन्ति ।२। प्रउगे ऽन्तरेण माधुच्छन्द-

दनन्तरः प्रगायस्तस्मादूर्ध्वं पञ्चमं माध्यन्दिने ।७। उक्थमुखात्सर्वेषां रात्रौ ।८। यदाध्वर्युराह प्रशास्तः प्रसुहीत्यों सर्पतेति प्रशास्ता आह ।९। दक्षिणाहृतो ऽपरया द्वारा निःसर्पन्त्युत्तरेणौदुम्बरीं दक्षिणेन ब्रह्मा ।१०। अग्रेण शालामुदञ्च. ।११। माध्यन्दिनाय सवनाय यथानिःसृप्तं प्रसृप्य यथासनमुपविशन्ति ।१२। ॥ १४ ॥

आदौ माध्यन्दिनस्य सवनस्य राजानमभिषुण्वन्ति ।१। ग्रावस्तुत्पूर्वया द्वारा हविर्धाने प्रपद्योत्तरस्य हविर्धानस्य दक्षिणं चक्रमग्रेण दक्षिणा तिष्ठन्सोमोपनहनेन मुखं परिवेष्ट्य ग्रावघोषं श्रुत्वासंप्रेषितो ऽभिष्टौत्यर्धर्चशो ऽनवानं वा ।२। अभि त्वा देव सवितर्युञ्जते मन उत युञ्जते धिय आ तू न इन्द्र क्षुमन्तमा नो भर दक्षिणेनोप क्रमस्वा भर ।३। आ प्यायस्व समेतु त इत्याप्यायितवतीनां तिसृणां प्रथमामभिष्टुत्यार्बुदस्य द्वे ।४। द्वितीयामभिष्टुत्यार्बुदस्य द्वे ।५। तृतीयामभिष्टुत्यार्बुदस्यैकाम् ।६। सृजन्ति त्वा दश क्षिप एतमु त्यं दश क्षिप एतं सृजन्ति मर्ज्यमिति सृष्टवतीरभिष्टुत्य ।७। आ कलशा अनूषत कलशेषु धावति परि प्र सोम ते रस इति कलशवतीरभिष्टुत्य ।८। आप्यायितवतीप्रभृत्येवं विहृतो द्वितीयो ऽपि सवः। षष्ठीप्रभृतयः पञ्चार्बुदस्य ।९। एवं विहृतस्तृतीयो ऽपि सवः। तिस्रो ऽर्बुदस्यैकादशीप्रभृतयः ।१०। यस्मिन्सवे हृदच्छन्दं कुर्युरहृदयन्तीति तत्र ।११। षष्ठीं प्रथमे ।१२। वितते पवित्रे पवित्रं त इति द्वे
13 वि यत्पवित्रमित्येका ।१३। प्राञ्च धाराः प्र धारा अस्य प्र ते
धारा इति प्रवर्त्तीषु धारासु ।१४। ग्रहेषु गृह्यमाणेषु याः काम-
येत पावमानीनाम् ।१५। इन्द्रायेन्दो मरुत्वत इति तिस्रो निय-

च्छति ।१६।[17] उत्तमे ग्रहे गृहीते ऽर्बुदस्योत्तमया परिधायादायोष्णीषमुत्सृज्यते ।१७।[18] सत्राहीनानां लब्ध्ये ऽहनि ।१८। अर्बुदं वा ग्रावस्तुतमभिष्टुयात् ।१९।[19] ॥१५॥

माध्यन्दिनेन स्तुते पवमानेन दधिघर्मेण चरन्ति यदि प्रवर्ग्यवान् ।१। होतर्वदस्वेत्युक्त उत्तिष्ठताव पश्यतेति प्रथमामभिष्टौति ।२। श्रातं हविरित्युक्ते द्वितीयां स्तुतस्य ।३। दधिघर्मस्य यजेत्युक्तस्तृतीयया यजति ।४। अनवानमेकैकां समप्रणवामभिष्टौति ।५। तथा यजति ।६। दधिघर्मस्याग्ने वीहीत्यनुवषट्कारः ।७।

मयि त्यदिन्द्रियं बृहन्मयि दक्षो मयि क्रतुः ।
घर्मस्त्रिशुग्विरोचत आकूत्या मनसा सह ।
विराजा ज्योतिषा सह तस्य दोहमशीमहि ।

इति भक्षमन्त्रः ।८। पशुपुरोलाशेन चरित्वातः पुरोलाशैः सवनीयैश्चरन्ति ।९। ॥१६॥

माध्यन्दिनस्य सवनस्येति पुरोनुवाक्या ।१। माध्यन्दिने सवन इति स्विष्टकृतः ।२। असावि देवमित्युन्नीयमानसूक्तम् ।३। होता यक्षदिन्द्रं माध्यन्दिनस्य सवनस्येति प्रैषः ।४। पिबा सोममभि यमुग्रेति यजति ।५। द्वितीया मैत्रावरुणस्य ।६। तृतीया ब्राह्मणाच्छंसिनः ।७। अर्वाङेहीति पोतुः ।८। तवायं सोम इति नेष्टुः ।९। इन्द्राय सोमाः प्रदिवो विदाना इत्यच्छावाकस्य ।१०। आपूर्णो अस्येत्याग्नीध्रस्य ।११। न द्विदेवत्यर्तुयाजा उत्तरयोः सवनयोः ।१२। न सद्यस्कर्माच्छावाकस्य ।१३। समानमन्यत्प्रातःसवनेन ।१४। इलामुपहूय प्राश्नितान्भक्षयित्वा ।१५। एष दक्षिणाकालः ।१६।

द्वादशं शतं गवां दद्यात् ।१७। एकविंशतिप्रभृति वा यथोपपादम् ।१८। ॥१७॥

अग्नये त्वा मह्यं वरुणो ददातु सो ऽमृतत्वमशीय। आयुर्दात्र एधि मयो मह्यं प्रतिगृह्णत इति हिरण्यं प्रतिगृह्णाति ।१। रुद्राय त्वा मह्यं वरुणो ददातु सो ऽमृतत्वमशीय। गौर्दात्र एधि मयो मह्यं प्रतिगृह्णत इति गाः ।२। बृहस्पतये त्वा मह्यं वरुणो ददातु सो ऽमृतत्वमशीय। त्वग्दात्र एधि मयो मह्यं प्रतिगृह्णत इति वासः ।३। यमाय त्वा मह्यं वरुणो ददातु सो ऽमृतत्वमशीय। हयो दात्र एधि मयो मह्यं प्रतिगृह्णत इत्येकशफम् ।४। प्रजापतये त्वा मह्यं वरुणो ददातु सो ऽमृतत्वमशीय। प्राणो दात्र एधि मयो मह्यं प्रतिगृह्णत इत्यन्यत् ।५। ओमिति वा सर्वम् ।६। को ऽदात्कस्मा अदादित्यनुमन्त्रयते प्राणि ।७। उपस्पृशतीतरत् ।८।

अस्मद्राता मधुमतीर्देवत्रा गच्छत प्रदातारमा विशत

इति दत्त्वा जपति ।९। ॥१८॥

इन्द्राय मरुत्वत इत्युक्तः ।१। इन्द्र मरुत्व इति पुरोनुवाक्या ।२। होता यक्षदिन्द्रं मरुत्वन्तमिति प्रैषः ।३। सजोषा इन्द्र सगण इति यजति ।४। तं भक्षयित्वा मरुत्वतीयं शंसति ।५। अध्वर्यो शोंसावो३ इत्याहावः शस्त्रादौ माध्यन्दिने सवने ।६। प्रातःसवनिको ऽन्तःशस्त्रम् ।७। आ त्वा रथं यथोतय इति प्रतिपदं तृचं शस्त्वाह्वय ।८। इदं वसो सुतमन्ध इत्यनुचरं तृचं शस्त्वाह्वय ।९। इन्द्र नेदीय एदिहीतीन्द्रनिहवं प्रगाथं शस्त्वाह्वय ।१०। प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यं प्रगाथं शस्त्वाह्वय ।११। अग्नि-

वामदेव्यं मैत्रावरुणस्य ।१। कया नश्चित्रः कया त्वं न ऊत्येति स्तोत्रियानुरूपौ ।२। कस्तमिन्द्रेति सामप्रगाथः ।३। सद्यो ह जातः ।४। एवा त्वामिन्द्र वज्रिन्नत्र ।५। उग्रन्नु षु ण इति यजति ।६। ॥२२॥

नौधसं ब्राह्मणाच्छंसिनो रथन्तरपृष्ठे ।१। श्यैतं बृहत्पृष्ठे ।२। तं वो दस्मं तत्त्वा यामि सुवीर्यमिति स्तोत्रियानुरूपौ प्रगाथौ नौधसस्य ।३। अभि प्र वः प्र सु श्रुतमिति श्यैतस्य ।४। उदु त्ये मधुमत्तमा इति सामप्रगाथः ।५। इन्द्रः पूर्भिदिति नौधसे ।६। असावि सोमः पुरुहूतेति श्यैते ।७। उदु ब्रह्माणीति समानम् ।८। ऋजीषी वज्रीति यजति ।९। ॥२३॥

कालेयमच्छावाकस्य ।१। तरोभिर्वस्तरणिरित्थिपासतीति स्तोत्रियानुरूपौ प्रगाथौ ।२। उदिन्वस्य रिच्यत इति सामप्रगाथः ।३। भूय इद्वावृधे ।४। इमामू षु ।५। पिबा वर्धस्वेति यजति ।६। ॥२४॥

शस्त्रेषु ।१। प्रायेणायथासमाम्नातम् ।२। बृहती पूर्वा ककुबा सतोबृहत्युत्तरा तं प्रगाथ इत्याचक्षते ।३। बार्हतो बृहत्यां पूर्वस्याम् ।४। काकुभः ककुभि ।५। बृहतीं शस्त्वोत्तमं पादं प्रत्यादायोत्तरस्याः[6] प्रथमेनावसाय[7] द्वितीयेन प्रणुत्य[8] तं प्रत्यादाय तृतीयेनावसायोत्तमेन[9] प्रणौति ।[10]६। तास्तिस्रो भवन्ति बृहती पूर्वोत्तरे ककुभौ ।[11]७। बृहद्रथन्तरयोः ।[12]८। होत्रकाणां च यत्रैते पृष्ठे प्रगाथस्ते ।[13]९। सर्वत्र यज्ञायज्ञीयस्य ।[14]१०। इन्द्रनिहवब्राह्मणस्पत्यानां च ।[15]११। अतो ऽन्यत्र बार्हतानाम् ।[16]१२। बृहतीं

शस्त्रोत्तमं पादं द्विः प्रत्यादायावसायार्धर्चेनोत्तरस्याः[17] प्रणुत्य[18] द्वितीयं पादं द्विः प्रत्यादायावसायोत्तमेनार्धर्चेन प्रणौति।१३।[19] तास्तिस्रो बृहत्यः।१४।[20] उत्तमं ककुभः प्रत्यादत्ते।१५।[21] सतोबृहत्या द्वितीयम्।१५।[22] तास्तिस्रः ककुभः।१६।[23] स्तोत्रियत्वादनुरूपत्वाच्च ॥ २५॥

एतं धर्मं प्रगाथा लभन्ते।१७।[24] इन्द्रनिहवो स्तोत्रियः।१। ब्राह्मणस्पत्यश्च।२। द्वाभ्यामवसायद्वाभ्यामवसायैकेन प्रणौति पङ्क्तीनाम्।३। पञ्चस्त्रिष्टुब्जगतीनामचरपङ्क्तीनां द्विपदानां च।४। सप्रणवो द्वितीयश्च चतुर्थश्च।५। यास्तु पञ्चपदास्त्रैष्टुभे साये जागते वा यत्र पुनःपदं स्यात्तौ तत्र समस्तेन पदेन पुनःपदस्य विप्रयोगो ऽस्ति।६। उत्तमावपुनःपदे।७। द्वाभ्यामवसायद्वाभ्यामवसाय द्वाभ्यां प्रणौति षट्पदानां पुन.पदानाम्।८। द्वाभ्यामवसायापुनःपदानामेकेन प्रणौति द्वाभ्यामवसायैकेन।९। अष्टाक्षरस्तु प्रणवनीयः।१०। एकेनावसाय सप्तपदानां द्वाभ्यां प्रणौति द्वाभ्यामवसाय द्वाभ्याम्।११। प्रथमेषु रात्रिपर्यायेषु गायत्राणां स्तोत्रियानुरूपाणां प्रथमान्यादानभ्यस्यन्ति।१२। मध्यमान्मध्यमेषु।१३। उत्तमानुत्तमेषु।१४। अर्धर्चशो वा प्रातःसवनम्।१५। स्तोत्रियानुरूपांश्च प्रगाथान्परिहाप्य।१६। ॥ २६॥

त्रिपदा गायत्री।१। उष्णिक्।२। पुरउष्णिक्।३। ककुप्।४। विराट् च पूर्वा।५। चतुष्पदोत्तरा विराट्।६। बृहती।७। सतोबृहती।८। जगती।९। अनुष्टुप्।१०। त्रिष्टुप् च।११। पञ्च पङ्क्तेः।१२। षट्सप्तेत्यतिच्छन्दसाम्।१३। स हि प्रार्धो न

मारुतमित्यष्टौ ।१४। द्वौ द्विपदायाः ।१५। ते ऽष्टाक्षराः प्रायेण ।१६। द्वादशाक्षरा जगत्याः ।१७। तृतीयौ चोष्णिग्बृहत्योः ।१८। सतोबृहत्याश्च प्रथमतृतीयौ ।१९। मध्यमः ककुभः ।२०। प्रथमः पुरउष्णिहः ।२१। एकादशाक्षरास्त्रिष्टुब्विराजोः ।२२। उत्तरस्या दशाक्षराः ।२३। तामक्षरपङ्क्तिरित्यप्याचक्षते ।२४। पञ्चभिः पञ्चाक्षरैः पदपङ्क्तिः ।२५। पलयष्टाक्षरा जगत्याः ।२६। एकेन द्वाभ्यामित्यूनके निचृत् ।२७। अतिरिक्ते भुरिक् ।२८। संपाद्यपादभागेनाक्षरार्धस्यर्चः संमितास्तस्य पादभागेन संपन्नाः ।२९। गायत्र्युष्णिहावनुष्टुब्बृहत्यौ पङ्क्तिश्च त्रिष्टुब्जगत्यावित्यानुपूर्व्यं छन्दसां चतुर्विंशत्यक्षरादीनां चतुरुत्तराणां चतुरुत्तराणाम् ।३०। ॥२७॥

इति शाङ्खायनश्रौतसूत्रे सप्तमो ऽध्यायः समाप्तः।

# ओम्



यथा मध्यन्दिनायैवमूर्ध्वं मध्यन्दिनात्प्रसर्पन्ति ।१। आदौ तृतीयसवनस्यादित्यग्रहेण चरन्ति ।२। आदित्येभ्य इत्युक्तः ।३। आदित्यानामवसेति पुरोनुवाक्या ।४। होता यक्षदादित्यानिति प्रैषः ।५। आदित्यासो अदितिरिति यजति ।६। नाहुतिमन्वीक्षते न भक्षयति ।७। सावित्रग्रहे च ।८। आर्भवेण स्तुते पवमानेन मनोतादीलान्तं पशुकर्म कृत्वातः पुरोलाशैः सवनीयैश्चरन्ति ।९। ॥१॥

तृतीये धानाः सवन इति पुरोनुवाक्या ।१। अग्ने तृतीये सवन इति स्विष्टकृतः ।२। इहोप यातेत्युन्नीयमानसूक्तम् ।३। होता यक्षदिन्द्रं तृतीयस्य सवनस्येति प्रैषः ।४। इन्द्र ऋभुभिर्वाजवद्भिरिति यजति ।५। इन्द्रावरुणा सुतपाविति मैत्रावरुणः ।६। इन्द्रश्च सोममिति ब्राह्मणाच्छंसी ।७। आ वो वहन्त्विति पोता ।८। अमेव न इति नेष्टा ।९। इन्द्राविष्णू पिबतमित्यच्छावाकः ।१०। इमं स्तोममित्याग्नीध्रः ।११। समानमन्यत्प्रातःसवनेन ।१२। इलामुपहूय प्रस्थिताम्भक्षयित्वा[13] पुरोलाशस्य परिवापमिश्रस्य नाराशंसानां सन्नानां यथाचमसं दक्षिणतस्त्रींस्त्रीन्पिण्डानुपास्यन्यत्र पितरो मादयध्वं यथाभागं पितर आवृषायध्वमिति पिण्डेपिण्डे ।१३।[14] ॥२॥

देवाय सवित्र इत्युक्तः ।१। अभूद्देव इति पुरोनुवाक्या ।२। होता यक्षद्देवं सवितारमिति प्रैषः ।३।

दमूना देवः सविता वरेण्यो दधद्रत्नं दक्षपितृभ्य आयूंषि ।

पिबात्सोममममदन्नेनमिष्टय: परिज्मा चिद्रमते अस्य धर्मणि ॥

इति यजति ।४। अध्वर्यो शोशोंसावो ३ इत्याहाव: शस्त्रादौ तृतीयसवने सोक्ये ।५। प्रात:सवनिको ऽन्त:शस्त्रम् ।६। षोलशिप्रस्तौ च ।७। तत्सवितुर्वृणीमह्रे ऽद्या नो देव सवितरिति तृचौ प्रतिपदनुचरौ वैश्वदेवस्य ।८। अभूद्देव इति सावित्रम् ।९।

एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विंशती च ।

तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वायविह ता वि मुञ्च: ।१०।

प्र द्यावा यज्ञै: पृथिवी ऋतावृधेति द्यावापृथिवीयम् ।११। मदानस्मिन्प्रतिगर: ।१२। सुरूपकृत्नुमित्येका ।१३। तत्त्वयमित्यार्भवम् ।१४। अयं वेनो येभ्यो माता पित्र इत्येकपातिन्य: ।१५। आ नो भद्रा इति वैश्वदेवस्योत्तमे शिष्ट्वा निविदम् ।१६। परिधानीयोत्तमा ।१७। पच्छो द्विरर्धर्चशस्तृतीयम् ।१८। उक्थवीर्यं जपित्वा विश्वे देवा: शृणुतेममिति यजति ।१९। ॥३॥

घृतस्य यजेत्युक्तो घृतं मिमिक्ष इत्युपांशु यजति ।१। सौम्यस्य यजेत्युक्तस्त्वं सोम पितृभिरिति यजति ।२। घृतस्य यजेत्युक्त[3]

उरु विष्णो वि क्रमस्वोरु क्षयाय नस्कृधि ।

घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर ॥

इत्युपांशु यजति ।[4]३। विकल्प: परोज्यायाम् ।[5]४। सौम्यं होतावेद्याङ्गुलिभ्यां सर्पिष्पशृशति ।[6]५। चक्षुष्पा असि चक्षुर्मे पाहीति चक्षुषी विमार्ष्टि ।[7]६। ॥४॥

अग्नीत्पात्नीवतस्य यजेत्युक्त ऐभिरग्ने सरथमित्युपांशु यजति।१। अभक्षयित्वा पात्रमादाय पूर्वया द्वारा सद: प्रपद्य ।२। उत्तरतो

नेष्टारमुपोपविश्य । ३ । उपस्थे वा । ४ । नेष्टरुपह्वयस्वेत्युक्त्वा । ५ । भक्षयित्वोपसृज्य । ६ । यथेतं प्रत्येत्य । ७ । ॥ ५ ॥

यज्ञायज्ञीयं स्तोत्रमाग्निमारुतस्य । १ । वैश्वानराय पृथुपाजस इति वैश्वानरीयम् । २ । आ ते पितरित्येका । ३ । प्रत्वक्ष इति मारुतम् । ४ । यज्ञा यज्ञा वो अग्नये देवो वो द्रविणोदा इति स्तोत्रियानुरूपौ प्रगाथौ यज्ञायज्ञीयस्य । ५ । प्र तव्यसीमिति जातवेदसीयम् । ६ । आपोहिष्ठीयास्तिस्रः । ७ । उत नोऽहिर्बुध्न्यः शृणोत्वित्येका । ८ । देवानां पत्नीरिति द्वे । ९ । राकामहमिति द्वे । १० । अविदद्दक्षमित्यक्षरपङ्क्तयस्तिस्रः । ११ । उदीरतामिति पैत्र्यस्तिस्रः । १२ । इमं यम मातली कव्यैरङ्गिरोभिरिति याम्यः । १३ । स्वादुष्किलीयास्तिस्रः । १४ । महानाम्नु प्रतिगरः । १५ । ययोरोजसा विष्णोर्नु कं तन्नु तन्नमित्येकपातिन्यः । १६ । एवा न इन्द्रो मघवेति परिधायोक्थवीर्यं[17] जपित्वाग्ने[18] मरुद्भिः शुभयद्भिरिति यजति । १[19] । ॥ ६ ॥

प्रथमा निविन्मरुत्वतीयस्य । १ । द्वितीया निष्केवल्यस्य । २ । तृतीयाप्रभृतयो वैश्वदेवाग्निमारुतयोः । ३ । उत्तमा पोलग्निनः । ४ । यावन्ति सूक्तानि तावत्यो निविदः । ५ । सूक्तस्यसूक्तस्याह्वावः पुरस्तात् । ६ । निविदोनिविदश्च । ७ । एकैकस्याश्चैकपातिन्याः । ८ । परिधानीयायै च । ९ । वैश्वदेवे प्रतिपदनुचरयोः । १० । आग्निमारुते स्तोत्रियानुरूपयोः । ११ । आपोहिष्ठीयानाम् । १२ । देवानां पत्नीनाम् । १३ । राकायाश्च । १४ । अक्षरपङ्क्तीनाम् । १५ । पैत्रीणाम् । १६ । याम्यानाम् । १७ । स्वादुष्किलीयानां च । १८ । विपर्त

शस्त्रं वैश्वदेवस्य । १९ । अभ्ययमाग्निमारुतस्यापोद्धिष्टीयाः परिहाय । २० । अप्सु सोमान्सादयित्वानुयाजादि संस्थन्तं पशुकर्म कृत्वा ॥ ७॥

हारियोजनेन चरन्ति । २१ । तिष्ठा सु कमिति पुरोनुवाक्या । १ । धानाः सोमानामिन्द्रेति प्रैषः । २ । युनज्मि त इति याज्या । ३ । धानाः सोमानामग्ने वीहीत्यनुवषट्कारः । ४ । सोमस्याग्ने इति वा । ५ । अप्सु धूतस्य देव सोम ते मतिविदो नृभि ष्टुतस्तोत्रस्य शस्तोक्थस्येष्टयजुषो यो ऽश्वसनिर्गोसनिर्भक्षस्तस्य त उपहूतस्योपहूतो भक्षयामीति प्राणभक्षान्भक्षयित्वा धाना आदधते । ६ । भूयिष्ठा होता लिप्सेत । ७ । येन प्रातःसवने प्रसर्पन्ति तेन निःसर्पन्ति । ८ । यथा ह त्यदसव इति धिष्ण्यान्समीक्ष्याग्नीध्रीयमुत्तरेणाहवनीयमायन्ति । ९ । भूर्भुवः स्वः स्वाहा स त्वं नो अग्ने ऽवमस्त्वं नो अग्ने वरुणस्य तदस्तु मित्रावरुणेत्याग्नीध्रीये प्रायश्चित्ताहुतीर्जुहति । १० । आपुर स्था मा प्रजया पशुभिः पूरयतेत्याहवनीयस्य भस्मान्ते धाना न्युप्य ॥ ८॥

पञ्चपञ्च शकलानादधते । ११ । आत्मकृतस्यैनसो ऽवयजनमसि मनुष्यकृतस्यैनसो ऽवयजनमसि पितृकृतस्यैनसो ऽवयजनमसि देवकृतस्यैनसो ऽवयजनमसि यचाहमेनो विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यावयजनमसीति । १ । सव्यावृत उत्तरेणाहवनीयमप्सु सोमान्ययासमं पश्चादुपोपविश्य पवित्राण्यवधाय चेष्टयन्ते[2]

समापो अद्भिरग्मत समोषधयो रसेन ।

सं रेवतीर्जगतीभिः पृच्यन्तां सं मधुमतीर्मधुमतीभिः पृच्यन्तामिति । [3] । समुपहूताः स्म इति । ३ । अप्सु धूतस्य देव सोम ते

मतिविदो यो ऽस्यस निर्गमिनिर्भवस्तस्य त उपहृतस्योपहूतो भक्षया-
मीति प्राणभक्षान्भक्षयित्वा । ४। अच्छायं वो यथोरो ऽजमेति प्राची-
र्निनीयोदीचीर्वा । ५। समुद्रं व इत्यभिमन्त्र । ६। शंनोदेवीया-
भिस्तस्तृभिस्तरो ऽभिष्टय । ७। समानं प्राणसंमर्शनं मुखविमार्जनं
च । ८। दक्षिणाहृत आग्नीध्रीये दधि प्राश्य यथा दधिभक्षम् । ९।
पत्नीसंयाजान्संस्थाप्य हुतेषु समिष्टयजुःषु ॥ ८ ॥

अवभृथमवैति । १०।

पुनर्मामैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च ।

पुनरग्नयो धिष्ण्यासो यथा स्थानं धारयन्तामिहैव ॥

इति यजमानो धिष्ण्यान्समीक्षेताचानूबन्ध्यायां वा संस्थितायामृ-
त्विजः समीक्षेत

उभा कवी युवाना सत्यादा धर्मणा

सत्यस्य धर्मणस्पती वि सख्यानि सृजामहै ॥

इति । १। उरुं हि राजेत्यनुसंयन् । २। सर्वे साम्नो निधनमुप-
यन्ति । ३। नमो वरुणायाभिष्ठितो वरुणस्य पाश इत्यप्सु पादमव
धाय । ४। ॥ १० ॥

वारुणीष्टिः । १। पौर्णमासीविकारः । २। अप्स्वग्ने ऽप्सु मे सोम
इति वाप्सुमन्तौ । ३। तिष्ठन्यजति । ४। उदुत्तमं वरुणाव ते हेलः
। ५। स त्वं नो अग्ने ऽवमस्त्वं नो अग्ने वरुणस्य विद्वानित्यग्नीवरु-
णावादिशति । ६। न निगदमाह । ७। सूपादा । ८। अपबर्हिषः
प्रयाजानुयाजान्यजति । ९। प्रयाजादिरनुयाजान्ता । १०। स्विष्ट-
कृदन्ता वा । ११। आज्यभागौ वा परिहाप्यानुयाजौ च । १२।

येन स्त्रियावकृणुतं येनापामृशतं सुराम्
येना चामभ्यषिञ्चतं येनेमां पृथिवीं महीम्
यद्वां तदश्विना यशस्तेन मामभिषिञ्चतम्।

इति होताभ्युचते ।१३।

उपेक्षिवेन चक्षुषा गृहान्परैमि मानुषः ।

इत्यागच्छन्यजमानः ।१४।

इडा यहुदक्षिणो अपि पूषा नि षीदतु ।

इत्युपविश्याहवनीये समिधावादधाति देवानां समिदसीति पूर्वां तूष्णीमुत्तराम् ।१५। तूष्णीं पत्नी गार्हपत्ये ।१६। ॥११॥

प्रायणीयवदोदयनीया व्याख्याता ।१। विपर्यासो याज्यापुरोनुवाक्यानां खिष्टकृतः परिहाप्य ।२। पथ्यां स्वस्तिं चतुर्थीं यजति ।३। तृतीयं सवितारम् ।४। मैत्रावरुणी च वशानूबन्ध्या ।५। पयस्या वा ।६। आ वां मित्रावरुणा तत् सु वां मित्रावरुणा नो मित्रावरुणेति पुरोनुवाक्याः ।७। युवं वस्त्राणि यद्वंहिष्ठं प्र बाहवेति याज्याः ।८। दीक्षणीयामप्यत्यानूबन्ध्यायाः संस्थानान्त वेदे पत्नीं वाचयति न स्तृणाति ।९। अनूबन्ध्यायां वाचयित्वाग्नीध्रीयं धिष्ण्यं स्तृणाति ।१०। मापो मौषधीर्हिंसीः ध्रुवसि यं द्विष्मस्ते भ्रूगच्छतु ।

धाम्नोधाम्नो राजंस्ततो वरुण नो मुञ्च ।

यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च ॥

इति उदयन्ूलमुपप्याय[11] समिचिया न आप ओषधयः सन्तुपश्चम[12] दुर्मित्रियास्तस्मै सन्तु यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म

इति दक्षिणा निरूहन्ति ।११।[13] आज्यभागप्रभृति वा पयस्या ।१२।[14] अमावास्याविकारः ।१३।[15] अनिगदेलान्ता ।१४।[16] ॥१२॥

उदङ्ङुद्वसाय वैष्णव्यर्चा पूर्णाहुतिं हुत्वोदवसानीयया यजति ।१। आग्नेयीष्टिः ।२। पौर्णमासीविकारः ।३। याः पुनराधेये ता हविषः स्विष्टकृतश्च ।४। पञ्चकपाले पौनराधेयिकीष्टिः ।५। संस्थितायां सायमग्निहोत्रं जुहोति ।६। ॥१३॥

मन्द्रया वाचा प्रातःसवनम् ।१। उच्चैस्तरामाज्यात्प्रउगम् ।२। मध्यमया माध्यन्दिनम् ।३। उच्चैस्तरां मरुत्वतीयान्निष्केवल्यम् ।४। उत्तमया तृतीयसवनम् ।५। उच्चैस्तरां वैश्वदेवादाग्निमारुतम् ।६। उत्तमया वा माध्यन्दिनम् ।७। मन्द्रया तृतीयसवनम् ।८। मध्यमया वा ।९। ॥१४॥

यस्मै प्रेष्यत्या तस्यापवर्गाद्वाचं यच्छति ।१। आहावप्रभृति वानुवषट्कारात् ।२। प्रातरनुवाके मह्या ।३। भक्षयित्वा वा स्तोत्रप्रसवात् ।४। प्रसवप्रभृति वानुवषट्कारात् ।५। प्रतिप्रैषान्तं श्रुत्वा वसतीवरीणां परिहरणात् ।६। यस्ते द्रप्स स्कन्दति द्रप्सश्चस्कन्देति विप्रुषां होमः पुरस्तात्पवमानानाम् ।७। सर्पतश्चानुसर्पति ।८। मैत्रावरुणश्च ।९। अग्निचित्यायां चाग्नौ प्रणीयमाने अप्रतिरथं जपति ।१०।

विश्वा आशा दक्षिणतः सर्वान्देवानयाळिह ।
स्वाहाकृतस्य घर्मस्य मध्वः पिबतमश्विना ॥

इति महावीरमनुमन्त्रयम् ।११।

अश्विना घर्मं पातं हार्द्वानमहर्दिवाभिरूतिभिः ।

तन्वायिणे नमो द्यावापृथिवीभ्याम् ॥

इति वषट्कृते ।१२।

अपातामश्विना घर्ममनु द्यावापृथिवी अमंसाताम् ।

इहैव रातयः सन्तु ॥

इत्यनुवषट्कृते ।१३। समानमनिर्दिष्टम् ।१४। इति सोमे ब्रह्म-कर्म ।१५। ॥१५॥

इन्द्रो मरुत्वान्सोमस्य पिबतु। मरुत्स्तोत्रो मरुद्गणः। मरुद्वृधो मरुत्सखा। य इमेनं देवा अन्वमदन्। अप्तूर्ये वृत्रतूर्ये। शम्बरहत्ये गविष्टौ। अर्चन्तं गुह्या पदा। परमस्यां परावति। वधीद्वृत्रं वृज-दपः। मरुतामोजसा सह। आर्दीं ब्रह्माणि वर्धयन्। अनाधृष्टा-न्योजसा। कृण्वन्देवेभ्यो दुवः। मरुद्भिः सखिभिः सह। इन्द्रो मरुत्वां इह श्रवदिह सोमस्य पिबतु। प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवतु। चित्रश्चित्राभिरूतिभिः। श्रवद्ब्रह्माण्यावसा गमत् ।१। अयोक्थवी-र्यम् ।२। रूपमनुरूपं प्रतिरूपं सुरूपमिष्टेपेयो भद्रमाप्त्रुवते स्तोत्रयमवाचीन्द्रायेति ।३। ॥१६॥

इन्द्रो देवः सोमं पिबतु। एकजानां वीरतमः। भूरिजानां तवस्तमः। हर्यो स्थाता। पृश्नेः प्रेता। वज्रस्य भर्ता। पुरां भेत्ता। पुरां दर्मा। अपां नेता। सत्वनां नेता। निजघ्निर्दूरेश्रवाः। उप-मातिकृद्दसनावान्। इहोग्रन्देवो बभूवान्। इन्द्रो देव इह श्रवदिह सोमं पिबतु। प्रेमां देव इति समानम् ।१। अयोक्थवीर्यम् ।२। संराळसि स्वराळसि विराळसि राजास्यभिभूरस्यभिभूयास्म वयं यं दिष्मो ऽपाप्नुवते स्तोत्रयमवाचीन्द्रायेति ।३। ॥१७॥

सविता देवः सोमस्य मत्सत्। हिरण्यपाणिः सुजिह्वः। सुबाहुः स्वङ्गुरिः। त्रिरहन्सत्यसवनः। यः प्रासुवद्वसुधिती। उभे जोष्ट्री सवीमनि। श्रेष्ठं सावित्रमासुवम्। दोग्ध्रीं धेनुम्। वोढारमनड्वाहम्। आशुं सप्तिम्। जिष्णुं रथेष्ठाम्। पुरंधिं योषाम्। सभेयं युवानम्। सविता देवः परामीवां साविषत्पराघशंसम्। इह श्रवदिह सोमस्य मत्सत्। प्रेमां देव इति समानम्।१। ॥१८॥

द्यावापृथिवी सोमस्य मत्सताम्। पिता च माता च। धेनुश्च ऋषभश्च। धन्या च धिषणा च। सुरेताश्च सुदुघा च। शंभूश्च मयोभूश्च। ऊर्जस्वती च पयस्वती च। द्यावापृथिवी इह श्रुतामिह सोमस्य मत्सताम्। प्रेमां देवी देवहूतिमवतां दैव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवताम्। चित्रैश्चित्राभिरूतिभिः। श्रुतां ब्रह्माण्यावसा गताम्।१। ॥१९॥

ऋभवो देवाः सोमस्य मत्सन्। विष्ट्वी स्वपसः। कर्मणा सुहस्ताः। धन्या धनिष्ठाः। शम्या शमिष्ठाः। शच्या शचिष्ठाः। ये धेनुं विश्वजुवं विश्वरूपामतक्षन्। अतक्षन्धेनुमभरन्दिश्वरूपी। अयुञ्जन्त कनीना मदन्तः। अयुञ्जत हरी अयुर्देवाँ उप। संवत्सरे स्वपसो यज्ञियं भागमायन्। ऋभवो देवा इह श्रवन्निह सोमस्य मत्सन्। प्रेमां देवा देवहूतिमवन्तु दैव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवन्तु। चित्रैश्चित्राभिरूतिभिः। श्रवन्ब्रह्माण्यावसा गमन्।१। ॥२०॥

विश्वे देवाः सोमस्य मत्सन्। विश्वे वैश्वानराः। महि महान्तः। पक्वान्ना नेमतिथीवानः। आस्क्राः पचतवाहसः। ये द्यां च पृथिवीं

चातम्युः। अपश्च स्वश्च। ब्रह्म च क्षत्त्रं च। बर्हिश्च वेदिं च। पृथ्वीं चोरु चान्तरिक्षम्। वातात्मानो अग्निदूताः। ये स्थ त्रय एकादशासः। त्रयश्च त्रिंशच्च। त्रयश्च त्री च शता। त्रयश्च त्री च सहस्रा। तावन्त उदरणे। तावन्तो निवेशने। तावतीः पत्नीः। तावतीर्ग्नाः। तावन्तो ऽभिपाचः। तावन्तो रातिषाचः। अतो वा देवा भूयांस स्थ। मा वो देवा अविशसा मा विशसायुरा वृचि। विश्वे देवा इह अवन्विह सोमस्य मत्सन्। प्रेमां देवा इति समानम्।१। अथोक्थ्यवीर्यम्।२। भूतमसि भविष्यदसि विभूतमसि प्रभूतमसि सदसि चतुरस्त्रोजो ऽसि भद्रमसि श्रुतायै त्वावाचीन्द्रायोक्थं देवेभ्यः।३। ॥२१॥

अग्निर्वैश्वानरः सोमस्य मत्सत्। विश्वेषां देवानाम् समित्। अजस्रं दैव्यं ज्योतिः। यो विड्भ्यो मानुषीभ्यो दीदेत्। युषु पूर्वासु दिद्युतानः। अजर उपसामनीके। आ यो द्यां भात्या पृथिवीम्। ओर्वन्तरिक्षम्। ज्योतिषा वज्रियाय शर्म यंसत्। अग्निर्वैश्वानर इह अवदिह सोमस्य मत्सत्। प्रेमां देव इति समानम्।१। ॥२२॥

मरुतो देवाः सोमस्य मत्सन्। सुष्टुभः स्वर्काः। अर्कस्तुभो बृहद्वयसः। नभस्या वर्षनिर्णिजः। त्वेषासः पृश्निमातरः। शुभ्रा हिरण्यखादयः। तवसो भन्ददिष्टयः। शूरा अनाधृष्टरथाः। मरुतो देवा इह अवन्विह सोमस्य मत्सन्। प्रेमां देवा इति समानम्।१। ॥२३॥

अग्निर्जातवेदाः सोमस्य मत्सत्। स्वनीकश्चित्रभानुः। अप्रो-

पिवान् गृहपतिः। तिरस्तमांसि दर्शतः। घृताहवन ईड्यः। सद्मस्थमर्मामृतयज्वा। प्रतीत्या शत्रूञ्जेतापराजितः। अग्ने जातवेदो ऽभि द्युम्नमभि सह आयच्छस्व। स्तुतो ऽस्मृतः। सनेद्वारमंहसः पाहि। अग्निर्जातवेदा इह श्रवदिह सोमस्य मत्सत्। प्रेमां देव इति समानम्। १। अयोवयवीर्यम्। २। तेजो ऽसि पृथिरसि विष्टिरसि प्रष्टिरसि विधृतिरसि धरुणमसि धर्मासि धर्मो ऽस्याश्रुत्यै स्वावाचीन्द्रायोवयं देवेभ्यः। ३। ॥ १४ ॥

अस्य मदे जरितरिन्द्रः सोमस्य मत्सत्। अस्य मदे जरितरिन्द्रो ऽहिमहन्। अस्य मदे जरितरिन्द्रो वृत्रमहन्। अस्य मदे जरितरिन्द्र उद्यामस्तभ्नादप्रथयत्पृथिवीम्। अस्य मदे जरितरिन्द्रो ऽन्तरिक्षमतिरदा सूर्यं दिव्यैरयत्। अस्य मदे जरितरिन्द्र उदार्यं वर्णमतिरदव दासं वर्णमहन्। अस्य मदे जरितरिन्द्रो ऽपिन्वदपितो ऽजिन्वदजुवः। अस्य मदे जरितरिन्द्र स्वर्या इव पम्फणतः पर्वतान्प्रकुपितां अरम्णात्। अस्य मदे जरितरिन्द्रो ऽपां वेगमैरयत्। अस्य मदे जरितरिन्द्र इह श्रवदुप गिरि छात्। अस्य मदे जरितरिन्द्र इह श्रवदिह सोमस्य मत्सत्। प्रेमां देव इति समानम्। १। अयोवयवीर्यम्। २। रोहोभ्यां रोहो मध्यस्य विष्टपं स्वर्या तनूनाक इति नाक इति। ३। ॥ १५ ॥

इति शाङ्खायनश्रौतसूत्रे ऽष्टमो ऽध्यायः समाप्तः।

पूर्वार्धं समाप्तः।

# ओम् ।

—•◎•—

व्याख्यातो ऽग्निष्टोमः प्रकृतिर्द्वादशाहस्यैकाहानां च ।१। तस्य विकारं व्याख्यास्यामः ।२। श्रूयमाणं प्राकृतं नामधेयमन्यस्मिन्द्रव्ये प्रकृतिं निवर्तयति ।३। प्रतिषेधः ।४। अर्थः ।५। परिसंख्या ।६। उपजनो वा ।७। आग्निमारुतादूर्ध्वमागमास्त्रयाणां शस्त्राणामुक्थ्यो भवति ।८। एकागमादूर्ध्वमुक्थ्येभ्यः षोडशी ।९। त्रयोदशागमादूर्ध्वं षोडशिनो ऽतिरात्रः ।१०। अन्तरेणाग्निमारुतमनुयाजांश्चैतेषां स्थानम् ।११। ॥१॥

साकमश्वं मैत्रावरुणस्य ।१। एष्वू षु ब्रवाणीति स्तोत्रियानुरूपौ ।२। चर्षणीधृतमसाम्नाद्यामिति तृचौ ।३। इन्द्रावरुणा युवमध्वराय नः ।४। आ वां राजानौ ।५। इन्द्रावरुणा मधुमत्तमस्येति यजति ।६। ॥२॥

सौभरं ब्राह्मणाच्छंसिनः ।१। वयमु त्वामपूर्व्य यो न इदमिदमिति स्तोत्रियानुरूपौ प्रगाथौ ।२। प्र मंहिष्ठाय यो अद्रिभिदिति तृचौ ।३। अस्त्येव सु प्रतरमित्युत्तमामुद्धृत्योदप्रुत इति शस्त्वा[6] या पूर्व्योद्धृता तया परिधाय इदम्वते युवमिन्द्रश्चेति यजति ।[6]४। ॥३॥

नार्मेधमच्छावाकस्य ।१। अधा हीन्द्रेति स्तोत्रियानुरूपौ ।२। ऋतुर्जनित्री ।३। विष्णोर्नु कम् ।४। प्र वः पान्तमन्धसः ।५।

स वां कर्मणा ।६। इन्द्राविष्णू मदपती मदानामिति यजति ।७। ॥ ४ ॥

षोलशिने स्तोष्यमाणेषु[1] *

यस्माज्जातो न परो अन्यो अस्ति य आ बभूव भुवनानि विश्वा ।

प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोलशी ॥

इति यजमानः षोलशिग्रहमुपतिष्ठेत ।१[2]।

इन्द्र जुषस्व प्र वहा याहि शूर हरिह ।

पिबा सुतस्य मतिर्न मध्वश्चकानश्चारुर्मदाय ॥

इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न ।

अस्य सुतस्य स्वर्णोप त्वा मदाः सुवाचो अस्थुः ॥

इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न ।

बिभेद वलं भृगुर्न ससाहे शत्रून्मदे सोमस्य ॥

इति स्तोत्रियः शस्त्रा ।२[3]। त्वावतः पुरूवसो इत्येका ।३[4]। आ त्वा वहन्तु हरय स्वादोरित्थेति गायत्रं तृचं पाङ्क्तं च विहरति ।४[5]। प्रथमेन गायत्रेण पादेन प्रथमं पाङ्क्तं पादं सधायावस्यति ।५[6]। द्वितीयेन गायत्रेण द्वितीयं सधाय प्रणौति ।६[7]। तृतीयेन गायत्रेण तृतीयं सधायावस्यति ।७[8]। द्वौ पङ्क्ती परिशिष्टौ ताभ्यां प्रणौति ।८[9]। इन्द्राय साम गायता मन्द्रैरिन्द्र हरिभिरित्यौष्णिहं तृचं बार्हतं च विहरति ।९[10]। प्रथमेनौष्णिहेन पादेन प्रथमं बार्हतं पादं सधायावस्यति ।१०[11]। द्वितीयेनौष्णिहेन द्वितीयं सधाय प्रणौति

---

* षोलशिग्रहमुपतिष्ठतेति सूत्रच्छेदः Comm

।[12]११। अष्टाक्षरमौष्णिहस्य पादस्याष्टाक्षरं बार्हतस्य ताभ्यामवस्यति ।[13]१२। चतुरक्षरे शिष्टे ते समस्योत्तमं बार्हतं पादं संधाय प्रणौति ।[14]१३। ॥ ५ ॥

आ धूर्षु न इति द्विपदां च विंशत्यक्षरां त्रिष्टुभं च विहरति ।१। प्रथमेन द्वैपदेन पञ्चाक्षरेण प्रथमं त्रैष्टुभं पादं संधायावस्यति ।२। द्वितीयेन पञ्चाक्षरेण द्वितीयं संधाय प्रणौति ।३। तृतीयेन पञ्चाक्षरेण तृतीयं संधायावस्यति ।४। चतुर्थेन पञ्चाक्षरेण चतुर्थं संधाय प्रणौति ।५।

एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ।
विश्रुतयो यथा पथ इन्द्र त्वद्यन्ति रातयः ।
त्वामिच्छवसस्पते यन्ति गिरो न संयतः ।

प्र ते महे विदथे द्वैपदं तृचं जागतं च विहरति ।६। प्रथमेन द्वैपदेन चतुरक्षरेण प्रथमं जागतं पादं संधायावस्यति ।७। द्वितीयेन चतुरक्षरेण द्वितीयं संधाय प्रणौति ।८। तृतीयेन चतुरक्षरेण तृतीयं संधायावस्यति ।९। चतुर्थेन चतुरक्षरेण चतुर्थं संधाय प्रणौति ।१०। इन्द्रो दधीच इति तिसृणां गायत्रीणां द्वाभ्यामवसाय पादाभ्यां द्वाभ्यां प्रणौति द्वाभ्यामवसाय द्वाभ्याम् ।११। उत्तमेन गायत्रेण पादेन प्रोष्वस्मै पुरोरथमित्येतस्याः पादं संधायावस्यति ।१२। द्वाभ्यां प्रणौति[13] द्वाभ्यामवसाय[14] द्वाभ्याम् ।[15]१३। प्र प्र वस्त्रिष्टुभमिति तृचम् ।[16]१४। आ यत्पतन्तीत्येका ।[17]१५। यो व्यतीनित तिसृणामुत्तमां परिशिष्य निविदम् ।[18]१६। स्तोत्रिये चावापे निविदे परिधानीयायै च ।[19]१७। उपद्रुभस्येति

परिधायोक्थवीर्यं[20] जपित्वापाः[21] पूर्वेषामिति यजति ।१८[22]। एतस्मिन्स्तोत्रिये चत्वारिंशत्संपदानुष्टुभः ।१९[23]। विक्रियमाणे यथासमाम्नातम् ।२०[24]।

इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् ।
तयोरहं भक्षमनुभक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु ॥
इति ग्रहं भक्षयति ।२१[25]। ॥ ६ ॥

पान्तमा वो अन्धस इति स्तोत्रियानुरूपौ होतुः प्रथमेषु रात्रिपर्यायेषु ।१। न प्रथमस्य प्रथममाम्रेडयात् ।२। शेषः सूक्तस्योक्थमुखम् ।३। अभि त्यं मेषमिति जागतम् ।४। अध्वर्यवो भरतेन्द्रायेति यजति ।५। ॥ ७ ॥

प्र व इन्द्राय मादनं प्रकृतानीति मैत्रावरुणस्य ।१। सुरूपकृत्नुमित्युक्थमुखम् ।२। त्यं सु मेषमिति जागतस्य नवमीं चोत्तमां चोद्धृत्य चतुर्दशीं पूर्वां शस्त्वा त्रयोदश्या परिधाय पाता सुतमिन्द्रो अस्तु सोमं हन्ता वृत्रमिति यजति ।३। ॥ ८ ॥

वयमु त्वा तदिदर्था वयमु त्वा दिवा सुत इति ब्राह्मणाच्छंसिनः ।१। इन्द्र त्वा वृषभमित्युक्थमुखम् ।२। वार्त्रहत्याय शवस इति चोत्तमामुद्धृत्य ।३। न्यू षु वाचमिति जागतम् ।४। तृषा मद इन्द्र इति यजति ।५। ॥ ९ ॥

इन्द्राय मद्वने सुतमिन्द्रमिद्गाथिनो बृहदित्यच्छावाकस्य ।१। शेषः सूक्तस्योक्थमुखम् ।२। मा नो अस्मिन्निति जागतम् ।३। इदं त्यत्पात्रमिति यजति ।४। ॥ १० ॥

अयं त इन्द्र सोमो ऽयं ते मानुषे जन इति स्तोत्रियानुरूपौ

होतुर्मध्यमेषु रात्रिपर्यायेषु ।१। उद्वेदभीत्युक्थ्यमुखमुत्तमामुद्धृत्य ।२। अहं भुवमिति जागतम् ।३। अपाय्यस्येति यजति ।४। ॥११॥

आ तू न इन्द्र क्षुमन्तमा तू न इन्द्र वृत्रहन्निति मैत्रावरुणस्य ।१। एन्द्र सानसिमित्युक्थ्यमुखम् ।२। प्र वः सतामिति जागतम् ।३। अस्य मदे पुरु वर्पांसीति यजति ।४। ॥१२॥

अभि त्वा वृषभाभि प्र गोपतिमिति ब्राह्मणाच्छंसिनः ।१। आ तू न इन्द्रं मद्र्यगित्युक्थ्यमुखम् ।२। तदस्मै नव्यमिति जागतम् ।३। यस्ते रथ इति यजति ।४। ॥१३॥

इदं वसो सुतमिन्द्रेहि मत्सीत्यच्छावाकस्य ।१। शेषः सूक्तस्योक्थ्यमुखम् ।२। अजातशत्रुमिति जागतस्योत्तमामुद्धृत्योद्यस्येद इति परिधायेदं ते पात्रं सनवित्तमिन्द्रेति यजति ।३। ॥१४॥

इदं ह्यन्वोजसा महाँ इन्द्रो य ओजसेति सोचियानुरूपौ होतुरुत्तमेषु रात्रिपर्यायेषु ।१। शेषः सूक्तस्योक्थ्यमुखमुत्तमामस्मिन्न उद्धृत्य ।२। विश्वजित इति जागतम् ।३। निष्टा हरी इति यजति ।४। ॥१५॥

आ त्वेता नि षीदता लशत्त्वा गच्छेति मैत्रावरुणस्य ।१। यस्य संस्थ इति सप्तोक्थ्यमुखम् ।२। अहं दां गृणत इति जागतम् ।३। प्र घा न्वस्येति यजति ।४। ॥१६॥

योगेयोगे युञ्जन्ति ब्रध्नमिति ब्राह्मणाच्छंसिनः ।१। शेषः सूक्तस्योक्थ्यमुखम् ।२। इमां ते धियमिति जागतस्योत्तमामुद्धृत्य[3] तदस्येदं पश्यतेति परिधाय[4] प्रो द्रोण इति यजति ।[5]॥१७॥

इन्द्रः सतेषु सोमेष्विन्द्रं वर्धन्त्वित्यच्छावाकस्य ।१। उत्तमानि

चतुरक्षराण्यभ्यस्यन्ति । २ । उप नः सुतमा गहि सोममिन्द्रेत्युक्थमुखम् । ३ । प्र ते मह इति जागतम् । ४ । सोमानां पीतिमिति यजति । ५ । ॥ १८ ॥

अथाच्छावाकस्याहीनिक्याः । १ । पन्यंपन्यमित्सोतारः पन्य इदुप गायतेति स्तोत्रियानुरूपौ प्रथमे । २ । आ त्वा विशन्त्विन्दव आ त्वा विशन्त्वाशव इत्युत्तमे । ३ । संस्थाप्य रात्रिपर्यायान्[4] ॥ १९ ॥

आश्विनाय स्तोष्यमाणेषु प्रहुताहुती जुहोति ।[1] ४ । समया वाचा शंसेत् ।[2] १ । उत्तरोत्तरिण्या वा ।[3] २ । यः प्रातरनुवाकस्तदाश्विनम् ।[4] ३ । तस्य विकारं व्याख्यास्यामः ।[5] ४ । यथाछन्दसं शस्तम् ।[6] ५ । बार्हतीनां प्रतिपदां प्रथमं ... प्रगाथं पुनरादाय ककुप्कारम् ।[7] ६ । अग्निर्होता गृहपतिरिति ...तिपदायो रेवतीमुद्धृत्य ।[8] ७ । चतुर्दश गायत्रादुद्धरति ।[9] ८ । आनुष्टुभाद्द्वे ।[10] ९ । त्रैष्टुभात्त्रयोदश शतम् ।[11] १० । नित्यानि काक्षीवतान्यागस्त्यानि च ।[12] ११ । प्रथमं तु काक्षीवतं शस्त्वा काराधङ्नोत्रिया नव ।[13] १२ । ऊर्ध्वमागस्त्येभ्यस्त्रिशतं सुपर्णम् ।[14] १३ । अन्यासां वाश्विनीनां तावत् ।[15] १४ । समिद्धश्चिदिति तिस्र उद्धरति ।[16] १५ । अयं वां मधुमत्तम इत्यष्टौ यथास्थानम् ।[17] १६ । एकादशौष्णिहात् ।[18] १७ । तथाग्नेयाज्जागतात् ।[19] १८ । उत्तमेन पाङ्क्तेन पादेनोदयं काङ्क्षेत् ।[20] १९ । उदिते सौर्याणि ।[21] २० । उदु त्यं जातवेदसमिति नव ।[22] २१ । चित्रं देवानाम् ।[23] २२ । नमो मित्रस्य ।[24] २३ । इन्द्र क्रतुमिति प्रगाथः ।[25] २४ । महो द्यौरिति तिस्रः ।[26] २५ ।

विश्वस्य देवी मृचयस्य जन्मनो न या रोपाति न... VII

इति द्विपदा ।[27] २६। बृहस्पते अति यदर्यो अर्हादिति परिदधाति ।[28] २७। प्रतिपदे चाहावः परिधानीयायै च ।[29] २८। तत्संपदा बृहतीसहस्रं संपद्यते ।[30] २९। इमे सोमासस्तिरोअह्न्यास इति पुरोनुवाक्या ।[31] ३०। होता यक्षदश्विना सोमानां तिरोअह्न्यानामिति प्रैषः ।[32] ३१। उभा पिबतं प्र वामंधांसीत्यर्धर्चौ संधायार्धर्चेन वषट्करोति ।[33] ३२। विराजैवेति कौषीतकिः ।[34] ३३। अश्विना वायुनेति वा ।[35] ३४। ॥ २० ॥

त्रिवृद्बहिष्पवमानः ।१। सन्धिषाम च ।२। पञ्चादितः पञ्चदशानि ।३। रात्रिश्च ।४। पञ्च सप्तदशानि ।५। पञ्चैकविंशानि ।६। इति ज्योतिषः स्तोमाः ।७। एत एवाभिप्लवस्य ।८। ॥ २१ ॥

अग्निं तु चेष्यमाणस्यादीक्षितस्येष्टिः ।१। अग्नये ब्रह्मण्वते ऽग्नये क्षत्रवते ऽग्नये क्षत्रभृते ।२। पौर्णमासीविकारः ।३। ब्रह्म प्रजावदा भर ब्रह्म च ते जातवेद इत्यग्नये ब्रह्मण्वते ।४। अर्चन्तस्त्वाम्हा-कमग्ने अध्वरमग्ने द्युम्नेन स्वदस्व हव्येत्युत्तरयोः ।५। बह्वनां चेष्यमाणानां संनिवपनीया ।६। एकस्योखासंभरणीया ।७। ॥ २२ ॥

प्राजापत्यश्च पशुबन्धः ।१। वायव्यो वा ।२। अग्नये वा कामाय ।३। पुरुषो ऽजो ऽविको गौरश्व इति पञ्च पशवः ।४। अजो वा तूपरः ।५। प्राजापत्ये चैके वायव्यं पशुपुरोलाशं कुर्वन्ति ।६। प्राजापत्यं वायव्ये ।७। वैश्वानरीयमाग्नेये ।८। हिरण्यगर्भ इति पुरोनुवाक्यास्तिस्र उत्तरा याज्याः प्राजापत्यस्य ।९। उपांशु ।१०। एकया च दशभि नु कुविदङ्गेति पुरोनुवाक्याः पीवोअन्नाम्र [illegible]क्षेति वायव्यस्य ।११। आ ते वत्सो मनो

यमत्त्वभं ता अङ्गिरस्तमाग्निः परेषु धामस्विति पुरोनुवाक्या वयं ते अद्यारराम तमीळे च लेत्याग्नेयस्य ।१२। सक्वत्पशुनिगमाः पश्चसु क्रियमाणेषु पृथिवीं शरीराणीत्यातः ।१३। एकवदत ऊर्ध्वम् ।१४। ॥२३॥

चित्वविश्व दीक्षणीया ।१। आग्नावैष्णवो वैश्वानरीय आदित्येभ्यश्च ।२। त्वान्नु क्षत्रियान्धारयन्तः ।३। पञ्चहविर्वा ।४। अदितये चतुर्थः पञ्चमः सरस्वत्यै ।५। पञ्चहविर्वांतिथ्या ।६। आग्नेयैन्द्रौ वैश्वदेवबार्हस्पत्यौ वैष्णवश्च ।७। शुचिमर्कैस्तं शग्मासः ।८। चितिभ्यः प्रणीयमानाभ्य इत्युक्त[9] पुरीष्यासः प्रो त्ये अग्नयो ऽग्निषु विश्वेभिरग्ने अग्निभिरग्ने विश्वेभिरग्निभिरित्युपांश्वनुब्रुवन्पश्चादनुसमेति ।९[10]। ॥२४॥

संचिते परिश्रुते[1] ऽन्यूक्यमनुशंसेत्युक्तश्चित्यस्य पश्चादुपविश्याध्येयस्तूष्णीं शंसस्तेनानाहूय सजपेनानुशंसति ।१[2]। वैश्वानरायेत्युक्त पुरोनुवाक्यामनूच्य याज्यया यजति[3] प्रयाजानुयाजान्वा परिहाप्य ।२[4]। ॥२५॥

अग्नीषोमीयस्य पशुपुरोलाशमन्वच्चि देवसूभ्यो हवींषि ।१। अग्नये गृहपतये सोमाय वनस्पतये सवित्रे सत्यप्रसवाय रुद्राय पशुपतये बृहस्पतये वाचस्पतय इन्द्राय ज्येष्ठाय मित्राय सत्याय वरुणाय धर्मपतये ।२। अग्निर्होता गृहपतिर्हव्यवालग्निरा विश्वदेवं न प्रमिय इन्द्रं वयं महाधन उरुं नः ।३। सवश्प्राद्धवींषि च ।४। ॥२६॥

अग्नये वामन्तिकाय गायत्राय त्रिवृते राथन्तरायेन्द्राय यैष्टाय

त्रैष्टुभाय पञ्चदशाय वार्हताय विश्वेभ्यो देवेभ्यो वार्षिकेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो मित्रावरुणाभ्यां शारदाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां वैराजाभ्यां बृहस्पतये हैमन्तिकाय पाङ्क्ताय त्रिणवाय शाकराय सवित्रे शैशिरायातिच्छन्दसाय त्रयस्त्रिंशाय रैवतायानुमतये ऽग्नये वैश्वानराय कायादितये विष्णुपत्न्यै ।१। अर्चन्तस्त्वामाकमग्ने अध्वरस्यैतेन यो प्र वाहवा बृहस्पते जुषस्वेवा पित्रे ऽनागसो वासमथ

अन्वद्य नो अनुमतिर्यज्ञं देवेषु मन्यताम् ।
अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥
अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ॥

इति ।२। न पशुतन्त्रे हवींषि चोद्यमानानि निगमाल्लभन्ते ।३। वपां संस्थाप्यानूबन्ध्यायास्त्वाष्ट्रेण पशुनोपांशु पत्नीशाले चरन्ति ।४। पर्यग्निकृतमुत्सृजन्ति न संस्थापयन्ति ।५। आज्येन वा पशुधर्मणा संस्थापयन्ति ।६। शिवस्त्वष्टः प्रथमभाजम् ।७। ॥२७॥

देविकाहवींषि चान्यचि पशुपुरोलाशम् ।१। अनुमत्यै कुह्वै राकासिनीवालीभ्यां धात्रे ।२।

कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि ।
मा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥
कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु ।
सं दाशुषे किरतु भूरि वामं रायस्पोषं चिकितुषे ददातु ॥
धाता ददातु दाशुषे प्राचीं जीवातुमक्षितिम् ।

वयं देवस्य धीमहि सुमतिं सत्यधर्मणः ॥

धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान।

धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवज्जुहोत॥

इति।३। देवीभ्यश्च हवींषि।४। अग्नये ओषधीभ्यो गोभ्य उषसे रात्र्यै सूर्यायै दिवे पृथिव्यै वाचे गवे।५। आपो हि ष्ठा यो वो दूताभ्यः।६। या ओषधीः पूर्वा अति विश्वाः।७। यूयं गावो न ता अर्वा।८। प्रति त्या सूनरी सत्या सत्येभिः।९। रात्री व्यख्यत्।

ये ते रात्रि नृचक्षसो युक्तासो नवतिर्नव।

अशीतिः सन्त्वष्टा उतो ते सप्त सप्ततिः॥।१०।

द्वे ते सुकिंशुकं।११। एन्द्र याहि हरिभिः सखे विष्णो।१२। स्योना पृथिवि बलित्था पर्वतानां।१३। देवीं वाचं यद्वाग्वदन्ती।१४। माता रुद्राणां वचोविदम्।१५। दिशां चावेष्टीः।१६। अग्नय इन्द्राय मित्रावरुणाभ्यां बृहस्पतये विश्वेभ्यो देवेभ्यो विष्णवे।१७। सस्थितायां चोदवसानीयायां मैत्रावरुण्या पयस्यया नानिष्ट्वाग्निचिन्मैथुनं चरेच्चरेत्।१८।॥२८॥

इति शाङ्खायनसूत्रे नवमोऽध्याय समाप्तः।

---

## ओम् ।

---

गुरुदुपवल्याष्टम्यां द्वादशाहाय दीक्षन्ते । १ । द्वादश दीक्षाः । २ । द्वादशोपसदः । ३ । सुत्यान्यहानि द्वादश । ४ । अतिरात्रः सुत्यानां प्रथमं चोत्तमं च । ५ । मध्ये दशरात्रः । ६ । पृष्ठ्यः षलहः । ७ । त्रयश्छन्दोमाः । ८ । दशममहः । ९ । अयं यज्ञ इति याज्या हारियोजनस्य । १० । अननुवषट्कृत एवाभिप्रेषितो मैत्रावरुणः परा याहि मघवन्नित्यनूच्य जायेदस्तमिति वेह मद एव मघवन्नित्यतिप्रैषमाह द्वितीयप्रभृतिषु । ११ । प्रायणीये वा यथासमाम्नातम् । १२ । श्वः सुत्या वामिंद्राग्नी तां वां प्रब्रवीमि विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः सोमपेभ्यो ब्रह्मन्वाचं यच्छेत्यानीध्रः स्वस्य धिष्ण्यस्य पश्चादुपविश्य । १३ । नित्यमेतत्प्रागुत्तमादह्नः । १४ । पत्नीसंयाजान्तता । १५ । आग्नियामनिर्वचनम् । १६ । नामधेयग्रहणं च । १७ । प्रायणीयोदयनीययोः सारस्वतः । १८ । माधुच्छन्दसे वा । १९ । द्विरात्रप्रभृतिष्वहःसंघातेषु यत्र होताश्विनं शंसेत्तत्र मैत्रावरुणः प्रातरनुवाकमनुब्रूयात् । २० । ॥ १ ॥

त्रिवृत्स्तोमं रथन्तरपृष्ठमग्निष्टोमः प्रथमं दाशरात्रिकम् । १ । उप प्रयन्तो ऽध्वरमित्याज्यं युञ्जे प्र वो देवायेति सम्भृते । २ । माधुच्छन्दसः प्रउगः । ३ । आ यात्विन्द्रो ऽवस इति मरुत्वतीयम् । ४ । आ न इन्द्रो दूरादिति निष्केवल्यम् । ५ । अग्ने वर्धस्व वर्चस्वी त्वं देवेष्वसि वर्चस्वान् मनुष्येषु भूयासमित्यतिपाद्यं भवति । ६ । युञ्जते मन

इहेह वो हयो न विद्वानित्युत्तमे वा परिधाप्येति वैश्वदेवे विकारः।७। पञ्चजनीया परिधानीया सर्वत्र वैश्वदेवस्य।८। प्र शर्धायेत्याग्निमारुते।९। सप्तात ऊर्ध्वमुक्थ्यानि।१०। षोलश्यन्तं चतुर्थम।११।॥२॥

पञ्चदशस्तोमं रथन्तरपृष्ठं द्वितीयं।१। अग्निं दूतं वृणीमह इत्याज्यं व्यूल्हे।२। त्वं हि चैतवदिति समूल्हे सर्वत्रोत्तमां परिधाप्य।३। गार्त्समदः प्रउगः।४। वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आ गहीत्येका[5] शुक्रस्याद्येत्येकोभा देवा दिविस्पृशेति द्वे[6] अयं वां मित्रावरुणेति चत्वारि तृचान्युत[7] स्या नः सरस्वती घोरेति प्रउगतृचानि।[8]५। विश्वानरस्य व इन्द्र इत्सोमपा इति मरुत्वतीयस्य प्रतिपदनुचरौ।[9]६। उत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्यः प्रगाथः।[10]७। इन्द्र सोमं सोमपत इति मरुत्वतीयम्।[11]८। या त ऊतिरिति निष्केवल्यम्।[12]९। इन्द्रौजस्विन्नोजस्वी त्वं देवेष्वसोजस्व्यहं मनुष्येषु भूयासमित्यतिग्राह्यं भक्षयति।[13]१०। विश्वो देवस्येति वैश्वदेवस्य प्रतिपत्।[14]११। अस्य हि स्वयशस्तरमित्युत्तरे।[15]१२। आ विश्वदेवमित्यनुचरः।[16]१३। तद्देवस्य ते हि द्यावापृथिवी यज्ञस्य व इति वैश्वदेवे विकारः।[17]१४। पृक्षस्य वृष्णो वृष्णे शर्धाय नू चित्सहोजा इत्याग्निमारुते।[18]१५।॥३॥

सप्तदशस्तोमं वैरूपपृष्ठं तृतीयम्।१। युक्ष्वा हि देवहूतमानित्याज्यं व्यूल्हे।२। त्वमग्ने वसूनिति समूल्हे सर्वत्रोत्तमां परिधाप्य।३। औष्णिह आत्रेयः प्रउगः।४। वायवा याहि वीतय इत्येका[5] वायो याहि शिवेति द्वे इन्द्रश्च वायवेषां सुतानामिति द्वे[6] अयं सोमश्चमूसुत इत्येका मित्रे वरुणे[8] ऽश्विनावेह गच्छतमा[9] याह्यद्रिभिः[10]

सजूर्विश्वेभिर्देवेभिः[11] सुत नः प्रियेति प्रउगतृचानि।[12] ५। तं तमिद्राध इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ।[13] ६। प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः प्रगाथः।[14] ७। त्र्यर्यमेति मरुत्वतीयम् ।[15] ८। यद्याव इन्द्र यदिन्द्र यावत इति वैरूपस्य स्तोत्रियानुरूपौ प्रगाथौ।[16] ९। इन्द्र त्रिधात्विति सामप्रगाथः।[17] १०। अहं भुवं यो जात इति निष्केवल्यम्।[18] ११। सूर्य भ्राजस्विन्भ्राजस्वी त्वं देवेष्वसि भ्राजस्व्यहं मनुष्येषु भूयासमित्यतिग्राह्यं भक्षयति।[19] १२। अभि त्वा देवेत्यनुचरः।[20] १३। उदु ष्य देवः सविता हिरण्यया घृतवती भुवनानामिति तृचावनश्वो जातः परावत इति वैश्वदेवे विकारः।[21] १४। वैश्वानराय धिषणां धारावरास्त्वमग्ने प्रथमो अङ्गिरा ऋषिरित्याग्निमारुते[22] १५। ॥ ४ ॥

एकविंशस्तोमं वैराजपृष्ठं चतुर्थम्।१। अग्निं न स्वदृक्तिभिरित्याज्यं व्यूल्हे[2] ऽग्निं नर इति समूल्हे।[3] २। आनुष्टुभः प्रउगः।[4] ३। वायो शुक्रो अयामि त इत्येका[5] वि हि होत्रा इति द्वे[6] इन्द्रश्च वायवेषां सोमानां[7] यश्चिकेता[8] नो विश्वाभिरूतिभिरा[9] त्वा गिरो[10] ऽपत्यमित्येका[11] यूयं हि ष्ठेति द्वे[12] इयमददादिति प्रउगतृचानि।[13] ४। प्र णो देवीति समूल्हे।[14] ५। तं त्वा यज्ञेभिरिति प्रतिपन्मरुत्वतीयस्य।[15] ६। ये त्र्यहस्य प्रथमस्य त उत्तरस्यानुचराः सब्राह्मणस्पत्याः।[16] ७। श्रुधी हवमिन्द्रे[17]न्द्र मरुत्व इमं नु मायिनमिति तृचावि[18]ति मरुत्वतीयम् ।[19] ८।पिबा सोममिन्द्र मन्दतु त्वेति वैराजस्य स्तोत्रियानुरूपौ न्यूङ्खम्।[20] ९। मध्यमस्य पादस्य द्वितीयसप्तमयोरक्षरयोर्द्विस्पूर्वं द्विरुत्तरमित्यानुष्टुभः।[21] १०। यं तो३ ओ३ सुषाव हर्यो३ ओ३ स्वाद्रि-

रिति।[22] ११। द्वितीये ऽध्वरे द्वादशकल एकैकं दीर्घं ह्रस्वांस्त्रींस्त्री-
न्स्वरेणेति वैराजः।[23] १२। यं नो सुषावेति।[24] १३। द्वितीयचतुर्थयो-
रन्तरयोः प्रतिगरस्यानुष्टुभः प्रतिन्यूङ्खः।[25] १४। द्वितीये वैराजः।[26] १५।
ओथो३ ओ३ मोदो३ ओ३ एवेति।[27] १६। ओथो मोदैवेति।[28] १७।
इन्द्रमिद्देवतातय इति सामप्रगाथः।[29] १८। तुभ्येदिमेति तिसृणां
पूर्वयोर्न्यूङ्खः।[30] १९। कुह श्रुतो युध्मस्य ते त्यमु वः सत्रासाहमिति
तिस्र इति निष्केवल्यम्।[31] २०। द्वितीयादह्नः प्रतिपत्।[32] २१। हिरण्य-
पाणिमित्यनुचरः।[33] २२। आ देवो यातु सविता सुरत्नः प्र द्यावा
यज्ञैः पृथिवी नमोभिः प्र ऋभुभ्यः प्र शुक्रैतु देवीति वैश्वदेवे
विकारः।[34] २३। प्र सम्राजः क ईं व्यक्ता हुवे वः सुद्योत्मानमित्याग्नि-
मारुते।[35] २४। ॥५॥

त्रिणवस्तोमं शाक्वरपृष्ठं पञ्चमम्।१। इममू ष्विति नवर्चमाज्यं
व्यूल्हे[2] ऽग्निं तं मन्य इति समूल्हे।[3] २। तस्य प्रथमायै पदमवगृह्य
पदमवगृह्य द्वे अवगृह्यैकेन प्रणौति।[4] ३। पङ्क्तिशंसं पराः।[5] ४। बार्हतः
प्रउगः।[6] ५। आ नो यज्ञं दिविस्पृशमिति द्वे आ नो वायवित्येकाऽ[7]
वां सहस्रमिति तिस्र[8] ऋधगित्थेति द्वे प्र मित्रायेत्येकेमा[9] उ वां
दिविष्टय[10] आ नो विश्वा सहव्यो[11] देवं देवं वो ऽवसे देवं देवमभि-[12]
यमददादिति* प्रउगतृचानि।[13] ६। उत स्या नः सरस्वती घोरेति
समूल्हे।[14] ७। यत्पाञ्चजन्ययेति मरुत्वतीयस्य प्रतिपत्।[15] ८। इत्था हि
सोमे ऽवितासि मरुत्वाँ इन्द्र वृषभो ऽयं ह येनेति तिस्र इति मरु-
त्वतीयम्।[16] ९। महानाम्न्यः स्तोत्रियः।[17] १०। यथा तिस्रो ऽनुष्टुभस्त-
थैकैका।[18] ११। उत्तमायाः पङ्क्तिरुत्तमा।[19] १२। उत्तमार्धे च पञ्च

पदानि पच्छः पुरीषमित्याचक्षते तन्निविच्छंसम्।१३[20]। प्रत्यस्मै पिपीषते यो रयिवो रयिंतमस्त्वमु वो अप्रहणमिति चयस्तृचा अस्मा अस्मा इति दशम्येवा ह्यसि वीरयुरिति वा सो ऽनुरूपः।१४[21]। यदिन्द्र नाहुषीष्वेति सामप्रगाथः।१५[22]। इन्द्रो मदाय प्रेदं ब्रह्माभूरेकस्त्वमिन्द्रं वाजयामसीति तिस्र इति निष्केवल्यम्।१६[23]। तत्सवितुर्वरेण्यमित्यनुचरः।१७[24]। उदु ष्य देवः सविता दमूना इति तिस्रो मही द्यावापृथिवी इति चतस्र ऋभुर्विभ्वा को नु वां मित्रावरुणौ प्र शंतमेति वा वैश्वदेवे विकारः।१८[25]। हविष्पान्तं वपुर्न्वग्निर्होता गृहपतिरिति तिस्र इत्याग्निमारुते।१९[26]। मूर्धानमा रुद्रास इममू ष्विति नवेति समूल्हे।२०[27]।॥६॥

चयस्त्रिंशस्तोमं रैवतपृष्ठं षष्ठम्।१। नित्याभिर्याज्याभिः पारुच्छेपीः संधाय यजन्ति।२। आ त्वा जुव आ वां धिय इत्यैन्द्रवायवस्य पुरोनुवाक्ये।३। स्तीर्णं बर्हिरा वां रथ इति याज्ये।४। सुषुमेति मैत्रावरुणस्य पुरोनुवाक्योत्तरा याज्या।५। युवा स्तोमेभिरित्याश्विनस्य पुरोनुवाक्योत्तरा याज्या।६। वृषन्निन्द्र तां वां धेनुं विश्वेषु हि त्वा मो षु वो अस्मदा यन्नः पत्नीस्ता नो रासन्निति नेष्टुर्द्विपदा त्रिष्टुप्चाग्निं होतारं दध्यङ् हेति प्रातःसवने प्रस्थितानां यजन्ति।७। तुभ्यं हिन्वान इति स्रुक्तयोरेकैकोर्ध्वमृतुप्रैषेभ्यः।८। स्वयं यजतो ऽध्वर्युर्गृहपतिश्च।९। चित्यस्य पश्चादुपविश्याध्वर्युः शालामुखीयस्य गृहपतिः।१०। पिबा सोममिन्द्र सुवानमिन्द्राय हि द्यौस्त्वया वयं मघवन्पाहि न इन्द्र नू इत्था ते ऽवर्मह इन्द्र वनोति हि सुन्वन्निति माध्यन्दिने[11] विकारः।११। उत माता

बृहद्दिवेति नेष्टुस्तृतीयसवने।१२। अनवानन्तो यजन्ति।१३। ऐकाहिकीभिर्वा।१४। ॥७॥

अयं जायतेत्याज्यम्।१। आतिच्छन्दसः प्रउगः।२। स्तीर्णं बर्हिरा[3] वां रथो[4] ऽयं मित्राय[5] युवां स्तोमेभिर्देवयन्तिन्द्रेत्येका[6][7] ऽवमंह इन्द्रेति द्वे[8] ओ पू णो अग्न[9] इयमददादिति प्रउगतृचानि।[10]३। उत नः प्रियेति समूल्हे।[11]४। स पूर्व्य इति प्रतिपन्मरुत्वतीयस्य।[12]५। यं त्वं रथं स यो वृषा मरुत्वाँ इन्द्र मीढ्व इति तिस्र इति मरुत्वतीयम्।[13]६। रेवतीर्नो रेवाँ इद्रेवत इति रैवतस्य स्तोत्रियानुरूपौ।[14]७। मा चिदन्यदिति सामप्रगाथः।[15]८। एन्द्र याह्युप न घा त्वस्योप नो हरिभिरिति तिस्र इति निष्केवल्यम्।[16]९। अभि त्यं देवमिति प्रतिपद्वैश्वदेवस्य।[17]१०। तस्याः षोलशाक्षरेण विंशत्याष्टादशाक्षरेण प्रणुत्य पञ्चदशाक्षरेणावसाय पञ्चदशाक्षरेण।[18]११। अस्य हि स्वयशस्तरमित्युत्तरे।[19]१२। तृतीयादह्नो ऽनुचरः।[20]१३। उदु ष्य देवः सविता सवाय[21] कतरा पूर्वा[22] किमु श्रेष्ठ[23] इदमित्थेत्युत्तमे परिशिष्य ये यज्ञेनेति शस्त्वा परिशिष्टे शंसतीति वैश्वदेवे विकारः।[24]१४। अहस्य कृष्णं[25] प्रयज्यव[26] इमं स्तोममित्याग्निमारुते।[27]१५। मध्यमात्त्र्यहान्निष्केवल्यमरुत्वतीययोरुत्तमांस्तृचान्समूल्ह उत्सृजति।[28]१६। स्वस्ति नो मिमीतामिति च तिस्रो ऽन्ते वैश्वदेवानां करोति।[29]१७। ततं म इत्यार्भवं चतुर्थस्य।[30]१८। प्र यन्तु वाजा इति च तिस्रो ऽन्ते मारुतस्य।[31]१९। वसुं न चित्रमहसमिति जातवेदसीयम्।[32]२०। परोक्षपृष्ठस्य बृहद्रथन्तरपृष्ठस्योपाङ्कपृष्ठस्यापर्य्यपृष्ठस्य तनूपृष्ठस्य छन्दोवृद्धस्तोमस्य च छन्दोगवशेन स्तोत्रिया-

नुरूपान्सामप्रगाथांश्च।[33]२१। समानमन्यत्समूळ्हेन।[34]२२। तथा विश्वजिति।[35]२३। ॥८॥

चतुर्विंशस्तोमं बृहत्पृष्ठमुभयसाम सप्तमम्।१। प्र वः शुक्रायेत्याज्यम्।२। त्रैष्टुभः प्रउगः।३। प्र वीरया[4] ते सत्येनोद्रां[5] चतुरो[6] गोमतो[7] नो देव[8] प्र वो यज्ञेषु[9] प्र चोदसेति प्रउगतृचानि।[10]४। ये त्र्यहस्य प्रथमस्य प्रतिपदनुचराः सब्राह्मणस्पत्यास्ते छन्दोमेषु स्वरसामस्वभिप्लवे च।[11]५। प्रथमादेव प्रथमस्याह्नश्छान्दोमिकस्य।[12]६। द्वितीयाद्द्वितीयस्य।[13]७। तृतीयात्तृतीयस्य।[14]८। एवं त्र्यहस्य पूर्वस्याभिप्लविकस्य।[15]९। एवमुत्तरस्य।[16]१०। एवं स्वरसाम्नाम्।[17]११। कया शुभा त्वं सुमेषमिति मरुत्वतीयम्।[18]१२। तमु ष्टुह्यभि त्वं मेषमिति निष्केवल्यम्।[19]१३। न कण्वरथन्तरस्य योनिमनुशंसेत्।[20]१४। ये प्रथमयोरह्नोः प्रतिपदनुचरा वैश्वदेवस्य ते छन्दोमेष्वभिप्लवे च।[21]१५। तत्सवितुर्वरेण्यं प्रेतां यज्ञस्यायं देवायेति तृचानृजुनीतीति पञ्चा याहि वनसा मह्रीमासस्थर्वणीष्टत इति तिस्र इति वैश्वदेवे विकारः।[22]१६। वैश्वानरो न ऊतये।

वैश्वानरो न आ गमदिमं यज्ञं सजूरुप।
अग्निरुक्थेन वाहसा॥
वैश्वानरो अङ्गिरसां स्तोमं यज्ञं च जीजनत्।
ऐषु द्युम्नं स्वर्यमत्॥

प्र यद्वस्त्रिष्टुभमिति पञ्चदश नव वार्चन्तस्त्वेत्याग्निमारुते।[23]१७। ॥९॥

चतुश्चत्वारिंशस्तोमं रथन्तरपृष्ठमष्टमम्।१। अग्निं वो देवमित्याज्यम्।२।\ त्रैष्टुभः प्रउगः।३। कुविदङ्गेति प्रथमादृतीये[4] आ

वायो भूषेति चैका[5] यावत्तरः[6] प्रति वां सूर उदिते[7] ऽप स्वसुर[8]यं सोमः[9] प्र ब्रह्माण[10] उत स्या नः सरस्वती जुषाणेति प्रउगतृचानि ।[11]४। महाँ इन्द्रो नृवदिमा उ त्वा पुरुतमस्य क स्य वीर इति सर्वत्र चतस्र उत्तमाः परिहाप्य मरुचित्तमस्य द्यावापृथिवी इति मरुत्वतीयम् ।[12]५। त्वं महाँ इन्द्र तुभ्यं इत्थं महाँ इन्द्र यो ह्यापूर्व्याणां सु ते कीर्तिमिमां ते धियमिति निष्केवल्यम् ।[13]६। हिरण्यपाणिमूतय इति चतस्रो[14] मही द्यौर्युवाना पितरेति तृचौ[15] देवानामिदिमा[16] नु कं[17] विश्वे देवा ऋतावृध इति तिस्र इति वैश्वदेवे विकारः ।[18]७।

वैश्वानरो अजीजनदग्निर्नो नव्यसीं मतिम् ।
क्षमया दधान ओजसा ॥
त्वया पावक दीदिह्यग्ने वैश्वानर द्युमत् ।
जमदग्निभिराहुतः ॥

ऋतावानं वैश्वानरं[19] कद्ध नूनं कधप्रियो[20] दूतं वो विश्ववेदसमित्याग्निमारुते ।[21]८। ॥१०॥

अष्टाचत्वारिंशस्तोमं बृहत्पृष्ठं नवमम् ।१। अगन्म महा नमसा यविष्ठ मा तत्रममित्याज्यम् ।२। पूर्वं वा ।३। त्रैष्टुभः प्रउगः ।४। आ वायो भूषेति प्रथमातृतीये चोत्तमा च[5] द्वितीयाचतुर्थ्यौ पार्वन्तो न श्रवस इति च[6] दिवि क्षयन्ता[7] विश्ववारे[8]न्द्रं नर[9] ऊर्ध्वो अग्निः[10] प्र क्षोदसेति प्रउगतृचानि ।[11]५। ययंमेन्द्रो रथाय तिष्ठा हरी गायत्साम प्र मन्दिन इति मरुत्वतीयम् ।[12]६। आ सत्यो यात्वग्ना इद्ध यौर्न य इन्द्र तत्त इन्द्रियमहं भुवं विश्वजित इति

निष्केवल्यम्।[13] ७। अभि त्वा देव प्र वां महि द्यवी इति तृचाविन्द्र[14] इष इत्येका ते नो रत्नानीति द्वे[15] अग्निरुक्थइतिप्रभृति पञ्च मनोः सूक्तानि[16] ये त्रिंशतीत्युपोत्तमामुद्धृत्य[17] न हि वो अस्त्यर्भक इत्येका[18] ऽग्नेति चतस्रो[19] बभ्रुरेक इति वा मनुप्रवल्हो[20] विश्वे देवास आ गतेति तृचं भारद्वाजमिति वैश्वदेवे विकारः।[21] ८।

दिवि पृष्टो अरोचताग्निर्वैश्वानरो बृहन्।
ज्योतिषा बाधते तमः॥
स विश्वं प्रति चाकॢपदृतूनुत्सृजते वशी।
यज्ञस्य वय उत्तिरन्॥

अग्निः परेषु धामसु[22] मरुतो यस्याग्निर्होता[23] पुरोहित[24] इत्याग्निमारुते।[25] ९। यानि त्र्यहस्य प्रथमस्य प्रातःसवनतृतीयसवनानि तानि समूळ्हे छन्दोमानाम्।[26] १०। निष्केवल्यमरुत्वतीययोश्च जागतान्युत्सृजति।[27] ११। स यो वृषेति पञ्चदशोर्ध्वं कयाशुभीयात्।[28] १२। यो जात इति तमुष्टुहीयात्।[29] १३। बृहद्रथन्तरपृष्ठे द्विसूक्ताः सर्वे।[30] १४। ॥११॥

अविवाक्यं चतुर्विंशस्तोमं दशममहः।१। त्रयस्त्रिंशमग्निष्टोमसाम।२। त्रिकं मानसम्।३। वामदेव्यस्य योनौ रथन्तरं पृष्ठम्।४। अप्रतिभायामन्यः स्वाध्यायम्।५। उद्धृत्यानुष्टुभमितरेषां छन्दसां संपदानुष्टुभां पञ्चदश सहस्रमेकस्मिन्सवनीये।६। द्वात्रिंशतं गायत्र्यः।७। अग्निं नरः प्रति य्या सूनर्यां शुभेति तृचाननुष्टुभां स्थाने।८। चतुर्विंशतिं त्रिष्टुभः।९। तया जगत्यः।१०। पञ्चदश

प्रगाथान् ।११। श्रौष्णिहांस्तु त्र्यचान्पञ्चदश ।१२। पाङ्क्तानि च ।१३। अनुष्टुभां प्रातरनुवाकः पञ्चदशे शते ।१४। तृतीयाचतुर्थ्यौ स्तोक्यानामुद्धृत्याभि प्रवन्तेति द्वे ।१५। अच्छा नः शीरशोचि-षमिति तिस्रो ऽच्छा वो अग्निमवस इत्येतासां स्थाने ।१६। प्रति श्रुतायेति तिस्रः प्रत्यस्मै पिपीषत इत्येतासां स्थाने ।१७। ॥१२॥

अग्ने तमद्येत्याज्यम् ।१। तस्य प्रथमायां पञ्चाक्षरेण विगृह्य द्वाभ्यां पञ्चाक्षराभ्यामवसाय द्वाभ्यां प्रणौति ।२। माधुच्छन्दसः प्रउगः ।३। द्वाविंशतिं गायत्र्यः ।४। सृजानो वारे पवमानो अव्यय इति यावस्तुतो याथाकाम्यम् ।५। उत्तिष्ठन्नोजसेत्येको-त्तिष्ठतावपश्यतेत्येतस्याः स्थाने ।६। त्रिकद्रुकीया प्रतिपन्मरुत्व-तीयस्य ।७। तस्याः षोलशाक्षरेण विगृह्य षोलशाक्षरेण प्रणुत्य षोलशाक्षरेणावसाय षोलशाक्षरेण ।८। तुविशुष्मेत्युत्तरे ।९। बृहदिन्द्रायेति सूक्तात्पूर्वौ प्रगाथौ पिन्वन्त्यपीयया संशंसतीति मरु-त्वतीयम् ।१०। वामदेव्यस्य स्तोत्रियानुरूपौ शस्त्वोर्ध्वं धाय्याया रथन्तरं प्रगाथं स्तोत्रियानुरूपौ च ।११। सखाय आ शिषाम-हीति नव ।१२। आ धूर्ष्वस्मै वज्रमेक इति च द्विपदे ।१३। हैरण्यस्तूपीयं च ।१४। शार्ध्यैरण्यस्तूपीयात्प्रगाथेन संशंसति ।१५। इति निष्केवल्यम् ।१६। पञ्चात्प्रतिपदनुचरौ वैश्वदेवस्य ।१७। पुरस्तात्पानोभद्रीयात्सप्तर्क्षीयमिति वैश्वदेवे विकारः ।१८। उरु विष्णविव्युद्धृत्य भवा मित्र इति यजति ।१९। अग्निं नर इत्यग्नि-ष्टोमसाम्नः स्तोत्रियानुरूपौ ।२०। आयं गौर्महो द्यौरिति स्तोत्रि-यानुरूपौ ।२१। तं प्रत्नथेति त्रयोदश ।२२। यज्ञो बभूवेति

परिधाय ।२२। प्रजापत इति यजति ।२३। उक्थैराहावो व्याख्यातः ।२४। इति समूल्हे ऽतिरिक्तोक्थम् ।२५। पुरा पत्नीसंयाजेभ्यः स्नात्वा वा गार्हपत्ये जुत्वा पूर्वया द्वारा सदः प्रपद्य स्वस्य धिष्ण्यस्य पश्चादुपविश्य मानसेन स्तुत आयं गौरिति सार्पराज्ञीः पराङुपांश्वप्रएवन् ।२६। अध्वर्यो३ इत्यामन्त्रितो होयि होतरिति सर्वत्र प्रतिगृणाति ।२७। ओं होतस्तथा होतरित्याचक्षाणे ऽनुगृणाति ।२८। ॥१३॥

अध्वर्यो३ इति दशहोतारं वदिष्यन् ।१। प्रजापतिरकामयत बहुः स्यां प्रजायेय सर्वं वेदमनुष्यायदिदं किंचेति [2] स एतं दशहोतारं यज्ञक्रतुमपश्यदग्निहोत्रम् ।[3]। इत्युक्त्वोपांशु ।[4]। चित्तिः स्रुक् [5] चित्तमाज्यम् [6] वाग्वेदिः [7] आधीतं बर्हिः [8] केतो अग्निः [9] विज्ञातमग्नीत् [10] वाचस्पतिर्होता [11] मन उपवक्ता [12] प्राणो हविः [13] सामाध्वर्युः [14] इति होतारः [15]।४। अथ ग्रहः ।[16]।५। वाचस्पते हृदिधेनामन् [17] वाचस्पतिः सोममपादा अस्मासु नृम्णं[18] धाः ।[19]।६। इत्युपांशु ।[20]।७। तेन देवान्मनुष्यानसुरानित्येतांस्त्रयानजनयत्प्रजापतिः [21] स येषां वा एवंविद्वान्होता भवति [22] प्र वै स होता प्रजया पशुभिर्जायते [23] प्र ते यजमानाः प्रजया पशुभिर्जायन्ते येषामेवंविद्वान्होता भवती[24]ति ।[25]।८। ॥१४॥

अध्वर्यो३ इति चतुर्होतारं वदिष्यन् ।१। ते द्वया एवान्वाहृत्ता आसन्देवाश्च मनुष्याश्च [2] पराञ्चो ऽस्मादसुरा आसन्सो ऽकामयत वीरो म आजायेत येनेमानसुरानभिभवेयमिति [3] स एतं चतुर्होतारं यज्ञक्रतुमपश्यद्दर्शपूर्णमासौ ।[4]।२। इत्युक्त्वोपांशु ।[5]।३।

पृथिवी होता [6]। द्यौरध्वर्युः [7]। त्वष्टाग्नीत् [8]। मित्र उपवक्ता [9]। इति होतारः। ४ [10]। अथ ग्रहः। ५ [11]। वाचस्पते वाचो वीर्येण संभृततमेनायक्ष्यसे [12]। यज्ञपतये वसु वार्यमासंस्करसे [13]। वाचस्पतिः सोमं पिबतु [14]। अजनदिन्द्रमिन्द्रियाय स्वाहा। ६ [15]। इत्युपांशु। ७ [16]। तेनेन्द्रं वीरमजनयत्तेन एनानसुरानभ्यभवत्प्रजापतिः [17]। स येषां वा एवंविद्वान्होता भवति [18]। आ वै तस्य होतुर्वीरो जायते [19]। आ तेषां यजमानानां वीरा जायन्ते [20]। अभि वै स होता द्विषन्तं भ्रातृव्यं भवति [21]। अभि ते यजमाना द्विषतो भ्रातृव्यान् भवन्ति येषामेवंविद्वान्होता भवती [22]ति। ८ [23]। ॥ १५ ॥

अध्वर्यो ३ इति पञ्चहोतरि वदिष्यन्। १। तस्मा इन्द्राय देवता ज्यैष्ठ्याय श्रैष्ठ्याय नातिष्ठन्त [2]। स एतं पञ्चहोतारं यज्ञक्रतुमपश्यच्चातुर्मास्यानि। २ [3]। इत्युक्त्वाथोपांशु। ३ [4]। अग्निर्होता [5]। अश्विनावध्वर्यू [6]। रुद्रोऽग्नीत् [7]। बृहस्पतिरुपवक्ता [8]। इति होतारः। ४ [9]। अथ ग्रहः। ५ [10]। वाचस्पतेऽच्छिद्रया वाचाच्छिद्रया जुह्वा [11]। दिवि देवावृधन्होत्रामैरयस्व। ६ [12]। इत्युपांशु। ७ [13]। ततो वा इन्द्राय देवता ज्यैष्ठ्याय श्रैष्ठ्यायातिष्ठन्त [14]। स येषां वा एवंविद्वान्होता भवति। तिष्ठते वै तस्मै होत्रे स्वाः श्रैष्ठ्याय [15] तिष्ठन्ते तेभ्यो यजमानेभ्यः स्वाः श्रैष्ठ्याय येषामेवंविद्वान्होता भवती [16]ति। ८ [17]। ॥ १६ ॥

अध्वर्यो ३ इति षड्ढोतरि वदिष्यन्। १। सो ऽकामयतान्नादः स्यामन्नपतिरिति [2]। स एतं षड्ढोतारं यज्ञक्रतुमपश्यत्पशुबन्धम्। २ [3]। इत्युक्त्वाथोपांशु। ३ [4]। सूर्यस्ते चक्षुः [5]। वायुः प्राणः। अन्तरिक्षमात्मा [6]। यज्ञो गात्राणि [7]। द्यौः पृष्ठम् [8]। पृथिवी शरी-

रम् ⁹। इति होतारः ।¹⁰४। अथ ग्रहः ।¹¹५। सोमः सोमस्य पिबतु शुक्रः शुक्रस्य पिबतु ¹²। आतास्त इन्द्र सोमा वातापे हवनश्रुतः ।¹³६। इत्युपांशु ।¹⁴७। ततो वै सोऽन्नादोऽन्नपतिरासीत् ¹⁵। स येषां वा एवंविद्वान्होता भवति ¹⁶। अन्नादो वै स होतान्नपतिर्भवति ¹⁷। अन्नादास्ते यजमाना अन्नपतयो भवन्ति येषामेवंविद्वान्होता भवती¹⁸ति ।¹⁹८। ॥१७॥

अध्वर्यो३ इति सप्तहोतरि वदिष्यन् ।१। ते देवा अकामयन्त क्लृप्ताः क्लृप्तेषु लोकेषु स्यामेति ²। त एतं सप्तहोतारं यज्ञक्रतुमपश्यन्सौम्यमध्वरम् ।³२। इत्युक्त्वाथोपांशु ।⁴३। महाहविर्होता ⁵। सत्यहविरध्वर्युः ⁶। अचित्तपाजा अग्नीत् ⁷। अचित्तमना उपवक्ता ⁸। अनाधृष्यश्चाप्रतिधृष्यश्चाभिगरौ ⁹। अयास्य उद्गाता ¹⁰। इति होतारः ।¹¹४। अथ ग्रहः ।¹²५। वाचस्पते विधेनामन्विधेम ते नाम ¹³। विधेस्त्वमस्माकं नाम ¹⁴। मा देवानां तन्तुश्छेदि मा मनुष्याणाम् ¹⁵। सजूर्दिवा पृथिव्योपहूतः सोमस्य पिब स्वाहा ।¹⁶६। इत्युपांशु ।¹⁷७। ततो वै तेभ्योऽकल्पत ¹⁸। ते देवाः क्लृप्ताः क्लृप्तेषु लोकेष्वासन् ¹⁹। अप्यद्य क्लृप्ताः क्लृप्तेषु ²⁰। स येषां वा एवंविद्वान्होता भवति ²¹। कल्पते वै तस्मै होत्रे योगक्षेमः ²¹। कल्पते तेभ्यो यजमानेभ्यो योगक्षेमः ²²। अभि वै स होता स्वर्गं लोकमश्नुते प्रत्यस्मिंल्लोके प्रतितिष्ठति ²³। अभि ते यजमानाः स्वर्गं लोकमश्नुवते प्रत्यस्मिंल्लोके प्रतितिष्ठन्ति येषामेवंविद्वान्होता भवती²⁴ति ।²⁵८। ॥१८॥

तनूरतो वदति ।१। अध्वर्यो येषां वा अन्नादीं प्रजापतेस्तन्वं विद्वान्होता भवत्यन्नादो वै स होता भवत्यन्नादास्ते यज-

माना भवन्ति [2] अध्वर्यो येषां वा अन्नपत्नी प्रजापतेस्तन्वं विद्वान्होता भवत्यन्नपतिर्वै स होता भवत्यन्नपतयस्ते यजमाना भवन्ति [3] अध्वर्यो येषां वै भद्रां प्रजापतेस्तन्व विद्वान्होता भवति भद्र वै तस्मै होत्रे भवति भद्र तेभ्यो यजमानेभ्यो भवति [4] अध्वर्यो येषां वै कल्याणी प्रजापतेस्तन्व विद्वान्होता भवति कल्याण वै तस्मै होत्रे भवति कल्याण तेभ्यो यजमानेभ्यो भवति [5] अध्वर्यो येषां वा अनिलयां प्रजापतेस्तन्व विद्वान्होता भवत्यनिलयो वै स होता भवत्यनिलयास्ते यजमाना भवन्ति [6] अध्वर्यो येषां वा अपभयां प्रजापतेस्तन्वं विद्वान्होता भवत्यभय वै तस्मै होत्रे भवत्यभयं तेभ्यो यजमानेभ्यो भवति [7] अध्वर्यो येषां वा अनाप्तां प्रजापतेस्तन्वं विद्वान्होता भवत्यनाप्तो वै स होता भवत्यनाप्तास्ते यजमाना भवन्ति [8] अध्वर्यो येषां वा अनाप्यां प्रजापतेस्तन्वं विद्वान्होता भवत्यनाप्यो वै स होता भवत्यनाप्यास्ते यजमाना भवन्ति [9] अध्वर्यो येषां वा अनाधृष्टां प्रजापतेस्तन्व विद्वान्होता भवत्यनाधृष्टो वै स होता भवत्यनाधृष्टास्ते यजमाना भवन्ति [10] अध्वर्यो येषां वा अनाधृष्यां प्रजापतेस्तन्व विद्वान्होता भवत्यनाधृष्यो वै स होता भवत्यनाधृष्यास्ते यजमाना भवन्ति [11] अध्वर्यो येषां वा अपूर्वां प्रजापतेस्तन्व विद्वान्होता भवति न वै तस्माद्धोतुरन्यः पूर्वो भवति न तेभ्यो यजमानेभ्यो ऽन्ये पूर्वे भवन्ति [12] अध्वर्यो येषां वा अभ्रातृव्यां प्रजापतेस्तन्व विद्वान्होता भवत्यभ्रातृव्यो वै स होता भवत्यभ्रातृव्यास्ते यजमाना भवन्ति येषामेवविद्वान्होता भवती[13]ति । [13]२। ॥१८॥

गृहपतिरतो गृहपतिवदनम् ।१। अध्वर्यो येषां वै गृहपति-र्गृहपतिं विद्वान्गृहपतिर्भवति[2] राध्नोति वै स गृहपती राध्नुवन्ति ते यजमानाः[3] अध्वर्यो[4] येषां वा अपहतपाप्मानमेवंविद्वान्गृह-पतिर्भवत्यप[5] वै स गृहपतिः पाप्मानं हते[6] ऽप ते यजमानाः पाप्मानं घ्नते[7] येषामेवंविद्वान्गृहपतिर्भवती[8]ति ।[9]२। ॥२०॥

प्रजापत इति मनसा यजति ।१। मनसा वषट्करोति ।२। मनसानुवषट्करोति ।३। मनसा भक्षः ।४। मनसेरोऽभिमर्श-नम् ।५। औदुम्बरीमन्वारभन्ते ऽग्रेण धिष्ण्यानासीनाः ।६। पलाश-शाखाभिर्ये नातिक्रामेयुः ।७। उत्तमौ पाणी होता कुर्वीत ।८। उत्तमो ऽसानीति ।९। अपिधाय सदसो द्वारौ शालायाश्चा-ध्वर्युर्वाचमुपाकरोति । वाग्यताः संमील्यासत आ नक्षत्राणां दर्श-नात् ।१०। नक्षत्रेषु दृश्यमानेषु मार्जालीयदेशे तच्चक्षुरिति नक्ष-त्रेषु चक्षुर्विसृजन्ते ।११। सर्वे साम्नो निधनमुपेत्योत्तरस्य हविर्धान-स्याधो ऽक्षं सर्पन्ति ।१२। उत्तरस्योत्तरेण वा ।१३। युवं तमिन्द्रापर्वतेत्यववेलायां जपित्वाग्रेण हविर्धाने समुपविश्य कामा-न्ध्यायन्ते यत्कामा भवन्ति ।१४। ये बहुकामा भूर्भुवः स्वरित्ये-तास्ते व्याहृतीर्जपेयुः ।१५। ते प्राञ्च उदञ्च उत्क्राम्य वाचं विसृजन्ते वागैतु वागुपैतु वागुप मैतु वागिति ।१६। सुब्रह्मण्याप्रतीकं त्रिरुपां-श्वभिव्याहृत्य वाचं विसृजन्ते ।१७। अत्र द्वादशाहः संतिष्ठते ।१८। कालवादो वा कालवादो वा ।१९। ॥२१॥

इति शाङ्खायनसूत्रे दशमो ऽध्यायः समाप्तः ।

---

# ओम् ।

व्याख्यातो द्वादशाहः प्रकृतिः सत्राहीनानाम् ।१। वचनलक्षणो विकारः ।२। द्विरात्रप्रभृतयो ऽहीना द्वादशाहपर्यन्ताः ।३। द्वादशाहप्रभृतीनि सत्राणि ।४। अहीनेषु प्रायणीयो न विद्यते ।५। सत्रधर्मास्च ।६। ॥१॥

चतुर्विंशस्तोमं बृहत्पृष्ठमुभयसामाग्निष्टोम उक्थ्यं वाहश्चतुर्विंशमित्याचक्षते ।१। प्रैतावजनिष्टेत्याज्यम् ।२। माधुच्छन्दसः प्रउगः ।३। कयाशुभीयं मरुत्वतीयम् ।४। अनुत्तमा त इति परिधानीयोत्तराः पूर्वाः शस्त्वा यत्रास्मिन्धीयते निवित् ।५। तदिदासीयं निष्केवल्यम् ।६। द्वितीयात्साविन्नद्यावापृथिवीये ।७। वैश्वदेवमारुते च ।८। आर्भवं पष्ठात् ।९। वैश्वानरीयं तृतीयात् ।१०। यज्ञेन वर्धतेति जातवेदसीयम् ।११। समानमुक्थ्याः ।१२। यज्ञायज्ञीयस्य स्तोत्रियेणोक्थ्यस्तोत्रियान्सशस्य [13]। अनुरूपेणानुरूपान् [14]। अग्ने मरुद्भिर्ऋक्वभिः पा इन्द्रावरुणाभ्यां मत्स्वेन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यां सजूरिति शस्त्वा परिदधाति ।[15]१३। यद्यान्तरुक्थ्यस्र एतया शस्तया यजेत् ।[16]१४। ॥२॥

एकत्रिके तृचक्लृप्तं शस्त्रम् ।१। यथास्तुतं स्तोत्रियान्छस्त्वा तृचान्वा [2]। यथास्तोत्रियमनुरूपान्सामप्रगाथांश्च शस्त्वा [4]। पर्यासानामुत्तमांस्तृचान्होत्रकाः पङ्क्तिम् ।[5]। त्रिविद्युत्प्रभृतीनां होता ।[6]। सर्वमन्यत्प्रकृत्या ।[7]४। ॥३॥

अभिप्लवः षलहः पृष्ठ्यविकारः ।१। यानि अहस्य प्रथमस्या-
ज्यानि समूळ्हे तानि पूर्वेषामाभिप्लविकानाम् ।२। रथन्तरं बृहदिति
पृष्ठे विपर्यासम् ।३। ज्योतिरग्निष्टोमः प्रथममुत्तमं च ।४। चला-
युक्थ्यानि मध्ये ।५। गां द्वितीयं चतुर्थं च ।६। आयुस्तृतीयं
पञ्चमं च ।७। इन्द्रो रथायेति मरुत्वतीयम् ।८। आ याह्यर्वा-
ङिति निष्केवल्यम् ।९। कथा देवानामिति वैश्वदेवम् ।१०।
पञ्चमे च ।११।[10] मारुतमेकाहात् ।१२।[11] एति प्र होतेति जात-
वेदसीयम् ।१३।[12] समानमन्यत्प्रथमेनाह्ना ।१४।[13] ॥ ४ ॥

इमा उ त्वेति मरुत्वतीयं द्वितीयस्य ।१। सुत इत्त्वं निमिश्ल
इति निष्केवल्यम् ।२। एकाहात्ताविचम् ।३। ततं म इत्यार्भवम्
।४। पञ्चमे च ।५। देवान्हुव इति वैश्वदेवम् ।६। चतुर्विंशा-
ज्जातवेदसीयम् ।७। समानमन्यद्द्वितीयेनाह्ना ।८। ॥ ५ ॥

श्रोष्ठिष्ठो वैश्वमनसः प्रउगस्तृतीयस्य ।१। वायो याहि शिवा[2] वां
सहस्रं[3] ता वां विश्वस्या[4] वां वाहिष्ठः[5] सखाय आ शिषामहि[6] उत
नो देव्यदितिर्[7] उत नः प्रिये[8] ति प्रउगतृचानि ।२।[9] तिष्ठा हरी इति
मरुत्वतीयम् ।३।[10] एकाहान्निष्केवल्यम् ।४।[11] घृतेन द्यावापृथिवी
इति तृचम् ।५।[12] षष्ठे च ।६।[13] एकाहादार्भवं वैश्वदेवं च ।७।[14]
आ रुद्रासस्[15] इन्द्रवन्त[16] इत्याग्निमारुतम् ।८।[17] ॥ ६ ॥

होताजनिष्टेत्याज्यं चतुर्थस्य ।१। मैधातिथः प्रउगः ।२। ये
गार्त्समदे ते वायव्येन्द्रवायवे। मैधातिथ्यस्तु पूर्वाः ।३। मित्रं
वयं[1] प्रातर्युजा[5] त्वा वहन्त्वैभिरग्न[6] इति तृचानि ।४।[7] यानि
षष्ठस्योत्तरस्य सारस्वतानि समूळ्हे तान्युत्तरेषामाभिप्लविकानाम्

।[8]५। एकाहान्मरुत्वतीयम् ।[9]६। उभो भद्र इति निष्केवल्यम् ।[10]७। द्वितीयात्सावित्रद्यावापृथिवीये ।[11]८। आर्भवं तृतीयात् ।[12]९। अग्निरिन्द्र इति वैश्वदेवम् ।[13]१०। यानि त्र्यहस्य पूर्वस्य वैश्वानरीयाणि तान्युत्तरस्य ।[14]११। प्र ये शुम्भन्ते जनस्य गोपा इत्याग्निमारुतम् ।[15]१२। ॥ ७॥

अथ ओजिष्ठमित्याज्यं पञ्चमस्य[1] सर्वं चोत्तमां परिहाप्य।[2]१। संहार्यः प्रउग. ।[3]२। अयं पिब तव वायो स त्वं नो देवेति तृच.[4] शतेना न[5]·आ नो मित्रावरुणा[6]ऽ नो गोमन्तमतश्चिदिन्द्र णो[8] विश्वे देवा स्पृताद्य इति तृचानि ।[9]३। क्व स्य वीर इति मरुत्वतीयम् ।[10]४। एतायामेति निष्केवल्यम् ।[11]५। तृतीयात्सावित्रद्यावापृथिवीये ।[12]६। प्र वः स्फलक्रंश्चित्र इच्छिश्रोरित्याग्निमारुतम् ।[13]७। ॥ ८॥

सखायः सं वः सम्यञ्चमित्याज्यं षष्ठस्य[1] सर्वं चोत्तमां परिहाप्य ।[2]१। संहार्यः प्रउगः ।[3]२। वायवा याहि दर्शत[4] रथेन पृथुपाजसा[5] यदद्य सूर उदिते प्रति वां सूर उदित इति वा[6] पुरुप्रिया ण[7] उप नो हरिभिर्विश्वे[8] देवास आ गतेति भारद्वाजमिति तृचानि ।[10]३। महाँ इन्द्रो नृवदिति मरुत्वतीयम् ।[11]४। यो जात इति निष्केवल्यम् ।[12]५। द्वितीयात्सावित्रम् ।[13]६। अवुध्रमु त्य इति वैश्वदेवम् ।[14]७। धारावरास्त्वमग्ने द्युभिरित्याग्निमारुतम् ।[15]८। इन्द्र दृह्योत वैश्वदेवं षष्ठस्याह्नो द्वितीये ऽभिप्लवे ।[16]९। उषासानक्तेति तृतीये ।[17]१०। अग्निरिन्द्र इति चतुर्थे ।[18]११। श न इन्द्राग्नी इति वा ।[19]१२। प्रथमं वा पूर्वस्मिन्पटले द्वितीयमुत्तरे ।[20]१३। परावत इति पञ्चमे ।[21]१४। ॥ ९॥

विश्वजिति पुनराभ्यासादनस्य दशकस्य षोडशिपात्रमहर्ष्यं शंसति ।१०। जागतीमन्यूङ्खम् ।११। पङ्क्तिं वा न्यूङ्खम् ।१२। अनूङ्खं वा ।१३। सप्तमे पञ्चानामित्यग्निष्टोमसामः स्तोत्रियानुरूपौ स्तोत्रियानुरूपौ ।१४। ॥१५॥

इति शाङ्खायनसूत्रे एकादशो ऽध्यायः समाप्तः ।

होत्रकाणाम् ।१। प्रातःसवने कर्म ।२। आ नो मित्रा-वरुणा मित्रं वयं मित्रं हुवे ऽयं वां मित्रावरुणा पुरूरुणा चित्रति वां सूर उदिते प्र वो मित्राय यदद्य सूर उदिते प्र मित्रयोस्ता नः शक्रमिति स्तोत्रिया मैत्रावरुणस्य ।३। आ याहि सुषुमेन्द्रमिद्गाथिन इन्द्रेण सं हीन्द्रो दधीच उत्तिष्ठन्नोजसा सह मिन्धि विश्वाः प्र सम्राजं चर्षणीनां तमिन्द्रं वाजयामसि महाँ इन्द्रो य ओजसा युञ्जन्ति ब्रध्नमिति ब्राह्मणाच्छंसिनः ।४। इन्द्राग्नी आ गतं सुतमिन्द्रे अग्ना नमो बृहदियं वामस्य मन्मनस्ता हुवे ययोरिदमिन्द्राग्नी युवामिमे यज्ञस्य हि स्थ ऋत्विजेयं वामस्य मन्मनस्ता हुवे ययोरिदमिन्द्रे अग्ना नमो बृहत्तमीळिष्व ता हि शश्वन्त इति वाच्छावाकस्य ।५। ॥१॥

द्विरात्रप्रभृतिष्वह.संघातेष्वनुरूपाः श्वःस्तोत्रियाः समानस्तोत्रि-येष्वपि ।१। परे वा ।२। नित्यांस्तृचानन्याञ्छस्त्राणां पर्यासा इत्याचक्षते ।३। प्रति वां सूर उदित इति मैत्रावरुणस्य ।४। काव्येभिरदाभ्येति स्तोत्रिये वा ।५। यति श्व.स्तोत्रिये वा ।६। उद्वेदभीति ब्राह्मणाच्छंसिनः ।७। इन्द्राग्नी अवसेत्यच्छावाकस्य ।८। अन्तरेणानुरूपं पर्यासं चावापस्थानम् ।९। एकया द्वाभ्यां वा स्तोममतिशंसन्ति ।१०। भूयसा चिरति ।११। सर्वपृष्ठे च विश्वजिति ।१२। एकया दशमे ऽहनि ।१३। युव दक्षमा नो बर्ही रिशादसो य रक्षन्ति कथा राधाम ऋजुनीती नो मा कस्याद्भुतक्रतू मित्रो नो अत्यंहति महि वो महतां वोमस्य मित्रावरुणा ते नः सन्तु युजः प्र यो वां मित्रावरुणा महि

चौणामित्येकपातिन्यः ।१४। काव्येभिरदाभ्या नो गन्तमिति द्वचौ ।१५। सप्तचत्वारिंशन्मैत्रावरुण्यो गायत्र्यो दाशतयीषु तासां मैत्रावरुणः ।१६। चतुश्चत्वारिंशदैन्द्राणि गायत्राणि तेषां ब्राह्मणाच्छंसी ।१७। इन्द्रेन्द्राग्नी उप क्षये तोशा वृत्रहणेति पञ्चर्चे ।१८। यत्सोम आ सुत इति द्वे ।१९। उप स्तर्कीष्वित्येका ।२०। जुषेथां यज्ञमिति मम ।२१। षट्चत्वारिंशदैन्द्राग्न्यो गायत्र्यो दाशतयीषु तासामच्छावाकः ।२२। दशमादह्नः स्तोत्रिया विश्वजिति सर्वपृष्ठे ।२३। षष्ठस्याह्नः स्तोत्रियाननुरूपान्छ्लतरेषां पञ्चानां स्तोत्रियाऽह्नर्शन्ति ।२४। आयत्तानायत्तस्तोमेषु ।२५। ऊर्ध्वानेकाहभूतस्य ।२६। पर्यासैः परिदधति ।२७। ॥ ९ ॥

माध्यन्दिनेषु विकारः ।१। अन्यानि सूक्तान्युत्तरयोः सवनयोः पर्यासा इत्याचक्षते ।२। दिषूक्ता मध्यन्दिनाः ।३। चतुःसूक्तान्युक्थानि ।४। अप प्राच इति सदा मैत्रावरुणस्योक्थमुखीया ।५। इमा नद्यो यत्र इन्द्र इति द्वितीये ।६। सुषमस्य ते कया महामिति तृतीये ।७। प्र ये। मंहे महिवृधे भरध्वं यशामघ इन्द्रमिति द्वचौ ।८। सद्यो हा न इन्द्रो दूरादा न आसादिति चतुर्थे ।९। मो श्रमा उभे यदिन्द्रेति द्वचौ ।१०। गर्भे नु सन्का सुष्टुतिरिति पञ्चमे ।११। इन्द्राय हि द्यौरिति द्वचम् ।१२। आ नः स्तुत उप वाजेभिरत्या गत्यो यात्विति षष्ठे ।१३। तदहीनरूपम् ।१४। सप्तमे च्यहे इयाद्भिन्स्यानीत्याचक्षते ।१५। यदन्यानोत्रियानुरूपाभ्यां द्वचेभ्यश्च तत्प्रदेशे प्रतीयेत ।१६। यत्समयोरह्नोः यत्तं शैर्षां तत्प्रथमे छन्दोगे ।१७। यत्तृतीय-

पञ्चमयोस्तन्मध्यमे ।[17]१८। यच्चतुर्थषष्ठयोस्तदुत्तमे ।[18]१९। त्वं महाँ इन्द्र तुभ्यं हेति यत्र होताहीनसूक्तं शंसेत् ।[19]२०। त्वे ह यत्पितरश्चिन्न इन्द्रेत्येकविंशतिश्छन्दोमेषु पुरस्तात्पर्यासस्य ।[20]२१। मा चिदन्यद्वि शंसत मा भेम मा श्रमिष्मेत्यस्य स्तोत्रियानुरूपौ प्रगाथौ दशमे ऽहनि ।[21]२२। आ धूर्ष्वस्मा इति च द्विपदा ।[22]२३। ॥ ३॥

कं नव्य इति ब्राह्मणाच्छंसिनो ऽनुरूपादनन्तरः प्रगाथः कदानैकाहिकस्य स्थाने ।१। ब्रह्मणा त इति चोक्थमुखीया ।२। उदु ब्रह्माणीति सदा पर्यासः ।३। वयं घ त्वा क ईं वेदेति स्तोत्रियानुरूपौ तृतीये ऽहनि ।४। प्रथमयोश्च छन्दोमयोः ।५। विपर्यस्तौ तु मध्यमे ।६। यदिन्द्र प्रागपागुदगिति वा स्तोत्रियानुरूपौ प्रगाथौ ।७। अध्वर्यवो भरतेन्द्रायेत्येकादश तृतीये ।८। विश्वाः पृतना इति स्तोत्रियः [9]। तमिन्द्रं जोहवीमि मत्स्यपायि ते महो ऽस्मा अस्मा इत्यनुरूपः ।[10]९। कदा वसो स्तोत्रं यो वाचा विवाच इति तृचौ ।[11]१०। य एक इद्धव्य इति चतुर्थे ।[12]११। इन्द्रो मदाय मदेमदे हीति स्तोत्रियानुरूपौ ।[13]१२। आ याहि कृणवाम यो न इन्द्राभित इति तृचौ ।[14]१३। यस्तिग्मशृङ्ग इति पञ्चमे ।[15]१४। सुरूपकृत्नुमिति स्तोत्रियानुरूपौ ।[16]१५। त्वया वयं मघवन्निति तृचम् ।[17]१६। अस्मा इदु प्र तवस इति षष्ठे ।[18]१७। तदहीनसूक्तम् ।[19]१८। आयन्त इव सूर्यं शग्ध्यू षु शचीपत इति स्तोत्रियानुरूपौ प्रगाथा उत्तमे छन्दोमे ।[20]१९। त्वं महाँ इन्द्र यो हेत्यहीनसूक्तस्य स्थाने ।[21]२०। इन्द्रं स्तवेति छन्दोमेषु पुरस्तात्पर्यासस्य ।[22]२१। उदु त्ये मधुमत्तमा उदिन्न्वस्य रिच्यत

इति स्तोत्रियानुरूपौ प्रगाथौ दशमे ऽहनि ।[23]२२। त्रिकद्रुकेषु महिष इति वा स्तोत्रियः [24]। उत्तमा च तमिन्द्रं जोहवीमि विश्वाः पृतना इत्यनुरूपः ।[25]२३। रायस्काम इति च द्विपदा ।[26]२४। ॥४॥

कदू न्वस्येत्यच्छावाकस्यानुरूपादनन्तरः प्रगाथः कदानैकाहिकस्य स्थाने ।१। उदु न इति चोक्थ्यमुखीया ।२। अभि तष्टेवेति षट्‌ पर्यासः।३। त्वामिदा वयमेनमिदा ह्य इति स्तोत्रियानुरूपौ प्रगाथौ ।४। अपूर्व्या पुरुतमानीति द्वितीये ।५। तरणिरित्सिषासतीति स्तोत्रियानुरूपौ प्रगाथौ ।६। य ओजिष्ठ इति तृतीये ।७। यो राजा नकिष्टमिति स्तोत्रियानुरूपौ प्रगाथौ ।८। मघायोरिन्द्र इन्द्र सोममिमं पिबेति तृचौ ।९। सं च त्वे जग्मुरिति चतुर्थे ।१०। स्वादोरित्थेत्था हि सोम इति स्तोत्रियानुरूपौ ।११। यच्चिद्धि सत्याव यत्त्वं शतक्रतविति तृचौ ।१२। कदा भुवन् रथक्षयाणीति पञ्चमे ।१३। उभे यदिन्द्रेति स्तोत्रियानुरूपा ।१४। विदुष्टे अस्य वीर्यस्येति तिस्रः ।१५। शासदह्निरिति षष्ठे ।१६। तदहीनसूक्तम् ।१७। नकिष्टं न त्वा इहन्त इति स्तोत्रियानुरूपौ प्रथमे छन्दोमे ।१८। उभय शृणवदिति मध्यमे ।१९। यत इन्द्र भयामह इत्युत्तमे ।२०। सर्वे प्रगाथाः ।२१। इच्छन्ति त्वेति च्छन्दोमेषु पुरस्तात्पर्यासस्य ।२२। अया वाजमिति च द्विपदा दशमे ऽहनि ।२३। ऐकाहिकं च पूर्वम्।२४। ॥५॥

अन्तरेण प्रायणीयोदयनीयौ कदन्तो चोक्थ्यमुखीयाद्याभितष्टीयं च इदन्तोकारं च बार्हतानाम् ।१। अन्तरेणोक्थ्यमुखीयां

सूक्ते पावापस्थानम् ।१। पृष्ठ्यासूक्तान्यभिप्लवे ।२। अहीनसूक्तानां स्थाने द्वितीयादह्नः सूक्तानि ।४। उत्तरं मैत्रावरुणस्य ।५। प्रथमात् त्र्यहात्स्वरसामसु ।६। चतुर्विंशे ऽभिजिति विषुवति बृहत्पृष्ठे विश्वजिति महाव्रते च षष्ठात् ।७। विश्वजिति सर्वपृष्ठे ।८। महानाम्नीनां मैत्रावरुणः स्तोत्रियानुरूपौ सप्रगाथौ ।९। कदन्नं प्रगाथं वैरूपस्य ब्राह्मणाच्छंसी ।१०। रैवतीनामच्छावाकः ।११। वालखिल्या अविहृता मैत्रावरुणः षट् सूक्तानीन्द्रनिहवं परिहाप्या नो विश्वे सजोषस इति च प्रगाथम् ।१२। वृषाकपिम्हते कुन्तापमन्यूह्णं ब्राह्मणाच्छंसी ।१३। यौनं य इन्द्रेत्येवयामरुतः स्थाने विष्णुन्यङ्गमच्छावाकः ।१४। अभूरेक इति सामसूक्तं मैत्रावरुणस्य ।१५। यो जात इति ब्राह्मणाच्छंसिनः ।१६। प्र घा न्वस्येत्यच्छावाकस्य ।१७। सामसूक्तानि शस्त्वाहीनसूक्तानि शस्त्वैकाहिकीभिः परिदधति ।१८। एकाहभूतस्यैकाहिकान्पर्यासानूर्ध्वमहीनसूक्तेभ्यः ।१९। ॥६॥

उक्थेषु क्रियमाणेषु वालखिल्या वृषाकपिं विष्णुन्यङ्गमित्युद्धृत्य परिशेषान्माध्यन्दिनेषु शंसन्ति ।१। षष्ठादह्न उक्थानि ।२। अथ यदि षष्ठाह्निकं तृतीयसवनमसर्वपृष्ठे ऽहनि प्रदिष्टं स्याद्द्वितीयादह्न उक्थानि ।३। परोक्षपृष्ठे प्रतिशिल्पानि क्रियन्ते ।४। उद्धृत्य वालखिल्या मैत्रावरुणः पिबा सुतस्य रसिन इत्यैन्द्राग्नप्रगाथाञ्छस्त्वा ।५। वृषाकपिमुद्धृत्य ब्राह्मणाच्छंसीन्द्रो मदायेति पङ्क्तीरैन्द्रीः शंसति ।६। विष्णुन्यङ्गमेवाच्छावाकः ।७। इति परोक्षपृष्ठे ।८। ॥७॥

अथ विश्वजिच्छिल्पे ।१। ऐकाहिकान्प्रगाथाञ्छस्त्वा वालखिल्या वृषाकपिं विष्णुन्यङ्गं नाभानेदिष्ठं च सर्वग्रहृचान्वा ।२। चतुर्थ्चं

वालखिल्यानाम् । ३ । साममूक्तानामहीनसूक्तानां पर्यासानां चौल्लोंसूचान्होचकाः शंसन्ति । ४ । इति विश्वजिच्छिल्पे विकारः । ५ । निविद्धानीयांश्च तृचान् । ६ । युवोर्यदीति तृचम् । ७ । ये यज्ञेनेति च सूक्तम् । ८ । स्वस्ति नो मिमीतामिति तृचं निविद्धानीयम् । ९ । एवयामरुतश्च तृचम् । १० । यथास्तोमं प्रातःसवनम् । ११ । ॥ ८ ॥

त्रिवृद्दशरात्रस्य तृचक्लृप्तं शस्त्रम् । १ । आज्यानामाद्यांस्तृचान् । २ । निविद्धानानामुत्तमान् । ३ । एकैकामितरेषां सूक्तानां शिल्पानां च । ४ । षष्ठस्य तु समानं विश्वजिच्छिल्पेन शिल्पानाम् । ५ । नाभानेदिष्ठस्य । ६ । एवयामरुतश्च । ७ । यदि गवामयने ब्राह्मणाच्छंसिने प्राग्विषुवत ऐन्द्रेषु प्रगाथेष्वभीवर्तमन्वायातयेयुर्यस्मिंस्तुवते स स्तोत्रियः श्वःस्तोत्रियो ऽनुरूपः । ८ । यदि वा षट्प्रगाथेन । ९ । तृतीये ऽहनि हृदयः । १० । तं वो दस्मं तत्त्वा यामभि प्र वः प्र सुश्रुतमा त्वा सहस्रमा मन्द्रैरिन्द्र यो राजा नकिष्टं न त्वा वृहन्तस्त्वमिन्द्र यशास्त्वमिन्द्र प्रवृतिषु पिबा सुतस्य रसिनो ऽध्वर्यो द्रावयेति वा । ११ । विषुवत्यादित्यव्रतम् । १२ । चित्रं देवानामिति स्तोत्रियानुरूपौ । १३ । विकर्णं वा । १४ । वयमहानुद् त्यद्दर्शतमिति स्तोत्रियानुरूपौ प्रगाथौ विकर्णस्य । १५ । इन्द्र क्रतुमिति वा स्तोत्रिय इन्द्र ज्येष्ठमित्यनुरूपः । १६ । पौरुमीळ्हं मानवं जनित्रं भारद्वाजं श्यैतनौधसे एतान्यभीवर्तस्थान इन्द्रक्रतावेवोर्ध्वं विषुवतः । १७ । ॥ ९ ॥

उक्थ्येषु विकारः । १ । अनुरूपादनन्तराण्यैन्द्राणि जागतान्यन्यानि नित्यानि वान्यत्र पष्ठादित्यानि । २ । प्र वो वाजाः प्र वः सखाय इति स्तोत्रियानुरूपौ । ३ । प्र सम्राजे वृहदिन्द्रा को वां

वरुणेति मैत्रावरुणस्याहनि द्वितीये । ४ । आ वां राजानाविति पर्यासस्तृतीयपञ्चमयोर्मध्यमे च छन्दोमे । ५ । पुनीषे वामितीतरेषु । ६ । प्र मंहिष्ठाय गायत प्र वो अग्न इति स्तोत्रियानुरूपौ प्रगाथौ । ७ । धीरा त्वस्येन्द्रावरुणा युवमध्वरायेति तृतीये । ८ । अग्नि वो वृधन्तमग्निं स्तोमेनेति स्तोत्रियानुरूपौ । ९ । इत्यथ अष्टौ वां यज्ञ इति चतुर्थे । १० । आ ते अग्न इधीमहि सो अग्निर्यो वसुरग्निं तं मन्य इति स्तोत्रिय [11] । आ ते अग्न ऋचेत्यनुरूप । ११ [12] । प्र धुन्ध्युवमिन्द्रावरुणा युवमध्वरायेति पञ्चमे । १२ [13] । ॥१०॥

द्विपदा. षष्ठे सर्वेषाम् । १ । अग्ने त्वं न इति स्तोत्रिय. । २ । चतुर्थीं तृतीयां करोति । ३ । अग्ने भव सुषमिधेत्यनुरूप. । ४ । विहृताश्च वालखिल्या. । ५ । पच्छ· प्रथमे सूक्ते विहरति । ६ । अर्धर्चशो द्वितीये । ७ । ऋक्कृत्तृतीये । ८ । उत्तमे विपर्यस्येत् । ९ । ओथा मोदैव मदे मोदा मोदैवो थो ३ इति विहृतासु प्रतिगृणाति । १० । अवसाने पूर्वं प्रणव उत्तरम् । ११ । तार्क्ष्य-स्योत्तमां परिशिष्याह्नय दूरोहणं यथा विषुवति । १२ । उत्तमा-मुपसंशस्यैकाहिकौ तृचौ । १३ । अस्माकमत्र पितरस्त आसन्निति तिस्र । १४ । इन्द्रावरुणा युवमध्वरायेति षष्ठे । १५ । आ ते वत्सो मनो यमदाग्निरगामीति स्तोत्रियानुरूपौ प्रथमे छन्दोमे । १६ । पर्यासमन्तरेण त्रीणि च पूर्वाण्यैकाहिकानीमानि वां भाग-धेयानीति पञ्च युवां नरा पश्यमानास इति वा । १७ । प्रेष्ठ वः प्रियो नो अस्तु विश्पतिरिति मध्यमे । १८ । भद्रो नो यदी घृतैभिराहुत इत्युत्तमे प्रगाथौ । १९ । आ घा ये अग्निमिन्धत

इमा अभि प्र णोनुम इति वा । २० । न हि ते क्षत्रमित्युभयोः सूक्तभेदः । २१ । इन्द्रा को वां वरुणेति मध्यमे । २२ । अग्नी वां यज्ञ इत्युत्तमे । २३ । इमा उ वां भृमय इत्युभयोस्त्रिषु । २४ । ॥ ११ ॥

एवा ह्यसि वीरयुरेवा ह्यस्य सूनृतेति स्तोत्रियानुरूपौ । १ । यस्तस्तम्भेति षड् ब्राह्मणाच्छंसिनो ऽहनि द्वितीये । २ । उत्तरयोश्छन्दोमयोर्मध्ये सूक्तानाम् । ३ । यो अद्रिभिदिति तृचं पूर्वं सर्वत्र पर्यासात । ४ । अस्तेव सुप्रतरमिति पर्यासस्तृतीयपञ्चमयोर्मध्यमे च च्छन्दोमे । ५ । अच्छा म इन्द्रमितीतरेषु । ६ । तं ते मदं तमभि प्र गायतेति स्तोत्रियानुरूपौ । ७ । अनर्वाणं वृषभमिति तृतीये । ८ । उदप्रुत इति चतुर्थे । ९ । प्रथमोत्तमयोश्च च्छन्दोमयोः । १० । षष्ठे चोर्ध्वं तृचेभ्यः । ११ । इन्द्राय साम गायत तमभि प्र गायतेति स्तोत्रियानुरूपौ । १२ । यज्ञे दिव इति पञ्चमे मध्यमे च च्छन्दोमे । १३ । इमा नु कमिति स्तोत्रियः । 14 उत्तरे चाया वाजमिति तृतीयानुरूपस्य । 15 १४ । ॥ १२ ॥

अथ प्राच इति सुकीर्ति शस्त्वा पङ्क्तिशंसं वृषाकपि मध्यमस्य पादस्य द्वितीयोत्तमयोरक्षरयोर्न्यूङ्खयति । १ । वैराजः पूर्वस्मिन्नर्द्धर्चे वृषाकपेोर्३ ओ३ अर्यः पुष्टेषु मत्सखेत्युत्तरस्मिन् । २ । उपरते प्रतिन्यूङ्खयति । ३ । वैराजन्यूङ्खसूक्ता मदेय मदैवो३ ओ३ ओथा मोदैवेति प्रतिगृणाति । ४ । तद्यत्रोपद्रुतमभिनिहितं प्रश्लिष्टं क्षिप्रसन्धिरिति न्यूङ्खनीयस्य पादस्यादौ स्यादुपातीत्य तद्द्वितीये ऽक्षरे न्यूङ्खयेच्छ्रा ओ३ इति यथा क ओ३ इति च । ५ । अथ यत्र

पश्चात्पदद्दृश्चिः स्यादिदृश्चिः प्रत्यये न्यूङ्खयेन्नो ३ श्रो ३ इति । ६ ।
तं शस्त्वा कुन्तापम् । ७ । ॥ १३ ॥

इदं जना उप श्रुत नराशंस स्तविष्यते ।
षष्टिं सहस्रा नवतिं च कौरम श्रा रुशमेषु दद्महे ॥ १ ॥
उष्ट्रा यस्य प्रवाहिणो वधूमन्तो द्विर्दश ।
वर्ष्मा रथस्य नि जिहीलते दिव ईषमाणा उपस्पृशः ॥ २ ॥
एष इषाय मामहे शतं निष्कान्दश स्रजः ।
त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् ॥ ३ ॥
प्र रेभासो मनीषा वृषा गाव इवेरते ।
श्रमोत पुत्रका एषाममोत गा इवासते ॥ ४ ॥
प्र रेभ धियं भरस्व गोविदं वसुविदम् ।
देवत्रेमां वाचं श्रीणीहीषुर्नावीरस्तारम् ॥ ५ ॥ । १ । ॥ १४ ॥
वच्यस्व रेभ वच्यस्व वृत्ते न पक्वे शकुनः ।
नष्टे जिह्वा चर्चरीति चुरो न भुरिजोरिव ॥ १ ॥
इन्द्रः कारुमबूबुधदुत्तिष्ठ वि चरा जरन् ।
ममेदुग्रस्य चर्कृधि सर्व इत्ते पृणादरिः ॥ २ ॥
इह गावः प्र जायध्वमिहाश्वा इह पूरुषाः ।
इहो सहस्रदक्षिणो ऽपि पूषा नि षीदति ॥ ३ ॥
नेमा इन्द्र गावो रिषन्मो श्रासां गोपती रिषत् ।
मासामभित्रयुर्जन इन्द्र मा स्तेन ईशत ॥ ४ ॥
यदिन्द्रादो दाशराज्ञे ऽमानुषं वि गाहथाः ।
विरूपः सर्वस्मा श्रासीत्सह यच्चाय पत्यते ॥ ५ ॥ । १ । ॥ १५ ॥

त्वं वृषाक्षुं मघवन्नम्रं मर्याकरोरपि ।
त्वं रौहिणं व्यास्यो वि वृत्रस्याभिनच्छिरः ॥१॥
प्रष्टिं धावन्तं हर्योरौच्चैःश्रवसमब्रुवन् ।
स्वस्त्यश्व जैत्रायेन्द्रमा वह सुस्रजम् ॥२॥
अरंगरो वावदीति त्रेधा बद्धो वरत्रया ।
इरामु ह प्र शंसत्यनिरामप सेधति ॥३॥
त्वमिन्द्र शर्म रिणा हव्यं पारावतेभ्यः ।
विप्राय स्तुवते वसु नि दूरश्रवसे वहः ॥४॥
त्वमिन्द्र कपोताय च्छिन्नपक्षाय वञ्चते ।
श्यामाकं पक्वं पीलु च वारस्मा अकृणोर्बहु ॥५॥ ।१।

चतस्रो ऽतः पारिक्षित्यस्तासां तृतीये पादे प्रथमचतुर्थयोरध-रयोर्वैस्वर्यम् ।२। ॥१६॥

राज्ञो विश्वजनीनस्य यो देवो मर्त्याँ अति ।
वैश्वानरस्य सुष्टुतिमा सुनोता परिक्षितः ॥१॥
परिक्षिन्नः क्षेममकरत्तम आसनमाचरन् ।
कुलायं कृण्वन्कौरव्यः पतिर्वदति जायया ॥२॥
कतरत्त आ हराणि दधि मन्थां परिस्रुतम् ।
जाया पतिं वि पृच्छति राष्ट्रे राज्ञः परिक्षितः ॥३॥
अभीव स्वः प्र जिहीते यवः पक्वः पथो बिलम् ।
जनः स भद्रमेधति राष्ट्रे राज्ञः परिक्षितः ॥४॥ ।१।

ओथा मोदैवेति वैस्वर्यं प्रतिगृणाति ।२। एतशप्रलापो ऽतो विंशतिपदस्त्रिविच्छेदम् ।३। ॥१७॥

एता अश्वा आ प्लवन्ते ॥ १ ॥ प्रतीपं प्रातिसुत्वनम् ॥ २ ॥
तासामेका हरिक्निका ॥ ३ ॥ हरिक्निके किमिच्छसि ॥ ४ ॥
साधु पुत्रं हिरण्ययम् ॥ ५ ॥ क्वाह तं परास्यः ॥ ६ ॥
यत्रामूस्तिस्रः शिंशपाः ॥ ७ ॥ परि त्रयः पृदाकवः ॥ ८ ॥
शृङ्गं धमन्त आसते ॥ ९ ॥ अलाबुकं निखातकम् ॥ १० ॥
कर्करिको निखातकः ॥ ११ ॥ कद्वात उन्मथायति ॥ १२ ॥
कुलायं कृणवादिति ॥ १३ ॥ उग्रं वनिषदाततम् ॥ १४ ॥
न वनिषदनाततम् ॥ १५ ॥ क एषां दुन्दुभिं हनत् ॥ १६ ॥
लेलिं हनत्कथं हनत् ॥ १७ ॥ पर्यागारं पुनः पुनः ॥ १८ ॥
शफेन पीव ओहते ॥१९॥ आथर्वनेन तेदनी ॥ २० ॥ । १। ॥१८॥
आदित्या ह जरितरङ्गिरोभ्यो ऽश्वं दक्षिणामनयन् ।
तां ह जरितर्न प्रत्यायंस्तामु ह जरितः प्रत्यायन् ।
तां ह जरितर्न प्रत्यगृभ्णंस्तामु ह जरितः प्रत्यगृभ्णन् । १ ।
अहानेत (?) सन्नविचेतनानि यज्ञानेत सन्नपुरोगवासः ।
आदित्या रुद्रा वसवस्त्वेलत इदं राधः प्रति गृभ्णीह्यङ्गिरः । २ ।
इदं राधो बृहत्पृथु देवा ददतु यद्वरम् ।
तद्वो अस्तु सचेतसं युष्मे अस्तु दिवेदिवे । प्र त्येव गृभायत । ३ ।
उत श्वेत आशुपत्वोत पद्याभिर्यविष्ठः ।
उतेम आशु मानं विभर्ति । ४ ।
इत्यादित्या अङ्गिरस्य । ५ । एवाह जरितरोथा मोदैव । तथाह
जरितरोथा मोदैवेत्याशां प्रतिगृणाति । ६ । अवसाने पूर्वं प्रणव
उत्तरम् । ७ । ॥१९॥

त्वं वृथा नद्य इन्द्र सर्तवेऽच्छा समुद्रमसृजो रथाँ इव वाजयतो रथाँ इव ।

त्वं वृषाक्षुं मघवन्नम्रं मर्याकरोरपि ।
त्वं रौहिणं व्यास्यो वि वृत्रस्याभिनच्छिरः ॥१॥
प्रष्टिं धावन्तं हर्योरौच्चैःश्रवसमब्रुवन् ।
स्वस्त्यश्व जैत्रायेन्द्रमा वह सुस्रजम् ॥२॥
अरंगरो वावदीति त्रेधा बद्धो वरत्रया ।
इरामु ह प्र शंसत्यनिरामप सेधति ॥३॥
त्वमिन्द्र शर्म रिणा हव्यं पारावतेभ्यः ।
विप्राय स्तुवते वसु नि दूरश्रवसे वहः ॥४॥
त्वमिन्द्र कपोताय च्छिन्नपक्षाय वञ्चते ।
श्यामाकं पक्वं पीलु च वारस्मा अकृणोर्बहु ॥५॥ ।१।
चतस्रो ऽतः पारिक्षित्यस्तासां तृतीये पादे प्रथमचतुर्थयोरच-
रयोर्वैस्वर्यम् ।२। ॥१६॥
राज्ञो विश्वजनीनस्य यो देवो मर्त्याँ अति ।
वैश्वानरस्य सुष्टुतिमा सुनोता परिक्षितः ॥१॥
परिच्छिन्नः क्षेममकरोत्तम आसनमाचरन् ।
कुलायं कृण्वन्कौरव्यः पतिर्वदति जायया ॥२॥
कतरत्त आ हराणि दधि मन्थां परिस्रुतम् ।
जाया पतिं वि पृच्छति राष्ट्रे राज्ञः परिक्षितः ॥३॥
अभीव स्वः प्र जिहीते यवः पक्वः पथो बिलम् ।
जनः स भद्रमेधति राष्ट्रे राज्ञः परिक्षितः ॥४॥ ।१।
ओथा मोदैवेति वैस्वर्यं प्रतिगृणाति ।२। एतशप्रलापो ऽतो
विंशतिपदस्तानिविच्छंसम् ।३। ॥१७॥

एता अश्वा आ सवन्ते ॥ १ ॥ प्रतीपं प्रातिसुत्वनम् ॥ २ ॥
तासामेका हरिक्निका ॥ ३ ॥ हरिक्निके किमिच्छसि ॥ ४ ॥
साधुं पुत्रं हिरण्ययम् ॥ ५ ॥ काह तं पराखः ॥ ६ ॥
यत्रामूस्तिस्रः शिंशपाः ॥ ७ ॥ परि त्रयः पृदाकवः ॥ ८ ॥
शृङ्गं धमन्त आसते ॥ ९ ॥ अलाबुकं निखातकम् ॥ १० ॥
कर्करिको निखातकः ॥ ११ ॥ कद्वात उन्मथायति ॥ १२ ॥
कुलायं कृणवादिति ॥ १३ ॥ उग्रं वनिषदाततम् ॥ १४ ॥
न वनिषदनाततम् ॥ १५ ॥ क एषां दुन्दुभिं हनत् ॥ १६ ॥
तेलिं हनत्कथं हनत् ॥ १७ ॥ पर्यागारं पुनः पुनः ॥ १८ ॥
शफेन पीव ओहते ॥ १९ ॥ आथवनेन तेदनी ॥ २० ॥ । १ । ॥ १८ ॥
आदित्या ह जरितरङ्गिरोभ्यो ऽश्वं दक्षिणामनयन् ।
तां ह जरितर्न प्रत्यायंस्तामु ह जरितः प्रत्यायन् ।
तां ह जरितर्न प्रत्यगृभ्णंस्तामु ह जरितः प्रत्यगृभ्णन् । १ ।
अह्नादेत (?) सन्नविचेतनानि यज्ञादेत सन्नपुरोगवासः ।
आदित्या रुद्रा वसवस्त्वेलत इदं राधः प्रति गृभ्णीह्यङ्गिरः । २ ।
इदं राधो हृहत्पृथु देवा ददतु यद्वरम् ।
तद्वो अस्तु सचेतसं युष्मे अस्तु दिवेदिवे । प्र तेव गृभायत । ३ ।
उत श्वेत आशुपत्वोत पद्याभिर्यविष्ठः ।
उतो आशु मानं बिभर्ति । ४ ।
इत्यादित्या अङ्गिरस्य । ५ । एवाह जरितरोथा मोदैव । तथाह जरितरोथा मोदैवेत्यासां प्रतिगृणाति । ६ । अवमाने पूर्वं प्रणव उत्तरम् । ७ । ॥ १८ ॥

पश्चातो दिशां कॢप्तयः ।१।

य: सभेयो विदथ्यः सुत्वा यज्वाथ पूरुषः ।
सूर्यं चामू रिशादसस्तद्देवाः प्रागकल्पयन् ॥१॥
यङ्गद्रस्य पुरुषस्य पुत्रो भवति दाधृषिः ।
तद्विप्रो अब्रवीदु तद्गन्धर्वः काम्यं वचः ॥२॥
यो जाम्या अप्रथयस्तद्यत्सखायं दुधूर्षति ।
ज्येष्ठो यदप्रचेतास्तदाहुरधरागिति ॥३॥
यत्र पणिरभुजिष्यो यत्र रेवाँ अदाशुरिः ।
धीराणां शश्वतामह तदपागिति शुश्रुम ॥४॥
ये च देवा अयजन्तायो ये च परादद्ः ।
सूर्यो दिवमिव गत्वाय मघवानो वि रप्शते ॥५॥ ।२। ॥२०॥

यत्तो जनकल्पाः ।१।

यो ऽनाक्ताक्षो अनभ्यक्तो अमणिवो अहिरण्यवः ।
अब्रह्मा ब्रह्मणः पुत्रस्तो ता कल्पेषु संमिता ॥१॥
य आक्ताक्षः स्वभ्यक्तः सुमणिः सुहिरण्यवः ।
सुब्रह्मा ब्रह्मणः पुत्रस्तो ता कल्पेषु संमिता ॥२॥
अप्रपाणा च वेशन्ता रेवाँ अप्रददिश्च यः ।
अयभ्या कन्या कल्याणी तो ता कल्पेषु संमिता ।३।
सुप्रपाणा च वेशन्ता रेवान्सुप्रददिश्च यः ।
सुयभ्या कन्या कल्याणी तो ता कल्पेषु संमिता ।४।
परिवृक्ता च महिष्यनस्या चायुधिंगमः ।
ऽनाशुरश्चायामी तो ता कल्पेषु संमिता ॥५॥

वावाता च महिषी स्वस्त्या च युधिंगमः ।
स्वाउरया यामी ते ता कल्पेषु संमिता ॥ ६ ॥ । २ ।
यतस्तो ऽतः प्रवल्हिकास्तस्यश्च प्रतीराधास्तन्निविच्छंसम् । ३ । ॥ २१ ॥
विततौ किरणौ द्वौ तावा पिनष्टि पूरुषः ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ १ ॥
मातुष्टे किरणौ द्वौ निवृत्तः पुरुषाहृतिः ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ २ ॥
निगृह्य कर्णकौ द्वौ निरा यच्छसि मध्यमे ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ३ ॥
उत्तानायै शयानायै तिष्ठन्तेवाव गूहसि ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ४ ॥
श्लक्ष्णायां श्लक्ष्णिकायां श्लक्ष्णमेवाव गूहसि ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ५ ॥
अव श्लक्ष्णमिव भ्रंशदन्तर्लोमवति ह्रदे ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ६ ॥
[यद्यूनं यच्च अधिकं तत्सर्वमेवाव गूहसि ।
न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ७ ॥] । १ । ॥ २२ ॥
इहेत्थ प्रागपागुदगधरागरालागुदभर्त्सन ।
इहेत्थ प्रागपागुदगधराग्वत्साः पुरुषन्त आसते ।
इहेत्थ प्रागपागुदगधराक् स्थालीपाको वि लीयते ।
इहेत्थ प्रागपागुदगधराक् क्लिलीपु क्लिलीपते । १ ।
भुगित्यभिगतः । शलित्यपक्रान्तः । फलित्यभिष्ठितः । २ । अलाबूनि

जरितः। भृषातकानि जरितः। पिपीलिकावटो जरितः। अश्व-
त्थपलाशं जरितः। श्वा जरितः। पर्णसदो जरितः। गोशफो
जरितरित्येकैकमुक्त्वा नित्यं प्रतिगरम् ।३।

वीमे देवा अक्रंसताध्वर्यो क्षिप्रं प्र चर।
सुसत्यमिद्गवामस्यसि प्र खुदसि ।४।

पत्नी यीयस्यमाना जरितरोथा मोदैव होता विष्टी मे जरितरोथा
मोदैवेत्यर्धां प्रतिगृणाति ।५। अवसाने पूर्वं प्रणव उत्तरम्
।६। ॥२३॥

अत ऊर्ध्वं दशाहनस्याः ।१।

यद्वासो ललामगुं प्र विष्टीमिनमाविपुः।
सक्था देदिश्यते नारी सत्यस्याक्षिभुवो यथा ॥१॥
यदस्या अंहुभेद्याः कृधु स्थूलमुपातसत्।
मुष्काविदस्या एजतो गोशफे शकुलाविव ॥२॥
यदा स्थूलेन पससाणौ मुष्का उपावधीत्।
विष्वञ्चावस्या वर्धतः सिकतास्विव गर्दभौ ॥३॥
महानग्नी महानग्नं धावन्तमनु धावति।
इमास्तु तस्य गा रक्ष यभ मामद्ध्योदनम् ॥४॥
महानग्नी कृकवाकुं शम्यया परि धावति।
वयं न विद्म यो मृगः शीर्ष्णा हरति धाणिकाम् ॥५॥
महानान्युप ब्रूते स्वस्यावेशितं पसः।
इत्थं फणस्य वृक्षस्य शूर्पेशूर्पे भजेमहि ॥६॥
महानान्युलूखलमतिक्रामन्यब्रवीत्।

यथा तव वनस्पते नि घ्नन्ति तथा मम ॥ ७॥
महान्वै भद्रो बिल्वो महाम्भद्र उदुम्बर ।
महाँ अभिक्तु बाधते महत साधु खोदनम् ॥ ८ ॥
कपृन्नरो यद्ध प्राचीरिति द्वे । २। तासां तृतीये पादे न्यूङ्खो यथा वृषाकपौ । ३। कपृन्नर इति द्वितीयदशमयोरक्षरयो । ४। न्यूङ्खेनेतरासामवसाय सतानायोत्तम पदम । ५। वि इ इ ई इ किमयमिदमाहो इ ओ इ ओया मोदैवेति प्रतिगृणाति । ६। ॥ २४॥

दधिक्राव्णो अकारिषमित्येका । १। सुतासो मधुमत्तमा प्र मंहिष्ठाय यो अद्रिभिदव इष इति तृचानि षष्ठे । २। त्व न इन्द्रा भर तदिन्द्राव आ भरेति स्तोत्रियानुरूपौ । ३। सर्वं प्रमंहिष्ठीय प्रथमे छन्दोमे । ४। यो अद्रिभिदिति चैका । ५। एन्द्र नो गधेदु मध्वो मदिन्तरमिति मध्यमे । ६। एतो न्विन्द्र स्तवाम सखाय इत्युत्तमे । ७। ॥ २५॥

इन्द्र विश्वा इन्द्रमीशानमोजसेति स्तोत्रियानुरूपावनुरूपस्य वे पूर्वे ते उत्तरे । १। भू मर्त इत्यच्छावाकस्यैन्द्रादनन्तर द्वितीयचतुर्थयो प्रथमोत्तमयोश्च छन्दोमयो । २। विष्णोर्नु कमितीतरेषु । ३। उरु यज्ञायेति तृच पूर्व सर्वत्र पर्यासात् । ४। स वा कर्मणेति सदा पर्यास । ५। सुधी इव तिरश्चा आशुत्कर्णेति स्तोत्रियानुरूपौ तृतीये । ६। इममिन्द्र सुत पिब पिबा सोम मदाय कमिति चतुर्थे । ७। अयावि सोम इन्द्र त इममिन्द्र सुत पिबेति पञ्चमे । ८। प्र व इन्द्राय वृत्रहन्तमाय विप्रतो दावन्निति षष्ठे । ९। एवयामरुत शस्त्र यथा वृषाकपिम । १०।

इह मदोइ इति वैराजन्तूह्यमुक्ता मदे मधोर्मदस्य मदिरस्य मदेवो३ ओ३ ओथा मोदैवेति प्रतिगृणाति ।११। ऋतुर्जनित्री ।१२। तमस्य द्यावापृथिवी ।१३। विष्णोर्नु कम् ।१४। प्र वः पान्तमन्धसः ।१५। छन्दोमेषु च ।१६। तिस्त्रस्तु प्रथमे ।१७। भवा मित्र इति तृचाच पूर्वमुत्तरयोश्छन्दोमयोः ।१८। नू मर्तः परो मात्रयेत्युत्तमामुद्धृत्य षष्ठे ।१९। यदिन्द्र चित्र यदिन्द्र ते चतस्र इति स्तोत्रियानुरूपौ प्रथमे छन्दोमे ।२०। पुरां भिन्दुरिति मध्यमे। पूर्वस्तृचो ऽनुरूपस्तृतीया तु प्रथमा ।२१। गायन्ति त्वेत्युत्तमे ।२२। ॥२६॥

चतुर्विंशे शस्त्रं प्रथमाच्छन्दोमात्सर्वेषाम् ।१। यच्चतुर्णां द्वितीयप्रभृतीनां तच्चतुर्णामाभिप्लविकानाम् ।२। तृतीयप्रभृतिभ्यः स्वरसामसु ।३। अथ यद्यभिजितं विषुवन्तं बृहत्पृष्ठं विश्वजितं महाव्रतीयमहरित्युक्थ्यानि कुर्युर्यातुर्विंशिकान्युक्थ्यानि ।४। अथ यदि पृष्ठ्याभिप्लवयोः प्रथमे ऽहनी दशममहरित्युक्थ्यानि कुर्युरैकाहिकान्युक्थ्यानि ।५। उत्तममाभिप्लविकमुक्थ्य कुर्युर्यद्द्वितीयस्याह्नस्तृतीयसवनं तत्तृतीयसवनं तत्तृतीयसवनम् ।६। ॥२७॥

इति शाङ्खायनश्रौतसूत्रे द्वादशो ऽध्याय. समाप्तः ।

---

ओम् ।



पूर्वकारिणश्छन्दोगा अध्वर्यवः ।१। ते चेदनुपदिष्टं कुर्युः ।२। एतावच्च दर्शनामानुपूर्व्यं हविषां दैवत उच्चैरुपांशुतायां चाध्वर्युमनुविदधीत ।३। सौत्रिये छन्दोगमद्दर्योगे सोमविकारे पृष्ठे संस्थायां च ।४। ते चेत्पादं वार्धर्चं वा विपर्यस्येयुरूनं वातिरिक्तं वा कुर्युर्न तदाद्रियेत ।५। ऋचामेव विपर्यासमनुविदधीत ।६। न्यूङ्खनीयश्चेत्पादो विकर्षेण पूर्येत तस्य संख्याय द्वितीयं न्यूङ्खनीयम् ।७। ऊर्ध्वं तु स्वरात्समानच्छन्दोमानानि व्यञ्जनानि लुप्येरन् ।८। ॥१॥

आनीते पशौ मृते ऽनुपाकृते ऽन्यमालभेतर्त्विग्भ्यस्तं कारयेत् ।१। उपाकृते वेपमाने

यस्माद्भीषावेपिष्ठास्ततो नो अभयं कुरु ।

पशून्नः सर्वान्गोपाय नमो रुद्राय मीढुषे ॥

स्वाहेति जुहोति ।२। यस्माद्भीषावाशिष्ठा इति वाश्यमाने ।३। यस्माद्भीषापलायिष्ठा इति पलाय्यमाने ।४। यस्माद्भीषा न्यषद इत्युपविष्टे ।५। यस्माद्भीषा संज्ञप्ता इति मृते ।६। नष्टे मृते पलायिते वान्यं तद्रूपं तद्दैवत्य पशुमालभेत ।७। मृतस्य वपां पुरोडाशमवदानानीतीतरस्य वपद्धारेयुपञ्ज्यात् ।८। ॥२॥

प्रवृत्तेषु मृते प्रयाजेषु तेनैव संस्थापम् ।१। अवदाने नष्टे

दृष्टे विमथिते वाज्यं प्रतिनिदध्यात् । २ । हृदयनाशे ऽन्यमालभेत । ३ । यदि च कामयेतार्तिं विमथितार स्वच्छेयुरिति कुविदङ्ग यवमन्त इत्याग्नीध्रीये जुहुयात् । ४ । अष्टापद्यां वशायामनूबन्ध्यायां गर्भस्य त्वचो वपारूपं फलीकरणानां फालीकरणान्गर्भं मति शामित्रे अपयित्वेतरस्य वषट्कारेषु शामित्र एव जुहुयात् । ५ । ॥ ३ ॥

यूपे विरूढ़े ऽनपवृत्ते त्वाष्ट्रं बहुरूपमालभेत । १ । विश्वरूपः सुभरो वयोधास्तन्नस्तुरीपमध पोषयित्नु देवस्त्वष्टा सविता विश्वरूप इति पुरोनुवाक्या. । २ । प्र सु मह्वे सुशरणाय प्रथमभाजं देव त्वष्टर्यद्ध चारुत्वमानळिति याज्याः । ३ । ॥ ४ ॥

शानविषये विद्विषाणयोः सुत्ययोरङ्गोः सन्निपातन संसव इत्याचक्षते । १ । पूर्वं प्रातरनुवाकमुपाकृत्य पूर्वे संस्थापयेयुः । २ । सुसमिद्धे जुहुयुः । ३ । सवेशायोपवेशाय गायत्र्यै छन्दसे ऽभिभूत्यै स्वाहेति प्रात.सवने । ४ । त्रिष्टुभे छन्दस इति माध्यन्दिने । ५ । जगत्यै छन्दस इति तृतीयसवने । ६ । अध्वर्युं स्तंतमिच्छन्प्राजापत्याभिस्त्रिष्टुभिरध्वर्युः प्रात.सवने जुहुयात् । ७ । होतारं होता माध्यन्दिने । ८ । उद्गातारमुद्गाता तृतीयसवने । ९ । ब्रह्माणं ब्रह्मानुसवनम् । १० । यजमान यजमानो ऽनुसवनम् । ११ । सर्वान्स्तृतानिच्छन्तः सर्वे ऽनुसवनम् । १२ । बृहद्रथन्तरे कुर्युः । १३ । आभीकमाभीशवमभिनिधनमभीवर्तं च । १४ । कयाशुभीय मरुत्वतीयम् । १५ । सजनीयं निष्केवल्यम । १६ । विहव्यो वैश्वदेवम् । १७ । पूर्वेषु संस्थापयत्सूत्तरां संस्थां कुर्वीत । १८ । अतिरात्रं कुर्वाणेषु द्विरात्रम् । १९ । द्विरात्रं कुर्वाणेषु त्रिरात्रम् । २० । तस्यां वा सस्थायां

भूयसीर्दक्षिणा दद्यात् ।२१। स्वर्गो वा विहरन्ति वायुराकाशश्च ।२२। ॥५॥

क्रीते सोमे ऽपहृते ऽनतिनयन्कालमन्यमाहृत्याभिषुणुयात् ।१। सोमाहाराय सोमविक्रयिणे वा किंचिद्दद्यात् ।२। अनधिगम्यमाने पूतीकाञ्छ्वेतपुष्पाण्यर्जुनानि कुशान्वाभिषुत्य[3] प्रतिदुहा प्रातःसवने श्रीणीयाच्छ्रुतेन माध्यन्दिने दध्ना तृतीयसवने ।३। एकां गां दक्षिणां दत्त्वावभृथादुदेत्य पुनर्दीक्षेत ।४। तत्र क्रतुदक्षिणा दद्यात् ।५। एतदेव ।६। अभिदग्धे पञ्च गा दक्षिणा दद्यात् ।७। ॥६॥

प्रातःसवनात्सोमे ऽतिरिक्ते ।१। अस्ति सोमो अयं सुत इति स्तोत्रियानुरूपौ होतुः ।२। ऐन्द्रावैष्णवीभिः स्तोममतिशंसेत् ।३। ऐन्द्रावैष्णवी याज्या ।४। इन्द्रमिद्धाविनो दृहदतो देवा अवन्तु न इति षट् ।५। उत्तमया परिधाय विष्णोः कर्माणि पश्यतेति यजति ।६। ॥७॥

माध्यन्दिनादतिरिक्ते ।१। वयमुत्त्वामुद त्यद्दर्शतमिति स्तोत्रियानुरूपौ प्रगाथौ ।२। ऐन्द्रावैष्णवीभिः स्तोममतिशंसेत् ।३। ऐन्द्रावैष्णवी याज्या ।४। ॥८॥

तृतीयसवनादतिरिक्ते ।१। प्र तत्ते अद्य शिपिविष्ट प्र तद्विष्णुरिति स्तोत्रियानुरूपौ ।२। ऐन्द्रावैष्णवीभिः स्तोममतिशंसेत् ।३। ऐन्द्रावैष्णवी याज्या ।४। ॥९॥

आश्विनादतिरिक्ते ।१। आश्विनीभिः स्तोममतिशंसेत् ।२। आश्विनी याज्या ।३। अस्तुत चेत्पर्यायैरभिव्युच्छेत पञ्चभिः स्तोमैर्होत्रकेभ्यः स्तुवते ।४। ते स्तोत्रियानुरूपाञ्छस्त्वोक्थमुखानां जग-

तीनां च द्वे द्वे शंसेयुः। ५। नित्याः परिधानीयाः। ६। छन्दोभिर्वा प्रथमैः पर्यायैः। ७। होत्रे वा प्रथमानां पर्यायाणाम्। ८। मैत्रावरुणाय ब्राह्मणाच्छंसिने च मध्यमानाम्। ९। अच्छावाकायोत्तमानाम्। १०। चौडाश्विनं पष्टिव्रतानि। ११। ॥१०॥

यदि दीक्षितः प्रमीयेत दग्ध्वास्थीन्युपनह्य पुत्रं भ्रातरं वा दीक्षयित्वा सह यजेरन्। १। अभिषुत्य वा राजानमगृहीत्वा ग्रहान्दक्षिणापरस्यां वेदिश्रोण्यामस्थिकुम्भं निधाय तस्मिन्देशे सार्पराज्ञीभिः पराचीभिः स्तुवते। २। मार्जालीयदेशे वा। ३। त्रिः प्रसव्यं मार्जालीयं परियन्ति सव्यानूरूनपघ्नानाः। ४। सार्पराज्ञीर्होता निगदेत्। ५। असंमितं स्तोत्रम्। ६। ऐन्द्रवायवाद्या ग्रहाः। ७। संवत्सरे ऽस्थीनि याजयेयुः। ८। स्तोत्रेस्तोत्रे ऽस्थिकुम्भमुपनिदधति। ९। मार्जालीये भर्चाग्निनयन्ति। १०। ॥११॥

कलशे दीर्णे[1] विधुं दद्राणमिति वषट्कारनिधनेन ब्राह्मणाच्छंसिने स्तुवते। १। पूर्वस्तृचो ऽनुरूपः। २। ग्रावणि दीर्णे[4] वृत्रस्य त्वा श्वसथादीषमाणा इति घृतानेन मारुतेन ब्राह्मणाच्छंसिने स्तुवते। ३। उत्तरो ऽनुरूपः। ४। ऐन्द्रावैष्णवीभिः स्तोममतिशंसेत्। ५। ऐन्द्रावैष्णवी याज्या। ६। अभ्युन्नीतं नाराशंसं

कृताकृतस्य दम्पतं कृतस्य चाकृतस्य च।

अकृतस्य कृतस्य चेन्द्राग्नी अस्य सोमस्य॥

स्वाहेत्यन्तःपरिधि भस्मनि जुहोति। ७। उपवाते नाराशंसे[10] यं जघन्यं ग्रहं गृह्णीयात्तस्य कृतस्याप्यकमवनयेत्प्रजापतये स्वाहेति। ८। दुष्टं सोमं प्राजापत्याभिस्तिसृभिरध्वर्युरुत्तरार्धपूर्वार्ध उपरवे

ऽवनयेत्। [12] ८। हन्त्वं वेदमन्नमनाद्यभागमिति ध्यायन्नवद्यस्य भक्षयेदिन्दुरिन्द्रमवागात्तस्य त इन्दविन्द्रपीतस्योपहूतस्योपहूतो भक्षयामीति। [13] १०। हिरण्यगर्भं इत्यभ्युपाकृते चमसे जुहुयात्। [14] ११। अवच्छाद्य च निर्हरेत्। [15] १२। य ऋते चिदिति तृचेन महावीरं भिन्नमनुमन्त्र्य [16]

चयस्त्रिंशत्तन्तवो ये वितत्निरे य इमं यज्ञं स्वधया भजन्ते।
तेषां छिन्नं प्रतिमं दधामि स्वाहा घर्मो अप्येतु देवान्॥
यज्ञस्य दोहो विततः पुरुत्रा सो अष्टधा दिवमन्वाततान।
स यज्ञ धुक्ष्व महि मे प्रजायां रायस्पोषं विश्वमायुरशीय॥

स्वाहेति चाहुती जुहोति। [17] १३। ॥१२॥

यदि सत्त्राय दीक्षितो ऽथ साम्युत्तिष्ठेत्सोममपभज्य राजानं विश्वजितातिरात्रेण यजेत सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन ।१। आगूर्य वा।२। ॥१३॥

आहिताग्नय इष्टप्रथमयज्ञा दीक्षिता गृहपतिसप्तदशाः सत्त्रमासीरन्होता मैत्रावरुणो ऽच्छावाको ग्रावस्तुद्ब्रह्मा ब्राह्मणाच्छंसी पोताग्नीध्र उद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्यो ऽध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता।१। आर्त्विज्यस्याविप्रतिषेधेनाशक्ये यौगपद्ये।२। दीक्षणानुपूर्व्येण सर्वेषां याजमानम्।३। मुख्यः कुर्यात्परार्थानि।४। कल्पविप्रतिषेधे भूयसां साधर्म्यम्।५। हुतेषु दाक्षिणेषु दक्षिणापथेन कृष्णाजिनानि धून्वन्तो ऽहरहर्नित्यामभेयुरिदमहं मां कल्याण्यै कीर्त्यै स्वर्गाय लोकायामृतत्वाय दक्षिणां नयामीति।६। उत्थाय चाग्निष्टोमः सहस्रदक्षिणः पृष्ठशमनीय ।७। साधारणं हैके पृष्ठशम-

नीयम् । ८ । द्वादशाहप्रभृतीन्या चत्वारिंशद्रात्रादेकोत्तराणि रात्रिसत्त्राणि तेषु नित्यः । ९ । द्वादशाहो यैरहोभिर्विवर्धते तान्युदाहरिष्यामः । १० । ॥ १४ ।

एकाहार्थे महाव्रतमाहरन्ति । १ । सर्वस्तोमं वातिरात्रम् । २ । अन्तरेण पृष्ठ्यं छन्दोमांश्च । ३ । द्व्यहार्थे गोआयुषी । ४ । द्वितीयं तृतीयं चाभिप्लविके प्रतीयेतैतस्यां चोदनायाम् । ५ । त्र्यहार्थे त्रीणि पूर्वाण्याभिप्लविकानि । ६ । चतुरहार्थे महाव्रतचतुर्थानि । ७ । पञ्चाहार्थे पञ्च । ८ । षलहार्थे षट् । ९ । सप्ताहार्थे महाव्रतसप्तमानि । १० । एतेन न्यायेन तांतां सङ्ख्यां पूरयन्ति । ११ । अन्तरेण प्रायणीयं पृष्ठ्यं चैतेषां स्थानम् । १२ । ऊर्ध्वं तु दशमादह्नो महाव्रतस्य स्थानम् । १३ । ॥ १५ ।

अथैतान्यपवदन्ति । १ । अभिप्लवो ऽभिजिद्विश्वजितौ चागन्तूनि विंशतिरात्रे । २ । अभिप्लवो ऽतिरात्रो द्वावभिप्लवावित्येकविंशतिरात्रः पूर्वः । ३ । पृष्ठ्यः स्वरसामानो विषुवानावृत्ताः स्वरसामानस्त्रयस्त्रिंशारम्भणः पृष्ठ्य इत्युत्तरः । ४ । पृष्ठ्यस्तोमः षलहः ।[5] *) त्रयस्त्रिंशमहरनिरुक्तम् ।[6] तस्य कण्वरथन्तरं माध्यन्दिने ।[7] त्रयस्त्रिंशं निरुक्तम् ।[8] त्रिणवम् ।[9] द्वे एकविंशे ।[10] त्रिणवम् ।[11] त्रयस्त्रिंशं निरुक्तम् ।[12] त्रयस्त्रिंशमहरनिरुक्तम् ।[13] त्रयस्त्रिंशारम्भणः पृष्ठ्यस्तोमः षलहः ।[14] त्रिवृदहरनिरुक्तम् ।[15] ज्योतिष्टोमो ऽग्निष्टोमः [16] इति चतुर्विंशतिरात्रः संसदामयनमित्याचक्षते ।[17] ५ । ॥ १६ ॥

* Comm. इति चतुर्विंशतिरात्र संसदामयनमित्याचक्षते । इति सूत्रच्छेदः । सूत्रमात्रपक्षे ।

पञ्चाभिप्लविकानि त्रिरुपेत्य विश्वजिदतिरात्र एष एव पञ्चाहो दशरात्र इति त्रयस्त्रिंशद्रात्रः ।१। चतुर्विंशमभिप्लवः पृष्ठ्यो नवाहो गोआयुषी दशरात्रो महाव्रतमिति सप्तत्रिंशद्रात्रः ।२। चतुर्विंशं त्रयो ऽभिप्लवाः [3]।*) अभिजित्स्वरसामानो विषुवानावृत्ताः स्वरसामानो विश्वजिच्च [4]। अभिजित्प्रभृति नवरात्र इत्याचक्षते [5]। अभिप्लवो गोआयुषी दशरात्रो महाव्रतम् [6]। इत्येकान्नपञ्चाशद्रात्रः [7]। संवत्सरसंमितः ।[8]३। ॥१७॥

अथैकषष्टिरात्रे ।१। अभितो नवरात्रं पृष्ठ्यौ ।२। तयोरावृत्त उत्तरः ।३। न्यायक्लृप्तः शतरात्रः ।४। अर्धपञ्चदशाभिप्लवास्तेषां प्रथमस्यहो दशरात्रो महाव्रतमिति ।५। ॥१८॥

सप्तदश गवामयनस्य दीक्षाः ।१। द्वादश वा ।२। तैषस्यामावास्याया एकाह उपरिष्टाद्दीक्षेरन्माघस्य वा ।३। तेषां माघस्यामावास्यायामुपवसथः फाल्गुनस्य वा ।४। द्वादश दीक्षाः कुर्वाणाश्चतुरहे पुरस्तात्पौर्णमास्या दीक्षेरन् ।५। तेषां ज्यैष्ठस्य पञ्चम्यां प्रसवः ।६। प्रायणीयमतिरात्रमुपेत्य [7] चतुर्विंशं च [8] पृष्ठ्यपञ्चमांश्चतुरो ऽभिप्लवानुपयन्ति ।[9]७। स मासः ।[10]८। तथायुक्तान्पञ्च मासानुपेत्य [11] पृष्ठ्यचतुर्थानभिप्लवानुपयन्ति ।[12]९। नवरात्रं च ।[13]१०। ऊर्ध्वं विश्वजितः पृष्ठ्यारम्भणान्मासानुपयन्ति ।[14]११। पृष्ठ्याभिप्लवौ चान्वहमावर्तेते ।[15]१२। वैश्वदेवसूक्तानि चोत्तमानामाभिप्लविकानाम् ।[16]१३। पृष्ठ्यमुपेत्य त्रीनभिप्लवान् ।१४। स मासः ।[17]१५। पृष्ठ्य-

---

* Comm संवत्सरसंमित इति सूत्रान्तः । खण्डशस्तु व्याख्या क्रियते ।

मुपेत्य चतुरो ऽभिप्लवान्। तथायुक्तांश्चतुरो मासानुपेत्य [18] त्रीन-
भिप्लवानुपयन्त्यायुर्गौ दशरात्रं महाव्रतमतिरात्रं च। [19]१६। इति
गवामयनस्याद्ययोगः। [20]१७। तत्प्रकृतीनि संवत्सरसत्त्राणि। [21]१८।
तेषु विकारो ऽन्यत्र दशरात्रात्। [22]१९। पृष्ठ्यस्याभिप्लवः स्थाने
तदभिप्लवायनम्। [23]२०। ॥१९॥

उत्सर्गिणामयने। १। यानि पौर्णमासीभिः सुत्यान्यहानि संनि-
पतेयुस्तान्युत्सृजेरन्। २। उभाभ्यां वा दर्शपूर्णमासाभ्याम्। ३। एक-
त्रिकं वा स्तोमं कुर्वीरन्। ४। एकैकां वा स्तोत्रियाणामुत्सृजेरन्
। ५। शस्त्राणाम्। ६। यजुषां च। ७। अहरुत्सृजमानाः प्राजा-
पत्येन तदहः पशुना यजेरन्। ८। यद्देवतो वा सवनीयः स्यात्
। ९। तत्र पशुतन्त्रे हवींष्यन्वायातयन्ति। १०। तेषां स धर्मो
यः पशुतन्त्रे चोद्यमानानाम्। ११। परस्याह्नः स्तोत्रियाननुरूपा-
न्कुर्वीरन्। १२। यथार्थमतिप्रैषः। १३। उत्थाय च द्वादशाह-
मासीरन्। १४। उभयीरुत्सृजमानाः संवदामयनम्। १५। ॥ २० ॥

आदित्यानामयने। १। त्रिवृत्पञ्चदशावभिप्लवस्तोमौ पूर्वस्मिन्प-
क्षे। २। पञ्चदशत्रिवृता उत्तरस्मिन्। ३। मध्येपृष्ठ्याश्च मासाः
। ४। षष्ठे मासि त्रीनभिप्लवानुपेत्य पृष्ठ्यमुपयन्ति नवरात्रं च। ५।
अभिजितः स्थाने इन्द्रस्तुतमिसत्रम्। ६। इन्द्रस्तोमं विश्वजितः। ७।
पृष्ठ्यमुपेत्याभिप्लवं च [8] व्यूल्हच्छन्दसं दशरात्रं। [9]८। त्रिवृत्स्तो-
ममग्निष्टोमसंस्थम्। [10]९। उद्भिद्वलभिदौ च। [11]१०। मध्येपृष्ठ्यांश्चतुरो
मासानुपेत्य [12] मध्येपृष्ठ्यावभिप्लवा उपयन्ति। [13]११। गोआयुषी
। [14]१२। छन्दोमदशाहं च। [15]१३। ॥२१॥

अङ्गिरसामयने ।१। त्रिवृदभिप्लवस्तोमः ।२। पृष्ठ्यारम्भणान्मासानुपयन्ति पूर्वस्मिन्पटले ।३। पृष्ठ्योदयानुत्तरस्मिन् ।४। आयुर्गौम् ।५। समानमन्यदादित्यानामयनेन ।६। ॥ २२॥

दृतिवातवतोरयने ।१। पृष्ठ्यस्तोमानामेकैकेन मासम् ।२। महाव्रतं विषुवान् ।३। आवृत्तानां पृष्ठ्यस्तोमानामेकैकेन मासम् ।४। अतिरात्रावभितः ।५। अग्निष्टोमा मध्ये ।६। दशदशी संवत्सरः ।७। द्वादशी विषुवान्सर्पसत्त्रस्य ।८। ॥ २३॥

मासं दीक्षाः कौण्डपायिनामयनस्य ।१। क्रीत्वा राजानमुपनह्योपसद उपेत्याग्निहोत्रेण मासम् ।२। दर्शपूर्णमासाभ्यां मासम् ।३। चातुर्मास्यपर्वणामेकैकेन मासम् ।४। विश्वत्प्रभृतीनां पशूनां पृष्ठ्यस्तोमानामेकैकेन मासम् ।५। अष्टादशाहं त्रयस्त्रिंशेन[6] दशरात्रं महाव्रतमतिरात्रं चेति ।[7]६। यो होता सोऽध्वर्युः स पोता ।[8]७। यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्ता ।[9]८। य उद्गाता सोऽच्छावाकः स नेष्टा ।[10]९। यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुत् ।[11]१०। य. प्रतिप्रस्थाता सोऽग्नीत्स उन्नेता ।[12]११। सुब्रह्मण्यः सुब्रह्मण्यः ।[13]१२। गृहपतिर्गृहपतिः ।[14]१३। देशकालसंनिकर्षे ऽवेदेश्याप्रधानस्य वशं नयेत् ।[15]१४। यथादेशमितराणि ।[16]१५। एकाहः संघातमापद्यमानो लभेत तायमानरूपाणि ।[17]१६। सांघातिकादेकाहीभवतो निवर्तेरन् ।[18]१७। अयंयज्ञीयातिप्रैषः सपरोनुवाक्यः श्वःस्तोत्रिया होत्रकाणां कद्वन्त उक्थ्यमुखीयाश्चाभितष्टीयमिति तायमानरूपाणि ।[19]१८। गवामेवायनस्याहर्योगः ।[20]१९। ॥ २४॥

चतुरो मासान्दीक्षाः ।१। चतुर उपसदः ।२। चतुरः सुत-

न्तीति ।३। गवामयनस्य प्रथमोत्तमौ मासौ ।४। अष्टाविंशिनौ च[5] विषुवांश्च ।५। तत् क्षुल्लकतापश्चितमित्याचक्षते ।[6]६। ॥२५॥

संवत्सरं दीक्षाः ।१। संवत्सरमुपसदः ।२। संवत्सरं सुन्वन्तीति ।३। तत्तापश्चितमित्याचक्षते ।४। ॥२६॥

त्रीन्संवत्सरान्दीक्षाः ।१। त्रीनुपसदः ।२। त्रीन्सुन्वन्ति ।३। इति महातापश्चितम् ।४। अभ्यासो बहुसंवत्सरे गवामयनस्य ।५। संहार्यान्वा परिहाप्य ।६। अतिरात्रः सहस्रमहान्यतिरात्रो ऽग्नेः सहस्रसाव्यम् ।७। ॥२७॥

गवामयनं प्रथमः संवत्सरः ।१। अथादित्यानाम् ।२। अथाङ्गिरसाम् ।३। त्रिषांवत्सरं प्रजातिकामानाम् ।४। त्रिवृत्प्रभृतीनां चतुर्णां पृष्ठ्यस्तोमानामेकैकेन त्रींस्त्रीन्संवत्सरान्प्रजापतेर्द्वादशसंवत्सरम् ।५। एतेषामेवैकैकेन नवनव शाक्त्यानां षट्त्रिंशत्संवत्सरम् ।६। एतेषामेवैकैकेन पञ्चविंशतिःपञ्चविंशतिः साध्यानां शतसंवत्सरम् ।७। एतेषामेवैकैकेन पञ्चपञ्च पञ्चाशतो विश्वसृजां सहस्रसंवत्सरम् ।८। ॥२८॥

सरस्वत्या विनशने दीक्षा सारस्वतानाम् ।१। क्रीत्वा राजानमुपनह्योपसद उपेत्य [2]। प्रायणीयमतिरात्रमुपेत्य [3]। दृष्ट्वा सांनाय्येनाध्वर्युः शम्यां परास्य [4]। तत्र गार्हपत्यं निधाय[5] षट्त्रिंशत्प्रक्रमेष्वाहवनीयमभ्यादधाति ।[6]२। चक्रीवत्सदः ।[7]३। तथाग्नीध्रम् ।[8]४। उलूखलबुध्नो यूपः ।[9]५। नोपरवान्खनन्ति ।[10]६। तमेतमापूर्यमाणपक्षमामावास्येन यन्ति ।[11]७। तेषां पौर्णमास्यां गौरुक्थ्यो बृहत्सामा ।[12]८। तमेतमपक्षीयमाणपक्षं पौर्णमास्येन यन्ति ।[13]९। तेषामसा-

वास्यायामायुरुक्थ्यो रथन्तरसामा ।[14]१०। प्रतीपं पूर्वेण पञ्चसा यन्ति ।[15]११। अपोनप्त्रियं चरुं निरुप्य ।[16]१२। तदस्यानीकमस्मिन्पद इत्यपोनप्त्रियस्य ।[17]१३। अप्यये दृषद्वत्याः ।[18]१४। सरस्वतीमपि यन्ति ।[19]१५। शते गोवृषभमप्युत्सृजन्ति ।[20]१६। यदा सहस्रं संपद्यते ऽथोत्थानम् ।[21]१७। सर्वेषु वोपहतेषु ।[22]१८। गृहपतौ वा मृते ।[23]१९। प्लाक्षं वा प्रस्रवणं प्राप्याग्नये कामायेष्टिं निर्वपन्ति ।[24]२०। तस्यामश्वां च पौरुषीं च धेनुके दत्त्वा कारपचवं प्रति यमुनामवभृथमभ्यवयन्ति ।[25]२१। इति मित्रावरुणयोरयनम् ।[26]२२। अतिरात्रो ऽभिजिद्विश्वजितौ गोआयुषी इन्द्रकुक्षी अतिरात्रः ।[27]२३। इतीन्द्राग्न्योः ।[28]२४। अतिरात्रो ज्योतिर्गौरायुर्विश्वजिदभिजिताविन्द्रकुक्षी अतिरात्रः ।२५। इत्यर्यम्णः ।[29]२६। संवत्सरं ब्राह्मणस्य गा रक्षेत् ।[30]२७। संवत्सरं व्यर्णे नैतंधवे ऽग्निमिन्धीत ।[31]२८। संवत्सरे परीणह्यग्नीमाधाय दृषद्वत्या दक्षिणेन तीरेणाग्नेयेनाष्टाकपालेन शम्यापरासेशम्यापरासे यजमान एति ।[32]२९। त्रिः प्लक्षां प्रति यमुनामवभृथमभ्यवयन्ति ।[33]३०। इति दार्षद्वतम् ।[34]३१। अतिरात्रः सहस्रं चिह्नतः संवत्सरा अतिरात्रः प्रजापतेः सहस्रसंवत्सरं सहस्रसंवत्सरम् ।[35]३२।

॥ २९ ॥

इति शाङ्खायनश्रौतसूत्रे त्रयोदशो ऽध्यायः समाप्तः ।

ओम्।

एकाहेष्वहीनेषु च प्रकृतेर्विकारः ।१। यस्मिन्नहनि यदहः प्रदि-
श्येत सवनं वा सहीनं तत् ।२। ऐकाहिकमनादेशे ।३। ॥१॥

अन्याधेयेन ब्रह्मवर्चसकामो यजेत ।१। तस्याष्टाखष्टासु स्तोत्राणि
।२। अष्टाक्षरा गायत्री ।३। तेजो ब्रह्मवर्चसं गायत्री ।४। रथ-
न्तरं पृष्ठम् ।५। ब्रह्म रथन्तरम् ।६। अग्निष्टोमो यज्ञः ।७। ब्रह्म
वा अग्निष्टोमः ।८। एतेन त्रिःसमृद्धेन ब्रह्मणा तेजो ब्रह्मवर्चसमा-
प्नोति ।९। त्वचकृतं शस्त्रम् ।१०। त्रिवृद्वा अन्नमन्नं पानं खाद-
यन्ति तस्य सर्वस्याप्त्यै ।११। चतुर्विंशतिर्दक्षिणा ।१२। चतुर्विंशतिर्वै
संवत्सरस्यार्धमासाः संवत्सरस्यैवाप्त्यै ।१३। तस्याग्नये पवमानाय पाव-
काय शुचय इति पशव उपालम्भ्याः सवनीयस्य ।१४। आदित्या
वशानूबन्ध्याया उपालम्भ्यैवंविधा ।१५। तद्यदेवं पशवो नियुक्ता
भवन्ति नेदग्न्याधेयादयानीति ।१६। तस्य प्रातः सवनीयाननु पुरो-
लाशानग्नये पवमानायाष्टाकपालं पुरोलाशं निर्वपति ।१७। माध्य-
न्दिनीयाननु पुरोलाशानग्नये पावकाय ।१८। तृतीयसवनीयाननु
पुरोलाशानग्नये शुचये ।१९। आवपनं वै सवनीयाः पुरो-
लाशाः [20] आवपन एव तदावपति ।[21]२०। अथ यदादित्या वशानू-
बंध्याया उपालम्भ्या भवत्यदितिं वा अन्वग्न्याधेयं संतिष्ठते ।[22]२१।[23]
या ग्न्याधेयस्य संस्था तामेव तद्यज्ञस्य संस्थां करोति ।[24]२२। ॥२॥

एवं पशवः पुरोलाशाश्चान्वायात्यन्ते हविर्यज्ञेषु सोमेषु ।१।

तस्य शस्त्रम ।२। यदाह्विष्ठमिति तृचमाज्यम ।३। माधुच्छन्दस प्रउग ।४। त्र्यस्त्र्यस्तृचा होत्रकाणां प्रातःसवने स्तोत्रियानुरूपौ पर्यासश्च ।५। इन्द्र मरुत्व इह पाहि सोममिति तृच मरुत्वतीयम ।६। नृणामु त्वा नृतम गीर्भिरुक्थैरिति तृच निष्केवल्यम ।७। अध्वर्यो वीर प्र महे सुतानामिति तृच मैत्रावरुणस्योक्थमुखीयम ।८। पूर्वं ब्राह्मणाच्छंसिन ।९। उत्तरमच्छावाकस्य ।१०। पर्यासानामुत्तमान ।११। उदु ष्य देव सविता हिरण्यया [12]। घृतवती भुवनानाम [13]। इन्द्र ऋभुभिर्वाजवद्भिः [14]। स्वस्ति नो मिमीताम [15]। वैश्वानर मनसा [16]। प्र यन्तु वाजा [17]। समिद्धमग्निं समिधा गिरा गृण [18] इति तृचानि वैश्वदेवाग्निमारुतयो सूक्तानां स्थाने ।[19] १२। तृचकॢप्तमित्येतस्यां चोदनायामेतच्छस्त्रं प्रतीयेत ।[20] १३। ऐकाहिक वा तृचकॢप्तम् ।[21] १४। एतेनाग्निहोत्रौ व्याख्यातौ ।[22] १५। आग्नेय पय पूर्वस्मिन् ।[23] १६। सौर्यमुत्तरस्मिन ।[24] १७। पशू च ।[25] १८। प्राजापत्या वशानूबन्ध्याया उपालम्भ्यैवविधा ।[26] १९। ॥३॥

पुनराधेयेन तेजस्कामो यजेत ।१। तस्य पञ्चसुपञ्चसु स्तोत्राणि ।२। पञ्चपदा पङ्क्तिः ।३। पाङ्क्तो वै यज्ञ ।४। यज्ञस्यैवाप्त्यै ।५। सर्वाग्नेयादग्निष्टुत शस्त्रम ।६। ॥४॥

दर्शपूर्णमासावन्नाद्यकामस्य ।१। इलादधावाग्रयण सोमेष्टिश्चापवर्ग्यं ।२। दाक्षायणयज्ञाश्वलार सर्वकामस्य ।३। महायज्ञस्य ।४। तस्मिंश्चातुर्मास्यहवींष्यन्वायात्यन्ते ।५। पशवश्च पर्वदेवताभ्य ।६। एककपालदेवताभ्यश्चानूबन्ध्याया उपालभ्या एवविधा ।७। अतिरात्रो यज्ञ ।८। ॥५॥

प्रजापतिर्ह प्रजातिकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्वैश्वदेवम्[1] तमाहरत्। तेनायजत[2] तेनेष्ट्वा प्राजायत[3] तेन प्रजातिकामो यजेत। १। वैश्वदेवः पशुरुपालभ्यः सवनीयस्य[4]। २। द्यावापृथिवीया वशानूबन्ध्याया उपालभ्यैवंविधा[5]। ३। चित्रतः शस्त्रम्[6]। ४। त्र्यचक्लृप्तं वा[7]। ५। अवभृथादुदेत्योदवसानीययेष्ट्वा मुनिसत्त्वेष्टा यजमान आस्ते ऽहरहर्यथतुरो मासानाग्नेय्याग्नावैष्णव्या वान्तरालेषु[8]। ६। मैत्र तत्र दीक्षा[9]। ७। ॥ ६॥

वैश्वदेवेन वै प्रजापतिः प्रजा असृजत[1] ताः सृष्टा अप्रसूता वरुणस्य यवाञ्जक्षुः[2] ताः वरुणो वरुणपाशैः प्रत्यमुञ्चत्[3] ताः प्रजाः प्रजापतिं पितरमेत्योपाधावन्[4] उप तं यज्ञक्रतुं जानीहि येनेष्ट्वा वरुणपाशेभ्यः सर्वस्माच्च पाप्मनः संप्रमुच्येमहीति[5] तत एतं प्रजापतिश्चतुर्थे मासि द्विरात्रं यज्ञक्रतुमपश्यद्वरुणप्रघासम्[6] तमाहरत्। तेनायजत[7] तेनेष्ट्वा वरुणमप्रीणात्[8] स प्रीतो वरुणो वरुणपाशेभ्यः सर्वस्माच्च पाप्मनः प्रजाः प्रामुञ्चत्[9] प्र ह वा अस्य प्रजा वरुणपाशेभ्यः सर्वस्माच्च पाप्मनः संप्रमुच्यते य एवंविद्वान्वरुणप्रघासैर्यजते[10]। १। उक्थ्यौ भवतः[11]। २। वारुणः पशुरुपालभ्यः सवनीयस्य पूर्वस्मिन्[12]। ३। मारुत उत्तरस्मिन्[13]। ४। कायी वशानूबन्ध्याया उपालभ्यैवंविधा[14]। ५। ॥ ७॥

ताः प्रजाः प्रजापतिमब्रुवन्कस्मै नु नो ऽन्नाद्यायास्राक्षीरिति[1] तत एतं प्रजापतिश्चतुर्थे मासि त्रिरात्रं यज्ञक्रतुमपश्यत्साकमेधम्[2] तमाहरत्[3] तेनायजत[4] तेनेष्ट्वान्नाद्यमाप्नोत्[5] तेनान्नाद्यकामो यजेत[6]। १। अग्निष्टोम उक्थ्यो ऽतिरात्रः[7]। २। अग्नये ऽनीकवते प्रथमे

पशुरुपालम्भ्य. सवनीयस्य ।[8]३। मरुद्भ्य सांतपनेभ्यो द्वितीये ।[9]४। माहेन्द्रस्तृतीये ।[10]५। वैश्वकर्मणो वशानूबन्ध्याया उपालम्भ्यैवविधा ।[11]६। ऐकाहिकं यथा पृष्ठ्य शस्त्रम ।[12]७। पृष्ठ्यो वा विहृतः ।[13]८। विश्वजितो वा बृहत्पृष्ठात्तृतीये ऽहनि शस्त्रम ।[14]९। सौत्रामणे च ।[15]१०। आयुष्कामयज्ञे महायज्ञे ।[16]११। त्रिवृत्यभिप्लवयो ।[17]१२। स्वर्जिति ।[18]१३। इन्द्रवज्रे च ।[19]१४। ॥ ८॥

ता प्रजा. प्रजापतिमनुवन्कस्मै नु न प्रतिष्ठाया असृष्टा इति[1] तत एत प्रजापतिर्यज्ञक्रतुमपश्यच्छुनासीरीयम्[2] तमाहरत। तेनायजत[3] तेनेष्ट्वा प्रत्यतिष्ठत[4] तेन प्रतिष्ठाकामो यजेत ।[5]१। शुनासीरीय पशुरुपालम्भ्य सवनीयस्य ।[6]२। सौरी वशानूबन्ध्याया उपालम्भ्यैवविधा ।[7]३। विशति वैश्वदेवे ददाति ।[8]४। त्रिशत वरुणप्रघासेषु[9]५। पञ्चाशत साकमेधेषु ।[10]६। विशति शुनासीरीये ।[11]७। तद्विशतिशतम् ।[12]८। विशतिशत वा षत्रैरहानि ।[13]९। तदृतुमाप्नोति ।[14]१०। ऋतुना सवत्सरम् ।[15]११। ये च सवत्सरे कामाः ।[16]१२। ॥ ९॥

पशुमत्सु चातुर्मास्येषु ।१। पूर्वेद्यु पाशुक कर्म ।२। अपरेद्युर्वैश्वदेव पशु ।३। पशुपुरोलाशमनु चातुर्मास्यदेवता यथापर्व ।४। पाशुक स्विष्टकृत् ।५। निगमस्थानवर्जम् ।६। यथास्थानं वाजिनम् ।७। हृदयशूलान्त संतिष्ठते ।८। वारुणमारुतौ वरुणप्रघासेषु ।९। उत्तरे यूपमुच्छ्रयन्ति ।१०। माहेन्द्रशुनासीरीया उत्तरयो ।११। यथाम्नाता हृद्य ।१२। पित्र्या च ।१३। यथादैवत वा पशव ।१४। तद्धास्यातमेकादशिन्या ।१५। आग्नो-

कवतः सांतपनो गृहमेधीयः क्रौलिनो मैत्रश्च महाहविषि ।१६। पर्वणिपर्वणि वा संस्थित ऐन्द्राग्नः ।१७। समानमनन्यत् ।१८। अथवाप्येकपर्वण्येकपशौ चैन्द्राग्ने पराञ्चि हवींषि ।१९। उपहूयेलां पित्र्या ।२०। त्र्यम्बकादूर्ध्वमनुयाजप्रभृति । मनोतादिपशुना वा ।२१। सौमिकैः समानदक्षिणानि सर्वपशूनि ।२२। चातुर्मास्यपशुदक्षिणैः पाशुकानि ।२३। ॥१०॥

प्रत्यवरोहणीयः प्रतिष्ठाकामस्य ।१। संकल्पविज्ञतो ज्योतिष्टोमः ।२। पशुवन्धः पशुकामस्य ।३। एकादशस्तोमः ।४। एकादशाक्षरा त्रिष्टुप् ।५। त्रैष्टुभाः पशव. ।६। पशूनामेवाप्त्यै ।७। पिदा सोममभि यमुग्र तर्द एतायामोप गव्यन्त इन्द्रमिति निविद्धाने ।८। ऊर्ध्वं गव्यं महि गृणान इन्द्रेतायामोप गव्यन्त इन्द्रमिति गोसत्त्वे तदेतस्याह्नो रूपम् ।९। उद्भिद्वलभिदोर्गोसवे च ।१०। ॥११॥

अथातः सौत्रामणः ।१। इन्द्रो ह्यायुष्कामस्तपस्तेपे ।२। स तपस्तेपे यज्ञक्रतुमपश्यत्सौत्रामणम् ।३। तमाहरत् ।४। तेनायजत ।५। तेनेष्ट्वा दीर्घायुत्वमगच्छत् ।६। तमु ह भरद्वाजाय जीर्णाय प्रोवाच ।७। अनेन वा अहमिष्ट्वा दीर्घायुत्वमगच्छमनेनापि त्वं यजेति ।८। तेन ह भरद्वाज इष्ट्वा सर्वायुत्वमगच्छत् ।९। सर्वमायुरेति य एवं वेद य उ चैनेन यजते ।१०। तस्य रथन्तरं प्रथमम् ।११। अग्निष्टोमो यज्ञः ।१२। यथाश्रद्धं दक्षिणा ।१३। तस्य त्रीणि त्रिवृन्ति स्तोत्राणि ।१४। त्रीणि पञ्चदशानि ।१५। त्रीणि सप्तदशानि ।१६। त्रीण्येकविंशानीति ।१७। उत्तरोत्तरितायै ।१८। उत्तरोत्तरावद्दीर्घायुत्वमश्नवामहा इति ।१९। ॥१२॥

तयाश्विनो लोहो ऽजः सारस्वती मेषीति पशू उपालम्भ्यौ सवनीयस्य । १ । इन्द्राय सुत्राम्णे वशानूबन्ध्याया उपालम्भ्यैवंविधा । २ । तद्यदेवं पशवो नियुक्ता भवन्ति नेत्सौत्रामण्या अयानीति । ३ । तस्य प्रातःसवनीयाननु पुरोलाशान्वाह्नतो ऽग्निमुपसमाधाय सुरासोमेन चरन्ति । ४ । तृतीयसवनीयाननु पुरोलाशान्सावित्रं द्वादशकपालं पुरोलाशं निर्वपति । ५ । ऐन्द्रमेकादशकपालम् । ६ । वारुणं दशकपालम् । ७ । आवपनं वै सवनीयाः पुरोलाशा आवपन एव तदावपति । ८ । अथ यदिन्द्राय सुत्राम्णे वशानूबन्ध्याया उपालम्भ्या भवतीन्द्रं[9] वा अनु सुत्रामाणं सौत्रामणी संतिष्ठते ।[10] ९ । यैव सौत्रामण्याः संस्था तामेव तद्यज्ञस्य संस्थां करोति । १०[11] । तं हैके ऽतिरात्रं कुर्वन्ति । ११[12] । एकविंशस्तोमं बृहत्पृष्ठमुभयसामानम् । १२[13] । तस्य यद्विश्वजितो बृहत्पृष्ठस्य शस्त्रं तच्छस्त्रम् । १३[14] । अत्र हविर्यज्ञाः सोमाः संतिष्ठन्ते । १४[15] । ॥ १३ ॥

देवा ह पशुकामाश्चतुरो मासान्व्रतं चरित्वैतमुद्भिदं यज्ञक्रतुमपश्यन् ।[1] तेनेष्ट्वा पशूनापुः ।[2] तेन पशुकामो यजेत ।[3] उद्भिदेष्ट्वा यदि मन्येत चिरान्मा पशव आगुरिति चतुरो मासान्व्रतं चरित्वा बलभिदा यजेत ।[4] क्षिप्रं हैनं पशव आयन्ति । १[5] । ॥ १४ ॥

गोसवेन पशुकामो यजेत । १ । षट्त्रिंशत्स्तोमेन । २ । षट्त्रिंशदक्षरा बृहती । ३ । बार्हताः पशवः । ४ । पशूनामेवाप्त्यै । ५ । षट्त्रिंशत्सहस्रा दक्षिणा गोसवस्य । ६ । अयुतं वा । ७ । उक्थ्यो यज्ञः । ८ । ॥ १५ ॥

वाजपेयेन तेजस्कामो यजेत । १ । द्वादश दीक्षा द्वादशोपसदः

। २। मध्यमेनाङ्गुष्ठपर्वणौदुम्बरं चमसं मितं घृतस्य प्रतर्पयेत् । ३। अयुजासु चीरौदनं दीचासु । ४। सोमचमसो दक्षिणाभियुतस्य । ५। ऋतं सत्यं वदन्तो भक्षयेयुः । ६। भूर्भुवः स्वरिति वा । ७। सगोत्राय वा ब्रह्मणे दद्यात् । ८। जनिष्ठा उग्रः सहसे तुराय कथा महामवृधत्कस्य होतुरिति निविद्धाने । ९। मन्दमान ऋतादधि प्रजाया ऋतस्य हि शुरुधः सन्ति पूर्वीरित्यृतवती तदेतस्याह्नो रूपम् । १०। ॥ १६ ॥

प्रजापतिरिमं लोकमीप्संस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्भूः। तेनेष्ट्वेमं लोकमाप्नोत्। तेनेमं लोकमीप्सन्यजेत । १। ॥ १७ ॥

प्रजापतिरन्तरिक्षलोकमीप्संस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्भुवः। तेनेष्ट्वान्तरिक्षलोकमाप्नोत्। तेनान्तरिक्षलोकमीप्सन्यजेत । १। ॥ १८ ॥

प्रजापतिरमुं लोकमीप्संस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्स्वः। तेनेष्ट्वामुं लोकमाप्नोत्। तेनामुं लोकमीप्सन्यजेत । १। स्वरसामभ्यः शस्त्राणि यथास्तोमम् । २। आनुष्टुभानि च । ३। ॥ १९ ॥

सूर्यो ह तेजस्कामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यच्चतुष्टोमम्। तेनेष्ट्वा तेज आप्नोत्। तेन तेजस्कामो यजेत । १। एकविंशतिः श्वेताश्वा दक्षिणा । २। वैषुवतमहः । ३। ॥ २० ॥

तीव्रसवः प्रजया पशुभिस्तीव्रस्य वुभूषतः । १।

अयं तीव्रस्तीव्रसुदिन्द्र सोमो वृत्रहत्याय हरिवो अस्य पाहि।
वज्रं शिशानो जठरं पृणस्वानाधृष्यं वृषभं तुम्रमिन्द्रम् ॥

इति पुरस्तान्मरुत्वतीयस्य निविद्धानस्य । २। तीव्रस्याभिवयस इति निष्केवल्ये । ३। ॥ २१ ॥

ज्योतिः शतव्रः ।१। गौः स्वपतिव्रः ।२। आयुर्धामणीव्रः ।३। संदंशानुस्तोमाविषुवन्तौ श्येनाजिरौ स्वत्यवसाकौ क्षुरपविशीर्षच्छिदौ मखः श्येनश्चाभिचरणीयाः ।४। मन्युसूक्ते निविद्धाने लिङ्गकृते ।५। यत्पृष्ठेनाभिचरेयुस्तत्पृष्ठः प्राकृतो ऽभिचर्यमाणस्य ।६। इषौ इन्द्रब्रह्मसाम ।७। अभीवर्त इतरेषु ।८। शिखरैः सदश्छन्नं भवति ।९। कार्मुकाण्युपशेरते ।१०। बाणवन्ति राशीभम् ।११। धान्वनान्युपशेरते ।१२। शरमयं बर्हिः ।१३। बाधक इध्मः परिधयश्च ।१४। वैभीदको यूपः ।१५। उपतापिनीर्गवामाज्यम् ।१६। अनुस्तरण्या गोश्चर्माधिषवणम् ।१७। शवनभ्ये अधिषवणफलके ।१८। शवचम्वामापः संसुतास्ताभिर्वसतीवरीः इच्छन्ति ।१९। उपोतपक्षा अधिज्यधन्वानो लोहितोष्णीषा अभिषद्धाः प्रचरेयुः ।२०। न हैतं कश्चनैशीतेयस्तो ऽद्वादशाहं जीवेत् ।२१। न ह वै तं कश्चन स्तृणुते य एतैः प्रत्यभिचरति ।२२। सदः पाप्मानं द्विषतश्चापजिघांसमानस्य ।२३। उपोत्तमाश्च शस्त्राणामुत्सृज्यन्ते ।२४। उपसदः प्रजाकामस्य पशुकामस्य च ।२५। उपोत्तमाश्च शस्त्राणामुपजायन्ते ।२६। ॥२२॥

देवासुराः समयतन्त ।[1] ते देवा बृहस्पतिं पुरोहितमुपाधावन्नुप तं यज्ञक्रतुं जानीहि येनेष्ट्वासुरानभिभवेमहीति ।[2] स एतमृषभं यज्ञक्रतुमपश्यत् ।[3] तेनेष्ट्वासुरानभ्यभवन् ।[4] तेन द्विषतो भ्रातृव्यानभिबुभूषन्यजेत ।[5]१। पञ्चदशस्तोमस्य सप्तदशो माध्यन्दिनः पवमानस्तदस्य ऋषभरूपम् ।[6]२। पिबा सोममभि यमुग्र तर्दंसमुहि यो अभिभूत्योजा इति निविद्धाने ।[7]३। य. शिप्रवान्वृषभो

यो मनीनां गीर्भिर्वर्ध वृषभं चर्षणीनामित्यृषभवती तदेतस्याक्रो रूपम् ।४। ॥२३॥

सूर्यो ह तेजस्कामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्व्योमानम् ।१ तेनेष्ट्वा तेज आप्नोत्। तेन तेजस्कामो यजेत ।१।२ सप्तदशस्तोमस्यैकविंश आर्भवः पवमानः ।२।३ एकविंशो वा एष य एष तपति तदेनं स्वेन रूपेण समर्धयति ।३।४ इमा उ त्वा पुरुतमस्येन्द्रं स्तवेति निविद्धाने ।४।५ सूर्येण वयुनवचकार स सूर्यः पर्युरू वरांसीति सूर्याभिव्याहारे तदेतस्याक्रो रूपम् ।५।६ ॥२४॥

वसिष्ठो ह्यन्नाद्यकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्विराजम् ।१ तेनेष्ट्वान्नाद्यमाप्नोत् ।२ तेनान्नाद्यकामो यजेत ।१।३ पञ्चदशौ पूर्वौ पवमानौ त्रिवृन्तीतराणि ।२।४ स विराजमभिसंपद्यते ।३।५ श्रीर्विराडन्नाद्यं श्रियो विराजो ऽन्नाद्यस्योपाप्त्यै ।४।६ महयित्वमिन्द्र यत एतांस्त्वं राजेन्द्र ये च देवा इत्यचरवैराजे निविद्धाने तदेतस्याक्रो रूपम् ॥५।७ ॥२५॥

इन्द्रो ह स्वाराज्यकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्स्वराजम् ।१ तेनेष्ट्वा स्वाराज्यमाप्नोत् ।२ तेन स्वाराज्यकामो यजेत ।१।३ सप्तदशौ पूर्वौ पवमानौ त्रिवृन्तीतराणि ।२।४ तायतस्तः स्तोचिया विराजमतियन्ति ।३।५ ताभिः स्वाराज्यमाप्नोति ।४।६ अचरवैराजे च ।५।७ ॥२६॥

उशना ह काव्यो ऽसुराणां पुरोहित आस ।१ स ह देवानामन्नमशित्वा परिदद्रे। स ईक्षत। कथं नु तेन यज्ञक्रतुना यजेयं येनेष्ट्वा पाप्मानमपहन्यामिति ।२ स एतमुशनस्तोमं यज्ञक्रतुमपश्यत् ।३ तेनेष्ट्वा पाप्मानमपाहत ।४ तेन पाप्मानमपजिघांसमानो यजेत

।१।[6] उदरव्याधितस्य ।२।[6] त्रिवृत्प्रातःसवनम् ।३।[7] ब्रह्म वै त्रिवृत् ।४। त्रिवृतैव तद्ब्रह्मणा पुरस्तात्पाप्मानमपाहत ।५।[8] सदशो माध्यन्दिन ।६।[9] सा विराट् ।७। विराजैव तन्मध्यतः पाप्मानमपाहत ।८।[10] त्रिवृत्तृतीयसवनम् ।९।[11] ब्रह्म वै त्रिवृत् ।१०। त्रिवृतैव तद्ब्रह्मणोपरिष्टात्पाप्मानमपाहत ।११।[12] अयं मा द्यौर्न च इन्द्रेति निविद्धाने ।१२।[13] उशना यत्सहस्यैरयात वरिवस्यन्नुशने काव्यायेत्युशनवती तदेतस्याह्नो रूपम् ।१३।[14] ॥२७॥

स ऐक्षत । पाप्मानमपहत्य कथं नु तेन यज्ञक्रतुना यजेय येनेष्ट्वान्नाद्यमाप्नुयामिति । स एतमुत्तरमुशनस्तोमं यज्ञक्रतुमपश्यत ।[1] तेनेष्ट्वान्नाद्यमाप्नोत ।[2] तेनान्नाद्यकामो यजेत ।१।[3] त्रिवृत्प्रातःसवनम् ।२।[4] ब्रह्म वै त्रिवृत् ।३।[5] सदशो माध्यन्दिन ।४।[6] सा विराळन्नाद्यम् ।५।[7] त्रिवृत्तृतीयसवनम् ।६।[8] ब्रह्म वै त्रिवृत् ।७।[9] त्रिवृतैव तद्ब्रह्मणोभयतोऽन्नाद्यं परिगृह्यात्मन्नदधत ।८।[10] तथो एवैतद्यजमानस्त्रिवृतैव तद्ब्रह्मणोभयतोऽन्नाद्यं परिगृह्यात्मन्धत्ते ।९।[11] उशनवती च ।१०।[12] विविधश्चैवस्तोमो ऽन्नाद्यकामस्य ।११।[13] अक्षरवैराजे च ।१२।[14] सहस्रं शताश्वं दक्षिणा ।१३।[15] ॥२८॥

इन्द्राग्नी वै देवेष्वहंश्रेयसे विवदेयाताम् ।[1] ते देवा ऊचुः । यदि वा इमावेवं विवदिष्येते अभि नो ऽसुरा भविष्यन्ति ।[2] उप तं यज्ञक्रतुं जानीम येनैनौ समशमयेमहीति ।[3] त एतं यज्ञक्रतुमपश्यन्निन्द्राग्न्योः कुलायम् ।[4] तेनैनौ समशमयन् ।१।[5] तेन ब्राह्मणश्च क्षत्रियश्च संयजेयातां यः पुरोधास्यमानः स्यात् ।२।[6] ब्रह्मक्षत्रे एव तत्तन्वौ संसृजेते ।३।[7] त्रिवृत्पञ्चदशौ स्तोमौ ।४।[8] अग्निर्वै त्रिवृ-

दिन्द्रः पञ्चदशः । ५ । इन्द्राग्नी एव तत्तन्वौ समसृजताम् । ६ । तिष्ठा हरी तमु ष्टुहीति निविद्धाने । ७ । अग्नेः पिब जिह्वया सोममिन्द्राग्निर्न शुष्कं वनमिन्द्र हेतिरित्यैन्द्रे अग्निमती तदेतस्याह्नो रूपम् । ८ । ॥ २९ ॥

मित्रावरुणयोर्वै वैराज्यमन्यतर ऐच्छत्स्वाराज्यमन्यतरः । १ । तावेतं यज्ञक्रतुमपश्यतां विराट्स्वराजम् । २ । तेनेष्ट्वा वैराज्यमन्यतर आप्नोत्स्वाराज्यमन्यतरः । ३ । १ । अश्नुवैराजे च । २ । ४ । ॥ ३० ॥

ज्यैष्ठस्तोमः कनिष्ठकुलीनस्य ज्यैष्ठ्यं कामयमानस्य । १ । सप्तदशो बहिष्पवमानः । २ । एष वै स्तोमानां ज्येष्ठः । ३ । तमेव तद्यज्ञमुखे युनक्ति । ४ । जनिष्ठा उग्रः सहसे तुराय प्र वः सतां ज्येष्ठतमाय सुष्टुतिमिति ज्येष्ठाभिव्याहारे निविद्धाने तदेतस्याह्नो रूपम् । ५ । ॥ ३१ ॥

देवासुराः समयतन्त । ते देवा बृहस्पतिं पुरोहितमुपाधावन् । १ । उप तं यज्ञक्रतुं जानीहि येनेष्ट्वासुरा नान्ववेयुरिति । २ । स एतं दुराशं यज्ञक्रतुमपश्यत् । ३ । तेनेष्ट्वासुरा नान्ववायन् । ४ । ततो वै देवा अभवन्परासुराः । ५ । भवत्यात्मना परास्य द्वेष्यो य एवं वेद । ६ । १ । अपरपक्षे मौरोहिः पूर्वाह्णे । २ । ७ । चान्द्रमसी सायम् । ३ । ८ । विधुं दद्राणं नवोनवः । ४ । ९ । सौवर्णः शतवलो दक्षिणा पूर्वस्याम् । ५ । १० । राजत उत्तरस्याम् । ६ । ११ । भारद्वाजं पृष्ठम् । ७ । १२ । तया स्तुते । ८ । १३ । स्तोत्रेस्तोत्रे स्तुते विंशतिंविंशतिं शतवलान्ददाति । ९ । १४ । यावद्वा यजमानो हिरण्यमिच्छेत् । १० । १५ । ॥ ३२ ॥

इन्द्रो ह्यपचितिकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यदपचितिम् । तेने-

ष्ट्रापचितिमाप्नोत्। तेनापचितिकामो यजेत ।१। चतुर्विंशौ पूर्वौ पवमानौ ।२। त्रिवृत्पञ्चदशान्याज्यानि ।३। सप्तदशैकविंशानि पृष्ठानि ।४। त्रिणव आर्भवः पवमानः ।५। एकविंशमग्निष्टोमसाम ।६। तस्य गायत्रीमभि प्रातःसवनं संतिष्ठते ।७। गायत्रच्छन्दसो वसवः [8]। तेनेन्द्रो वसुष्वपचितिमाश्नुत ।[9]८। गायत्रच्छन्दसो ब्राह्मणाः। तेनायं ब्राह्मणेष्वपचितिमश्नुते ।[10]९। त्रिष्टुभं माध्यन्दिनं सवनम् ।[11]१०। त्रिष्टुप्छन्दसो रुद्राः [12]। तेनेन्द्रो रुद्रेष्वपचितिमाश्नुत ।[13]११। त्रिष्टुप्छन्दसः क्षत्रियाः [14]। तेनायं क्षत्रियेष्वपचितिमश्नुते ।[15]१२। जगतीं तृतीयसवनम् ।[16]१३। जगच्छन्दस आदित्याः [17]। तेनेन्द्र आदित्येष्वपचितिमाश्नुत ।[18]१४। जगच्छन्दसो विशः [19]। तेनायं विक्ष्वपचितिमश्नुते ।[20]१५। वाचान्वाह वाचा शंसति वाचा यजति ।१६। वागनुष्टुप् ।[21]१७। अनुष्टुप्छन्दसो विश्वे देवाः [22]। तेनेन्द्रो विश्वेषु देवेष्वपचितिमाश्नुत ।[23]१८। अनुष्टुप्छन्दसः शूद्राः [24]। तेनायं शूद्रेष्वपचितिमश्नुते ।[25]१९। अश्वरथः खाङ्गकवचो वैयाघ्रपरिच्छद आर्चीपासङ्गो द्वैपधन्वधिः श्यावाश्वो दक्षिणा ।[26]२०। अपचितिमता रूपेणापचितिमाप्नवानीति ।[27]२१। इन्द्र सोमं सोमपत इन्द्रं स्तवेति निविद्धाने इन्द्राभिव्याहारे। तदेतस्याह्नो रूपम् ।[28]२२। ॥ ३३ ॥

सूर्यो ह त्विषिकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्त्विषिम्। तेनेष्ट्वा त्विषिमाप्नोत्। तेन त्विषिकामो यजेत ।१। अश्वरथः कांस्यकवचः श्वेताश्वो दक्षिणा ।२। त्विषिमता रूपेण त्विषिमाप्नवानीति ।३। *सूर्याभिव्याहारे निविद्धाने [4]। तदेतस्याह्नो रूपम् ।[5]४। ॥ ३४ ॥*

वरुणो ह दृष्टिकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्दृष्टिम्। तेनेष्ट्वा

यष्टिमाप्नोत्। तेन यष्टिकामो यजेत ।१। उदां चक्षुर्वरुण सुप्रतीकमिन्द्रावरुणा युवमध्वराय न इतीन्द्रावरुणाभिव्याहारे निविद्धाने। तदेतस्याह्नो रूपम् ।२। ॥२५॥

भानुमती ह तेजस्कामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यदादित्यम्। तेनेष्ट्वा तेज आप्नोत्। तेन तेजस्कामो यजेत ।१। यं वै सूर्यं स्वर्भानुः स्वर्भानोरध यदित्यादित्याभिव्याहारे निविद्धाने। तदेतस्याह्नो रूपम् ।२। ॥२६॥

इन्द्राविष्णुर्ह स्वर्गकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्स्वर्गम्। तेनेष्ट्वा स्वर्गमाप्नोत्। तेन स्वर्गकामो यजेत ।१। इन्द्राभिव्याहारे निविद्धाने। तदेतस्याह्नो रूपम् ।२। ॥२७॥

देवासुराः समयतन्त [1] ते देवा बृहस्पतिं पुरोहितमुपाधावन् [2] उप तौ यज्ञक्रतू जानीहि याभ्यामिष्ट्वासुरान्विनुत्त्याभिभवेमहीति [3] स एतौ यज्ञक्रतू अपश्यद्विनुत्त्यभिभूती [4] ताभ्यां विनुत्तिना विनुत्त्याभिभूतिनाभ्यभवन् ।१। तस्य विनुत्तेः पलूर्ध्वाः पृष्ठ्यस्तोमाः पलायत्ता विष्वञ्चः स्तोमाः ।२। विष्वञ्चो वै भूत्वा विनुदन्तीति ।३। तद्विनुत्ते रूपम् ।४। [6] अथाभिभूतेः पलूर्ध्वाः पृष्ठ्यस्तोमाः पलायत्ताः सम्यञ्चः स्तोमाः ।५। सम्यञ्चो वै भूत्वाभिभवन्तीति ।६। तदभिभूते रूपम् ।७। [7] यद्विश्वजितो बृहत्पृष्ठस्य तदेनयोः शस्त्रम् ।८। [8] ॥२८॥

राज्ञिमरायावन्नाद्यकामस्य ।१। उत्तमौ छन्दोमौ समूळ्हात् ।२। स्त्रीणां गवां सहस्रं दक्षिणे ददाति ।३। पुंसामुत्तरे ।४। तन्नं दीक्षोपसदः ।५। तयोदयनीया ।६। यमावनूचीनगर्भौ वा

संयजेयाताम् । ७ । विघनः पाप्मानं द्विषतश्चापजिघांसमानस्य । ८ । कयाशुभीयतदिदासीये वा निविद्धाने । ९ । भ्रातृव्यं द्विषतश्चापजिघांसमानस्य । १० । ॥ ३९ ॥

आदित्याश्च ह वा अङ्गिरसश्चास्पर्धन्त [1] वयं पूर्वे स्वर्गं लोकमेष्याम इत्यादित्या वयमित्यङ्गिरसः [2] ते ऽङ्गिरस आदित्येभ्यः प्रोचुः । श्वः सुत्या नो याजयत न इति । तेषां ह्याग्निर्दूत आस [3] त आदित्या ऊचुः । यदि वा एते पूर्वे यक्ष्यन्त्येते पूर्वे स्वर्गं लोकं गमिष्यन्ति [4] [अभि नो ऽसुरा भविष्यन्ति ।][(5)*] उप तं यज्ञक्रतुं जानीम येन वयं पूर्वे यजेमहीति [5(6)] त एतं साद्यक्रं यज्ञक्रतुमपश्यन् [6(7)] तेनेष्ट्वा पूर्वे स्वर्गं लोकमायन् [7(8)] तेन स्वर्गकामो यजेत । [8(9)] १ । त्रिवृत्स्तोमः । [9(10)] २ । रथन्तरं पृष्ठम् । [10(11)] ३ । ह्यचक्लृप्तं शस्त्रम् । [11(12)] ४ । अग्निष्टोमो यज्ञः । [12(13)] ५ । यवोर्वरा वेदिः । [13(14)] ६ । यवखल उत्तरवेदिः । [14(15)] ७ । लाङ्गलेषा यूपः । [15(16)] ८ । यवकलापिश्चषालम् । [16(17)] ९ । ईजानस्य कुलादग्नीवर्यः । [17(18)] १० । इतिषु दधि वनीवाह्यन्ते । [18(19)] ११ । ततो यत्सर्पिर्दृदेति तेन प्रचरन्ति । [19(20)] १२ । अश्वरथः सोमप्रवाकः । [20(21)] १३ । योजने ऽन्ततः । [21(22)] १४ । अश्वो दक्षिणा । [22(23)] १५ । पूर्वाह्णे दीक्षणीया । [23(24)] १६ । अभ्ययं कर्माणि वर्तन्ते । [24(25)] १७ । अर्थलुप्तः प्रवर्ग्यः । [25(26)] १८ । तिस्रः पराचीरुपसदः । [26(27)] १९ । पुरोलाशो ऽग्नीषोमीयः । [27(28)] २० । सवनीयकाले समानतन्त्राः पशवः । [28(29)] २१ । आश्विनी वशानूबन्ध्यायाः स्थाने । [29(30)] २२ । मैत्रावरुण्या वा पयस्यया यजेत । [30(31)] २३ । अथो पूर्वप्रक्रान्तमन्वैच्छन् । [31(32)] २४ । ॥ ४० ॥

* The words in brackets are given only in some MSS. of the text. They are explained in one MSS. of the Commentary and omitted in the other.

एषैवोत्तरस्य विधा ।१। स्तोमा एवान्यथा ।२। अष्टादशाः पवमानास्त्रिवृन्नीतराणि ।३। स एष उक्थ्यः प्रत्याहृतः ।४। यो ऽग्निष्टोमे कामो य उक्थ्ये तयोरुभयोराप्त्यै ।५। गोधूमोर्वरा ।६। गोधूमखलः ।७। गोधूमकलापिष्ठपालम् ।८। कुम्भ्या आपो वसतीवर्यः ।९। अश्वः सोमप्रवाकः ।१०। चैपदे ऽन्ततः ।११। वडवा दक्षिणा ।१२। ॥४१॥

एषैवोत्तरस्य विधा ।१। स्तोमा एवान्यथा ।२। चतुर्विंशाः पवमानास्त्रिवृन्नीतराणि ।३। स एष वाजपेयः प्रत्याहृतः ।४। यः षोडशिनि कामो यो वाजपेये तयोरुभयोराप्त्यै ।५। यद्यस्य द्विषन्भ्रातृव्यो ऽनुक्रिया यजेत परिक्रिया यजेत। यदि परिक्रियोऽक्रिया ।६। एकत्रिकत्रिकैकाभ्यां ब्रह्मवर्चसकामो यजेत ।७। एकस्यां तिसृष्विति प्रथमस्य स्तोत्राणि भवन्ति ।८। तिसृष्वेकस्यामित्युत्तरस्य ।९। तावुतुर्विंशतिः स्तोत्रियाः ।१०। चतुर्विंशत्यक्षरा गायत्री ।११। तेजो ब्रह्मवर्चसं गायत्री ।१२। तदाभ्यां तेजो ब्रह्मवर्चसमाप्नोति ।१३। त्वचक्रुप्रशस्तौ ।१४। अभिजिदभिजिगीषतः ।१५। विश्वजिद्विश्वं जिगीषतः ।१६। त्रिसंस्थौ च तौ ।१७। अग्निष्टोमौ भूत्वान्योन्यस्मिन्प्रत्यतिष्ठताम् ।१८। उक्थ्यौ भूत्वान्योन्यस्मिन् ।१९। अतिरात्रौ भूत्वान्योन्यस्मिन् ।२०। ॥४२॥

इन्द्रो वै नृञ्जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यन्नृजितम्। तेनेष्ट्वा नॄनजयत्। तेन नॄञ्जिगीषन्यजेत ।१। ॥४३॥

इन्द्रो वै पृतनाजं जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्पृतनाजितम्। तेनेष्ट्वा पृतनाजमजयत्। तेन पृतनाजं जिगीषन्यजेत ।१। ॥४४॥

इन्द्रो वै महाजं जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्तेनाजितम्। तेनेष्ट्वा महाजमजयत्। तेन महाजं जिगीषन्यजेत। १। प्रथमास्यहान्माध्यन्दिनेषु निविद्धानानि। २। ॥ ४५॥

इन्द्रो वै धनं जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्धनजितम्। तेनेष्ट्वा धनमजयत्। तेन धनं जिगीषन्यजेत। १। चतुर्विंशमहः। २। ॥ ४६॥

इन्द्रो वै स्वर्जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्स्वर्जितम्। तेनेष्ट्वा स्वरजयत्। तेन स्वर्जिगीषन्यजेत। १। उत्सन्नयज्ञ इव वा एष यत्स्वर्जित्। २। ॥ ४७॥

इन्द्रो वै सर्वं जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्सर्वजितम्। तेनेष्ट्वा सर्वमजयत्। तेन सर्वं जिगीषन्यजेत। १। महाव्रतीयमहः। २। ॥ ४८॥

इन्द्रो वै सर्वमुज्जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यदुज्जितम्। तेनेष्ट्वा सर्वमुदजयत्। तेन सर्वमुज्जिगीषन्यजेत। १। जनिष्ठा उग्रः सहसे तुराय तमु ष्टुहि यो अभिभूत्योजा इति निविद्धाने। २। ध्वान्तात्प्रपिताद्रुदग्न्त गर्भा उत्तूर्वयाणं ष्टवता निर्नेषेत्युदन्तौ तदेतस्याह्नो रूपम्। ३। ॥ ४९॥

इन्द्रो वै विश्वीर्षाणं त्वाष्ट्रमहनत्[1] अरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छत्[2] तं सर्वाणि भूतान्यभ्याक्रोशन्[3] स देवेभ्यः पार्श्वत इव चचार[4] ते देवा ऊचुः। यदि वा अयमेव चरिष्यत्यभि नो ऽसुरा भविष्यन्ति[5] उप तं यज्ञक्रतुं जानीम येनैनमुपाह्वयेमहीति[6] त एतमुपहव्यं यज्ञक्रतुमपश्यन्। तेनैनमुपाह्वयन्त[7] तेनावरुद्धो राजा यजेत राष्ट्रमवजिगीषन्[8] अह वैव गच्छति। ९। इमा उ त्वा-

पुरुतमस्य कारोरंध्यं वीर हव्या हवन्ते य एक इद्धुव्यश्चर्षणीनामिति इतवती निविद्धाने[10]। तदेतस्याह्नो रूपम् ।११। ॥५०॥

तमभ्येवाक्रोशन्ननहर्जाततया वैतत्पाप्या वालक्ष्म्या[1][2]। सो ऽग्नये सर्वाणि सवनानि प्रायच्छत्[3]। तस्याग्निः सर्वामनहर्जाततां सर्वां पापीमलक्ष्मीं निरदहत्[4]। स यो ऽनहर्जातः स्याद्यं वा पापी वागभिवदेत्सो ऽग्निष्टुता यजेत। तस्याग्निः सर्वामनहर्जाततां सर्वां पापीमलक्ष्मीं निर्दहति य एवं वेद[5] य उ चैनेन यजते ।[6]१। * त्रिवृत्स्तोमेन त्रिष्टोमेन वा ब्रह्मवर्चसकामः ।[7]२। चतुष्टोमेन प्रतिष्ठाकामः ।[8]३। प्रातरनुवाकप्रभृति हारियोजनान्तं सर्वमाग्नेयम् ।[9]४। यथार्थमूहः ।[10]५। वचनात्प्रत्याम्नायः ।[11]६। अग्निं मन्ये पितरमिति प्रतिपत्प्रातरनुवाकस्य ।[12]७। लिङ्गेषूत्तरयोः क्रत्वोरग्निशब्दं कुर्वीत ।[13]८। प्र देवत्रेत्युद्धृत्य सोमस्य मेति चतुर्दश ।[14]९। तमोषधीरित्यवनीयमानासु ।[15]१०। और्वभृगुवदिति तिस्रो ऽभ्यय इत्युद्धृत्य ।[16]११। उपप्रयन्तस्त्रीणि श्रतेति प्रथमे उत्तमा चाग्निमन्थनीयानाम् ।[17]१२। अग्ने जुषस्व नो हविरिति प्रथमा चतुर्थी पञ्चमी च सवनीयानाम् ।[18]१३। दूतं वो विश्ववेदसमिति द्विदेवत्यानाम् ।[19]१४। ॥५१॥

अग्निमीळे पुरोहितमित्युन्नीयमानेभ्यः ।१। अग्निं दूतमिति सप्त प्रस्थितानाम् ।२। उत्तरास्ततस्रो ऽच्छावाकसूक्तस्य स्थाने ।३। अग्ने दिव इति याज्याज्यस्य ।४। उप त्वा जामय ऐभिरग्ने कस्ते जामिर्न योरुपब्दिरग्निर्वृत्राण्यग्ने सुतस्याग्ने घृतव्रतायेति प्रउगहधानि

---

* The commentary from this Sutra up to 14, 52, 3 is wanting in both MSS.

।५। अग्ने विश्वेभिरग्निभिरिति यजति ।६। कस्ते जामिः कया ते अग्ने अङ्गिर इति स्तोत्रियानुरूपौ मैत्रावरुणस्य ।७। विपर्यस्तौ तु माध्यन्दिने ।८। अग्निर्हवाणीति ब्राह्मणाच्छंसिनः ।९। अग्निर्मूर्धेत्यच्छावाकस्य ।१०। अर्वन्तस्त्वेति मैत्रावरुणस्य ।११। उत्तरं ब्राह्मणाच्छंसिनः ।१२। अग्ने घृतव्रतायेति पलच्छावाकस्य ।१३। उत्तमाभिर्यजन्ति ।१४। ॥ ५२ ॥

अग्निं वो देवमित्युन्नीयमानेभ्यः ।१। प्र वः शुक्रायेति सप्त प्रस्थितानाम् ।२। उत्तरे मरुत्वतीयग्रहस्य ।३। विशोविशो वस्त्वमग्ने यज्ञानामिति प्रतिपदनुचरौ मरुत्वतीयस्य ।४। अग्न आ याह्यग्निभिः प्र वो यज्ञमिति प्रगाथौ ।५। अग्नि न मा मथितं त्वमग्ने प्रथमो अङ्गिरा ऋषिरित्येकपातिनीनाम् ।६। अग्ने स क्षेषदिति निविद्धानम् ।७। उत्तमा याज्या ।८। ॥ ५३ ॥

पाहि नो अग्न एकया पाहि नो अग्ने रक्षस इति स्तोत्रियानुरूपौ प्रगाथौ निष्केवल्यस्य ।१। प्र ते अग्ने हविष्मतीमिति धाय्या ।२। एना वो अग्निमिति प्रगाथः ।३। यथा होतरिति निविद्धानम् ।४। अग्निं नर इति याज्या ।५। ॥ ५४ ॥

अग्निमग्निं वो अध्रिगुमग्ने जरितरिति स्तोत्रियानुरूपौ प्रगाथौ ब्राह्मणाच्छंसिनः ।१। अच्छा नः शीरशोचिषमित्यच्छावाकस्य ।२। अग्ने विवस्वत्त्वमग्ने गृहपतिस्त्वमिन्द्रप्रया इत्यनुपूर्वं प्रगाथाः ।३। यजस्व होतरिति च सूक्तानि ।४। उत्तमाभिर्यजन्ति ।५। ॥ ५५ ॥

अगन्म महेत्यादित्यग्रहस्य पुरोनुवाक्योत्तरा याज्या ।१। ऊर्ध्व ऊ षु णो अध्वरस्य होतरिति नवोन्नीयमानेभ्यः ।२। उत्तरे

ऋषिस्तोमाः ।१। गोतमो ह ब्रह्मवर्चसकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत् ।२। तेनेष्ट्वा ब्रह्मवर्चसमाप्नोत् ।३। तेन ब्रह्मवर्चसकामो यजेत ।४। ॥६३॥

भरद्वाजो ह बलकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत् ।१। तेनेष्ट्वा बलमाप्नोत् ।२। तेन बलकामो यजेत ।३। ॥६४॥

अत्रिर्ह प्रजातिकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत् ।१। तेनेष्ट्वा प्राजायत ।२। तेन प्रजातिकामो यजेत ।३। ॥६५॥

वसिष्ठो ह्यन्नाद्यकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत् ।१। तेनेष्ट्वान्नाद्यमाप्नोत् ।२। तेनान्नाद्यकामो यजेत ।३। ॥६६॥

जमदग्निर्ह पशुकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत् ।१। तेनेष्ट्वा पशूनाप्नोत् ।२। तेन पशुकामो यजेत ।३। ॥६७॥

प्रजापतिर्ह प्रजातिकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत् ।१। तेनेष्ट्वा प्राजायत ।२। तेन प्रजातिकामो यजेत ।३। पृष्ठ्याद्यान्यनुपूर्वम् ।४। ॥६८॥

व्रात्यस्तोमाः ।१। वसवो ह स्वर्गकामास्तपस्तप्त्वैतान्यज्ञक्रतून्पश्यन्व्रात्यस्तोमान् ।२। तैरिष्ट्वा स्वर्गमापुः ।३। तैः स्वर्गकामो यजेत ।४। ॥६९॥

मित्रावरुणयोरश्विनोर्वसूनां मरुतां विश्वेषां देवानाम् ।१। समूल्हात्पृष्ठ्याच्छस्त्रम् ।२। ॥७०॥

उत्क्रान्तिरतिरात्रः ।१। इन्द्राविष्णू वै स्वर्गकामौ तपस्तप्त्वैतं यज्ञक्रतुमपश्यतामुत्क्रान्तिम् ।२। तेनेष्ट्वा स्वर्गं लोकमुदाक्रामताम् ।३। तेन स्वर्गकामो यजेत ।४। इमा उ त्वा पुरुतमस्य द्यौर्न य इन्द्रेति निवि-

ह्वाने । ३ । प्र पूषणं विष्णुमग्निं पुरन्धिं इन्द्राविष्णू सचान इति विष्णुन्यङ्गे तदेतस्याङ्गो रूपम् । ४ । ॥ ७१ ॥

मित्रावरुणयोरश्विनोर्वसूनां मरुतां साध्यानामाप्त्यानां विश्वसृजां भूतकृतां ज्येष्ठानां मध्यमानां कनिष्ठानां च । १ । चतुर्दशः स्तोमः । २ । विष्टयुः सप्रतोदः सेषुधन्वा दक्षिणा । ३ । एतेषां देवगणानां समूल्हाद्गिराचाच्छस्त्रम् । ४ । ॥ ७२ ॥

प्रात्यस्तोमानाम् । १ । नवानां नाकसदां च । २ । पयालमुखतरसपुरोलाशोरनिष्ठुसवप्रस्त्रसवचयसभ्रूमिसवौषधिसवौदनसववनस्पतिसवानां च । ३ । ॥ ७३ ॥

प्रजापतिर्ह परमेष्ठी प्रतिष्ठाकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्दशसमदः । तेनेष्ट्वा प्रत्यतिष्ठत । तेन प्रतिष्ठाकामो यजेत । १ । ॥ ७४ ॥

ऋतुस्तोमाः । १ । ऋतवो ह स्वर्गकामास्तपस्तप्त्वैतान्यज्ञक्रतूनपश्यन्षट् । तैरिष्ट्वा स्वर्गमापुः । तैः स्वर्गकामो यजेत । २ । ॥ ७५ ॥

मासस्तोमाः । १ । मासा ह्यन्नाद्यकामास्तपस्तप्त्वैतान्यज्ञक्रतून्पञ्चद्वादश । तैरिष्ट्वान्नाद्यमापुः । तैरन्नाद्यकामो यजेत । २ । ॥ ७६ ॥

अर्धमासस्तोमाः । १ । अर्धमासा ह्यन्नाद्यकामास्तपस्तप्त्वैतान्यज्ञक्रतूनपश्यंश्चतुर्विंशतिम् । तैरिष्ट्वान्नाद्यमापुः । तैरन्नाद्यकामो यजेत । २ । ॥ ७७ ॥

नक्षत्रस्तोमाः । १ । नक्षत्राणि ह तेजस्कामानि तपस्तप्त्वैतान्यज्ञक्रतूनपश्यन्नष्टाविंशतिम् । तैरिष्ट्वा तेज आपुः । तैस्तेजस्कामो यजेत । २ । ॥ ७८ ॥

अहोरात्रस्तोमाः । १ । अहोरात्रा ह्यन्नाद्यकामास्तपस्तप्त्वैतान्यज्ञ-

क्लृप्तानपश्यन्सप्तविंशतिशतानि । तैरिष्ट्वान्नाद्यमापुः ।२। तैरन्नाद्यकामो यजेत ।३। ॥७९॥

मुहूर्तस्तोमाः ।१। मुहूर्ता ह्यन्नाद्यकामास्तपस्तप्त्वैतान्यज्ञक्लृप्तानपश्यन्दश सहस्राण्यष्टौ च शतानि ।२। तैरिष्ट्वान्नाद्यमापुः ।३। तैरन्नाद्यकामो यजेत ।४। ॥८०॥

निमेषस्तोमाः ।१। निमेषा ह्यचितिकामास्तपस्तप्त्वैतान्यज्ञक्लृप्तानपश्यन्दशायुतान्यष्टौ च सहस्राणि। तैरिष्ट्वाचितिमापुः। तैरचितिकामो यजेत ।२। ॥८१॥

ध्वंसिस्तोमाः ।१। ध्वंसयो ह्यनन्तकामास्तपस्तप्त्वैतान्यज्ञक्लृप्तानपश्यन्दश प्रयुतान्यष्टौ चायुतानि ।२। तैरिष्ट्वानन्तमापुः ।३। तैरनन्तकामो यजेत ।४। ॥८२॥

दिशां स्तोमाः ।१। दिशो ह्यनन्तकामास्तपस्तप्त्वैतान्यज्ञक्लृप्तानपश्यंश्चतुरः। तैरिष्ट्वानन्तमापुः। तैरनन्तकामो यजेत ।२। ॥८३॥

अवान्तरदिशां स्तोमाः ।१। अवान्तरदिशो ह्यनन्तकामास्तपस्तप्त्वैतान्यज्ञक्लृप्तानपश्यंश्चतुरः। तैरिष्ट्वानन्तमापुः। तैरनन्तकामो यजेत ।२। त एते बृहद्रथन्तरपृष्ठाः स्युः ।३। ऐकाहिकशस्त्राः ।४। कयाशुभीयतदिदासीये वा निविद्धाने ।५। दिक्षु दिशां स्तोमा अवान्तरदिक्ष्ववान्तरदिशामवान्तरदिशाम् ।६। ॥८४॥

इति शाङ्खायनश्रौतसूत्रे चतुर्दशो ऽध्यायः समाप्तः ।

---

# ओम् ।



शरदि वाजपेयः ।१। अन्नाद्यकामस्य ।२। वाजेन यक्ष्यमाणः पुरस्तात्संवत्सरं पेयैर्यज्ञक्रतुभिर्यजते ।३। पानं वै पेयाः। अन्नं वाजः ।४। पानं वै पूर्वमथान्नम् ।५। तयोरुभयोराप्त्यै ।६। द्वादशाग्निष्टोमाः ।७। गोतमस्य वा चतुरुत्तरस्तोमो व्यत्यासं प्राकृतेन ।८। अपरियज्ञमेके ।९। इन्द्रो हैतेन यज्ञक्रतुनेष्ट्वा बृहस्पतिश्चान्नाद्यमापतुः ।१०। तेनान्नाद्यकामो यजेत ।११। अथो हैतेन वाजो लोक्य इष्ट्वा सर्वान्कामानाप। तस्माद्वाजपेयः ।१२। त्रयोदश दीक्षास्तिस्र उपसदः सुत्यं सप्तदशमहः ।१३। सप्तदशो वै प्रजापतिर्वाजपेयः ।१४। तदेनं स्वेन रूपेण समर्धयति ।१५। चतुरश्रो गोधूमचषालो बैल्वो यूपः सप्तदशारत्निः ।१६। सप्तदशो वै प्रजापतिर्वाजपेयः ।१७। तदेनं स्वेन रूपेण समर्धयति ।१८[17]। सप्तदशाग्नीषोमीयाः ।१९[18]। तेषां समानं चरणम् ।२०[19]। आग्नेय ऐन्द्राग्न ऐन्द्रो वृष्णिः। सारस्वती मेषी। मरुद्भ्य उज्जेषेभ्यो वशा पृश्निः पञ्चमी क्रतुपशूनाम् ।२१[20]। सप्तदश प्राजापत्याः श्यामास्तूपरा लघुदिन उपालम्भ्याः ।२२[21]। सवनीयानां तन्त्रं पर्यग्निकरणान्तम् ।२३[22]। ब्रह्मसामालभ्यन्ते ।२४[23]। आग्रयुरावर्तेन सोम्याश्च ।२५[24]। मासा अग्निं भरतेविध्यगोद्दमिति तन्त्रमुत्तमः प्रयाजः परिधायै च ।२६[25]। ऊर्ध्वं प्रदत्तं परिश्येत्वगात् ।२७[26]। वनस्पतिप्रभृतीन्यङ्गान्युत्क्षयेरन् ।२८[27]। इष्टेषु वानुयाजेषु ।२९[28]। स्वकाला

वा । [29]३०। सप्तदशः स्तोमः । [30]३१। वैराजमाज्यम् । [31]३२। घृतस्तोमीयं वा । [32]३३। माधुच्छन्दसः प्रउगः । [33]३४। अन्नं वै विराट्। घृतमन्नम् । [34]३५। रसो माधुच्छन्दसः प्रउगः । [35]३६। अन्नेन तद्रसं दधाति । [36]३७। ऐकाहिकं वा । [37]३८। प्रतिष्ठा वा एकाहः । ३९। प्रतिष्ठित्या एव । [38]४०। ॥ १ ॥

चिकद्रुकेषु महिषो यवाशिरं तुविशुष्म इत्यतिच्छन्दसा मरुत्वतीयं प्रतिपद्यते । [1]१। प्राजापत्यं वै छन्दो ऽतिच्छन्दाः । २। प्रजापतिर्वाजपेयः । ३। तदेनं स्वेन रूपेण समर्धयति । [2]४। आ त्वा रथं यथोतय इत्येव प्रतिपद्येत । [3]५। प्राजापत्यं वै छन्दो ऽनुष्टुप् । ६। प्रजापतिर्वाजपेयः । ७। तदेनं स्वेन रूपेण समर्धयति । [4]८। कया शुभा सवयसः सनीला इति मरुत्वतीयं। कदत्कयाशुभीयम् । ८। को वै प्रजापतिर्वाजपेयः । १०। तदेनं स्वेन रूपेण समर्धयति । [5]११। बार्हस्पत्यो नैवारः सप्तदशशरावः । १२। सप्तदशो वै प्रजापतिर्वाजपेयः । १३। तदेनं स्वेन रूपेण समर्धयति । [6]१४। सो ऽन्तरेण निष्केवल्यमरुत्वतीये। बृहस्पतिसवे च । [7]१५। तत्राभिविष्यते प्राक् स्विष्टकृतः । [8]१६। तस्य प्रदानं स्विष्टकृदिलं च । [9]१७। तदिदास भुवनेषु ज्येष्ठमिति निष्केवल्यम् । [11]१८। यज्ञो वै भुवनेषु ज्येष्ठः । १९। यज्ञ उ वै प्रजापतिर्वाजपेयः । २०। तदेनं स्वेन रूपेण समर्धयति । [11]२१। अनुचरप्रभृति षष्ठात्तृतीयसवनम् । [12]२२। प्राजापत्यं वै षष्ठमहः । २३। प्रजापतिर्वाजपेयः । २४। तदेनं स्वेन रूपेण समर्धयति । [13]२५। विषुवतो वा । [14]२६। रोहो वै विषुवान् । [15]२७। रोहो वाजपेयः । २८। तदेनं स्वेन रूपेण

समर्धयति । २९[16] । ऐकाहिकं वा । ३० । प्रतिष्ठा वा एकाहः । ३१ । प्रतिष्ठित्या एव । ३२[17] । ॥ २ ॥

तत्र पुरस्तादानोभद्रीयस्य मधुनाड्यौ विहरेदिति पैङ्ग्यम् । १ । इमं महे विदथ्यायोषस पूर्वा इत्यृकचः । २ । ते यदि चित्रवतीष्वग्निष्टोमसाम कुर्युस्त्वं नश्चित्र ऊत्याग्ने विवस्वदिति स्तोत्रियानुरूपौ प्रगाथौ । ३[3] । ऊर्ध्वं षोलशिनो ऽतिरिक्तोक्थ्यम् । ४[4] । प्र तत्ते अद्य शिपिविष्ट प्र तद्विष्णुरिति स्तोत्रियानुरूपौ । ५[5] । ब्रह्म जज्ञानं प्रथमं पुरस्तादिति द्वे । ६[6] ।

धीती वा ये अनयन्वाचो अग्रं मनसा वा ये ऽवदन्नृतानि ।
तृतीयेन ब्रह्मणा संविदानास्तुरीयेण मन्वत नाम धेनोः ॥ । ७[7] ।
वेनस्तत्पश्यदिति पञ्च । ८ । अयं वेन इति वा । ९ । तं मनयेति त्रयोदशानामुत्तमां परिशिष्याह्वय दूरोहणं यथा विषुवति । १० । उत्तमामुपसंशस्य[11] यज्ञो बभूवेति परिधाय प्रजापत इति यजति । ११[12] । सप्तदश गवां शतानि ददाति । १२ । सप्तदश वाससाम् । १३ । सप्तदश यानानि युक्तानि रथान्हस्तिनो निष्कान्दुन्दुभीन् । १४[13] । तानि सप्त सप्तदशानि भवन्ति । १५ । स आप्तोवाजपेयः । १६[14] । वयसोवयस सप्तदशसप्तदशेति कुरुवाजपेयः । १७[15] । ॥ ३ ॥

वाजपेयेनेष्ट्वा बृहस्पतिसव । १ । तेजस्कामस्य ब्रह्मवर्चसकामस्य च । २ । रोहो वै वाजपेयस्तेजो ब्रह्मवर्चसं बृहस्पतिसव । ३ । तत्तेजसि ब्रह्मवर्चसे प्रतितिष्ठति । ४ । त्रिवृत्स्तोम । ५ । रथन्तरं पृष्ठम् । ६ । तृचक्लृप्तं शस्त्रम् । ७ । अग्निष्टोमो यज्ञः । ८ । यस्तस्तम्भेति चतस्रो ऽनुपूर्वं पुरस्तात्सूक्तानामेकैकां निष्केवल्यप्रभृतिषु । ९ । त्रय-

स्त्रिंशद्दक्षिणा । १० । अनुसवनमेकादशैकादश । ११ । अनूबन्ध्यस्य वपायां संस्थितायां वडवां ब्रह्मणे ऽनुशिष्टम् । १२ । ॥ ४ ॥

प्रजापतिर्ह देवान्सृष्ट्वा तेभ्य एतदन्नपानं ससृज एतान्यज्ञान् [1]। अग्निष्टोमं प्रथमम् [2]। स एनानन्नान्वभवत् [3]। अथात्यग्निष्टोमम् [4]। स एनानन्नान्वभवत् [5]। अथोक्थ्यम् [6]। स एनानन्नान्वभवत् [7]। अथ षोडशिनम् [8]। स एनानन्नान्वभवत् [9]। अथ वाजपेयम् [10]। स एनानन्नान्वभवत् [11]। अथातिरात्रम् [12]। स एनानन्नान्वभवत् [13]। अथाप्तोर्यामाणम् [14]। स एनानन्वभवत् । [15] १ । तस्य त्रयस्त्रिंशत्स्तोत्राणि । [16] २ । त्रयस्त्रिंशच्छस्त्राणि । [17] ३ । त्रयस्त्रिंशदुक्थयाज्याहुतयः । [18] ४ । त्रयस्त्रिंशद्वै सर्वे देवाः । [19] ५ । तदेनान्स्तोत्रैः शस्त्रैरुक्थयाज्याहुतिभिरिति प्रत्येकं सर्वान्प्रीणाति । [20] ६ । तस्य नव स्तोमाः । [21] ७ । नव पृष्ठानि । [22] ८ । षट् संस्थाः । [23] ९ । परिग्रहेण तानि चतुर्विंशतिः । [24] १० । चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः । ११ । संवत्सरस्यैवाप्त्यै । [25] १२ । आप्तो वै वतायं यामो यो देवांश्च संवत्सरं चानुभवतीति । तस्मादाप्तोर्यामः । [26] १३ । ॥ ५ ॥

छन्दोमाः पवमानाः । १ । त्रिवृत्पञ्चदशे सप्तदशैकविंशे चाज्यानि । २ । त्रिणवानि पृष्ठानि । ३ । त्रयस्त्रिंशमग्निष्टोमसाम । ४ । य आज्यानां स्तोमास्ते ऽतिरिक्तोक्थ्यानाम् । ५ । एतैर्वै प्रजापतिरुभयतो ऽग्निष्टोमस्तोमैः सर्वान्कामानुभयतः परिगृह्यात्मन्नदधत । ६ । तथो एवैतद्यजमान एतैरेवोभयतो ऽग्निष्टोमस्तोमैः सर्वान्कामानुभयतः परिगृह्यात्मन्धत्ते । ७ । विश्वजितः सर्वपृष्ठात्सहौत्रं प्रातःसवनम् । ८ । ॥ ६ ॥

कयाशुभीयं चातुर्थाह्निके चैकाहिकात्पूर्वाणीति मरुत्वतीयम्

।१। बृहद्वैराजगर्भं होतुः पृष्ठं भवति रथन्तरं वा।२। वामदेव्यं शाक्वरगर्भं मैत्रावरुणस्य।३। श्यैतं वैरूपगर्भं ब्राह्मणाच्छंसिनो नौधसं वा।४। कालेयं रैवतगर्भमच्छावाकस्य।५। गर्भं पूर्वं शंसेदिति हैक आहुरथात्मानमिति।६। आत्मानं त्वेव पूर्वं शंसेत्।७। आत्मानं वा अनु गर्भः।८। ऐकाहिकाः स्तोत्रियाश्छन्दस्या विश्वजितः सर्वपृष्ठात्स्तोत्रियाच्छंसन्ति।९। तयानुरूपान्।१०। सामप्रगाथांश्च।११। ॥७॥

तद्विदासीयं चातुर्थाह्निके चैकाहिकात्पूर्वाणीति निष्केवल्यम्।१। यानि पराञ्चमाह्निकानि मध्यन्दिनीयि मैत्रावरुणस्यैकाहिकार्थ्या पूर्वाणि।२। तार्तीयाह्निके ब्राह्मणाच्छंसिनः।३। अच्छावाकस्य षष्ठाह्निके।४। अनुचरप्रभृति षष्ठात्तृतीयसवनम्।५। आश्विनादूर्ध्वमतिरिक्तोक्थ्यानि।६। जराबोध जरमाण इति स्तोत्रियानुरूपौ होतुः।७। त्यमु वः सत्रासाहमिति मैत्रावरुणस्य।८। कं ते दाना असचत यदद्य कच्च वृत्रहन्निति ब्राह्मणाच्छंसिनः।९। तद्वो गाय सुते सचा पुरुहूताय सत्वन इति वा।१०। इदं विष्णुरित्यच्छावाकस्य।११। उत्तरे च पूर्वा चानुरूपः।१२। एषो उषा दूरादिहेवोदीराथामा मे हवमित्यनुपूर्वं नवर्चानि।१३। आ भातीति होतुः।१४। उत्तरं मैत्रावरुणस्य।१५। आ गोमतेति ब्राह्मणाच्छंसिनः।१६। उत्तरमच्छावाकस्य।१७। क्षेत्रस्य पतिनेति त्रयाणां तिस्रः परिधानीयाः।१८। शं नो देवः सविता त्रायमाण इत्यच्छावाकस्य।१९। इमे सोमास इमे मन्दासो उत्या यातं पिबत आ नो गच्छतं हवनेति याज्याः।२०। पुराणमोकः सख्यं शिवं वामिति वानुपूर्वं चतस्रः।२१।।८॥

यमस्तोमः।१। यमो ह स्वर्गकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्य-मस्तोमम्[2] तमाहरत्। तेनायजत[3] तेनेष्ट्वा स्वर्गमाप्नोत्[4] तेन स्वर्गकामो यजेत।[5]२। स्तोत्रियानुरूपाब्दस्ताणामुद्धृत्य सामाता-नांश्च।[6]३। यावत्यस्ता भवन्ति तावत्यस्तद्देवतास्तच्छन्दस उपजायन्ते।[7]४। परेयिवांसमिति पञ्चानां पुरस्तात्सूक्तानामेकैकां मध्यन्दिने।[8]५।॥ ९॥

गायत्रः सर्वस्वारो मरणकामस्य स्वर्गकामस्य च।१। त्रैष्टुभः सर्वनिधनः प्रतिष्ठाकामस्य।२। जागतः सर्वेलः पशुकामस्य च।३। आनुष्टुभः सर्ववाङ्निधनः श्रुतकामस्य।४। प्रत्यचं संपदा वा।५। नृजित्प्रभृतिभ्यो निविद्धानानि।६।॥१०॥

वागकामयत। सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयामिति[1] सैतं यज्ञक्रतुमपश्यद्वाचःस्तोमम्[2] तमाहरत्। तेनायजत[3] तेनेष्ट्वा सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्यैत्[4] तथो एवैतद्यजमानो यद्वाचःस्तोमेन यजते सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति।[5]१। शते बहिष्पवमानः।[6]२। सहस्र आज्यम्[7]३। अयुते प्रयुते नियुतेऽर्बुदे न्यर्बुदे निखर्वादे समुद्रे सलिलेऽन्त्येऽनन्त इति स्तोत्राणि।[8]४। सर्वा ऋचः प्रयुज्यन्तेऽभ्यावर्तं स्तोमातिशंसनाय।[9]५। सामानि यजूंषि च।[10]६। उत्थाय चाग्निष्टोमः।[11]७। सहस्रं दक्षिणा वाचःस्तोमस्य।[12]८। महायज्ञे।[13]९। विनुत्त्यभिभूत्योः।[14]१०। सर्वजिद्धनजितोः।[15]११। विश्वजिदभिजितोः।[16]१२। स्वर्जिदिन्द्रवज्रयोः।[17]१३। आप्तोर्यामे च।[18]१४। अनादेशे प्रकृतिर्दक्षिणानाम्।[19]१५।॥११॥

वरुणो ऽकामयत। सर्वेषां राज्ञां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयामिति[1] स एतं यज्ञक्रतुमपश्यद्राजसूयम्[2] तमाहरत्। तेनायजत[3] तेनेष्ट्वा सर्वेषां राज्ञां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्यैत्[4] तथो एवैतद्यजमानो यद्राजसूयेन यजते सर्वेषां राज्ञां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति।[5]१। भार्गवो होता।[6]२। ऐन्द्रापौष्णेन चरुणेष्ट्वा माघ्या अमावास्याया एकाह उपरिष्टाद्दीक्षेत[7] पवित्राय।[8]३। स एवायं चतुष्टोमो[9] रथन्तरपृष्ठो[10] ऽग्निष्टोमः।[11]४। एष एव पवित्रः। एतेन ह पूतः सवमश्नुते।[12]५। श्रवण्यां सुत्यमहः।[13]६। हविर्भिः पवमेषम्।[14]७। फाल्गुन्यां प्रयुज्य चातुर्मास्यानि।[15]८। षण्मास्यं च पशुम्।[16]९। माघ्यां शुनासीरीयम्।[17]१०। उत्तरं मासमिष्टिभिः।[18]११। फाल्गुन्यां दीक्षते ऽभिषेचनीयदशपेयाभ्याम्।[19]१२। द्वादश दीक्षास्तिस्र उपसदः।[20]१३। सुत्यं पौलशमहः(20)[21]१४। पौलशकलं वा इदं सर्वम्।१५। अस्यैव सर्वस्याप्त्यै(21)[22]१६।॥१२॥

सह सोमौ क्रीणन्ति।१। दशपेयस्य च तन्त्रमातिथ्यापर्यन्तमूर्ध्वं चावभृथात्।२। नमग्ने वरुण इत्याज्यं[3] वरुणन्यङ्गम्।३। वरुणं ह्यभिषिञ्चन्ति।[4]४।* चतुर्विंशान्माध्यन्दिनः।५। मैत्रावरुण-

---

* The division of Sūtra's is given for XV, 13 according to the manuscript belonging to the Berlin Royal Library, although this Msc. apparently does not contain the commentary of Varadattasuta Ānartiya, but of a different author. But the only manuscript, containing Varadattasuta's commentary, which has become accessible to me, is too corrupted to be relied upon.

न्तरेण निष्केवल्यमरुत्वतीये ।६। तत्राभिषिच्यते प्राक् स्विष्टकृतः ।७। तस्याः प्रदानं स्विष्टकृदिडं च ।८। द्वितीयादह्नस्तृतीयसवनम् ।९। तदस्थं संतिष्ठते ।१०। पशवो वा उक्थ्यानि ।११। पशूनामेवाप्त्यै ।१२। यन्यत्प्रश्यम् ।१३। क्रियते ऽवभृथकर्म। न स्नाति ।१४। कृष्णाजिनस्य दक्षिणं पूर्वपादमुदके ऽवधाय प्रत्याहरन्ति वसनस्य वा दशाम् ।१५। ॥१३॥

अथोत्तरं देवयजनमध्यवस्यति ।१। तत्संसृपामिष्टिभिर्यजते ।२। दशभिर्दशरात्रम् ।३। अथ सवित्रे प्रसवित्रे ।४। सवित्र आसवित्रे ।५। सवित्रे सत्यप्रसवायेति ॥६। सरस्वत्यै वाचे ।७। त्वष्ट्रे रूपेभ्यः ।८। पूष्णे पथिभ्यः ।९। इन्द्रायाम्नौ ।१०। बृहस्पतये तेजसे ।११। सोमाय राज्ञे ।१२। विष्णवे शिपिविष्टायेति ।१३। दशम्यां दशपेयः ।१४। अपि वैताभिर्दशभिर्देवताभिः प्रसर्पेयुर्वा भक्षयेयुर्वा ।१५। सवित्रे प्रसवित्रे प्रसर्पाणीति वा ।१६। सवित्र आसवित्रे भक्षयामीति वा ।१७। येषामुभयतः श्रोत्रिया दशपुरुषं ते याजयेयुः ।१८। शतं ब्राह्मणाः सोमं भक्षयन्ति ।१९। दशदशैकैकं चमसम् ।२०। तस्माद्दशपेयः ।२१। उत्थाय पञ्चबिलश्चरुः ।२२। समाप्ते श्येनीश्येनीभ्यां पष्ठौहीभ्यां गर्भिणीभ्यामादित्या पूर्वा वैश्वदेवी वा मारुत्युत्तरा ।२३। ॥१४॥

अथ सौत्रामणी ।१। आश्विनो लोहितो ऽजः ।२। सारस्वती मेषी ।३। इन्द्राय सुत्राम्ण ऋषभः ।४। पर्यग्निकृतेषु सुरासोमेन चरन्ति ।५।

पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत्।
अग्ने क्रत्वा क्रतूंरनु ॥

इति सुरां स्रवन्तीमुपतिष्ठन्ते । ६ । पितृदेवत्याभिर्वा । ७ । युवं सुराममिति पुरोनुवाक्या । ८ । होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाणमिति प्रैषः । ९ । सर्वानेके विकृतानामनन्ति । १० । तद् तथा न कुर्यादासुरं तत् । ११ । पुत्रमिवेति याज्या । १२ ।

यमश्विना नमुचावासुरे दधि सरस्वत्यसुनोदिन्द्रियाय ।

इमं तं शुक्रं मधुमन्तमिन्दुं सोमं राजानमिह भक्षयामि ॥

इति भक्षमन्त्रः सुरायाः । १३ । ब्राह्मणं सुरापं परिक्रीणीयादिति भक्ष उपनीयते । १४ । ॥ १५ ॥

अत ऊर्ध्वं केशवपनीयः । १ । पैधातव्युदवसानीया । २ । आग्नावैष्णव ऐन्द्रावैष्णवो वा । ३ । व्युष्टिरतो द्विरात्रः । ४ । अग्निष्टोमो ऽतिरात्रश्च । ५ । वि वा एतस्मै ब्राह्मणायोच्छति यो वेदमनुब्रूते । ६ । व्यु तस्मै क्षत्रियायोच्छति यो ऽभिषेकं प्राप्नोति । ७ । अथैतेन क्षत्रस्य धृतिना यजते । ८ । चतुष्टोमेन रथन्तरपृष्ठेनाग्निष्टोमेन । ९ । तेनो ह त्रिष्टोमेन ऋद्धयुम्न आभिप्रतारिण ईजे । १० । तमु ह ब्राह्मणो ऽनुव्याजहार । 11 न क्षत्रस्य धृतिनायष्ट इममेव प्रति समरं कुरवः कुरुक्षेत्राच्च्योष्यन्त इति । 12 । तद्‌ किल तथैवास यथैवैनं प्रोवाच । 13 । तस्मात् चतुष्टोमेनैव यजेत । 14 । प्रतिष्ठा वै यज्ञानां चतुष्टोमः । १४ । प्रतिष्ठित्या एव । 15 । अयुतं दक्षिणा । 16 । न ह वा एतस्माद्ब्राह्मणः तस्मै विश्रो युवते यो ऽयुतं ददाति । १७ । तदयुतस्यायुतत्वम् । १८ । शतं वा सहस्राणि । १९ । ॥ १६ ॥

हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजापुत्र आस । तस्य ह शतं

जाया बभूवुः। तासु ह पुत्रं न लेभे। तस्य ह पर्वतनारदौ गृह ऊषतुः। स ह नारदं पप्रच्छ।

यन्विमं पुत्रमिच्छन्ति ये च जानन्ति ये च न।
किं स्वित्पुत्रेण विन्दते तन्मः प्रब्रूहि नारद॥ इति।

स एकया पृष्टो दशभिः प्रत्युवाच।

ऋणमस्मिन्संनयत्यमृतत्वं च विन्दते।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्॥
यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि।
यावन्तो अप्सु प्राणिनां भूयान्पुत्रे पितुस्ततः॥
शश्वत्पुत्रेण पितरो ऽत्यायन्बहुलं तमः।
आत्मा हि जज्ञ आत्मनः स इरावत्यतितारिणी॥
किं नु मलं किमजिनं किमु श्मश्रूणि किं तपः।
पुत्रं ब्रह्माण इच्छध्वं स वै लोको ऽवदावदः॥
अन्नं ह प्राणः शरणं ह वासो रूपं हिरण्यं पशवो विवाहाः।
सखा ह जाया कृपणं ह दुहिता ज्योतिर्ह पुत्रः परमे व्योमन्॥
पतिर्जायां प्रविशति गर्भो भूत्वाथ मातरम्।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते॥
तज्जाया जाया भवति यदस्यां जायते पुनः।
आभूतिरेषाभूतिर्बीजमेतन्निधीयते॥
देवाश्चैतामृषयश्च तेजः समभरन्महत्।
देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः॥
एष पन्था विततो देवयानो येनाक्रमन्ते पुत्रिणो [ये] विशोकाः।

तं पश्यन्ति पशवो वयांसि च[सा]त्ते माचापि मिथुनं चरन्ति॥
नापुत्रस्य लोको ऽस्तीति तत्सर्वे पशवो विदुः।
तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहति ॥इति॥ ॥१७॥

स होवाच। स वै मे ब्रूहि यथा मे पुत्रो जायेतेति। तं होवाच। वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वा यजा इति। तथेति। स वरुणं राजानमुपससार। पुत्रो मे जायतां तेन त्वा यजा इति। तथेति। तस्य ह पुत्रो जज्ञे रोहितो नाम। तं वरुण उवाच। अजनि वै ते पुत्रो यजस्व मानेनेति। स होवाच। यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति निर्दशो न्वस्त्वथ त्वा यजा इति। तथेति। स ह निर्दश आस। तं होवाच। निर्दशो वा अभूद्यजस्व मानेनेति। स होवाच। यदा वै पशोर्दन्ता जायन्ते ऽथ स मेध्यो भवति दन्ता न्वस्य जायन्तामथ त्वा यजा इति। तथेति। तस्य ह दन्ता जज्ञिरे। तं होवाच। अज्ञत वा अस्य दन्ता यजस्व मानेनेति। स होवाच। यदा वै पशोर्दन्ताः पद्यन्ते ऽथ स मेध्यो भवति दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति। तथेति। तस्य ह दन्ताः पेदिरे। तं होवाच। अपत्सत वा अस्य दन्ता यजस्व मानेनेति। स होवाच। यदा वै पशोर्दन्ताः पुनर्जायन्ते ऽथ स मेध्यो भवति दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति। तथेति। तस्य ह दन्ताः पुनर्जज्ञिरे। तं होवाच। अज्ञत वा अस्य पुनर्दन्ता यजस्व मानेनेति। स होवाच। यदा वै क्षत्रियः संनाहं प्राप्नोत्यथ स मेध्यो भवति संनाहं नु प्राप्नोत्वथ त्वा यजा इति। तथेति। स ह संनाहं प्राप। तं होवाच।

प्रापद्दे मनाह यजस्व मानेनेति। स तथेत्युक्त्वा पुत्रमामन्त्रयां चक्रे। ततायं वै मह्यं त्वामददाद्धन्त त्वयाहमिमं यजा इति। स नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ। स संवत्सरमरण्ये चचार। अथ ऐक्ष्वाकं राजानं वरुणो जग्राह। तस्य होदरं जज्ञे। तदु ह रोहितः शुश्राव। सो ऽरण्याद्ग्राममेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच। ॥१८॥

नाना श्रान्ताय श्रीरस्तीति रोहित शुश्रुम।
पापो निषद्वरो जन इन्द्र इच्चरतः सखा॥

चरैव रोहितेति चरैवेति वै मा ब्राह्मणो ऽवोचदिति। स द्वितीयं संवत्सरमरण्ये चचार। सो ऽरण्याद्ग्राममेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच।

आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः।
शेते निपद्यमानस्य चराति चरतो भगः॥

चरैव रोहितेति चरैवेति वै मा ब्राह्मणो ऽवोचदिति। स तृतीयं संवत्सरमरण्ये चचार। सो ऽरण्याद्ग्राममेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच

कलिः शयानः पुरुषः संजिहानस्तु द्वापरः।
उत्थितस्त्रेता भवति कृतं संपद्यते चरन्॥

चरैव रोहितेति चरैवेति वै मा ब्राह्मणो ऽवोचदिति। स चतुर्थं संवत्सरमरण्ये चचार। सो ऽरण्याद्ग्राममेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच।

पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलेग्रहिः।

शेरते [ऽस्य] सर्वे पाप्मानः श्रमेण प्रपथे हताः ॥

चरैव रोहितेति चरैवेति वै मा ब्राह्मणो ऽवोचदिति । स पञ्चमं संवत्सरमरण्ये चचार । सो ऽरण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

चरन्वै मधु विन्दति चरन्स्वादुमुदुम्बरम् ।

सूर्यस्य पश्य श्रमणं यो न तन्द्रयते चरन् ॥

चरैव रोहितेति चरैवेति वै मा ब्राह्मणो ऽवोचदिति । स षष्ठं संवत्सरमरण्ये चचार । सो ऽरण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

चरन्वै मधु विन्दत्यपचिम्नन्पक्वपकम् ।

उत्तिष्ठन्विन्दते श्रियं न निषत्किंचनावति ॥

चरैव रोहितेति चरैवेति वै मा ब्राह्मणो ऽवोचदिति । स सप्तमं संवत्सरमरण्ये चचार । सो ऽजीगर्तं सौयवसिमृषिमशनायापरीतं पुत्रं भक्षमाणमरण्यमुपेयाय ॥ १८ ॥

तस्य ह त्रयः पुत्रा आसुः शुनःपुच्छः शुनःशेपः शुनोलाङ्गूल इति । तं हेवाच । ऋषे हन्ताहमेषामेकेनात्मानं निष्क्रीणा ऋष्यं ते गवां शतं ददानीति । स ज्येष्ठं निगृह्णान उवाच । न न्विममिति । नो एवेममिति कनिष्ठं माता । तौ मध्यमे संपादयां चक्रतुः शुनःशेपे । तस्य ह शतं दत्त्वा तमादाय सो ऽरण्याद्ग्राममेयाय । पितरमेत्योवाच । तत हन्ताहमनेनात्मानं निष्क्रीणा इति । स तथेत्युक्त्वा वरुणं राजानमामन्त्रयां चक्रे । अनेन त्वा यजा इति । तथेति । श्रेयान्वै ब्राह्मणः क्षत्रियादिति । तस्मा

एतं राजसूयं यज्ञक्रतुं प्रोवाच। स एतं राजसूये पुरुषं पशु-मालेभे ॥ २० ॥

तस्य ह विश्वामित्रो होतासीदयास्य उद्गाता जमदग्निरध्वर्यु-र्वसिष्ठो ब्रह्मा। तस्मा उपाकृताय नियोक्तारं न विविदुः। स होवाचाजीगर्तः सौयवसिः। मह्यमपरं शतं दत्ताहमेनं नियोक्ष्या-मीति। तस्मा अपरं शतं ददुः। तं स नियुयोज। तस्मा उपा-कृताय नियुक्ताय पर्यग्निकृताय विशस्तारं न विविदुः। स होवा-चाजीगर्तः सौयवसिः। मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति। तस्मा अपरं शतं ददुः। सो ऽसिं निश्यान एयाय। अथ ह शुनः-शेप ईक्षामास। अमानुषमिव वै मा विशसिष्यन्ति हन्त देवता उपधावानीति ॥ २१ ॥

स प्रजापतिमेव प्रथमं देवतानामुपससार कस्य नूनं कतमस्या-मृतानामित्येतयर्चा। तं प्रजापतिरुवाच। अग्निर्वै नेदिष्ठो ऽसि तमेवोपधावेति। सो ऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येत-यर्चा। तमग्निरुवाच। सविता वै प्रसवानामीशे तमेवोपधावेति। स सवितारमुपससाराभि त्वा देव सवितरित्येतेन तृचेन। तं सविता-वाच। वरुणाय वै राज्ञे नियुक्तो ऽसि तमेवोपधावेति। स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता। तं वरुण उवाच। अग्निर्वै देवानां मुखं सुहृदयं तं नु स्तुह्यथ त्वोत्स्रक्ष्यामीति। सो ऽग्निं तुष्टावात उत्तराभिरेव द्वाविंशत्या। तमग्निरुवाच। विश्वान्नु देवा-न्स्तुह्यथ त्वोत्स्रक्ष्यामीति। स विश्वान्देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा। तं विश्वे देवा ऊचुः। इन्द्रं नु स्तुह्यथ त्वोत्स-

# CORRIGENDA.



| | | | | | | |
|---|---|---|---|---|---|---|
| Page | 3 | line | 21 | read | अग्रय |
| ,, | 6 | ,, | 7 | ,, | १९ |
| ,, | 7 | ,, | 16 | ,, | निखिम्पति । प्राङ्मुख |
| ,, | 18 | ,, | 17 | ,, | जुहूर्षा |
| ,, | 23 | ,, | 9 | separate | द्रा द्रा ने। |
| ,, | 24 | ,, | 5 | ,, | स्तु कृत्वा |
| ,, | ,, | ,, | 8 | ,, | वि वर्म॰ |
| ,, | 32 | ,, | 1 | combine | पञ्चवर्षेषु |
| ,, | 37 | ,, | 13 | read | अपेक्ष |
| ,, | 40 | ,, | 11 | ,, | देवयज्ञस्य । |
| ,, | 41 | ,, | 21 | ,, | इत्यवमत्त |
| ,, | 49 | ,, | 6 | del. | s before चा |
| ,, | 50 | ,, | 3 | read | मह्रो॰ |
| ,, | 56 | ,, | 19 | ,, | ॰ध्याधीयमाने instead of ॰ध्या धीयमाने |
| ,, | 61 | ,, | 9 | separate | स्वड नाभि॰ |
| ,, | 67 | ,, | 13 | combine | पावीरवी |
| ,, | ,, | ,, | 15 | del | रे in हविरेवेति |
| ,, | 70 | ,, | 6 | read | नार्थस्थिते |
| ,, | 73 | ,, | 9 | ,, | प्रस्थितानामभ्यवयन्ति |
| ,, | 77 | ,, | 19 | ,, | इन्द्रे instead of इन्द्र |
| ,, | 88 | ,, | 13 | combine | आपुरस्ता |
| ,, | 90 | ,, | 1 | read | येन |
| , | 99 | ,, | 3 | ,, | १० |
| ,, | 107 | ,, | 7 | ,, | द्विविस्तुभेति |
| , | 108 | ,, | 13 | ,, | इन्द्रय |
| ,, | 109 | ,, | 11 | ,, | १४ |
| ,, | ,, | ,, | 17 | ,, | विश्वासु हव्यो |
| ,, | 112 | ,, | 5 | ,, | धोद्येति |
| ,, | ,, | ,, | 10 | separate | सु मर्षमिति |
| ,, | 117 | ,, | 17 | read | निघ्नन्ते instead of निघ्नते |
| ,, | 119 | ,, | 22 | ,, | 14 instead of 13 |
| ,, | 132 | ,, | 20 | ,, | १४ |
| ,, | 133 | ,, | 14 | ,, | क्रियमाणेषु |
| ,, | 137 | ,, | 1 | ,, | विहृतिप्रत्यये |
| ,, | , | , | 18 | combine | कन्याकव्यायौ |

Page 140 line 2 read विदय्य
,, 142 ,, 6 read वियस्यमाना
,, ,, ,, 10 ,, यदेवाशो
,, 143 ,, 5 ,, न्यूर्वे ने॰
,, 144 ,, 15 ,, यदुद्वितीय॰
,, 147 ,, 6 ,, ॰याज्कृतेन
,, 148 ,, 5 ,, प्रमीयित[1] द॰
,, 149 ,, 21 ,, उद्याय
,, 151 ,, 2 ,, चतुर्विंश॰
,, ,, ,, 21 ,, खण्डशस्तु
,, 152 ,, 4 ,, ११
,, ,, ,, 20 ,, उद्भिदल॰
,, 155 ,, 16 ,, २१
,, 158 ,, 6 ,, ९
,, 159 ,, 3 combine यथाश्रद्धा
,, 160 ,, 12 read उद्भिदस॰
,, 161 ,, 12 ,, यदिद्म॰
,, ,, ,, 17 ,, वलभिदा
,, 164 ,, 9 ,, विराजम्
,, 165 ,, 17 I propose to read विवरे श्यामाम्
,, 167 ,, 14 read खाद॰
,, 186 ,, 16 ,, ॰प्रथमीभ्या
,, 205 ,, 13 combine अन्यवाम्रक्षयांत
,, 206 ,, 15 ,, इह्रिरण मनि
,, 215 ,, 8 separate यद् होमा॰
,, 218 ,, 16 read स्यन्द्या॰
,, 223 ,, 22 ,, शमियाम्य॰
,, 221 ,, 14 write instead of the doubtful and probably incorrect reading the usual form समसेत् or शमयेत्।
,, 231 ,, 13 write इति च
,, 233 ,, 3 separate उप प्र॰
,, 239 ,, 16 add Samvat 1524
,, 241 ,, 4 write (J) instead of (P)
,, 242 ,, 16 ,, बृहिम॰

त्स्याम इति । स इन्द्रं तुष्टाव यच्चिद्धि सत्य सोमपा इत्येतेन सूक्तेनोत्तरस्य च पञ्चदशभिः । तस्मा इन्द्रः स्तूयमानो मनसा हिरण्यरथं ददौ । तमेतयर्चा प्रतीयाय शश्वदिन्द्र इति । तमिन्द्र उवाच । अश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्यामीति । सो ऽश्विनौ तुष्टावात उत्तरेण तृचेन । तमश्विना ऊचतुः । उषसं नु स्तुह्यथ त्वोत्स्रक्ष्याव इति । स उषसं तुष्टावात उत्तरेणैव तृचेन । तस्य ह स्मर्च्यृच्युक्तायां नितरां पाशो मुमुचे कनीय ऐक्ष्वाकस्योदरं बभूव । उत्तमायां ह स्मर्च्युक्तायां वि पाशो मुमुचे ऽगद ऐक्ष्वाको बभूव। अथ हैनमृत्विज ऊचुः । त्वमेवैतस्याह्नः संस्थामधिगच्छेः ॥ २२॥

अथ हैनमञ्जःसवं शुनःशेपो ददर्श । यच्चिद्धि त्वं गृहेगृह इति तमेताभिश्चतसृभिरभिषुत्योच्छिष्टं चम्वोर्भरेति द्रोणकलशे समवनिनाय । अथास्मिन्नन्वारब्ध एतस्यैव सूक्तस्य पूर्वाभिश्चतसृभिर्जुहवां चकार । अथ हैनमवभृथमभ्यवनिनाय स त्वं नो अग्ने ऽवमस्त्वं नो अग्ने वरुणस्य विद्वानित्येताभ्यामृग्भ्याम् । अथ हैनमग्निमुपस्थापयामास शुनश्चिच्छेपं निदितं सहस्रादित्येतयर्चा ॥२३॥

अथ ह शुनःशेपो विश्वामित्रस्योपस्थमाससाद । तं होवाचाजीगर्तः सौयवसिः । पुनर्मे पुत्रं देहीति । नेति होवाच विश्वामित्रः । देवा वा इमं मह्यमरासतेति । स ह देवरातो नाम वैश्वामित्र आस । तं होवाचाजीगर्तः सौयवसिः । तं वै विह्वयावहा इति । तथेति ।

आङ्गिरसो जन्मनास्याजीगर्तः श्रुतः कविः ।
ऋषे पैतामहात्तन्तोर्मापगाः पुनरेहि माम्॥ इति ।

स होवाच शुनःशेपः।

अद्राक्षुस्त्वा शासहस्तं न यच्छूद्रेष्वलिप्सत।

गवां त्रीणि शतानि त्वमवृणीथा मदङ्गिरः॥ इति।

तं होवाचाजीगर्तः सौयवसिः।

तद्वै मा तात तपति पापं कर्म मया कृतम्।

तदहं निह्नुवे तुभ्यं प्रतियन्तु शता गवाम्॥ इति।

स होवाच शुनःशेपः।

यः सकृत्पापकं कुर्यात्कुर्यादेनस्ततोऽपरम्।

नापगाः शौद्रान्न्यायादसंधेयं त्वया कृतम्॥ इति।

असंधेयमिति वा अवोचदिति ह विश्वामित्र उपपपाद॥ २४॥

भीम एव सौयवसिः शासेन विशिशासिषत्।

अस्थान्नैतस्य पुत्रो भूर्ममैवोपेहि पुत्रताम्॥ इति।

स होवाच शुनःशेपः।

स वै यथा नो ज्ञपया राजपुत्र तथा वद।

यथैवाङ्गिरसः सन्नुपेयां तव पुत्रताम्॥ इति।

तं होवाच विश्वामित्रः।

ज्येष्ठो मे त्वं पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यात्।

उपेया दैवं मे दायं तेन वै त्वोपमन्त्रये॥ इति।

स होवाच शुनःशेपः।

संजानानेषु वै ब्रूयाः मे सौहार्दाय मे श्रियै।

यथाहं भरतर्षभोपेयां तव पुत्रताम्॥ इति।

अथ ह विश्वामित्रः पुत्रानामन्त्रयां चक्रे॥ २५॥

मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः ।
ये के च भ्रातरः स्था अस्मै ज्यैष्ठ्याय तिष्ठध्वम् ॥ इति ।

तस्य हैकशतं पुत्रा आसुः । पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः । तद्ये ज्यायांसो न ते कुशलं मेनिरे । तानन्ुव्याजहार । अन्तं वः प्रजा भक्षीष्टेति । त एते । अन्ध्राः पुण्ड्राः शबरा मूचीपा इति । उदन्त्यो बहवस्तवो वैश्वामित्रा दस्यूनां भूयिष्ठा इत्युदाहरन्ति । अथ ये मधुच्छन्दःप्रभृतयः कनीयांसस्ते कुशलं मेनिरे । स ह जगौ मधुच्छन्दाः ।

यं नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम् ।
पुरस्तात्सर्वे कुर्महे त्वामनञ्चो वयं स्मसि ॥ इति ।

अथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव ॥ २६ ॥

ते वै पुत्राः पशुमन्तः प्रजावन्तो भविष्यथ ।
ये मानं मे ऽनुगृह्णन्तो वीरवन्तमकर्त मा ॥
पुरएत्रा वीरवन्तो देवरातेन गाथिनाः ।
सर्वे राध्यास्थ पुत्रा एष वस्तद्विवाचनः ॥
एष वः कुशिका वीरो देवरातस्तमन्वित ।
युष्मांश्च दायं चोपेता विद्यां यामुत विद्मसि ॥
ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः ।
देवराताय तस्थिरे ज्यैष्ठ्ये श्रैष्ठ्ये च गाथिनाः ॥
अधीयते देवरातो रिक्थयोरुभयोर्ऋषिः ।
जह्नूनां चाधितस्थिरे दैवे वेदे च गाथिनाः ॥

तदेतच्छौनःशेपमाख्यानं परःशतगाथमपरिमितम् । तद्धोताभि-

पिताचाचष्टे। हिरण्यकशिपावासीन आचष्टे। हिरण्यकशिपावासीनः प्रतिगृणाति। ओमित्यृचः प्रतिगरः। एवं तथेति गाथायाः। ओमिति वै दैवं तथेति मानुषम्। दैवेन चैवैनं तन्मानुषेण च सर्वस्मादेनसः संप्रमुञ्चति। तस्माद्यो राजाविजितो स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेपमाख्यानम्। न ह्यस्मिन्नल्पं चनैनः परिशिष्यते। सहस्रमाख्यात्रे शतं प्रतिगरित्र एते चैवासने। पुत्रकामा ह्याप्याख्यापयन्ते। लभन्ते ह पुत्राँल्लभन्ते ह पुत्रान्॥ २७॥

इति शाङ्खायनश्रौतसूत्रे पञ्चदशो ऽध्यायः समाप्तः।

# ओम्।

प्रजापतिरकामयत। सर्वान्कामानाप्नुयां सर्वा व्यष्टीर्व्यश्नुवीयेति[1]। स एतं चिरात्रं यज्ञक्रतुमपश्यदश्वमेधम्[2]। तमाहरत्[3]। तेनायजत[4] तेनेष्ट्वा सर्वान्कामानाप्नोत्सर्वा व्यष्टीर्व्याश्नुत[5]। तथो एवैतद्यजमानो यदश्वमेधेन यजते सर्वान्कामानाप्नोति सर्वा व्यष्टीर्व्यश्नुते।[6]१। महर्त्विग्भ्यो निर्वपति चतुरः पात्रानञ्जलीन्प्रसृतांश्च।[7]२। द्वादशविधम्।[8]३। द्वादश वै मासाः संवत्सरः।४। संवत्सरस्यैवाप्त्यै।[9]५। अथास्मा अध्वर्युर्निष्कं प्रतिमुञ्चति।[10]६। सायमाहुतौ हुतायां जघनेन गार्हपत्यमुदङ्जायानया सह संविशति।[11]७। अन्तरोरू असंवर्तमानः शयीत।[12]८। अनेन तपसेमं स्वस्तिसंवत्सरं समश्नवामहा इति।[13]९। स प्रातराहुतौ हुतायां ददाति।[14]१०। अथाग्नेयमष्टाकपालं पुरोडाशं निर्वपति।[15]११। अग्निर्वै देवानां मुखं मुखत एव तद्देवान्प्रीणाति।[16]१२। अथ पूष्णे पथिकृते चरुं निर्वपति।[17]१३। पूषा वै पथीनामधिपः। स्वस्त्ययनमेव तदश्वाय करोति।[18]१४। सर्वरूपमश्वं जवेन सपन्नं संवत्सरायोत्सृजन्ति सर्वकामिनमन्यत्राब्रह्मचर्यात्।[19]१५। शतं राजपुत्राः कवचिनो राजन्या निषङ्गिणः सूतग्रामणीनां पुत्रा उपवीतिनः क्षत्रसंग्रहीतॄणां पुत्रा दण्डिनो ऽनावर्तयन्तो ऽश्वं रक्षन्ति।[20]१६। अथ सवित्रे प्रसवित्रे सवित्र आसवित्रे सवित्रे सत्यप्रसवायेति संवत्सरं हवींषि।[21]१७।

सविता वै प्रसविता स म इमं यज्ञं प्रसुवा इति।१८। सविता वा आसविता स म इमं यज्ञमासुवा इति।१९। सविता वै सत्यप्रसवः स म इमं यज्ञं सत्येन प्रसवेन प्रसुवा इति।२०। य इमा विश्वा जातान्या देवो यातु सविता सुरत्नो विश्वानि देव सवितः स घा नो देवः सविता विश्वदेवं न प्रमिये।२१। होता च पारिप्लवमाचष्टे।२२। अध्वर्यो इत्यामन्त्रितो होतरिति होतरिति सर्वत्र प्रतिगृणीति।२३। ओं होतस्तथा होतरित्याचक्षाणे ऽनुगृणाति।२४। अथाध्वर्युर्वीणागणगिन संप्रेष्यति पुराणैरेनं पुण्यकृद्भी राजभिः सगायतेति।२५।॥१॥

मनुर्वैवस्वत इति प्रथमे।१। तस्य मनुष्या विशस्त इम आसत इति गृहमेधिन उपदिशति।२। ऋचो वेदो वेदः सो ऽयमिति सूक्तं निगदेत्।३। यमो वैवस्वत इति द्वितीये।४। तस्य पितरो विशस्त इम आसत इति स्थविरानुपदिशति।५। यजुर्वेदो वेदः सो ऽयमिति याजुषमनुवाकं निगदेत्।६। वरुण आदित्य इति तृतीये।७। तस्य गन्धर्वा विशस्त इम आसत इति यून. शोभनानुपदिशति।८। अथर्ववेदो वेदः सो ऽयमिति भेषजं निगदेत्।९। सोमो वैष्णव इति चतुर्थे।१०। तस्याप्सरसो विशस्ता इमा आसत इति युवतीः शोभना उपदिशति।११। आङ्गिरसो वेदो वेदः सो ऽयमिति घोरं निगदेत्।१२। अर्बुदः काद्रवेय इति पञ्चमे।१३। तस्य सर्पा विशस्त इम आसत इति सर्पान्सर्पविदो वोपदिशति।१४। सर्पविद्या वेदः सो ऽयमिति सर्पविद्यां निगदेत्।१५। कुबेरो वैश्रवण इति षष्ठे।१६। तस्य रक्षांसि विशस्तानी-

मान्यामत इति सेलगान्पापकृतो वोपदिशति ।१७। रक्षोविद्या वेदः सो ऽयमिति रक्षोविद्यां निगदेत् ।१८। असितो धान्वन इति सप्तमे ।१९। तस्यासुरा विशस्त इम आसत इति कुसीदिन उपदिशति ।२०। असुरविद्या वेदः सो ऽयमिति मायां कांचित्कुर्यात् ।२१। मत्स्यः सांमद इत्यष्टमे ।२२। तस्योदकचरा विशस्त इम आसत इति मत्स्यान्मत्स्यविदो वोपदिशति ।२३। इतिहासवेदो वेदः सो ऽयमितीतिहासमाचक्षीत ।२४। तार्क्ष्यो वैपश्यत इति नवमे ।२५। तस्य वयांसि विशस्तानीमान्यासत इति वयांसि ब्रह्मचारिणो वोपदिशति ।२६। पुराणवेदो वेदः सो ऽयमिति पुराणमाचक्षीत ।२७। धर्म इन्द्र इति दशमे ।२८। तस्य देवा विशस्त इम आसत इति यूनो ऽप्रतिग्राहकाञ्श्रोत्रियानुपदिशति ।२९। सामवेदो वेदः सो ऽयमिति साम गायात् ।३०। सर्वान्वेदानाचष्टे ।३१। सर्वाणि राज्यानि ।३२। सर्वा विशः ।३३। सर्वं वा अश्वमेध. ।३४। सर्वेण सर्वमाप्नवानीति ।३५। तद्यत्पुनः पुनः परिप्लवते तस्मात्पारिप्लवम् ।३६। ॥ २॥

एकविंशतिर्यूपा एकविंशत्यरत्नय. ।१। अष्टौ बैल्वा दश खादिरा. ।२। पैतुद्रवा उपस्थावानौ ।३। राज्जुदालो ऽग्निष्ठ. ।४। एकविंशतिरग्नीषोमीयाः ।५। तेषां समान चरणम् ।६। गोतमस्य चतुरुत्तरस्तोमः सुत्यानां प्रथममहः ।७। तेनेमं लोकमाप्नोति ।८। एकविंशस्तोम द्वितीयम् ।९। एकविंशो वा एष य एष तपति । तदेनं स्वेन रूपेण समर्धयति ।१०। एतस्मादयो निसृष्टः ।११। तदेतदृचाभ्युदितम् ।

सूरादश्वं वसवो निरतष्टेति ।१२।

अश्वो गोमृगो ऽजस्तूपरस्ते प्राजापत्याः ।१३। गौरो गवयः शरभ उष्ट्रो मायुः किंपुरुष इत्यनुस्तरणाः ।१४। पशवश्चैकविंशतिरेकविंशतिरेकविंशतये चातुर्मास्यदेवताभ्यः ।१५[15]। एता वै सर्वा देवता यच्चातुर्मास्यदेवताः ।१६। सर्वासामेव देवतानां प्रीत्यै ।१७[16]। अलंकृतमश्वमास्तवमवघ्रापयन्ति ।१८[17]। सुगव्यं न इत्यनवजिघ्रति[18] यजमानं वाचयेत् ।१९[19]। अग्रेण यूपं तिष्ठन्तं यदक्रन्द इत्येकादशभिरप्रणवाभिः ।२०। समिद्धो अञ्जन्नित्याप्रियः ।२१। अध्रिगो इति परिशिष्य मा नो मित्र इति सूक्तम् ।२२। उत्तमे चोत्तरस्याप्रणुवन् ।२३। चतुस्त्रिंशदिति पुरस्तादध्रीणाम् ।२४। अथास्यायोपस्तृणन्ति वासो ऽधीवासं हिरण्यमिति ।२५। तदेतदृचाभ्युदितम् ।

यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मा इति ।२६।

अथाश्वं मेध्यमालभन्ते ।२७। पर्यङ्ग्यान्वह्नारण्यान् ।२८। पूष्णो ललाटे ।२९। तदेतदृचाभ्युदितम् ।

अत्रा पूष्णः प्रथमो भाग एतीति ।३०।

ऐन्द्रापौष्णः श्यामो नाभ्याम् ।३१। तदेतदृचाभ्युदितम् ।

इन्द्रापूष्णोः प्रियमप्येति पाथ इति ।३२।

संज्ञप्याय महिषीमुपनिपातयन्ति ।३३। तावधीवासेन संप्रोर्णुवते ।३४। तौ यजमानो ऽभिमेथति ।३५।

उत्सक्थ्योरव गुदं धेह्यञ्जिमञ्जिमा भर ।
यः स्त्रीणां जीवभोजनः ॥ इति ।३६।

तं न कश्चन प्रत्यभिमेथति ।२७। ॥२॥

माता च ते पिता च ते ऽग्रे वृक्षस्य क्रीलतः ।

प्र तिलामीति ते पिता गभे मुष्टिमतंसयत् ॥

इत्येनां होताभिमेथति ।१।

ऊर्ध्वामेनामुच्छ्रयताद्गिरौ भारं हरन्निव ।

अथास्यै मध्यमेजतु शीते वाते पुनन्निव ॥

इति ब्रह्मा वावाताम् ।२। यदस्या अंहुभेद्या इत्युद्गाता परिवृक्ताम् ।३।

यद्धरिणो यवमत्ति न पुष्टं बहु मन्यते ।

शूद्रा यदर्यजारा न पोषाय धनायति ॥

इत्यध्वर्युः पालागलीम् ।४। अश्वपालानां समानजातीयाः शतंशत-मनुचर्यस्ताः प्रत्यभिमेथन्ति ।५।

यियस्यत इव ते मनो होतर्मा त्वं वदो बहु ।

ऊर्ध्वमेनं। यद्देवासो ललामगुं। शूद्रो यदर्यजायाः पतिरिति प्रत्यभिमेथने विकारः ।६। सदसि ब्रह्मोद्यम् ।७। होताध्वर्युं पृच्छति। द्वितीयया प्रत्याह। तृतीयया पृच्छति। चतुर्थ्या प्रत्याह ।८। ॥४॥

किं स्वित्सूर्यसमं ज्योतिः किं समुद्रसमं सरः ।

कः स्वित्पृथिव्यै वर्षीयान्कस्य मात्रा न विद्यते ॥ ।१।

ब्रह्म सूर्यसमं ज्योतिर्द्यौः समुद्रसमं सरः ।

इन्द्रः पृथिव्यै वर्षीयान्गोस्तु मात्रा न विद्यते ॥ ।२।

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः ।

किं स्विद्धिमस्य भेषजं किं स्विदावपनं महत् ॥३॥

सूर्य एकाकी चरति चन्द्रमा जायते पुनः ।

अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥४॥ इति ।१[4]।

ब्रह्मोद्गातारं पृच्छति । द्वितीयया प्रत्याह । तृतीयया पृच्छति ।

चतुर्थ्या प्रत्याह ।२[6]। ॥५॥

पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसा जगन्थ ।

केषु विष्णुस्त्रिषु पदेष्विष्टः केषु विश्वं भुवनमा विवेश ॥१[1]॥

अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वं भुवनमा विवेश ।

सद्यः पर्येमि पृथिवीमुत द्यामेकेनाङ्गेन दिवो अस्य पृष्ठम् ॥२[2]॥

केष्वन्तः पुरुष आ विवेश कान्यन्तः पुरुषे अर्पितानि ।

एतद्ब्रह्मन्नुप वल्हामसि त्वा किं स्विन्नः प्रतिवोचास्यत्र ॥३[3]॥

पञ्चस्वन्तः पुरुष आ विवेश तान्यन्तः पुरुषे अर्पितानि ।

एतत्त्वात्र प्रति मन्वानो अस्मि न मायया भवस्युत्तरो मत् ॥४॥ इति ।१[4]।

पृच्छामि त्वा परमन्तं पृथिव्या इति यजमानं पृच्छति ।२[5]। उत्त-

रया प्रत्याह ।३[6]। ॥६॥

सुभूः स्वयंभूः प्रथममन्तर्महत्यर्णवे ।

दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः ॥

इति महिम्नः पुरोनुवाक्या ।१। होता यक्षत्प्रजापतिमिति प्रैषः ।२।

प्रजापते न त्वदिति याज्या ।३। प्राजापत्यस्य वपया चरित्वा तद-

न्वन्या वपा जुहुयुरिति हैक आहुः । प्रजापतिं वा अन्वन्या देव-

तास्तदेना यथायथं प्रीणातीति ।४। ऐन्द्रस्य वा ।५। वैश्व-

देवस्य वा ।६। किमुत त्वरेरन्निति ह स्माहेन्द्रोतः शौनकः ।७।

नाना नानादेवताभिः प्रचरेयुः ।८। सहसह समानदेवताभि-

र्

रथ्यवत्याभिः । ६। नाना ष्यवत्याभिः । १०। तदेना यथायथं
प्रीणातीति । ११। उत्तरस्य महिम्नो याज्यापुरोनुवाक्ये विपर्य-
स्येत् । १२। उभे ऐकाहिकं च पाङ्क्तं चाज्ये संशंसेत् । १३। य
ऐकाहिके च पाङ्क्ते चाज्ये कामस्तयोरुभयोराप्त्यै । १४। उभावै-
काहिकं च बार्हतं च प्रउगौ संप्रवयेत् । १५। य ऐकाहिके च
बार्हते च प्रउगे कामस्तयोरुभयोराप्त्यै । १६। ॥ ७॥

महानाम्न्यः पृष्ठं भवन्ति । १। सर्वं वै तद्यन्महानाम्न्यः । २।
सर्वमश्वमेधः । ३। सर्वेण सर्वमाप्नवानीति । ४। यानि पाद्यमाह्नि-
कानि निष्केवल्यमरुत्वतीययोः सूक्तानि तानि पूर्वाणि शस्त्वैकाहि-
कयोर्निविदो दधाति । ५। प्रतिष्ठा वा एकाहः । ६। प्रतिष्ठित्या
एव । ७। सहस्रं वा मध्यन्दिने । ८। छन्दश्छन्दसस्त्वारिंशतं
चत्वारिंशतं मरुत्वतीये । ९। ते द्वे अशीतिशते । १०। सप्तविंश-
तिशतानि निष्केवल्ये । ११। तत्सहस्रम् । १२। सर्वं वै तद्यत्सहस्रम्
। १३। सर्वमश्वमेधः । १४। सर्वेण सर्वमाप्नवानीति । १५। यानि
पाद्यमाह्निकानि वैश्वदेवाग्निमारुतयोः सूक्तानि तानि पूर्वाणि शस्त्वै-
काहिकेषु निविदो दधाति । १६। प्रतिष्ठा वा एकाहः । १७।
प्रतिष्ठित्या एव । १८। उक्थ्यं संतिष्ठते । १९। तेनान्तरिक्षलोक-
माप्नोति । २०। सर्वस्तोमोऽतिरात्र उत्तममहः । २१। सर्वं वै
सर्वस्तोमोऽतिरात्रः । २२। सर्वमश्वमेधः । २३। सर्वेण सर्वमाप्न-
वानीति । २४। तेनामुं लोकमाप्नोति । २५। द्वितीयादाभिप्लविका-
च्छस्त्रम् । २६। एतेन हैन्द्रोत. शौनको जनमेजयं पारिक्षितं
याजयां चकार । २७। तदुतैषापि यज्ञगाथा गीयते । २८। ॥ ८॥

आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम् ।

अबध्नादश्वं सारङ्गं देवेभ्यो जनमेजयः ॥ इति ।१।

एते एव पूर्वे अहनी । ज्योतिरतिरात्रस्तेनोग्रसेनम् ।२। गोस्तेन भीमसेनम् ।३। आयुस्तेन श्रुतसेनम् ।४। सर्वे पारिक्षितीयाः ।५। तदुतैषापि यज्ञगाथा गीयते ।६।

पारिक्षिता यजमाना अश्वमेधैः परोवरम् ।

अजहुः पापकं कर्म पुण्याः पुण्येन कर्मणा ॥ इति ।७।

अभिजित्तेन ह ऋषभो याज्ञतुर ईजे ।८। तदुतैषापि यज्ञगाथा गीयते ।९।

ऋषभे ऽश्वेन यजति पुरा याज्ञतुरे नृपे ।

अमाद्यदिन्द्रः सोमेन ब्राह्मणाश्चेप्सितैर्धनैः ॥ इति ।१०।

विश्वजित्तेन ह पर आह्लार ईजे वैदेहः ।११। तदुतैषापि यज्ञगाथा गीयते ।१२।

आह्लारस्य परस्यादो ऽश्वं मेध्यमबध्नत ।

हिरण्यनाभः कौसल्यो दिशः पूर्णा अमंहत ॥ इति ।१३।

महाव्रतमतिरात्रस्तेन ह मरुत्त आविक्षित ईजे ।१४। तदुतैषापि यज्ञगाथा गीयते ।१५।

मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे ।

आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासदः ॥ इति ।१६।

ततो हास्य तद्देवताः सभासदो बभूवुः ।१७। प्राची दिग्घोतुः ।१८। दक्षिणा ब्रह्मणः ।१९। प्रतीच्यध्वर्योः ।२०। उदीच्युद्गातुः ।२१। यदन्यद्भूमेः पुरुषेभ्यश्चाब्राह्मणानां स्वम् ।२२। अत्रैव होत-

काणाम् ।२३। मध्ये तु यजेत ।२४। पञ्चपशुर्विंशाखयूपः ।२५। संवत्सरस्तुपशवः ।२६। पलाश्रेया वसन्ते ।२७। ऐन्द्रा ग्रीष्मे ।२८। मारुताः पार्जन्या वा वर्षासु ।२९। मैत्रावरुणाः शरदि ।३०। बार्हस्पत्या हेमन्ते ।३१। ऐन्द्रावैष्णवाः शिशिरे ।३२। ॥८॥

प्रजापतिरश्वमेधेनेष्ट्वा पुरुषमेधमपश्यत्[1] तस्य यदनाप्तमश्वमेधेनासीत्तत्सर्वं पुरुषमेधेनाप्नोत्[2] तथो एवैतद्यजमानो यत्पुरुषमेधेन यजते यदस्यानाप्तमश्वमेधेन भवति तत्सर्वं पुरुषमेधेनाप्नोति ।१[3]। सर्वमाश्वमेधिकम् ।२[4]। उपजनश्च ।३[5]। अथाग्नये कामाय दात्रे पथिकृत इति हवींषि ।४[6]। अग्निर्वै कामो देवानामीश्वरः ।५। सर्वेषामेव देवानां प्रीत्यै ।६[7]। अग्निर्वै दाता स एवास्मै यज्ञं ददाति ।७[8]। अग्निर्वै पथिकृत्स एवैनं पुनर्यज्ञपथमपिपाथयति ।८[9]। ब्राह्मणं क्षत्रियं वा सहस्रेण शतास्त्रेनावक्रीय संवत्सरायोत्सृजन्ति[10] सर्वकामिनमन्यत्र ब्रह्मचर्यात् ।८। तथा चैवानुरक्षन्ति ।१०[11]। अथानुमतये पथ्यायै स्वस्तये ऽदितय इति संवत्सरं हवींषि ।११[12]। सावित्रैर्विपर्यासम् ।१२[13]। पारिप्लवीयैर्नाराशंसानि ।१३[14]। अनुमत्यानुमतो ऽनेन यज्ञेन यजा इति ।१४[15]। वाग्वै पथ्या स्वस्तिः स्वस्त्ययनमेव तद्यज्ञे यजमानाय करोति ।१५[16]। इयं वा अदितिः प्रतिष्ठा वा अदितिरस्यामेवैनं तददीनायामन्ततः प्रतिष्ठापयन्ति ।१६[17]। ॥१०॥

शौनःशेपं प्रथमम् ।१। यथा शुनःशेप आजीगर्तिर्यूपे नियुक्तो मुमुचे ।२। प्रथमे च सूक्ते निगदेत् ।३। काक्षीवतं द्वितीयम् ।४। यथा कक्षीवानौशिजः स्वनये भावयव्ये सनिं ससान ।५।

उत्तमे च सूक्ते निगदेत् ।६। श्यावाश्वं तृतीयम् ।७। यथा श्यावाश्व आर्चनानसो वैददश्वौ सनिं ससान ।८। के ष्ठा नर इति च सूक्तम् ।९। भारद्वाजं चतुर्थम् ।१०। यथा भरद्वाजो वृबौ तक्षिण प्रस्तोके च साञ्जये सनिं ससान ।११। अधि वृबुः प्रस्तोक इति चतस्रः ।१२। वासिष्ठं पञ्चमम् ।१३। यथा वसिष्ठः सुदासः पैजवनस्य पुरोहितो बभूव ।१४। द्वे नप्तुरिति च सूक्तम् ।१५। मैधातिथं षष्ठम् ।१६। यथासङ्गः प्लायोगिः स्त्री सती पुमान्बभूव ।१७। स्तुहिस्तुहीति च सूक्तम् ।१८। वात्स्यं सप्तमम् ।१९। यथा वत्सः काण्वस्तिरिन्दिरे पारशव्ये सनिं ससान ।२०। शतमहं तिरिन्दिर इति च सूक्तम् ।२१। वाशमष्टमम् ।२२। यथा वशो ऽश्व्यः पृथुश्रवसि कानीते सनिं ससान ।२३। आ स एतु य ईवदेति च सूक्तम् ।२४। प्रास्कण्वं नवमम् ।२५। यथा प्रस्कण्वः पृषध्रे मेध्ये मातरिश्वनि सनिं ससान ।२६। भूरीदिन्द्रस्येति च सूक्ते ।२७। नाभानेदिष्ठं दशमम् ।२८। यथा नाभानेदिष्ठो मानवो ऽङ्गिरः सु सनिं ससान ।२९। ये यज्ञेनेति च सूक्तम् ।३०। नाराशंसानि भवन्ति ।३१। पुरुषो वै नाराशंसः ।३२। तदेनं स्वेन रूपेण समर्धयति ।३३। ॥१२॥

पञ्चविंशतिर्यूपाः ।१। पञ्चविंशत्यरत्नयः ।२। दश बैल्वा दश खादिराः ।३। पैतुद्रवा उपस्थावानौ ।४। रज्जुदालो वा मारलो ग्रिष्ठः ।५। पञ्चविंशतिरग्नीषोमीयाः ।६। तेषां समानं चरणम् ।७। आश्वमेधिकानां सुत्यानां प्रथमे चोत्तमे च ।८। पञ्चविंशस्तोमं द्वितीयम् ।९। पञ्चविंशो वै पुरुषः ।१०। तदेनं स्वेन

रूपेण समर्धयति ।११। पुरुषो गोमृगो ऽजस्तूपरस्ते प्राजापत्याः ।१२। गौरो गवयः शरभ उष्ट्रो मायुः किंपुरुष इत्यनुस्तरणाः ।१३। पशवश्च पञ्चविंशतिःपञ्चविंशतिः पञ्चविंशतये चातुर्मास्यदेवताभ्यः ।[14]१४। एता वै सर्वा देवता यच्चातुर्मास्यदेवताः ।१५। सर्वासामेव देवतानां प्रीत्यै ।[15]१६। अलंकृतं पुरुषमाश्वमवघ्रायो- दीरतामवर इत्येकादशभिरप्रणवाभिः ।[16]१७। अग्निर्मृत्युरित्याग्नेयः ।[17]१८। मैनमग्न इत्यभिगरो तथैव ।[18]१९। अथ पुरुषायोपस्तृणन्ति कौशं तार्प्यमारुणमांशवमिति ।[19]२०। संज्ञप्तं यामेन साम्नोद्गातो- पतिष्ठते ।[20]२१। ॥१२॥

पुरुषेण नारायणेन होता ।१। अथ हैनमृत्विज उपतिष्ठन्ते परेयिवांसमिति. द्वाभ्यांद्वाभ्यां होता ब्रह्मोद्गाताध्वर्युः ।२। अथ यजमानं भिषज्यन्ति ।३। उत देवा अवहितं मुञ्चामि त्वा हविषा जीवनाय कमक्षीभ्यां ते नासिकाभ्यां वात आ वातु भेषजमित्यनुपूर्वं सूक्तैः ।४। प्र तार्यायुरिति नैर्ऋतीनामेकैकया ।५। तिसृभिस्तिसृभिः शंतातीयानाम् ।६। सञ्ज्ञप्ताय महिषीमुपनिपातयन्ति ।७। तावधीवासेन संप्रोर्णुवते ।८। तौ तथैव यजमानो ऽभिमेथति ।९। परिवृक्ता अग्रपाणा यो ऽनाकाचो न सेष्ठे यस्य रोमशमित्यभिमेथिन्यः ।१०। उत्तराभिरुत्तराभिः प्रत्यभिमेथन्ति ।११। पूर्वयाध्वर्युः ।१२। उदीर्ष्व नार्युदीर्ष्वातः पतिवत्युदीर्ष्वातो विश्वावसो ऽभ्यन्वतीत्युत्थापिन्य. ।१३। मनो न्वसुनीते यन्ने यमं यथा युगमिति तृचैरनुमन्त्रयते ।१४। ब्रह्मानुवाचयति ।१५। सदसि ब्रह्मवद्यम् ।१६। गावो यत्रमिति होताध्वर्युं पृच्छति ।[17] द्वितो-

यजमाने ।३। मरुतामिति वैश्ये ।४। तस्मिन्नुपविश्याविद्धे रथचक्रे ऽसंप्रेषितस्त्रिः साम गायति ।५। अपि वा जपेत्त्रिः ।६।

आविर्मर्या आ वाजं वाजिनो अग्मन्।

देवस्य सवितुः सवे स्वर्गं अर्वन्तो जयत ॥

इति च।७। तेनैव मन्त्रेण प्रत्यवरोहति।८। अरुहमिति प्रत्यवरोहणे विकारः।९। हिरण्मयेन पात्रेण मधुग्रहस्य प्राणभक्षं भक्षयित्वोपयच्छते पात्रम्।१०। दिवमयं यजमानो रोहति स्वर्गमयं यजमानो रोहतीति वा ।११। यूपं रोहन्तमूषपुटैरपयन्ति ।१२। ॥१७।

राजसूये ऽभिषिक्तो यजमानो ब्रह्मन्निति पञ्चकृत्वो ब्रह्माणमामन्त्रयते ।१। त्वं ब्रह्मासीत्येवं सर्वत्र प्रतिगृणोति ।२। सवितासि सत्यप्रसव इति प्रथमे ।३। इन्द्रो ऽसि विश्वौजा इति द्वितीये ।४। वरुणो ऽसि धर्मपतिरिति तृतीये ।५। रुद्रो ऽसि सुशेव इति चतुर्थे ।६। त्वं ब्रह्मासीत्येव पञ्चमे ।७। मनसास्मै हिरण्मयौ प्रवर्त्तौ ददाति ।८। तौ मनसा प्रतिगृह्णाति ।९। मेध्य ऋत्विजो रशना धारयन्तो ऽश्वं हृदयोः संस्यन्दिनोः स्नापन्त ।१०। अनेनायमश्वेन मेध्येन राजेष्ट्वा विजयतामब्रह्मण्युक्तिया इति ।११। यदि चैनं यजमानेन पृष्ठे ऽभिमर्शयेयुरहं च.. चेति जपेत् ।१२। संस्थिते मध्यमे ऽहन्याहवनीयमभितो दिक्षु प्रासादान्विमिन्वन्ति ।१३। तानुपरिष्टाद्व्यनिव्याधैः प्राकारैः परिघ्नन्ति ।१४। सर्वौषधिमृत्विजो रात्रौ जुह्वति ।१५। प्रातरनुवाकवेलायां प्रत्यवरोहन्ति ।१६। परिकर्मिण आरोहन्ति । ते जुह्वत्योदयात् ।१७। अथाचेयं सहस्रेणावक्रीय यः शुक्लः पिङ्गाक्षो

वलिनस्तिलकावलो विक्लिधः खण्डो बण्डः खलतिस्तमादाय नदीं यन्ति ।१८। अथैनमुदके ऽभिप्रगाह्य यदास्योदकं मुखमास्यन्देतायास्मा अध्वर्युर्मूर्धन्यश्वतेदनिं जुहोति भ्रूणहत्यायै स्वाहेति ।१९। अथ तं नि.षेधन्ति ।२०। निःषिद्धपाप्मानो ऽपपाप्मा भवन्तीति।२१। ॥१८॥

अथात एकोत्तरा अहीनाः ।१। यदेकविधं तदेकरात्रेणाप्नोति ।२।॥१९॥

अथ यद्द्विविधं तद्द्विरात्रेण ।१। द्वे वा अहोरात्रे द्वे द्यावापृथिवी द्वे इमे प्रतिष्ठे। तद्यत्किं च द्विविधमधिदैवतमध्यात्मं तत्सर्वमेनेनाप्नोति ।२। अव्यक्तो ऽहःसंघातो द्व्यरात्रमधिकुर्वीत ।३। आदितो ऽवच्छेदः ।४। अन्त्यस्यातिरात्रभावः ।५। अन्वहं दक्षिणा ।६। अदीक्षिता दीक्षितं याजयन्ति ।७। मासापवर्गा अहीनाः ।८। सुत्यप्रतिष्ठायै दीक्षा विवर्धयेयुः ।९। नासंवत्सरदीक्षिताय महाव्रतं शंसेत् ।१०। नासंवत्सरभृतेऽाखाय ।११। नित्यमाग्निष्टोमिकं प्रथममहः स्यादिति हैक आहुः ।१२। मुख्यो वा एष यज्ञक्रतुर्यदग्निष्टोमः ।१३। यज्ञमुखस्यानवराध्यै ।१४। संपातौ तु निविद्धाने ।१५। ततं मे यज्ञेन वर्धतेत्यार्भवजातवेदसीये द्वितीयस्य ।१६। त्रिरात्रे च ।१७। अभिजिद्विश्वजितौ [18] चतुर्विंशमहाव्रते [19] गोआयुषी वा ।१८। यद्द्विविधं तद्द्विरात्रेणाप्नोति ।१९। ॥२०॥

अथ यत्त्रिविधं तत्त्रिरात्रेण ।१। त्रयो वा इमे लोकास्त्रीणि ज्योतींषि त्रिषवणो यज्ञः। तद्यत्किं च त्रिविधमधिदैवतमध्यात्मं

तत्सर्वमेनेनाप्नोति ।२। त्रिवृत्प्रभृतयस्त्रयः स्तोमाः प्रथमस्याह्नः ।३। पञ्चदशप्रभृतयो द्वितीयस्य ।४। षोलशं ब्रह्मण आज्यम् ।५। एकविंशप्रभृतयस्तृतीयस्य ।६। अग्निष्टोमः प्रथममहः ।७। उक्थ्यं द्वितीयम् ।८। अतिरात्रस्तृतीयम् ।९। रथन्तरं पृष्ठं प्रथमस्य ।१०। वामदेव्यं द्वितीयस्य ।११। बृहत्तृतीयस्य ।१२। अयं वै लोको रथन्तरम् ।१३। अन्तरिक्षलोको वामदेव्यम् ।१४। असौ लोको बृहत् ।१५। एतेषामेव लोकानामाप्त्यै ।१६। समूळ्हादाज्यानि ।१७। मध्यमाच्छन्दोमात्त्रैष्टुभः प्रउगो द्वितीयस्याह्नः ।१८। त्र्यर्यमेति मरुत्वतीयम् ।१९। यद्द्वितीयस्याह्नो मरुत्वतीयं तत्तृतीये ऽहनि करोति ।२०। तदिमांल्लोकान्संभोगिनः करोति तस्माद्धीमे लोका अन्योऽन्यमभिभुञ्जन्तीति ।२१। अहनी वा विपर्यस्येत् ।२२। कस्तमिन्द्रेति सामप्रगाथो निष्केवल्यस्य ।२३। मो षु त्वा वाघतश्चनेति स्तोत्रियानुरूपौ प्रगाथौ मैत्रावरुणस्योद्धृत्य द्विपदाम् ।२४। कं नव्य इति कद्वान् ।२५। द्वितीयादह्नः सूक्ते ।२६। अस्तावि मन्मोभयं शृणवदिति ब्राह्मणाच्छंसिनः ।२७। कदू न्वस्येति कद्वान् ।२८। आयन्त इव सूर्यं ग्रभ्णू षु प्राचीपत इत्यच्छावाकस्य ।२९। यदिन्द्र प्रागपागुदगिति कद्वान् ।३०। कयाशुभीयतदिदासीये वा निविद्धाने द्वैतीयस्य ।३१। अनुचरप्रभृति पष्ठात्तृतीयसवनम् ।३२। ॥२१॥

एषो वै सहस्रस्तोत्रियो येन प्रजापतिरयजत ।१। एतमेव गर्गत्रिरात्र इत्याचक्षते ।२। द्वितीयो ऽश्वत्रिरात्रः ।३। मध्यमे ऽहन्यश्वमालभन्ते ।४। अभिगवश्वस्तोमीयम् ।५। तृतीयस्का-

न्दोमः पवमानः ।६। पराकश्चतुर्थः ।७। पृष्ठ्यस्तोमैस्त्रिष्टोमानि त्रीणि ।८। एष उ पराकः ।९। एतेनास्माल्लोकात्प्रजिगांसन्यजेत ।१०। प्रतिष्ठाकामस्य द्वैपराक इत्याङ्गः ।११। या ह्येका जगती ते द्वे गायत्र्यौ ।१२। अयं लोको गायत्रस्तदस्मिंल्लोके प्रतितिष्ठति प्रतिष्ठायामप्रच्युत्याम् ।१३। ज्योतिर्गौरायुरिति कुसुरुबिन्दुत्रिरात्रः ।१४। त्रीणि शतानि प्रथमे ऽहन्ददाति ।१५। त्रयस्त्रिंशतं पञ्च कलाः ।१६। एवं द्वितीय एवं तृतीये ।१७। तत्कला सहस्र-तम्या गोः परिम्रियते ।१८। तामन्यया गवा निष्क्रीयामाकुर्वीत ।१९। अमाकार्यत्याङ्गऽयजमानस्यैव संभृत्या इति ।२०। यायन्तीनां प्रथमोपरमेत्सा स्यादित्याङ्गः ।२१। तदप्रच्युत्यै रूपम् ।२२। या संतिष्ठन्तीनां प्रथमोपविशेत्सा स्यादित्याङ्गः ।२३। तत्प्रतिष्ठायै रूपम् ।२४। यायथैना सा स्यादित्याङ्गः ।२५। तत्प्रजात्यै रूपम् ।२६। या सत्तमा सा स्यादित्याङ्गः ।२७। सत्तमाम-माकरवा इति ।२८। सर्ववेदत्रिरात्रे विशुक्रियो ब्रह्मा यस्यो-भयतःश्रोत्रियास्त्रिपुरुषम् ।२९। यत्त्रिविधं तत्त्रिरात्रेणाप्नोति।३०। ॥ २२ ॥

अथ यच्चतुर्विधं तच्चतूरात्रेण ।१। चतुष्टया वै पशवः ।२। अथो चतुष्पादाः ।३। तद्यत्किं च चतुर्विधमधिदैवतमध्यात्मं तत्सर्व-मेतेनाप्नोति ।४। त्रिवृत्प्रथममहः पञ्चदशं द्वितीयं सप्तदशं तृतीय-मेकविंशं चतुर्थम् ।५। ते वा एते चत्वारः स्तोमा नानावीर्या यच्चक्रतवस्तेन ह्यस्य चत्वारो वीरा नानावीर्याः प्रजायामाजायन्ते य एवं वेद ।६। एषो न्वै जमदग्नेश्चतूरात्रः ।७। अथैतात्रे-

चतुर्वीरः । ८। त्रिवृत्प्रथमस्याह्नः प्रातःसवनं पञ्चदशो माध्यन्दिनः सप्तदशं तृतीयसवनम् ।९। पञ्चदशं द्वितीयस्याह्नः प्रातःसवनं सप्तदशो माध्यन्दिन एकविंशं तृतीयसवनम् ।१०। सप्तदशं तृतीयस्याह्नः प्रातःसवनमेकविंशो माध्यन्दिनस्त्रिणवं तृतीयसवनम् ।११। एकविंशं चतुर्थस्याह्नः प्रातःसवनं त्रिणवो माध्यन्दिनस्त्रयस्त्रिंशं तृतीयसवनम् ।१२। ते वा एकैकं स्तोममुत्सृजन्तो यन्त्येकैकं प्रजनयन्तः ।१३। तेन ह्यस्य चत्वारो वीरा नानावीर्याः प्रजायामाजायन्ते। वीरो हि स्तोमः ।१४। तस्य प्रस्तम् ।१५। रथन्तरं पृष्ठं प्रथमस्य ।१६। सजनीयं निष्केवल्यम् ।१७। कयाशुभीयतदिदासीये वा निविद्धाने द्वितीयस्य ।१८। तृतीये वैरूपपृष्ठे वैराजात्तृतीयसवनम् ।१९। चतुर्थे वैराजपृष्ठे वैरूपात्तृतीयसवनम् ।२०। प्राकृतो वातिरात्रः ।२१। तं वैश्वानर इत्याचक्षते ।२२। अभिजिदाभिप्लविकानां चतुर्थः ।२३। विश्वजिदितरेषाम् ।२४। वैश्वानरो महाव्रतं वा ।२५। यच्चतुर्विधं तच्चतूरात्रेणाप्नोति ।२६। ॥२३॥

अथ यत्पञ्चविधं तत्पञ्चरात्रेण ।१। पञ्चपदा पङ्क्तिः पाङ्क्तो वै यज्ञस्तद्यत्किं च पञ्चविधमधिदैवतमध्यात्मं तत्सर्वमेनेनाप्नोति ।२। त्रिवृत्प्रथममहः पञ्चदशं द्वितीयमेकविंशं तृतीयं सप्तदशं चतुर्थं चतुष्टोमो ऽतिरात्र उत्तममहः ।३। तदा इदमासामेव रूपेण ।४। इयमेव त्रिवृतो रूपेण ।५। इयं पञ्चदशस्य ।६। इयमेकविंशस्य ।७। इयं सप्तदशस्य ।८। अयं चतुष्टोमस्यातिरात्रस्य ।९। तद्यदेकविंशस्तोमानां वर्षिष्ठस्तस्मादियमासां वर्षिष्ठा ।१०। अथ

यच्चतुष्टोमो ऽतिरात्र उत्तममहस्तस्मादयमङ्गुष्ठः सर्वा अङ्गुलीः प्रत्येति ।११। तस्य ग्रहणम् ।१२। व्यहश्चतुर्थमाभिप्लविकम् ।१३। पञ्चमस्य च द्वे सवने पष्ठात्पृष्ठ्यस्य पञ्चमे तृतीयसवनम् ।१४। पञ्च वाभिप्लविकानि ।१५। उत्तमात्पञ्चमे तृतीयसवनम् ।१६। अभिजिदाभिप्लविकानां चतुर्थः ।१७। विश्वजिदितरेषाम् ।१८। वैश्वानरस्य महाव्रतं वा ।१९। उभयोर्वाभिजिच्चतुर्थो विश्वजित्पञ्चमः ।२०। यत्पञ्चविधं तत्पञ्चरात्रेणाप्नोति ।२१। ॥२४॥

अथ यत्षड्विधं तत्षड्रात्रेण ।१। षड्वा ऋतवः षट्स्तोमास्तद्यत्किं च षड्विधमधिदैवतमध्यात्मं तत्सर्वमेनेनाप्नोति ।२। व्यहो ऽभिजिदिद्यजितौ वैश्वानरस्य महाव्रतं वा ।३। अनन्तरं वाभिजितो महाव्रतम् ।४। विश्वजित्षष्ठः ।५। पृष्ठ्यो ऽभिप्लवो वा ।६। यत्षड्विधं तत्षड्रात्रेणाप्नोति ।७। ॥२५॥

अथ यत्सप्तविधं तत्सप्तरात्रेण ।१। सप्त प्राणाः सप्त छन्दांसि तद्यत्किं च सप्तविधमधिदैवतमध्यात्मं तत्सर्वमेनेनाप्नोति ।२। व्यहो ऽभिजिदिद्यजितौ महाव्रतं वैश्वानरस्य ।३। अथ संवत्सरस्य प्रवल्हः ।४। प्राकृतो ऽग्निष्टोमश्चतुर्विंशमभिजिदिषुर्वाग्विश्वजिन्महाव्रतं वैश्वानरस्य ।५। एषो न्वै सप्तर्षीणां सप्तरात्रः ।६। एतमेव जनकसप्तरात्र इत्याचक्षते ।७। अभिजिदाभिप्लविकानां सप्तमः ।८। विश्वजिदितरेषाम् ।९। वैश्वानरो महाव्रतं वा ।१०। यत्सप्तविधं तत्सप्तरात्रेणाप्नोति ।११। ॥२६॥

अथ यदष्टविधं तदष्टरात्रेण ।१। अष्टौ वसवो ऽष्टाक्षरा गायत्री तद्यत्किं चाष्टविधमधिदैवतमध्यात्मं तत्सर्वमेनेनाप्नोति ।२। अभि-

जिदाभिप्लविकानां सप्तमः ।३। विश्वजिदितरेषाम् ।४। वैश्वानरस्य महाव्रतं वा ।५। उभयोर्वाभिजित्सप्तमो विश्वजिदष्टमः ।६। यदष्टविधं तदष्टरात्रेणाप्नोति ।७। ॥२७॥

अथ यन्नवविधं तन्नवरात्रेण ।१। चतस्रो दिशश्चतस्रो ऽवान्तरदिश ऊर्ध्वेयं नवमी दिङ् नवाक्षरा बृहती तद्यत्किं च नवविधमधिदैवतमध्यात्मं तत्सर्वमेनेनाप्नोति ।२। पलङ्गे ऽभिजिद्विश्वजितौ वैश्वानरस्य महाव्रतं वानन्तरं वाभिजितो महाव्रतं विश्वजिन्नवमः ।३। ज्योतिरग्निष्टोमो गौरुक्षय आयुरतिरात्रस्त्रिरेतमुपयन्ति शललीपिशङ्ग इत्याचक्षते ।४। यन्नवविधं तन्नवरात्रेणाप्नोति ।५। ॥२८॥

अथ यद्दशविधं तद्दशरात्रेण ।१। दशाक्षरा विराडन्नं विराट् तद्यत्किं च दशविधमधिदैवतमध्यात्मं तत्सर्वमेनेनाप्नोति ।२। अध्यर्धो ऽभिप्लवो नव वाग्निष्टोमाः ।३। दशरात्रः संस्थाविहृतः ।४। वैश्वानरस्य ।५। एतेन ह जलो जातूकर्ण्य इष्ट्वा त्रयाणां निगुस्थानां पुरोधां प्राप काश्यवैदेहयोः कौसल्यस्य च ।६। तस्य ह तच्छ्वेतकेतुः श्रियमभिध्याय पितरमभ्यूहे पलित यज्ञकामान्यान्वा उ श्रिया यशसा समर्धयितुं वेत्थ नो आत्मानमिति ।७। तं होवाच। मा मैवं पुत्र वोचो यज्ञक्रतुरेव मे विज्ञातो ऽभूत्तमेवैतत्सत्यकामे ब्रह्मबन्धौ व्यजिज्ञासिषि ।८। तदु किल तथैवास [9] यथैवैनं प्रोवाच ।[10] ९। स एष पुरोधाकामस्य यज्ञः ।[11] १०। प्र पुरोधामाप्नोति य एवं वेद ।[12] ११। चतुष्टोमात्समूल्हात्त्रिककुदः प्रस्तम् [13] ।१२। अथ महात्रिककुदस्य ।[14] १३। छन्दोमत्रिककुदस्य ।[15] १४।

अग्निष्टुदिन्द्रस्तुद्वैश्वदेवस्तुत्पृष्ठ्यो वैश्वानरश्च ।१५। पञ्चहो ऽभिजिदि-
श्वजितौ महाव्रतं वैश्वानरश्च ।१६। प्राकृतो ऽग्निष्टोमो नवमो
ऽष्टमो वा विश्वजिद्दशमः ।१७। यद्दशविधं तद्दशरात्रेणाप्नोति
।१८। ॥२८॥

अथ यदेकादशविधं तदेकादशरात्रेण ।१। एकादशाक्षरा त्रिष्टुप्
त्रैष्टुभाः पशवस्तद्यत्किं चैकादशविधमधिदैवतमध्यात्मं तत्सर्वमेते-
नाप्नोति ।२। व्यूढच्छन्दा दशरात्रः ।३। सामूह्निको वा ।४।
वैश्वानरश्च ।५। छन्दोद्रयन्तरपृष्ठो वा ।६। विश्वजिदेकादशः ।७।
तं पौण्डरीक इत्याचक्षते ।८। अयुतं दक्षिणा ।९। अश्वसहस्र-
मेकादशमित्येके ।१०। उक्तो द्वादशाहः ।११। त एते पुरस्ता-
दग्निष्टोमा उपरिष्टादतिरात्रा उत्तरोत्तरिण एकोत्तरा अहीनाः
।१२। उत्तरोत्तरिणीमेव तच्छ्रियं विराजमन्नाद्यमाप्नोति य एवं
वेद य एवं वेद ।१३। ॥२९॥

इति शाङ्खायनश्रौतसूत्रे षोडशो ऽध्यायः समाप्तः।

# ओम्।



अथातो महाव्रतस्य ।१। पुरस्तादेव कतिपयाहेन होता प्रेङ्खफलकमुत्पाटयति ।२। तिष्ठत एवोदुम्बरस्य ।३। पुरस्तादादित्यस्योदयनतः ।४। यदि पुरस्तान्न विद्येताथाप्युत्तरतः ।५। यदि दक्षिणतः ।६। पश्चाद्वा स्यात् ।७। मूले छेदयित्वा प्राङ्गोदङ्वा तिष्ठन्नुत्पाट्य यद्यणुरुदुम्बरः स्यात् ।८। अपि द्वे वा त्रीणि वा फलकानि संदध्युः ।९। तद्वाहुमात्रं प्राग्भवति ।१०। अरत्निमात्रं तिर्यक् ।११। स्तब्धम् ।१२। प्रज्ञाताग्रम् ।१३। तच्चतुर्धान्तेषु वितर्दयति ।१४। अथैतस्य वै वोदुम्बरस्यान्यस्य वा विशाखौ छेदयन्ति ।१५। परःपुरुषे ।१६। वंशं च ।१७। यद्युदुम्बरो न विद्येत यो ऽन्यो वृक्षः फलग्रहिष्णुः कल्याणाभिव्याहारो वा स्यात्तस्यैतदुपकल्पयेत् ।१८। ॥१॥

अथ मौञ्ज्यौ रज्जू कारयन्ति ।१। दृढे ।२। त्रिगुणे ।३। परोद्व्यायामे ।४। एतावद्धोतारमभितः ।५। औदुम्बरीमासन्दीमुद्गात्रे संघ्नन्ति । ६। तस्यै प्रादेशमात्राः पादा भवन्ति ।७। अरत्निमात्राणि शीर्षण्यान्यनूच्यानि।८। तां संदृत्य[9] मौञ्जीभिः स्याभ्याभिर्विवयन्ति द्विगुणाभिः प्रसलविसृष्टाभिः।[10]९। ॥२॥

अथैतां वीणां शततन्त्रीमुपकल्पयन्ति ।१। तस्याः पालाशी सूना भवति ।२। औदुम्बरो दण्डः ।३। अपि वौदुम्बरी सूना

पालाशो दण्डः ।४। तामानडुहेन सर्वरोहितेन चर्मणा बाह्यतो-लोमाभिषीव्यन्ति ।५। तस्यै मूले दण्डं दशधातिविध्यन्ति ।६। तद्दशद्य रज्जूः प्रवयन्ति ।७। ता अग्रे नाना बध्नन्ति ।८। दण्ड-समाधा वीणा शततन्त्री भवति ।९। वेतसशाखा सपलाशा वादिन्युपकृप्ता भवति ।१०। स्वयंकृता वा शरेषीका ।११। घाटकर्करी-रवघटरिकाः काण्डवीणाः पिच्छोरा इति पत्न्य उपकल्पयन्ति ।१२। उपमुखेन पिच्छोरां वादयेत् ।१३। वादनेन काण्डवीणाम् ।१४। तां घाटरीरित्याचक्षते ।१५। या घाटरीं मृदुं वादयेत्साराति: स्यात् ।१६। द्विषन्तं जनयेत् ।१७। ॥३॥

चतुरो दुन्दुभीनध्वर्युः खननमानुपकल्पयति ।१। पूर्वस्यै द्वार्या अभितो द्वारबाहू बहिःसदः सन्धौ खननावामञ्जयति ।२। अपरस्यै द्वार्या अभितो द्वारबाहू अन्तःसदः सन्धौ खननावामञ्जयति ।३। यदि षट् स्युर्दक्षिणार्धे सदस एकमुत्तरार्धे एकम् ।४। मुञ्जानां च कुशानां च कूर्चमध्वर्यवे संस्कुर्वन्ति ।५। तमग्निष्ठ-स्यात्याग्नणाति ।६। अथेतरे दीक्षिताः प्रतिपुरुषं दर्भैः कुर्वते यथा प्रादेशमात्रेणोपरि भूमेः स्युः ।७। अथ या मार्जालीयं पर्येष्यन्त्यो भवन्ति ताभ्यः प्रत्येकं शतावकम्पमानुपकल्पयन्ति ।८। ॥४॥

अथैतमयारथमुपकल्पयन्ति विततवरूथम् ।१। धनुश्च चौरसे-पून् ।२। राजानं वा राजमात्रं वाजेरस्तारम् ।३। यदि राजा वा राजमात्रो वा न विद्येत य एतां श्रियं विद्यात्स एतत्कुर्यात् ।४। उत्तरेणाग्नीध्रं प्राञ्चौ शङ्कू स्थूणे विमिमन्त्याधाय ।५।

तदिलसंवर्तं वोत्करं वा चर्मणाभिवितन्वन्ति । ६ । तन्न सपत्त्रेणातिविध्येत् । ७ । जघनेनाग्नीध्रं बहिर्वेद्यवटं खनन्ति । ८ । तस्मिंस्तस्योपालम्भ्यस्य ऋषभस्य चर्मणा प्राचीनग्रीवेणोदीचीनग्रीवेण वोत्तरतोलोमाभिपीव्यन्ति । ९ । तं तस्यैव लाङ्गूलेन काले भूमिदुन्दुभिमाघ्नन्ति । १० । ॥ ५॥

अथ शूद्रार्यौ स्त्रीपुमांसौ मण्डखलतौ इत्युपकल्पयन्ति । १ । तदेतत्पुराणमुत्सन्नं न कार्यमेतस्मिन्समुपक्लृप्ते । २ । संस्थिते दशमेऽहनि सदोहविर्धानानि समूहन्ति । ३ । आग्नीध्रं पत्नीशालं च । ४ । अथ नवैः कुशैर्वेकलमुपस्तृणन्ति । ५ । कतिपयान्कुशभारान्निदधति प्रातर्हवीभ्यः । ६ । ॥ ६ ॥

अथ महारात्रे महाव्रताय प्रातरनुवाकमुपाकुर्वन्ति । १ । यथा परिसदहमनुब्रूयात् । २ । तस्य पञ्चविंशः स्तोमः । ३ । राजनं पृष्ठम् । ४ । अग्निष्टोमो यज्ञः । ५ । अथैते परिहवणीया भवन्ति त्रिवृत्पञ्चदशः सप्तदश एकविंश इति । ६ । ऐन्द्राग्नो वैकादशिनानां वैकः सवनीयः । ७ । ऐन्द्रश्च ऋषभः प्राजापत्यश्चाज उपालम्भ्यौ । ८ । निरुक्त ऐन्द्रः । ९ । उपांशु प्राजापत्यः । १० । ते यत्र वपासु कृतासु संप्रसर्पन्ति तदेतस्मिन्नेव मिश्रं बहिर्वेदि प्रचाल्यान्तरेण चात्वालोत्करौ तीर्थं तेन प्रपद्योत्तरेणाग्नीध्रीयं धिष्ण्यं पर्याहृत्य पूर्वया द्वारा सदः प्रहृत्यायेणोत्तरेण होतुर्धिष्ण्यं प्राङुपनिदधति । ११ । एवमेव यस्ययस्य बहिर्वेदि भवति यथा संचरः सप्रसर्पणे भवति तयाहृत्योत्तरत उपनिदधति । १२ । तस्य चैष्टुभं प्रातःसवनं स्यादिति पैङ्ग्यं शुष्कभृङ्गारीयम् । १३ । ॥ ७॥

विशोविशो वो अतिथिमित्याज्यम्। १। तस्य द्वादशार्धर्चेण ग्रस्ताग्नि नरो दीधितिभिररण्योरित्येतत्पशुविशत्यृचमुपसन्नमति। २। तदिष्टशस्त्रम्। ३। चैष्टुभं प्रउगं। ४। कुविदङ्ग नमसा ये वृधास इति वायव्यं चैन्द्रवायवं च। ५। मैत्रावरुणं च यया विपुत्रति। ६। क उ श्रवत्कतमो यज्ञियानामित्याग्नेयम्। ७। कथा महामवृधत्कस्य होतुरित्यैन्द्रम्। ८। के वस्त्राता वसव को वरूतेति वैश्वदेवम्। ९। उत स्या नः सरस्वती जुषाणेति सारस्वतम्। १०। स व्याकृत्य। ११। तस्य पञ्च शस्त्रम्। १२। ऐकाहिकं वा प्रातःसवनम्। १३। कृत्स्नं प्रातःसवनम्। १४। ॥ ८॥

अथातो माध्यन्दिनं सवनम्। १। आ त्वा रथं यथोतय इति मरुत्वतीयस्य प्रतिपत्। २। इदं वसो सुतमन्ध इत्यनुचरः। ३। एष एव नित्य एकाहगतेन। ४। असावि सोम जरित माभिवेग इति वासुकं पूर्वं शस्त्वा महाँ इन्द्रो नृवदा चर्षणिप्रा इत्येतस्मिंस्त्रैष्टुभे निविदं दधाति। ५। उभे शक्रे पञ्च माध्येन्। ६। इति न्वा उ मरुत्वतीयम्। ७। ॥ ९॥

अथातो निष्केवल्यम्। १। सन्धिते प्रातःसवने मैत्रावरुणो वाचयेदिति सा स्थिति। २। शक्ते मरुत्वतीय इति पैङ्ग्यम्। ३। जघनेन स्वं धिष्ण्यं पदं च चतुरङ्गुलं च प्रमाय सदपादधौ-चौत्ताय फलकं निधायाथ चतुरङ्गुले उपधाय बहिश्चतुरङ्गुलाभ्यां लेखे लेखयित्वा मैत्रावरुणो वाचयेद्दिर्णं पूर्वमथोत्तरम्। ४। प्राचो योदश्चो योक्त्रिरा उत्किरन्ति। ५। तद्विशाखावत्थायोदीचीत्ताय वशमध्यादधाति। ६। ग्रीष्मा होता मिमीते। ७। यदि सुस्म

स्यादूर्ध्ववाङ्गर्मिमीते ।[11]८। दृढपर्यृष्टे पर्यृषति यथा न व्यथेयाताम् ।[12]९। अथैतत्प्रेङ्खफलकं रज्जुभिश्चतुर्धान्तेषु परिव्ययति यथा न संभ्रश्येत ।[13]१०। उत्तरेण दक्षिणां प्रेङ्खस्थूणां दक्षिणां रज्जुं बध्नन्ति ।[14]११। दक्षिणेनोत्तरां प्रेङ्खस्थूणामुत्तरां रज्जुं बध्नन्ति ।[15]१२। तत्संबाध्य प्रास्यति यथा प्रादेशमात्रेणोपरि भूमेः स्यात् ।[16]१३। तदधस्तात्कुशैः प्राचीनाग्रैश्चोदीचीनाग्रैश्चाभ्युपोहति ।[17]१४। तदभिनिवील्हं पर्यृषति यथा न व्यथेत ।[18]१५। तत्संशाध्योत्तरस्यां प्रेङ्खस्थूणायामपाश्रयति ।[19]१६। तच्छस्ते महत्तीये यथास्थानं स्थापयेत् ।[20]१७। ॥१०॥

अथाध्वर्युर्माहेन्द्रं ग्रहं गृहीत्वेति ।१। अग्रेण होतुर्धिष्ण्यं प्राङुपविशति ।२। तं होताहाध्वर्यं उप नु रमेति ।३। स उत्तरेणोत्तरां प्रेङ्खस्थूणामुत्तरेणाध्वर्युं प्राङुपनिष्क्रम्य पूर्वया द्वाराग्नीध्रं प्रपद्योत्तरेणाग्नीध्रीयं धिष्ण्यं पर्येत्य पश्चात्प्राङुपविश्य दक्षिणं जान्वाच्य स्रुवेणाज्यस्थाल्या उपहत्य जुहोति ।४। ॥११॥

आयुष्मद्गायत्र विश्वायू रथन्तरं सर्वायुर्बृहत्सामायुर्वामदेव्यमत्यायुर्यज्ञायज्ञीयं तेषामहमायुषायुष्मान्भूयासमस्मै प्राणः संचरति प्रजायै हृदयाय कं सर्वा विनुद्य मह्यो मय्यस्तु शरदः शतं स्वाहेति प्रथमाम् ।१। दिवे स्वाहान्तरिक्षाय स्वाहा पृथिव्यै स्वाहेति तिस्रः ।२। गवे स्वाहा वाचे स्वाहा वाचस्पतये स्वाहेत्यपरास्तिस्र. ।३।

यदिदमिति होतिहं दैव्यं सह उच्चरत् ।
तदयं यजामहे यदस्मभ्यमिति द्रवत् ॥

वाघो राजन्यशामहे वाचस्पते सद्युम्न मे।
यो अर्णो अभिदामति॥

स्वाहेत्यष्टमीं हुत्वा[4] यथायतनं स्रुवं निधाय[5] यथाप्रपन्नमुप-
निष्क्रम्याग्रेण सद उत्तरेण स्रुतिं प्राङ् तिष्ठन्नरिमादाश्नपाश्नपति
।४। वागायुर्विश्वायुर्विश्वमायुरेष्वेवा ह्यैन्द्रोपेहि विश्वथ विदा मघ-
वन्विदा इति।५। अथात्रैव तिष्ठन्नर्किं यथाङ्गमुपतिष्ठते।६। ॥१२॥

नमस्ते गायत्राय यत्ते शिरो यत्ते पुर इति पूर्वार्धम्।१।
नमस्ते रथन्तराय यस्ते दक्षिणो बाहुर्यस्ते दक्षिणः पक्ष इति
दक्षिणं पक्षम्।२। नमस्ते बृहते यस्त उत्तरो बाहुर्यस्त उत्तरः
पक्ष इत्युत्तरं पक्षम्।३। नमस्ते वामदेव्याय यत्ते मध्यं यस्त
आत्मेति मध्यम्।४। नमस्ते यज्ञायज्ञीयाय यत्ते पुच्छं या प्रति-
ष्ठेति पुच्छम्।५। समिद्भिरेवैतान्भागानुपतिष्ठेत यद्युत्तरवेदी भवति
।६। अथात्रैव तिष्ठन्नादित्यमुपतिष्ठते।७। आकाशं प्रान्तार्थे
कुर्युरिति हैक आहुः।८। द्वेष्येन त्वेवोपतिष्ठते।९। रुक्मगमासि
श्रेष्ठो रश्मिर्देवानां संसद्यया तथा मह्यं जिन्वसि तथा मा जिन्व
तथा मा जनय तथा मा पाहि ब्रह्मवर्चसमन्नाद्यं मयि निधि धा
नमस्ते अस्तु मा मा हिंसीरिति।१०। अथ दक्षिणाहृत्मविशति
।११। पश्चाग्नेर्धुं प्राङुपविश्य तदस्यारभ्यागतमुत्तमग्न्याग्यत आस्त
आधिमर्पणात्।१२। ॥१३॥

स पुरस्तादेव च्छन्दोभ्यः शीर्षण्यामृचमभिगादयेत।१। स
पुरस्तादेवाध्वर्युणा संवादयेत।२। द्वादशाहस्तस्पृणींशे प्रत्या-
स्तर्णीतादिष्टमात्मानं च पदानुपदन्नाय संभ्रियात्मविहृतं तं प्रत्या-

त्पणीतादिति ।३। अथ प्रस्तोतारमाह सप्तसु स्तोत्रियासु परिशिष्टासु नः प्रब्रूतात्तावद्धीदं जप्यमिति ।४। अथाध्वर्युः स्तोत्रमुपाकरोति ।५। यत्रैवोद्गातासन्दीमधिरोहत्यथ प्रस्तोताप्रतिहर्तारौ हस्त्यावधिसर्पतः ।६। उपगातारश्च ।७। उद्गातैव प्रथमो वीणां प्रवादयति।८। तं पत्न्यो ऽनु प्रवादयन्ति।९। आघ्नन्ति दुन्दुभीन् ।१०। आहन्ति भूमिदुन्दुभिम् ।११। कुर्वन्ति घोषं घोषकृतः ।१२। अथ पूर्णकुम्भा अपो बिभ्रत्यो मार्जालीयं परियन्ति ।१३। हैं महा३ इदं मध्विदं मध्वित्येतां वाचं वदन्ति ।१४। अप्रदक्षिणं त्रिः ।१५। प्रसलवि तूष्णीं तत ऊर्ध्वम् ।१६। ॥१४॥

अथैतमश्वरथं युञ्जन्ति ।१। अग्रेण दक्षिणं वेदंसम् ।२। तं संनद्ध आतिष्ठति राजा वा राजमात्रो वा धनुश्च त्रींश्चेषूनादाय ।३। सो ऽभितो वेदिं त्रिः प्रसलवि परिवर्तमान एतमाखणं विध्यति ।४। तं न सपत्नेणातिविध्येत् ।५। एवं द्वितीयमेवं तृतीयम् ।६। तं प्राञ्चमुदञ्चं अश्नन्ति ।७। तं तत्रैव विमुञ्चन्ति ।८। अथ प्रस्तोता सप्तसु स्तोत्रियासु परिशिष्टास्वाहा वेलेति ।९। अथ होता दक्षिणेन प्रादेशेन प्रेङ्खफलकं च भूमिं च संस्पृशञ्जपति सं महान्महत्या दधादिति ।१०। अथोपरि प्रेङ्खफलके प्रादेशं निधाय जपति सं देवो देव्या दधादिति ।११। अथोपरि प्रेङ्खफलकात्प्रादेशमात्रे प्रादेशं धारयञ्जपति सं ब्रह्म ब्राह्मण्या दधादिति ।१२। अथोपनिधाय प्रेङ्खफलकं चिरभ्यन्य चिरभ्यवानिति ।१३। ॥१५॥

अथैनदुरमा संस्पृश्य दक्षिणं भागमात्मनो ऽतिहरञ्जपत्यर्को ऽसि वषत्स्ता गायत्रेण च्छन्दसारोहन्तु तानहमन्वारोहामि राज्यायेति

।१। अथोत्तरं भागमात्मनो ऽतिहरञ्जपति रुद्रास्त्वा त्रैष्टुभेन च्छन्दसारोहन्तु तानहमन्वारोहामि स्वाराज्यायेति । २। अथ दक्षिणं भागमात्मनो ऽतिहरञ्जपत्यादित्यास्त्वा जागतेन च्छन्दसारोहन्तु तानहमन्वारोहामि साम्राज्यायेति ।३। अथोत्तरं भागमात्मनो ऽतिहरञ्जपति विश्वे त्वा देवा आनुष्टुभेन च्छन्दसारोहन्तु तानहमन्वारोहामि कामप्रायेति ।४। अथ समधिरुह्य प्राञ्चौ पादा उपावहृत्य भूमौ प्रतिष्ठापयति । ५। अथ चिरभ्यन्य चिरभ्यवानिति ।६। अथोपरि प्रेङ्खफलके दक्षिणोत्तरेणसुपस्थं कृत्वा दक्षिणेन प्रादेशेन पश्चात्प्रेङ्खफलकसुपस्पृशति प्रजापतिष्ट्वारोहतु वायुः प्रेङ्खयत्विति ।७। अथ चिरभ्यन्य चिरभ्यवानिति ।८। अथ प्राञ्चौ पाणी परिगृह्य जपति ।९। ॥१६॥

सं वाक् प्राणेन ममहं प्राणेन मं चक्षुर्मनसा ममहं मनसा मं प्रजापतिः पशुभिः समहं पशुभिः सुपर्णो ऽसि गरुत्मान्प्रेमां वाचं वदिष्यामि बहु करिष्यन्तीं बहु करिष्यन्वहोर्भूयः स्वर्गमिष्यन्तीं स्वर्गमिष्यन्निति ।१। अथ चिरभ्यन्य चिरभ्यवानिति ।२। स विसृष्टवाङ् मत्सरं विनिनीयमाण आस्त आ स्तोत्रस्य प्रवदनात् ।३। यत्रैव होता प्रेङ्खमधिरोहति तत्सर्वे सगृहपतिका कूर्चीरधिसर्पन्ति ।४। उत्तमायां स्तोत्रियायां परिशिष्टायामवघ्नन्ति दुन्दुभीन् ।५। अवघ्नन्ति भूमिदुन्दुभिम् ।६। उपरमन्ति घोषं घोषकृतः ।७। अथ पूर्णकुम्भा अपो बिभ्रत्यो मार्जालीयं परियन्ति ।८। मार्जालीये ताः कलशानवनिनीयोपनिधाय यथैतमुत्सृज्यन्ते ।९। एवेति प्राह ।१०। प्रोक्ते होता वाचं यच्छत्यानुवषट्कारात्

।११। उप प्रतिहारमाहावे ऽनुरमति ।१२। प्रतिहृत आह्वयते ।१३। अध्वर्यो शोंसावो ३ इत्युच्चैराहूय यथास्य वाक् सर्वा अन्या वाचो ऽतिवदेत् ।१४। उच्चैराहूय त्रिरुपांशु हिंकृत्योपांशु तूष्णींशंसं। तस्यातस्तस्यातः ।१५। ॥१७॥

इति शाङ्खायनश्रौतसूत्रे सप्तदशो ऽध्यायः समाप्तः ।

# ओम् ।



उच्चैराहूय त्रिरुपांशु हिंकृत्य ।१। ब्रह्म जज्ञानं प्रथमं पुरस्तादियं पित्रे राष्ट्र्येत्यग्रे विश्वे देवा मम शृण्वन्तु यज्ञिया इत्येतास्तिस्र ऋचस्तूष्णींशंसस्ता उपांश्वप्रणवान्यच्छः ।२। अथात्मने वाचमुत्सृजति ।३। तदिदास भुवनेषु ज्येष्ठमिति स्तोत्रियस्तृचः ।४। तदेतन्नवर्चम् ।५। वने न वा यो न्यधायि चाकन्नित्यष्टौ ।६। शाक्मना शाको अरुणः सुपर्ण इति द्व्यृचम् ।७। यो अद्धाज्ज्योतिषि ज्योतिरन्तर्महत्तन्नाम गुह्यं पुरुस्पृगिदं त एकं पर ऊ त एकमिति तिस्र एकपातिन्यः ।८। तास्त्रयोविंशतिः ।९। त्रिःशस्तया प्रथमया सह पञ्चविंशतिः ।१०। स एष आत्मा पञ्चविंशः ।११। तं नदेनोपसृष्टं शंसति ।१२। नदं व ओदतीनामिति ।१३। त्रैष्टुभानि पूर्वाणि पदानि नदस्योत्तराणि ।१४। प्रथमेन त्रैष्टुभेन पदेन प्रथमं नदस्य पदमुपसंधायावस्यति ।१५। द्वितीयेन त्रैष्टुभेन द्वितीयं संधाय प्रणौति ।१६। तृतीयेन त्रैष्टुभेन तृतीयं संधायावस्यति ।१७। चतुर्थेन त्रैष्टुभेन चतुर्थं संधाय प्रणौति ।१८। एवं विहृतां प्रथमां त्रिः शंसति ।१९। परावौरुत्तराः ।२०। एवं विहृता एव या तृतीया सूक्तस्य तस्या उत्तरमर्धर्चमुत्सृजति नदस्य चोत्तरम् ।२१। तौ पुरस्ताद्द्विपदानां शंसति ।२२। आत्मानं शस्त्वाय सूददोहसं शंसति । ता अस्य सूददोहस इति तामर्धर्चशः ।२३। ॥१॥

अथैतानि शीर्षण्यानि तृचानि शंसति ।१। इन्द्रमिद्गाथिन इन्द्रेण सं हीन्द्रो दधीच उत्तिष्ठन्नोजसा सहेह्येदभि ष्टुतामघमुदु त्यं जातवेदसमित्येतेषां तृचानां येषु सामगाः स्तुवीरंस्तानि शंसेत् ।२। उदु त्यं जातवेदसमित्येतस्मिन् हैके नवर्चे स्तुवते ।३। ते यदि तथा कुर्युरेतदेव शंसेत् ।४। उदु त्यं जातवेदसमित्येतस्यो हैके प्रथमे तृचे स्तुवते ।५। ते यदि तथा कुर्युरितरेषां ये कामयेत ते उपाहरेत् ।६। तान्यर्धर्चशः शस्त्वाय सूददोहसम् ।७। ॥२॥

अथैतं यैवं तृचं शंसति ।१।

यस्येदमोज आरुजस्तुजो युजो बलं सहः ।
इन्द्रस्य रन्त्यं बृहत् ॥
अनाधृष्टं विपन्यया नाधृष आदधर्षया ।
धृषाणं धृषितं शवः ॥
स नो ददातु तं रयिं पुरु पिशङ्गसंदृशम् ।
इन्द्रस्पतिस्तवस्तमो जनेषु ॥

इति ।१। तमर्धर्चशः शस्त्वाय सूददोहसम् ।२। ॥३॥

उरुं नो लोकमनु नेषि विद्वानित्यृचा ।१। तां पच्छः शस्त्वाय सूददोहसम् ।२। अथ रथन्तरस्य स्तोत्रियं पुनरादायं ककुप्कारमथ सूददोहसम् ।३। अथ रथन्तरस्यानुरूपं पुनरादायं ककुप्कारमथ सूददोहसम् ।४। अथ धाय्यां पच्छः शस्त्वाय सूददोहसम् ।५। अथ रायन्तरं प्रगाथमर्धर्चशः शस्त्वाय सूददोहसम् ।६। य एक इद्धव्यश्चर्षणीनामिति सूक्तं तत्पच्छस्तस्य द्वितीयामुद्धृत्य विश्वो

ह्यन्यो अरिरा जगामेति चैतस्य द्वितीया तामिह द्वितीयां करोति सूक्तं शस्त्वाथ सूददोहसम्। ७। तमिन्द्रं जोहवीमि मघवानमुग्र-मिति प्रहस्तकस्तृचः। ८। तं पच्छः शस्त्वाथ सूददोहसम्। ९। ॥ ४ ॥

स सूर्यं जनयञ्ज्योतिरिन्द्रो ऽया धिया तरणिरद्रिरस्वान्।
ऋतेन शुष्मी हवमानो अर्कैरभि स्पृध उस्रो वेदिं ततर्द॥

इत्यृचा। १। तां पच्छः शस्त्वाथ सूददोहसम्। २। अथ इहतः स्तोत्रियं पुनरादायं ककुप्कारमथ सूददोहसम्। ३। अथ इहतो ऽनुरूपं पुनरादायं ककुप्कारमथ सूददोहसम्। ४। नात्र धाय्या भवति। ५। अथ बार्हतं प्रगाथमर्धर्चशः शस्त्वाथ सूददोहसम्। ६। विश्वो ह्यन्यो अरिरा जगामेति सूक्तं तत्पच्छस्तस्य द्वितीया-मुद्धृत्य य एक इद्धव्यश्चर्षणीनामिति चैतस्य द्वितीया तामिह द्वितीयां करोति। ७। सूक्तं शस्त्वाथ सूददोहसम्। ८। विश्वाः पृतना अभिभूतरं नरमिति प्रहस्तकस्तृचः। ९। तस्य पच्छः प्रथमां शंसत्यर्धर्चश उत्तरे। १०। प्रहस्तकं शस्त्वाथ सूददोहसम्। ११। ॥ ५॥

अथैतानि चतुरुत्तराणि तृचानि शंसति। १। इन्द्राय मद्वने सुतमिन्द्रं स्तवाथ इन्तवे गायन्ति त्वा गायत्रिणो न त्वा इहन्तो अद्रय इति चत्वारि तृचानि। २। तान्यर्धर्चशः। ३। इत्था हि सोम इन्मद इति पाङ्क्तं तृचं तत्पङ्क्तिशंसम्। ४। सं च त्वे जग्मु-र्गिर इन्द्र पूर्वीरादङ्गिराः प्रथमं दधिरे वय इति चैष्टुभजागते तृचे। ५। ते पच्छः शस्त्वाथ सूददोहसम्। ६। ॥ ६॥

अथैता अशीतीः शंसति। १। महाँ इन्द्रो य ओजसेत्येतया गायत्रीमशीतिं प्रतिपद्यते। २। तानि पञ्चदश तृचानि। ३। इन्द्र

केवलमग्नीषोमीयवैष्णवयोः किं तर्हि सर्वत्र तनूदेवतादावपि प्लुतसंधानं नास्ति। ननु च उपांशुयाज इतीयमग्नीषोमीयवैष्णवयोः संज्ञा। तत्रैव प्लुतसंधानप्रतिषेधः प्राप्नोतीति। सत्यम्। अस्तीतिवचनात्सर्वत्रोपांशुयजने प्रतिषेधः।

---

२.

१. आवाह्यते ऽनेनेत्यावाहनः। को ऽसौ। आकारः। तमाकारं श्रावयेत्। चतुर्मात्रं कुर्यादित्यर्थः। ननु आवहादिं श्रावयेदिति वक्तव्यम्। सत्यम्। किं तु यस्मिन्कर्मणि या यष्टुमभिप्रेतास्ता एवावाहयितव्यास्तदभिप्रायमेवमुक्तम्। अत आवह देवान्यजमानायेत्यत्र आवहादिः प्लुतो न भवति। आह। किमर्थं श्रावयेदिति एयन्तनिर्देशः। उच्यते। अग्निं होतारायावह[1]। अत्र प्लुतेन सह आकारीभूतस्य[2] समानाचरे सस्थान इति[3] दीर्घ एव प्राप्नोति। स मा भूत्। प्लुत एव यथा स्यादिति एयन्तनिर्देशः।

२. यो ऽयं चतुष्टये निर्दिष्ट एकारान्तो येयजामहे एष प्लुतादिः कार्यः। न च व्यञ्जनस्य प्लुतिः। असामर्थ्यात्। अनुस्वारं मकार इति च याज्यान्तस्य वर्णान्तरोपदेशात्। तथा च। ऊदकालो ऽज्झ्रस्वदीर्घप्लुतः। अचश्चेति (पा० १.२.२७.२८)। वैयाकरणाः। ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचीति शिक्षाः। पुरस्तात्पूर्वस्मिन्देशे। याज्यानामिति षष्ठीनिर्देशादुपांशुयाजे ऽपि प्राणसंधानं भवत्येव। तथा चाश्वलायनस्य सूत्रम्। प्राणसंततः प्रणवः

---

१ B adds इति। २ B आकारस्य। ३ प्राति० १.९।

पुरोनुवाक्यायास्तथागूर्वषट्काराविति । आगूःशब्दस्य तेषां येयजामहे प्रसिद्धः ।

३. यज्ञे भवा याज्ञिकी । कासौ श्रुतिः । श्रुतेन याज्यान्तेनेत्येव-माद्या । सा चतुर्मात्रा कार्या । या पुनराम्नायपाठे स्वनिगदोक्ता सा व्याकरणलक्षणेन त्रिमात्रा । तस्या यज्ञे ऽपि प्रयुज्यमानाया न चतुर्मात्रता । किं कारणम् । यज्ञं व्याख्यास्याम इति यज्ञाधिकारे याज्ञिकीति वचनात् । अतः अध्वर्यवेपीरपा३ इति त्रिमात्रैव । अधः स्विदासी३दिति वाचःस्तोमे प्रयुज्यमाना त्रिमात्रैव । याज्ञिक्ये-व[1] या केवला न पाठे । यज्ञे च तस्याश्चतुर्मात्रता नियम्यते ।

४. याज्यान्त इति वक्ष्यमाणमिदं संबध्यते । सामर्थ्यात् । याज्यान्ते वर्तमानानां सन्ध्यक्षराणां एकारादीनां चतुर्णां मध्ये ये द्वे तालव्ये सन्ध्यक्षरे एकारस्य ऐकारस्य ते प्रत्येकं आकारस्य प्लुत इकारस्य मात्रिकः अनेन रूपेण भवतः । अप्लुतवद्भाव इति चेः *(पा० ४. ४. ५०)* । अत्रोदाहरणम् । *त्वष्टारं सोमपीतया३ इ वौ-*षट् । ऐकारस्योदाहरणम् । आदिद्धस्नि प्र च वाचासा३इ वौषट् ।

५. ओष्ठः[2] स्थानं ययोस्ते ओष्ठ्यस्थाने सन्ध्यक्षरे ओकारस्य औकारस्य । तत्र ओकार आ३उ ईदृशं रूपमापद्यते । एवमौकारः । समु देवी दधातु ना३उ वौषट् । ननु ओकार आमन्त्रितजः प्रगृह्य इत्येवमादिना लक्षणेन सर्व एव प्रगृह्यो याज्यान्ते तस्य किं ग्रहणेन । सत्यम् । किं तु बाष्कलानामप्रगृह्यस्तदर्थं वचनम् ।

---

१ A याज्ञिक्येवकथत्ता न पाठे B क्येव। २ A ओष्ठं। B ओष्ठ्य०।

६. प्लुतापेचमन्यत्वम् । प्लुतादन्यानि याज्यान्तस्याप्लुतपक्षे प्रकृत्या भवन्ति । प्रथमया प्रकृत्या यथास्वभावमित्यर्थः । अक्षराणीति वचनात् प्रातिशाख्यगतमपि विकारं नापद्यन्ते । तद्यथा । मच्छित्युकारः स्रवते सर्वचाप्यपदान्तभाक् । सुता याहीत्यतो ऽन्येषु पदेष्वच्छेति विग्रहे[1] । इमा हरी वहतस्ता नो अच्छ वौषट् । एवं प्रयोगः । एवं मधुशब्दो ऽप्युदाहार्यः । आइकारीभावस्याप्लुतपक्षे न भवति ।

७. प्रकृत्येति वर्तते । एकारश्च ओकारश्च प्रगृह्यौ सन्तौ प्रकृत्या भवतः । प्लुतपक्षे ऽपीति सूत्रारम्भः ।

८. सन्ध्यक्षराणां तालुस्थाने इत्यारभ्य यदुक्तं तद्याज्यान्ते भवति । वक्ष्यमाणं च । मध्ये ऽधिकारात् ।

९. यः प्रातिशाख्ये रेफीति संज्ञित ऊष्मा रेफी पञ्चमो नामिपूर्वं इत्येवमादिना प्रकरणेन[2] स याज्यान्ते वषट्कारेण सह सन्धौ रेफमापद्यते । उदाहरणम् । अभि धत्ता वामस्य देव भूरे वौंषट् ।

१०. विसर्जनीय इति वर्तते । अरिफितो विसर्जनीयो याज्यान्ते लुप्यते । अदर्शनमस्य भवतीत्यर्थः । उदाहरणम् । युक्तग्रावा जायते देवकामा३ वौषट् ।

११. याज्यान्त इति वर्तते । याज्यान्ते वर्तमानो मकारो वषट्कारेण सह सन्धौ अनुस्वारमापद्यते । अनुस्वारः प्रातिशाख्ये प्रसिद्धः । अस्योदाहरणम् । जिह्वामग्ने चकृषे हव्यवाहां३ वौषट् ।

---

१ प्राति० ७. १ । २ प्राति० १ १०

तुशब्दो नियमार्थः । यत्रापि प्रैषे देवतादेशनं नास्ति यथा धाना सोमानामिन्द्रेति तत्रापि याज्यायामादेशनं न भवति ।

२१. परिभाषेयं द्रव्यनियमार्था । वक्ष्यति । मध्वा जुहोति प्रहुताहुती जुहोति इत्येवमादौ सर्पिरेतं विलीनं जानीयात् । इतिकरणात् प्रत्ययान्तरेणाप्युक्ते । तद्यथा । विप्रुषां होमः । सुवमिद्धे जुहुयुरित्येवमादौ सर्वत्र ।

२२. येषां होममन्त्राणामाम्नाय एवान्ते स्वाहाकारो न पठितस्तेषां[१] अन्ते कर्तव्यः ।

२३. समिध आधीयन्ते हूयन्ते यैर्मन्त्रैस्ते समिदाधानमन्त्राः । तेषामप्यन्ते स्वाहाकारः प्रयोक्तव्यः । पूर्वसूत्रेणैव सिद्धे सत्यारम्भो नियमार्थः । अतः शाकलहोमे[२] उदकाञ्जलींस्त्रीनप्सु जुहोतीति[३] न स्वाहाकारः ।

२४. कर्म प्रधानं मन्त्रो गुणभूतः । तस्य[४] गुणस्य भेदादश्रुतो ऽपि गुणी साहचर्यादनुमीयते । सूत्रानारम्भे एकार्थानां इदमाप इत्येवमादीनां विकल्पः स्यात् । नानार्थानामुद्ध्रियमाणाम्हुताहुति-मित्येकस्यामेव क्रियायां मन्त्रसमुच्चयः स्यात् । स मा भूदिति सूत्रा-रम्भः ।

२५. कं प्रपद्ये तं प्रपद्य इत्येवमादौ मन्त्रे भिन्नवाक्ये ऽपि सूत्रसमाप्त्यपेक्ष इतिकरणे द्रष्टव्ये मन्त्रान्ताद्यपगत्वं[५] । चकारः समु-च्चयार्थः । अतश्च केषां चित्स्वाहाकारः । केषां चिन्नमस्कारः । केषां चिदसिशब्दः[६] ।

१ B तेषामप्यन्ते स्वाहाकारः प्रयोक्तव्यः । २ B inserts तथा C in marg. ३ A ns. स्वादौ । ४ B तत्र । ५ B ज्ञापक । ६ B भि ।

२६. करणशब्दोऽत्राधिपूर्वो द्रष्टव्यः। अतोऽधिकरणेषु होतृचमसे ऽवनयतीत्येवमादिषु हुते त्वा भक्षितमिति मन्त्रान्तेनावनयनकर्मणः संनिपातनम्। मन्त्रस्यान्तः कर्मण आदिः। एवमनुष्ठानम्। अधिकरणेष्विति वचनादाप्यायनोपस्थानपर्युक्षणादिष्वनियमोऽधिकरणाभावात्। संनिपातनमिति। यत्रैकत्र निपातनं संभाव्यते तत्र। न तु क्रियमाणानुवादिषु। भिन्नदेशावस्थानात्कर्त्रोः।

२७. परिभाषेयमवधिनियमार्था। यदा संप्रेषितो ऽध्येषणापूर्वं[1] चोदितस्तदा होतृमैत्रावरुणादिः पठेत्। यदैवाध्वर्युराहानुब्रूहि यजेत्यथैव ते कुर्वन्ति य ऋचा कुर्वन्तीति शतपथे।

२८. संप्रेषित एव।

२९. इतिकरणोऽत्र परिसमाप्त्यर्थः। यदनुक्रान्तमेतत्सर्वंयथेषु भवतीत्यर्थः। ननु असंयुज्यविधानात्सिद्धम्। सत्यम्। किंतु गृह्याण्यकत्वविधानोक्ते न प्राप्नोति। तदर्थं[2] वचनम्।

---

# ३.

उक्ताः परिभाषाः। श्रुतिक्रमेणेदानीं अग्न्याधेयपुनराधेयाग्निहोत्रहोमानां क्रमः। तत्राग्न्याधेयपुनराधेययोः कंप्रपद्यादेरङ्गजातस्यापठितत्वादग्न्याधेयपूर्वत्वाच्चाग्निहोत्रहोमस्य क्रमं भित्त्वा तृतीयाध्यायपरिपठितौ दर्शपूर्णमासौ श्रुतिक्रमेणैवाह।

---

१ A अध्येषणाये पूर्व चोदि॰ B अध्येषणापूर्व। २ A ms अर्थेवं C अर्थेव।

१. वक्ष्यति पत्नीयजमानौ व्रत्यमश्नीयातामित्यादि। तत्पूर्वेद्युः कृत्वा ततः पौर्णमासेन हविषा यजते यजमानः। हविषेति जात्यपेक्षमेकवचनम्। यदनेन हविषाग्रास्त इति दर्शनात्। यद्दर्शपूर्णमासयोरुपवसति न ह वा अव्रतस्य देवा हविरश्नन्तीति श्रुतेः। यद्यपि श्रुतावाधानकर्म पूर्वमुक्तं तथापि पौर्णमासं प्रथमाये तन्त्रं भवत्यामावास्यं द्वितीयाया इत्यनेन दर्शपूर्णमासयोः प्राथम्यं दर्शितम्[१]। अतः सूत्रकारेण दर्शपूर्णमासौ प्रथमं सूचितौ।

२. उपोष्य यजत इत्यर्थः। द्वयोरपि दर्शपूर्णमासयोरेक एवोपवासो मा भूदिति पृथक्सूत्रम्।

३. द्वे एवेति नियमार्थ आरम्भः। अतो ऽनयोरेव पूर्वोत्तरयोरुपदेशो न ज्योतिषामयनोक्तयोः। चातुर्मास्येषु चादीचितायनदाचायणयाजिनस्तिथिचयं प्राप्नोति। सांनाय्यस्य हि[२] द्व्यहकालत्वात्। तत्र हि संस्थितायां पौर्णमासमिति (३.१३.१८) वचनात्तत्रापि[३] कथं नाम द्वे एव पौर्णमास्यौ स्यातामिति नियमः। अतस्तत्र पूर्वस्यामैन्द्रस्य दोहः पयस्या दोहस्य। अन्यथा ममाप्ते वैश्वदेवे स्यात्[४]।

४. द्वे एव वक्ष्यमाणे।

५. यां तिथिमुपवसतो ऽस्तमयसमीपे पूर्णश्चन्द्रमा उदियात्। उत्सर्पेत्। यां चोपवसतो ऽस्तमितमात्र आदित्ये चन्द्रमा उत्सर्पेत्। ते पौर्णमास्यौ वेदितव्ये। कैश्चित्सूत्रकारैः तिथित्रयं पौर्णमासी-

---

१ B inserts यत। २ हि om. in A; in marg. in C. ३ A तथापि।
४ C देव।

मज्ञकमुद्दिष्टम्। ज्योतिषामयने च सवादादय[1] लक्षणोद्देश कृत श्रुतिलिङ्गात्। पर्यस्तमयमस्तमित इति आदित्यविशेषणम्। कुत। लोकप्रसिद्धे। पूर्ण इति चन्द्रमसो विशेषणमन्यस्याव्यभिचारात्।

६ श्व अनन्तरे आगामिन्यहोरात्रे न द्रष्टा इति। एव स्यान्मत केनचित्प्रमाणेन। भविष्यदनद्यतने। यदि चन्द्रो न भविता। यस्मिन्नहनि वर्तमाने ऽदर्शन चन्द्रमस सभाव्यते ते अमावास्ये इत्युच्येते।

७ तत्र तस्मिन पूर्णमासीदये अमावास्यादये च इज्याया कर्तव्याया काल प्रति यथाकामी स्वेच्छया कर्ता स्यात्। ननु च पौर्णमासीदयोपदेशात् अमावास्यादयोपदेशाद्यजत इति वचनात्कर्तु र्यागकाल[2] प्रति स्वेच्छा सिद्धैव। किं सूत्रारम्भेण। उच्यते। अनारभ्यमाणे सूत्रे पक्षान्तेपक्षान्ते[3] द्वेद्वे इष्टी प्राप्नुत कालस्योपस्थितत्वाद्यथाप्रतिमासम्।

८ वक्ष्यति व्याख्यातौ दर्शपूर्णमासौ प्रकृतिरिष्टिपशुबन्धाना मिति। तत्र न ज्ञायते के दर्शधर्मा के पौर्णमासधर्मा इति। आवाहनादयश्च शब्दा साधारण्येन पठिता। तेषा चार्थमाज्यान मन्त्राणा प्रकृताविति यथापठितानां प्रयोग प्राप्नोति। तद्विवेकार्थमिदमारभ्यते। हविर्ग्रहणमिहानुवर्तते। क प्रकृत हविषा यजत इति। तत्र तृतीयैकवचनान्त इह प्रथमाबहुवचनेन विपरिणम्यते। वक्ष्यति। उभयत्राग्नेय पुरोलाशो ऽग्नीषोमीय उपांशुयाजो वैष्णवो वाग्नीषोमीयश्च पुरोलाश पौर्णमासे हविर्यैन्द्राग्नो

१ A विषवादादय। २ B इत्याद्य यजत। ३ B पक्षान्त only।

ऽसंनयतो द्वितीयो ऽमावास्यायामेवमाद्युपदेशाद्भवींषि व्यवतिष्ठन्ते। सिद्धमेवैतदुत्तरार्थं तूच्यते[1]।

९. हविःसंयुक्ताश्च ये देवताशब्दा अग्नीषोमीयप्रभृतयस्ते चावाहनादिषु यथोपदेशं भेदेन प्रयुज्यन्त इत्यर्थः। इति पौर्णमास्यामित्येवमादेः सूत्रद्वयस्यापरो व्याख्यामार्गः। एतत्पौर्णमास्यामेतदमावास्यायाम् ईदृशादुपदेशाद्व्यवतिष्ठन्ते। असंकरेण भवन्तीत्यर्थः। ननूपदेशात्प्राप्तैव व्यवस्था। सत्यं। उच्यते। शब्देनैव संयोगेन व्यवस्था भवति। नार्थेन। उक्ता चार्थेनापि व्यवस्था। सेह नेष्यते। शब्देनैव व्यवस्था नियम्यते। यदि पुनरार्थेनैव व्यवस्था स्यात् ततो वत्सापाकरणसंयोगात्सांनाय्यपच एव प्रत्याशनं प्रसज्येत। राकासिनीवाल्योस्तु राका पौर्णमास्यां स्यात् सिनीवाली अमावास्यायां यथासंख्ययोगात्[2]। अतस्तन्मा भूदिति सूत्रारम्भः। श्रुतौ च संयोगः पठितः। स च व्यवस्थाहेतुर्भवति। तत्संयुक्ताश्च शब्दाः। तदिति सर्वनाम्ना पौर्णमास्यमावास्ययोर्निर्देशः। पूर्वसूत्रेण शब्दे संयोगे प्राप्ते वचनं प्राकरणिकसंयोगप्रापणार्थम्। पौर्णमास्यमावास्याप्रकरणसंयुक्ताः कंप्रपद्यादयो दर्शपूर्णमासयोरेव व्यवतिष्ठेरन् ननु सर्वार्था अनारभ्यवादा इति कृत्वा तत्र[3] को दोषः स्यात्। उच्यते। अप्राकृता भवेयुः। अतश्च प्रतिषेधो ऽर्थ (९.१.४.) इत्येवमादिभिर्न निवर्तेरन्।

१०. असंयुज्य विधीयमानं साधारणमिति प्राप्ते असंदेहार्थं वचनम्। पूर्वयोर्योगयोस्तदपवादो मा भूदिति।

---

१ A ०तदुत्तरार्थं तूत्तरसूत्रे उच्यते B C (by alt) ०त्तरार्थं। २ C यथा० A यथायोगात्। ३ A om. तत्र।

११. उभयोः पौर्णमास्यमावास्याकर्मणोराग्नेयो ऽग्निदेवताकः पुरोलाशो भवति। उभयत्रेत्यधिकारार्थम्। पुरोलाशग्रहणं होतुर्नोपयुज्यत इति चेत्। उच्यते। उपयुज्यते। यत्राग्नेयः पुरोलाशस्तत्राग्निर्मूर्धा भुवो यज्ञस्येति याज्यापुरोनुवाक्यायुगलम्। यत्र पुनराग्नेयमाज्यं तत्र प्रायणीयादृष्टम्।

१२. उभयत्रेति वर्तते। अग्नीषोमीयदेवताक उपांशुयाजसंज्ञो यागो भवति। उपांशुधर्मकः। श्रुत्युपदिष्टस्यापि आज्यहविषो ऽनुपदेशो प्रत्यागने आज्यभक्षणस्याप्रतिषेधार्थः।

१३. उभयत्रेति वर्तते। वाशब्दो विकल्पार्थः। विष्णुदेवत्यो वा उपांशुयाजो भवति। विष्णुरुपांशु यष्टव्यो ऽजामितायेति शाखान्तरात्।

१४. अग्नीषोमदेवत्यः पुरोलाशः पौर्णमासे हविषि भवति। हविःशब्देन कर्म लक्ष्यते। अतश्च पौर्णमासे कर्मणि भवतीत्यर्थः। चशब्द उक्तेन सह समुच्चयार्थः। ततस्तृतीयत्वं सिद्धं भवति। पौर्णमासग्रहणमुभयत्र मा भूत्। हविषीति वचनं पुरोलाशस्य पौर्णमासीविकारप्रापणार्थम्। ततश्च ऐन्द्रे पुरोलाशे पौर्णमासीविकारसिद्धिः।

१५. ऐन्द्राग्नः पुरोलाशः असंनयतः सांनाय्यमकुर्वतः। सांनाय्यमिति संज्ञाते दधिपयसी उच्येते। तद्द्वितीयममावास्यायां हविर्विकल्पेन भवति। असोमयाजिनो ऽपीत्येतस्मादेव वचनात् ज्ञायते। यस्मिन्पक्षे एतन्न तस्मिन्नैन्द्राग्नो द्वितीयः। द्वितीय इति त्रयोदशा-

मावास्यायामाहुतयो हूयन्त इति चरकाणां श्रुतिरुपांशुयाज-प्रतिषेधार्था। तत्पदेन[1] सूचितम्।

१६. इन्द्रदेवत्यं सांनाय्यं संनयतः सांनाय्येन यागं कुर्वतो द्वितीयं हविर्भवति। तदाहुर्नासोमयाजी संनयेत्तद् समेव नयेदिति शतपथे। सोमयाजी संनयेत्कामादितर इति कात्यायनस्य।

१७. महेन्द्रो देवता अस्येति माहेन्द्रं सांनाय्यम्। वाशब्दो विकल्पार्थः। सर्वत्राच हविरुपदेशो येन च द्रव्येण यक्ष्यमाणः स्यादिति (४.१.३) तज्जातीयाशनप्रतिषेधार्थः।

१८. अमावास्यायामिति वर्तते। विष्णुदेवत्यमुपांशुयाजं कुर्यात्। कः। असंनयन् असांनाय्ययाजी। अथ यदसंनयन् पुरोडाशावन्तरेणोपांश्वाज्यस्य यजतीति श्रुतत्वात्। तुशब्दो ऽत्र व्यवस्थितविकल्पार्थः। तेनामावास्यायां सांनाय्ययाजिनो ऽग्नीषोमौ। असांनाय्ययाजिनो विष्णुरिति। एवमेतानि प्रधानान्युक्तानि। केषांचिच्छाखिनां प्राक्सोमयागादेकपुरोडाशा पौर्णमासी। तत्राप्युपांशुयाजो ऽस्त्येव। तच्च सूत्रकाराः प्रायेण च[2] सूत्रयन्ति। उत्सन्नानुष्ठानत्वात्। उत्सन्नानुष्ठानं च न कर्तव्यम्। महाशते लिङ्गदर्शनात्। तदेतत्पुराणमुत्सन्नं न कार्यमिति।

---

४.

१. आमन्त्रित आहूतो होता हौत्रस्य कर्मणः कर्ता। अन्तरेण मध्येन। उत्करं वेद्येकदेशं विहृतीयं प्रणीताश्चसादिता आपः।

---

१ A om. च। २ B C om न।

उत्करं प्रणीताश्चेति द्वितीया अन्तरान्तरेण युक्त इति। दक्षिणेन प्रपदेन दक्षिणपादाग्रतलेन बर्हिषः स्तीर्णस्याक्रमणं कुर्यादिति वाक्यशेषः। होतृग्रहणं यजमाननिवृत्त्यर्थमिति चेत्। न[1]। यजमानस्य चौरार्षेयाण्यभिव्याहृत्येति व्यपदेशात् ज्ञायते अन्यो व्याहर्तेति। अतो होतृग्रहणमामन्त्रितविशेषणम्[2]। तेन होतैवामन्त्रितः। अतो ब्रह्मादीनामनामन्त्रितानामप्ययमेव सञ्चरः। तथा च कात्यायनः। प्रणीतोत्करावितिष्ठिन्नित्यविशेषेणाह।

२. स्तीर्णाया वेदेर्योऽन्तः पश्चाद्वर्ती तेन संमिता तुल्या पार्ष्णिः पादस्य पश्चिमो भागः कार्यः। ननु बर्हिराक्रमणमधिकृतं किं वेदिग्रहणेन। उच्यते। यत्रापि बर्हिराक्रमणप्रतिषेधस्तत्राप्येवमेव स्थानं यथा स्यादिति।

३. सव्यं पादं पश्चात्कृत्वा चशब्दतस्तत्रैव दक्षिणेन स्थानमृजुकायावस्थानं[3] कुर्यात्। आसीनन्यायताया अपवादः। स वै तिष्ठन्नन्वाहेति शतपथे।

४. अग्नये समिध्यमानायेत्यादिना निगदेन संप्रेषितः किं कुर्यादित्याकाङ्क्षित आह।

५. कं प्रपद्य इत्येवमादिकं मन्त्रं जपित्वा ततो वक्ष्यमाणं करोति। दीर्घपाठः शाखान्तरीयत्वात्। अथ यत्पुरस्तात्सामिधेनीनां जपति स्वस्त्ययनमेव तत्कुरुत इति श्रुतेः। मन्त्रस्य चेदं

---

१ A om न। २ B C insert यजमाननिवृत्त्यर्थमिति after ॰ग्रहणम्। ३ A दक्षिणेन स्थानेन ऋजु॰।

तात्पर्यं स्वस्त्ययनार्थतैव। अतो विकृतिषु नोहः। संप्रैषादिवचनं परिभाषितत्वात्। तेन यत्रापि होतृस्थानावृत्तिरुक्ता तत्रापि संप्रैषवशादस्यानुवचनस्यावृत्तिर्यथा स्यादेवमर्थं संप्रैषवचनम्। जपो ऽपि संप्रेषितस्यैव[1] यथा स्यादेवमर्थं च।

६. त्रिः सामिको हिंकारः कर्तव्यः। नासामा यज्ञो ऽस्तीति शतपथे। मकारहकारयोर्मध्ये ऽनुस्वार इति हिंकारलक्षणं छन्दोगानाम्।

७. हिंकारं परस्परेणासंहितं त्रिरुच्चार्य ततः प्र वो वाजा अभिद्यव इत्येतां प्राणमात्रसंहितां संदध्यात्। न तु [2]सांहितिकेन लक्षणेन। कुत एतत्। उपशब्दप्रयोगात्। मध्यमया वाचा। मध्यमेन स्थानेन। हिंकारो ऽपि मध्यमेनैव स्थानेन। कुतः। जपित्वेति [3]पूर्वत्र विशेषवचनात्। सामिधेन्यङ्गत्वाच्च हिंकारस्य। हिंकृत्य सामिधेनीरन्वाहेति। त्रिर्हिंकरोतीति श्रुतत्वात्। सामिधेन्य इति संज्ञा श्रुतिसिद्धैवेति न कृता।

८. अग्न आ याहि वीतय इति तृचः। ईळेन्यो नमस्य इति तृचः। एवमेतौ तृचौ। ननु अग्न आ याहि वीतय इत्येका। ईळेन्यो नमस्य इति द्वौ तृचौ। एवं कस्मान्न भवति। उच्यते। यद्येवमभिप्रेतं स्यात् अग्न आ याहि वीतय ईळेन्य इति पठित्येवं ब्रूयात्। एकादश सामिधेनीरन्वाहेति च श्रुतेः।

९. एकाग्रहणं तृचाधिकारनिवृत्त्यर्थम्। ननु यद्येवमभिप्रेतं स्यात्पूर्वेण सह समासं कुर्यात्। उच्यते। सं वा एतं वृषण्वन्तं

१ C by alt प्रेषितः सखे। २ B सर्वांहि॰। ३ B पूर्वसूत्रे।

त्र्यमन्वाहेति प्रतपद्ये । पूर्वस्तृचो द्व्यच्चामय तु तद्विलक्षण इति समासो नाशङ्क्येत ।

१० उत्तरविवचार्थमेकैत्युक्तम् । आवापस्थानार्थं च ।

११ यत्रयत्र मन्त्रदृश सामिधेन्य कर्तव्या तत्रतत्र समिध्यमानो अध्वर इत्येतास्तिस्रो ऽनुवक्तव्या ।

१२ मासदृश्यमनारभ्याधीतम् । तयोस्तृत्र्यप्रत्ययोर्विकल्पे प्राप्ते मासदृश्यमेभ्य प्रतिषिध्यते । तथासदृश्य च सामिधेनीना दर्शपूर्णमासादीचितायनवर्ज प्रतीयात् । मायनाभ्यामिति समासो[1] वर्जनक्रियया सह योगात् । यत्पुन परिभाषित मासदृश्य च सामिधेनीनामिष्टिपशुप्रख्येष्वितितशोदकानारभ्यवादयो[2] प्राप्तयोरनारभ्यवादविहित विकृतिषु मासदृश्य नियम्यते । यत्पुनरयनेषु पाक्षदृश्य पठ्यते तन्मुन्ययनतुरायणयोर्विकल्पार्थम् । आयपणे त्वयनमशा न भवति । इति दर्शपूर्णमामायनानीति वचनात् ।

१३ ता वै गायत्री भवन्तीति स्वश्रुतौ । विशिष्टाश्च शाखान्तर एवमेव यथोक्ता श्रुता ।

१४ आ जुहोता दुवस्यतेत्यस्यास्तृतीये वचने च प्रणवस्तेनाग्ने महां[2] असि ब्राह्मण भारतेति सदध्यात् । उत्तमार्थे तृतीये वचने प्रणवेन निगदमुपसदधातीति श्रुतत्वात् । सामिधेन्य आग्नेय स चाग्निराहवनीय इध्मसमिन्धनद्वारेण सूयते । त ना समिद्भिरग्निर

१ ०शिष्यत्व A शिष्य B C । १ C । marg. पाक्षदृश्यपाठस्य instead of भाव । २ C सह here and elsewhere

इति विशेषलिङ्गात्। इत उत्तरेण चानुवचनशेषेण[1] स एव स्तूयते। इयं वा इदं सर्वं छन्दस्कृतं चाच्छन्दस्कृतं च तेन सर्वेणाग्निं स्तवानीति श्रुतेः (कौ० ब्रा० ३.२)।

१५. अग्ने महाँ[2] असि ब्राह्मण भारतेति निगदखण्डस्य प्रणवेन संधानवचनादार्षेयैः सह संधानम्। अमुतः परस्तादित्यर्थः। अर्वाञ्चि अवरोहेणेत्यर्थः[3]। यजमानस्य न होतुः। त्रीणि नाभ्यधिकानि। आर्षेयाणि ऋषिनामानि। ते च ऋषयो ये यस्य यजमानस्य पूर्वे मन्त्रदृशो यावन्तो वा प्रतिगोत्रं स्मर्यन्ते। तदभिधायिनः शब्दा अणप्रत्यययुक्ता[4] आमन्त्रितविभक्तियुक्ताश्च उच्चारणीयाः। कुत एतत्। मानवेति प्रदर्शनात्। तद्यथा। वासिष्ठ-शाक्त्यपाराशर्येत्यादि। यद्यप्यैतरेयिणामेकार्षेयस्याभ्यासेन त्रिसंख्यापूरणमुक्तमभ्यधिकसंख्यानां[5] च समासेन तथापि यथा स्मर्यमाणान्येवोच्चारयितव्यानि। स्मरणस्य दृढत्वात्। तत्रासंहितानि असमस्तानि च वक्तव्यानि। वासिष्ठादिभिः शब्दैरग्निरेवामन्त्र्यते। तथा हि वाक्यसंयोगः। यद्येवं कथं न ह वा अनार्षेयस्य देवा हविरश्नन्तीति (कौ० ब्रा० ३.२)। नैष दोषः। यजमानस्य हि वासिष्ठत्वादग्निर्वासिष्ठ इत्युच्यते। तेनोत्पादितत्वात्।

१६. द्विगोत्रः क्रीतः स्वयमुपनीतादिः[6]। तद्यथा। शुनःशेप

---

१ AC in marg विशेषेण। २ C महं। ३ A ०रोहणेन(?) यस्य च ईदेन इत्यनेन संधानम्। यद्येतं पच्छशपदं निगदमुपसंदधातीति श्रुतेः। यजमानस्यार्षेयस्यर्थः। यजमा०। ४ अणप्रत्यय० A अपत्यप्रत्यय० BC। ५ B ०नां० AC ०नां०। ६ B om क्रीत P. स्वयमुपनीतादिः C स्वयमादि।

आजीगर्तिः। इत्रिमस्तु देवरातो वैश्वामित्रः। तुशब्दो वाशब्द-स्थार्थे। तथा च मनुः।

गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः क्वचित्।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा॥(९.१४२)

१७. अब्राह्मणस्य यजमानस्य यो होतेत्येवं मा विज्ञायेति। यजमानाधिकारो ऽनुवर्तते। क्षत्रियादेर्यजमानस्य पुरोहितप्रवर-कीर्तनेनाग्निं स्तुयात्। प्रवरग्रहणादाग्नेयसूक्तं स्वार्षेयेण भवति।

१८. मानव एवं वा सर्वेषां यजमानानां ब्रूयात्।

१९. देवेद्ध इत्येवमादिकं इताहवन इत्येवमन्तं निगदखण्डमुक्त्वा विरमेत्। तस्य सप्त पदानि समस्यावस्येदिति (कौ० ब्रा० ३.२) श्रुतेः। देवेद्ध इत्यग्नेः स्वाभाविको गुणः। तेन पित्र्यायामनूहः।

*२०. अथ चत्वारीति श्रुतेः। (कौ०ब्रा० ३.२)*

२१. अथ चत्वारीति श्रुतत्वात्। यमयो देवपानो देवाँस्त्वं परिभूरसीति स्वाभाविकौ गुणौ। अतो न पित्र्यायामूहः।

२२. विशब्दो नानावाची। नाना विरमन् प्रतिवाक्यं देवता आवाहयति। अथ यज्ञवयाद्दं देवता आवाहयतीति श्रुतेः। आवाहयतीति ण्यन्तनिर्देशाद्देवता इति च द्वितीयानिर्देशादस्यमाण-मन्त्रवाक्यार्थ उपवर्णितः। अतश्च यो ऽयं पूर्वप्रक्रान्त आहवनीयो ऽग्निः स एवाध्येष्यते। तत आहवनीयपदिमि ऊहः सिद्धः।

---

## ५.

१. देवानिति पित्र्यायामनूहः सामान्यवचनात् । तत्राकारस्य श्रुतिः प्राप्नोति चेत् । न । देवशब्देनाच यागाभावात् ।

२. यत्राज्यभागयोरभावस्तत्र कथं नाम नैतौ शब्दावुच्येतामिति संज्ञाकरणम् । अग्न इत्येतदामन्त्रितमावाह्यानां प्रथमस्य पदस्य[१] भवतीति सवनीय आग्नेये श्रुतिपाठो ज्ञापकम् । अथावाहन आवह देवान्यजमानायाग्निमग्न आवह वनस्पतिमावहेति तत्राज्य-भागयोरभावे ऽप्यामन्त्रितप्रयोगात्[२] ।

३. अत्र ये पौर्णमासीदेवतावाचिनः शब्दास्ते पौर्णमास्यां प्रयोक्तव्याः । नामावास्यायाम् । ये ऽमावास्यादेवतावाचिनः शब्दास्ते ऽमावास्यायां प्रयोक्तव्याः । न पौर्णमास्याम् । अर्थाभिधानेन मन्त्रा उपकुर्वन्ति नान्यथेति । तथा चोक्तम् । यथार्थं वा शेषभूत-संस्कारादिति जैमिनिना । अनेनाप्युक्तमेव । इति पौर्णमास्यामि-त्यमावास्यायामित्युपदेशाद्भवतिष्ठन्ते तत्संयुक्ताश्च शब्दा इति ।

४. देवाँ आज्यपाँ[३] इत्यत्र नकारलोपः[४] । नकार आकारोपधः पद्यान्तो ऽपि स्वरोदयो लुप्यत (प्रातिशा ४, २६) इत्यादौ लक्षणस्य प्रदर्शितत्वात्[५] । यत्र वैश्वदेवं हविस्तत्र विश्वान्देवाँ आव-हेत्येतत्सिद्धं भवति । पृषदाज्यपानिति पशौ प्राप्नोतीति चेत् । न । पश देवानामाज्यपानां प्रिया धामानीति प्रैषे ज्ञापकादनूहः ।

---

१ A om पदस्य । २ B चामन्त्रिमादिशब्दप्रदेशात् । ३ C देव आज्यप । ४ B C om नकारलोपः । ५ A inserts प्रयाजानुयाजारम्भादन्तराभावे स्य प्रतिषेधः । C ins. इति ।

५. अथ यदग्निं होत्रायावाहयति स्विष्टकृतं तदावाहयतीति श्रुतेः । पित्र्यायां कव्यवाहनविशिष्टे ऽग्नौ । अग्निं कव्यवाहनं होत्रायावहेत्यूहः ।

६. नन्वत्राकारस्य श्रुतिर्न प्राप्नोति । स्वस्य महिम्नो यागाभावात् । उच्यते । यद्देव वाचाग्नाह वाचा यजति तेनो हैवास्य स्वो महिमेष्टो (कौ॰ ब्रा॰ ३. ३) भवतीति यागानुवादवादात् श्रुतो भवति ।

७. शब्दस्वरूपप्रदर्शनार्थ इतिकरणः । तेनाचाग्नाकारस्य श्रुतिर्नास्ति । समाप्तमनुवचनम् । वरुणप्रघासे आहवनीयौ द्वौ भवतः । तत्र यद्यध्वर्युरग्निभ्यां समिध्यमानाभ्यामिति संप्रेष्यति ततः संप्रैषवशादूहः । स उच्यते । अग्नी महान्तौ स्थो ब्राह्मणौ भारतौ । चोदनासंदेहत्वात्प्रवरनाम्नामनूहः । देवेद्धौ मन्विद्धावृषिष्टुतौ विप्रानुमदितौ कविशस्तौ ब्रह्मसंशितौ घृताहवनौ । प्रण्यौ यज्ञानां रथ्यावध्वराणामतूर्तौ होतारौ तूर्णी हव्यवाहौ । आस्पात्रे जुहौ देवानां चमसौ देवपानावरों इवाग्नी नेमी देवान्युवां परि भुवौ स्थः । आवहतं देवान्यजमानाय अग्निमग्नी आवहतं सोममावहतं अग्निमावहतं सोममावहतं सवितारमावहतं सरस्वतीमावहतं पूषणमावहतं इन्द्राग्नी आवहतं वरुणमावहतं मरुत आवहतं कमावहतं देवाँ आज्यपाँ[1] आवहतं अग्निं होत्रायावहत स्वं महिमानमावहतं आ च वहतं जातवेदसौ सुयजा च यजतम् ।

८. उपविश्येति वचनमूर्ध्वज्ञानुविशेषणार्थम् । दक्षिणेन प्राद-

१ C देवं चाग्नयं ।

शेनेति उभाभ्यां मा भूत्। ननु एकवचनमप्यस्ति किं दक्षिणेनेति वचनेन । सत्यम्। अस्ति जातावप्येकवचनम्। अत उभाभ्यामेवेत्या-शङ्क्येत । भूमिमन्वारभ्येति वचनाद्बहिरपनीयेति गम्यते ।

८. अग्ने प्रतिष्ठाया मा छिन्धि इत्येवमादिर्मन्त्रः । अस्मिन्मन्त्रे पञ्चदशेन वज्रेणेति सामिधेनीसङ्ख्याभिप्रायो विकल्पः । अतः साप्त-दश्ये सप्तदशेन । उपसत्सु नवकेन । एवं यावती सङ्ख्या तावतिथेन वज्रेणेति ब्रूयात् ।

---

## ६.

१. अमुकशर्मा होता मानुष इत्येवमध्वर्युणोक्तः। अस्मिन्नव-धाविदमाह ।

२. मानुष इत्येवमन्तेन मन्त्रेण प्रवृतः देव सवितरित्येव-मादिकं मन्त्रं जपति[१] किमर्थं मानुष इत्युक्तः प्रवृतो जपत्वित्यु-भयम्। उच्यते। प्रवृत इति वदन्प्रवरणनिमित्तत्वं जपस्य दर्शयति। पशौ च यजमानस्यापि प्रवरणमस्ति। सोमे च मैत्रावरुणादीनाम्। तेषामप्ययं मन्त्रो मा भूदिति विशेषवचनं मानुष इत्युक्त इति ।

३. उपोत्थाय तस्मिन्नेव प्रदेशे अध्वर्योर्दक्षिणमंसं दक्षिणेन प्रादेशेन अन्वारभ्य स्पृष्ट्वा सव्येन च वामहस्तप्रादेशेन आग्नीध्रस्य दक्षिणमंसमेवं युगपदन्वारभ्य इन्द्रमन्वारभामहे इत्येवमादिकं मन्त्रं जपति ।

४. षण्मोर्वीरित्येवमादिकं मन्त्रं अवसृज्य विसृज्यांसौ जपति।

---

१ A ins. मन्त्र।

प्राप्तमेवैतत्। माहचर्यार्थमुच्यते। किमुक्तं भवति। अध्वर्यू संगृह्य तिष्ठति (५.१५.६) इत्युक्ते[1] यत्नोर्वीरिति जपित्वा तिष्ठति।

५. ऐन्द्रीमारुतमित्येवमादिना मन्त्रेणावर्तते[2]। दक्षिणं बाहुमन्विति बाहुवचनात्तत्रैव स्थित आवर्तते।

६. आवर्तनादनन्तरं होतृषदनाच्छुष्कं तृणमादाय उभयतो मूलतो ऽग्रतश्च छित्त्वा ततो निरस्तः परावसुरित्येवमादिना मन्त्रेण निरस्येत्। दक्षिणापरं दिगन्तरामं प्रति। ननु च्छेदनक्रियया निरसनमन्त्रस्य किमर्थं व्यवधानं सूचितम्। उच्यते। समानं होत्रा तृणनिरसनमित्यत्र तदन्तर्भूतयोस्तृणादानच्छेदनक्रिययोर्ग्रहणं यथा स्यादिति। अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणमिति सूत्रान्तरम्।

७. तृणनिरसनमन्त्र आभिचारिकस्तदुच्चारणे तद्ग्रहवचनादपामुपस्पर्शनं सिद्धम्। तदुच्यते। पित्र्यायां मन्त्रोत्सर्गे ऽपि यथा स्यात्। अपग्रहणं च वषट्कृत्योपस्पर्शनम्। उत्तरोत्तरमुपस्पृशेदित्येवमादौ यथा स्यात्।

८. होतृषदनमिति महतं तृणमिति च। होतृषदने ऽशुष्कं तृणं निदध्यात्। शुष्काशुष्कविशेषणं शाखान्तरात्। स्वशाखायां तु मङ्गलमकरणे। अथ यदुपमदनात्तृणं निरस्यति शोधयत्येवैतत् इति (कौ॰ब्रा॰ ६.१३) अविशेषेण[3] शोधनश्रुतेः।

९. होतृषदनाधिकारो ऽनुवर्तते। होतृषदन उपविशेत्।

---

१ A C चत्ते। २ A inserts दक्षिणं बाहुमन्वा॰। ३ C om. अवि।

७.

१. समिधः समिधो अग्न आज्यस्य व्यन्त्वित्यनया य इज्यते स प्रथमः प्रयाजः। आग्नेयाः प्रयाजाः। सौचीकश्चाग्निः। प्रयाजान्मे अनुयाजांश्च केवलानिति लिङ्गात्। अतश्च नाहवनीयः। तेनाहवनीयविकारे ऽप्यग्निपदस्यानूहः। ननु होतृविशिष्टोऽग्निः स्विष्टकृत्। कथमेतत् ज्ञायते। अथ यदग्निं होतारमावाहयति स्विष्टकृतं तदावाहयति तथा नाग्निं होतादित्याह पशवो वै प्रयाजा रुद्रः स्विष्टकृदिति श्रुतेः (कौ० ब्रा० ३. ३. ४)। अयं च सौचीको होतृविशिष्टः। होतारं वृण विष्यदायमिति लिङ्गात्। ततः पित्र्यायां कव्यवाहनेत्यूहः प्राप्नोति। उच्यते। अन्य एव कव्यवाहनो ऽग्निर्न सौचीकः। कथं ज्ञायते। मन्त्रवर्णात्। यो अग्निः क्रव्यात्प्रविवेश वो गृहमिमं पश्यन्नितरं जातवेदसम्। तं हरामि पितृयज्ञाय देवमिति तस्माद्व्यपदेशादन्यः कव्यवाहनः। अतः पित्र्यायामनूहः। प्रथमग्रहणस्य प्रयोजनमुच्यते। इति प्रयाजयाज्या (१,७,६) इत्यत्रेतिकरणः प्रकारार्थः। एवंप्रकाराः प्रयाजयाज्या इति। किमेवं सिध्यति। उच्यते। केषांचिदध्वर्यूणां मित्रविन्दा दशप्रयाजा। तत्र त्वष्टा अनियतस्थानः। तस्य प्राथम्यं मा भूदिति प्रथमवचनम्।

२. तनूनपादग्न आज्यस्य वेत्वनया[1] द्वितीयः प्रयाजः। द्वितीय इत्यसति समिधादीनामयं चोत्तरस्य विकल्पेन।

३. नराशंसो अग्न आज्यस्य वेत्वनया याज्यया द्वितीयः प्रयाजो

---

[1] A ins द्वितीयया।

भवति। वसिष्ठादीनाम्। अत्रापि द्वितीय इत्यनुच्यमाने पूर्वेण सह विकल्पः स्यात्। वसिष्ठशुनकानां नराशंसो ऽत्रीणां चैक इति कात्यायनवचनात्। अत्रीणां नराशंसो विकल्पः। तैः सह समासो वध्रश्वानां विकल्पार्थः। कण्वानां तनूनपान्नराशंसावुभौ पक्षे। तत्र पक्षे समुच्चयः। पक्ष ऽन्यतरेण प्रयोगः। तथैव संकृतीनामपि यथा स्यादेवमर्थः समासः। राजन्यानामसमासात्पूर्वेषां समासे तुल्यधर्मता सिद्धा। अतश्च यथोक्तो ऽर्थः।

४. इलो अग्न आज्यस्य व्यन्त्वित्येतया याज्यया तृतीयः प्रयाजो भवति। येषां तनूनपान्नराशंसावुभावाम्नातौ तेषामुभयोर्भिन्नाभिन्नयोः पाठसामान्यात् प्रयोग आगच्छेत्[1]। तन्निवृत्त्यर्थं तृतीयवचनम्।

५. बर्हिरग्न आज्यस्य वेत्वित्यनया याज्यया चतुर्थः प्रयाजो भवति। चतुर्थ इति संव्यवहाराय संज्ञा। वक्ष्यति। चतुर्थोत्तमावन्तरेण चत्वार (२.१३.१८.) इति। तत्रास्य ग्रहणं यथा स्यात्।

६. स्वाहाग्निमित्येवमादिकया याज्यया उत्तमः प्रयाजः। इत्वास्या तु देवतापदानां चोदनोपदेशात्। अग्नेर्होतुः स्वस्य च मध्यो निगमप्रतिषेधार्थ[2] व्यवधानप्रतिषेधार्थं च इण्डकपाठः। आवाहनदृष्टत्वात्प्राप्नोति[3]। अन्वयस्य प्रकृतिरित्याख्येति वचनात् (१.१६.२)। इति प्रयाजयाज्याः। इतिशब्दः प्रकारे। ततो

---

१ A B C चागच्छेत्। २ A निगद B निगम॰ C निगदम॰। ३ B चावाहने ॰प्राप्नि।

मित्रविन्दायां त्वष्टा अग्न आज्यस्य वेतु इति नवमो दशमो वा शाखान्तरात्। स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्त्विति हैक आहुः। अस्य[1] प्रतिषेधार्थं इति प्रयाजयाज्या इति नियमवचनम्।

---

८.

१. अग्निर्वृत्राणि जङ्घनत् त्वं सोमासि सत्पतिरित्येतावाज्यभागौ पौर्णमास्यां भवतः। अथ यत्पौर्णमास्यां वार्त्रघ्नावाज्यभागौ भवत (कौ० ब्रा० ३.५.) इति श्रुतेः। ऋगुद्देशेनाज्यभागसंज्ञा। ततः श्रूयमाणं प्राकृतं नामधेयमन्यस्मिन्द्रव्ये प्रकृतिं निवर्तयतीति (९.१.२) सद्वन्तावाज्यभागौ इत्येवमाद्युच्यमाने ऋचोरेव निवृत्तिर्भवति। यद्यपि सामान्यान्नियम (१.१६.१८) इति सिध्यति तथाप्येवं सति प्रतिपत्तिगौरवं स्यात्। वार्त्रघ्नावितीयमनुगता संज्ञा। ततः सार्वकामिक्यां केषांचिदेव तावन्यावाज्यभागौ[2] भवतः। पाप्मोपघाते सति कामो लभ्यते। अभिचारे च। तत्र हन्तेरर्थवत्त्वात्। शुद्ध्यर्थायामिष्टौ च। तत्रापि पाप्मा वै वृत्रो यो भूतेर्वारयित्वा तिष्ठति कल्याणात्कर्मणः साधोरिति श्रुतेः[3]।

अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा।
निर्वपेत पुरोडाशं वायव्यं पशुमेव च॥

इत्येवमादौ शुद्ध्यर्थे वार्त्रघ्नौ भवतः। अन्वर्थसंज्ञाविज्ञानात्।

---

१ B inserts इति after आहुः Cf. कौ० ब्रा० ३.४। २ A ०मिदेमावाज्यभागौ। ३ शतपथब्रा० ११ १ ५ ७।

२. अग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वयमित्येतावमावा-स्यायाम् । आमावास्ये कर्मणि । इध्मवन्ताविति संव्यवहारार्थं संज्ञा । अन्वर्थसंज्ञा च । तत्र चर्याण एते एव । पुरोनुवाक्यग्रहणं च न[1] कृतं याज्यासंनिधिसिद्धेः ।

३. आग्नेयसौम्ययोर्यथासङ्ख्येन ।

४. अग्निर्मूर्धा दिवः ककुदित्याग्नेयस्य पुरोलाशस्य पुरोनु-वाक्या । अग्नेरिति नोक्तं पुरोलाशस्यैवैतौ यथा स्याताम् । ततो हविर्यज्ञसोमेषु पुरोलाशानामेवैते भवतः । पशुषु तु विपर्यासः कर्तव्यो यातयामत्वदोषात् ।

५. भुवो यज्ञस्य रजसश्च नेता एषा याज्या । आग्नेयस्येति वर्तते ।

६. अग्नीषोमाविमं सु मे एषा उपांशुयाजस्य पुरोनुवाक्या भवति । यथा पूर्वं च तद्धितेन निर्देशस्तथेह[2] न कृत उपांशुयाज-चोदनायामेव भावार्थम् ।

७. उपांशुयाजस्य जुषाणाविरित्येवमादिका याज्या ।

८. इदं विष्णुर्वि चक्रमे पुरोनुवाक्या । वषट् ते विष्णवास आ कृणोमीति याज्या । वैष्णवस्योपांशुयाजस्य । तद्धितनिर्देशो नियमार्थ इत्युक्तम् । अत्र पुरोनुवाक्या याज्येति नोक्तम् । पूर्वं च दिष्टं पारिभाषिकमिति न्यायः सिद्धः । अतः प्रतीकग्रहणं याज्यापुरोनुवाक्यानामिति (१.१०.१) अविशेषे सत्यपि पूर्वा पुरोनुवाक्या ततो याज्या ।

९. वैष्णवस्येति वर्तते । जुषाणो वा निगदो वैष्णवस्य याज्या-

---

१ A B C om. न । २ A निर्देशश्च ।

त्वेन भवति। कथमेतत् ज्ञायते याज्यात्वेन भवतीति। मन्वय विकल्पः पूर्वेण याज्यानुवाक्यायुगलेन युक्तः। नेत्युच्यते। एकत्वान्निगदस्य याज्यात्वेन च दृष्टत्वात् याज्यात्वमध्यवसीयते। जुषाणो विष्णुराज्यस्य हविषो वेत्वित्येवं प्रयोगः सामर्थ्यात्।

१०. अग्नीषोमा सवेदसा पुरोनुवाक्या। युवमेतानि दिवि रोचनानीति याज्या। कस्य। अग्नीषोमीयस्य पुरोलाशस्य। पुरोलाशस्तद्धितवाच्यस्तस्य चोक्तं प्रयोजनम्।

११. इन्द्राग्नी अवसा गतं पुरोनुवाक्या। प्र चर्षणिभ्यः पृतना हवेषु याज्या। तद्धितनिर्देशः पुरोलाशाभिधायी उक्तप्रयोजनः।

१२. एन्द्र सानसिं रयिं पुरोनुवाक्या। प्र ससाहिषे पुरुहूत शत्रून् याज्या। इति सांनाय्यस्य। सांनाय्यस्येति वचनं नियमार्थम्। अतो नान्यस्यैन्द्रस्य[1] हविषः।

१३. महाँ इन्द्रो य ओजसा महाँ इन्द्रो नृवदा चर्षणिप्रा इत्येते याज्यानुवाक्ये माहेन्द्रस्य सांनाय्यस्य।

१४. इन्द्रं वो विश्वतस्परि पुरोनुवाक्या। मादयस्व हरिभिर्ये त इन्द्रेति याज्या। एते याज्यानुवाक्ये इन्द्रस्य न महेन्द्रस्य। किंविशिष्टस्येन्द्रस्य। अप्रतिनिधेः। कीदृशः प्रतिनिधिः कीदृशो वाप्रतिनिधिः। उच्यते। य. कस्यचित् स्थाने सादृश्येन भवति स प्रतिनिधिरित्युच्यते। तद्यथा। अयमेवामावास्यायामिन्द्रश्चन्द्रमसः प्रतिनिधि.। कथमेतत् ज्ञायते। इन्द्रश्चन्द्रप्रतिनिधिरिति

---

1 A om ऐन्द्रस्य।

श्रुत्यर्थवादात्। अथ यदमावास्यायामिन्द्रं यजत्येतज्ज्योतिर्वा अमावास्या न ह्यत्र चन्द्रो दृश्यत (कौ० ब्रा० ३. ६) इति। किमेतेन सूत्रेण सिद्धम्। चरुः सांनाय्यालाभे सायंदोहस्थाने वा पुरोलाश इत्येवमादौ एन्द्र सानसिं रयिं प्र ससाहिष इति याज्यापुरोनुवाक्ये सिद्धे भवतः। कथं नामाप्नुतः। सांनाय्यस्येति नियमात्। अतो ऽप्रतिनिधेरिति देवताविशेषणत्वादैन्द्रं पञ्चशरावमोदनं निर्वपेत्पुरोलाशं वेति भेदेनाप्युपपातात्तत्प्रतिनिधिः प्रायश्चित्तं[1] वेति। यथास्तु तथास्तु। एन्द्र सानसिं प्र ससाहिष इत्येते[2] भवतः। ननु दृष्टचन्द्रायां प्रतिनिधिकार्याभावात् नैते प्राप्नुतः। उच्यते। सांनाय्यस्येति वचनान्नविष्यत इति। अमावास्याव्यतिरेकेणैन्द्रस्य हविषः सांनाय्यवर्जितस्य इन्द्रं वो विश्वतो मादयस्व हरिभिरित्येते याज्यानुवाक्ये भवतः। मन्त्रविषये तु यः कात्यायनपठित ऐन्द्रः पञ्चशराव ओदनो वा[3] तस्यामावास्यायामपीन्द्रं वो विश्वतो मादयस्व हरिभिरिति[4]। तत्र हि मन्त्रारंभवात्। ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्पुरोलाशं वा यथोदनीयन्ति यथापूपीयन्तीति श्रुतेः (कात्या० १९. २. १९)। यदि यजमाना बुभुषया ओदनमिच्छन्ति यदि पुरोलाशमिच्छन्ति तत ऐन्द्रः पञ्चशराव ओदनो वा[5]। अतो ऽमौ न चन्द्रप्रतिनिधिः।

---

१ कात्या० १४ ३ १—६। २ B alls तु। ३ B in marg पुरोलाशो वा।
४ B वते। ५ B adds पुरोलाशो वा।

८.

१. पिप्रीहि देवाँ उशतो यविष्ठ एषा स्विष्टकृतः पुरोनुवाक्या भवति । पुरोनुवाक्याग्रहणं निगदव्यपेतत्वादृचः संदेहव्युदासार्थम् ।

२. अत्र प्रयोगः । ये यजामहे ऽग्निं स्विष्टकृतमिति । किं कारणम् । अथ यदग्निं स्विष्टकृतमन्ततो यजतीति श्रुतेः । प्रैषे च तथा दृष्टम् । होता यक्षदग्निं स्विष्टकृतमिति । तथा च संप्रैषः । अयालग्निरिति पदद्वयस्यार्थः दृष्टवानग्निर्वक्ष्यमाणा देवताः स्विष्टकृदभिधानं चैतत् । कुतः । एष ह वै देवेभ्यो हविः प्रयच्छतीति श्रुतेः । अतश्च स्विष्टकृद्विकार ऊहः । तद्यथा पित्र्यायाम् । ये स्वधामहे ऽग्निं कव्यवाहनमयालग्निः कव्यवाहन इति । अवमाननियमार्थो दण्डकपाठः । तद्वैके देवतां पूर्वां कुर्वन्त्ययाड्कारादिति । तद्व्युदासार्थश्च दण्डकपाठः । अनुयाजवदप्रयाजमुदयनीयं तैत्तिरीयाणाम्[1] । अतश्च तेषामुदयनीये प्रयाजा न सन्ति । अनुयाजास्तु विद्यन्ते । तत्र भविष्यत्स्वप्यनुयाजेषु अयाड् देवानामाज्यपानां प्रिया धामानीत्येवमेव प्रयोगः । अयालिति लुङ्छन्दसि कालत्रये ऽपि विधानात् । अग्नेः कव्यवाहनस्य होतुः प्रिया धामानीति पित्र्यायामूहः । जातवेदा इति गुणपदं वरुणस्यापि तुल्यम् । अतश्चावभृथे ऽप्यूहः । ये यजामहे ऽग्नीवरुणावयाडग्नीवरुणावग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाट् वरुणस्य प्रिया धामान्ययाट् देवानामाज्यपानां प्रिया धामानि

1. B adds अपि ।

यजतामग्नीवरुणयोर्होत्रोः प्रिया धामानि यजतां स्वं महिमान-मायजतामेज्या इषः कृणुतां तावध्वरौ जातवेदसौ जुषेतां हविरित्यूहः। अग्ने यदद्य विशो अध्वरस्य होतः एषा सह निगदेन याज्या।

२. वषट्कृत्येति क्त्वाप्रत्ययो ऽङ्गार्थतां स्विष्टकृतो ज्ञापयितुम्। अतो ऽन्यत्रापि यत्रयत्र स्विष्टकृदर्थवादस्तत्रतत्र वषट्कृत्योपस्पर्शनम-पाम्। अप उपस्पृश्येत्यन्यदृष्टत्वात्। अथ यदप उपस्पृशति शान्तिर्वै भेषजमापः शान्तिरेवैषा भेषजमन्ततो यज्ञे क्रियत (कौ० ब्रा० ३. ६.) इति श्रुतेः।

---

## १०.

१. इलोपह्वानं करिष्यतः। भाविनीलोपह्वान इत्यर्थः। पाणे-र्दक्षिणस्य या प्रदेशिनी अङ्गुष्ठादनन्तराङ्गुलिस्तस्यां प्रदेशिन्याम-नक्ति सव्यत्यध्वर्युः[1]।

२. उत्तमे च पर्वणि मध्यमे च। तस्या एव प्रदेशिन्या द्वे स्थाने अध्वर्युणाभ्यक्ते। तयोर्यत्पूर्वं तदाद्यस्वतिना ते कृतस्य प्राश्ना-मौष्ठे प्राणायेत्यनेन[2] मन्त्रेणाधरौष्ठे निलिम्पेत्। यद्द्वितीयमञ्जनं तन्मनसस्पतिना ते कृतस्य प्राश्नाम्यूर्ज उदानायेत्युत्तरौष्ठे निलिम्पेत्। आध्वर्यवस्याङ्गुलिपर्वाञ्जनस्योपदेशो निराकाङ्क्षार्थः।

---

१ C प्र० A प्रचाम्न्त्य०। २ B प्राणायेति पूर्वमञ्जनमधरौष्ठे।

३. अपामुपस्पर्शनं कृत्वा ततो ऽन्यत्। शाखान्तर एवमेव विहितत्वात्।

४. दक्षिणेन हस्तेन उत्तरेडां धारयन्। इडामुपह्वयत इति संबन्धः। उत्तरेडाग्रहणं शास्त्रसंव्यवहारार्थम्। उत्तरेडां प्राश्नेत्येव-मादिषूपस्थितं द्रष्टव्यम्।

५. धारयन्निडामुपह्वयत इति संबन्धः। असंकुचिताङ्गुलिना दक्षिणेन पाणिना उत्तरेडां धारयति। सव्येनेडापात्रीम्। सव्येन होटचमसं च पात्रीं च संयच्छतीति सोमे दर्शनात्।

६. क्रमार्थं वचनम्। हस्तेन चत्वार्यवदानान्यध्वर्युर्ददाति। पञ्चमं होता स्वयं गृह्णीयात्।

७. जपित्वेडामुपह्वयत इति संबन्धः। स्वयमित्यप्यत्रोपयुज्यते। आत्मनो मुखसंमितां हृदयसंमितां वा। न यजमानस्य। धारयन् किं करोतीत्यत आह।

---

## ११.

१. उपहूतं रथंतरमित्येवमादिकं जपं जपित्वेडामुपह्वयते। जपित्वेति वचनादुपांशुप्रयोगः। अनेकस्वर्यं च।

---

## १२.

१. इडोपहूतेत्येवमादिमत्स्विदुपहूत[१] इत्येवमन्तो निगद इडो-पह्वानमंत्रस्तेनोपह्वानं कृत्वा।

---

१ B ०मत्वमादिकेष्वा०।

२. अनन्तरमिलां जिघ्रेत् ।

३. अन्तरिलं इलामध्ये इलोपह्वानमंज्ञकस्य निगदस्य[1] मध्ये चतुरवानिति उच्छ्रमिति। तत्र मैत्रावरुणीति प्रथम उच्छ्रासो निराकाङ्क्षत्वात्[2]। वर्धानिति द्वितीय उच्छ्रासः। पुत्रे इति तृतीयः। अन्ते चतुर्थः ।

४. यदा इलामध्ये चतुरवाननं तदा ब्रह्म देवकृतमुपहूतमिति द्वितीयः। यज्ञपतिशब्दस्यानेकयजमानके ऽप्यनूह्यो देवताभिधानमिति संदेहात्। उपहूताविमौ यजमानौ द्वियजमानके। उपहूता इमे यजमाना इति बहुयजमानके। सर्वस्वार (१५.१०.१) उत्तरस्यां देवयज्यायामित्यस्यानुत्सर्गः[3]। अस्मियज्ञे तु दीक्षणीया-पुरुषसंस्काराग्नीर्वर्जमिति कात्यायनवचनात्सर्वाग्निपामभावः (२५.१२.४२)। अपरे पुनः [4]क्रतुवैगुण्यभयात्प्रयोगमिच्छन्ति।

५. इलासीत्येवमादिना मन्त्रेणोत्तरेलां संप्राश्य भक्षयित्वेत्यर्थः। क्रमार्थः क्त्वाप्रत्ययः।

६. इतरा या पात्र्यामस्ति तां यजमानपञ्चमा ऋत्विजः प्राश्नन्ति। यजमानो ब्रह्मा होताध्वर्युराग्नीध्रश्चेति वाजिने पठिताः। पञ्चैव। न मैत्रावरुणः प्रतिप्रस्थाता वा। प्राश्नेत्यनुवर्तमाने पुनर्वचन मन्त्रप्रतिषेधार्थम् ।

७. भक्षणानन्तरं तावद्वाग्यमो होतुर्यावन्मार्जनं न[5] कृतम्। ब्रह्मयजमानयोस्त्वन्यत एव वाग्यमः सिद्धः।

---

१ B om निगदस्य। २ A ins ब्रह्म देवकृतमुपहूत इति द्वितीय and alters द्वितीय। तृतीय to तृतीय। चतुर्थं resp। ३ A ०स्यात्सर्गं। ४ C क्रतु०। ५ B C (orig) om न।

८. इदमाप प्र वहतेत्यादिना ढचेन यथाम्नायपठितेनोपांशुप्रयोगेण मार्जयन्त इडाभक्षयितारः। इडाङ्गत्वान्मार्जनस्य। मार्जनं मूर्धन्यवसेको ऽद्भ्योक्तत्वात्। अद्भिश्च मार्जनं शान्तिर्वै भेषजमाप इति लिङ्गात्[1]। अन्तर्वेद्यवस्थिते पवित्राभ्यां संयुक्ते पात्रे। पवित्रवतीति मतुप्निर्देशाद्गृहणभूते पवित्रे। अतस्तदभावे ऽपि पत्नीसंयाजनेषु मार्जनम्।

९. कृते मार्जने पवित्रप्रतिपत्त्यनन्तरमध्वर्योर्भागपरिहरणं[2] स्वश्रुतिविहितम्। तदस्माकमवधिलेनोपदिष्टम्। यजमानभागस्याप्यत्र परिहरणमस्त्येव। न तु प्रोषिते। ब्रह्मणस्तु सर्वदा भवतीति सर्वत्र निर्दिष्टम्[3]। एतस्मिन्नवधावन्वाहार्यसंज्ञकमोदनं दक्षिणाग्निपक्वमाहरन्ति। बहुवचनमविवक्षितम्। अवधित्वेनोद्दिश्यमानत्वात्।

१०. यास्त्वपीष्टिषु भागपरिहरणं अन्वाहार्यहरणं च नास्ति तास्वप्येष एव दक्षिणाकालः। सर्वासामिष्टीनामिति वचनात्। न तु पशौ सत्यपि भागपरिहरणे।

११. आदिष्टदक्षिणास्वन्वाहार्यो न भवति। आदिष्टदक्षिणा आग्रयणमित्रविन्दाप्रभृतयः।

१२. एषा त इत्येवमादिना मन्त्रेण समिधमाग्नीध्रप्रक्षिप्तां होतानुमन्त्रयते। अनेकस्वर्यमुपांशु च प्रयोगः। अथ यत्समिधमनुमन्त्रयत इध्मस्य वा एषैकातिशिष्टा भवति। तस्मादेनामनुस्तौतीति (कौ० ब्रा० ३.७) श्रुतेः। यदीध्मानुवचने ऊहस्ततो ऽत्रापि।

---

१ A C (sec. h) वचनात् instead of लिङ्गात्। २ A C om परि। ३ B स्त्र भवतीति नि० C has सर्वदा in marg.

स उच्यते। एतेवामग्नी समिधौ ताभ्या वर्धेथा चा च प्यायेथाम्। अनुमन्त्र्येति क्रामत्ययो ऽनुयाजाङ्गप्रज्ञापनार्थं।

१२ त्रीननुयाजसञ्ज्ञकान्वक्ष्यमाणान्यजति याज्याधर्मेण पठति। त्रिग्रहण कर्मत्रयप्रदर्शनार्थम्[1]। अनुयाजानिति शास्त्रसव्यवहारार्थम्।

---

१३.

१ अथ प्रथमो ऽनुयाज ।

२ अथ द्वितीय ।

३ विरम्येत्यर्थ ।

४ इति एता एव[2] सर्वत्र। तत पित्र्यावभ्यथयोरनूह । न च तनूनपाद्याजिनो विकार इतीतिकरणस्य[3] नियमार्थत्वात्।

---

१४.

१ अध्वर्युणा सूक्ता ब्रूहीत्येवमनेन निगदेन सम्प्रेषितो वक्ष्यमाण सूक्तवाकमाहेति वाक्यशेष । ननु सम्प्रेषितो ऽन्वाहेति परिभाषितमेव। सत्यम्। निमित्तार्थस्तु सम्प्रैषपाठ । सामिधेनीसम्प्रैषवत्। वक्ष्यति। अप्रत्तदैवते दुष्टे नावृत्तिरस्ति होतस्य। तथा नावृत्ति प्रत्तदोषे ऽस्ति। अत्र होत्रावृत्तिप्रतिषेधे ऽपि[4] सम्प्रैष आवृत्तेर्निमित्त भवति। तत सम्प्रैषवशादावृत्तिर्भवति।

२ अग्ने त्व सूक्तवागमीत्येवमन्त निगदखण्डमुक्त्वा विरमेत्।

---

१ C om त्रय। २ A एताश्च। ३ A विकार इतिक०। ४ C ins इति।

३. यजमान द्यावापृथिवी स्तामित्येवमन्तं निगदखण्डमुक्त्वा विरम्य ततो ऽनन्तरम्।

४. अभयंकृतावित्येवमन्तं निगदखण्डमुक्त्वा विरम्य ततो ऽनन्तरम्।

५. तयोराविद्दौत्येवमन्तं निगदखण्डमुक्त्वा विरम्य ततो ऽनन्तरम्।

६. अवचने ऽप्यवसानं वाक्यपरिसमाप्तिः। एवमुत्तरेष्वपि द्रष्टव्यम्।

७. हविरजुषतेति हविःशब्दः प्रायेण प्रधानवाची दृष्टः। तदाशङ्कया उदर्कस्यापि पाठः। अग्निरिदमिति च केषांचित्। तन्निवृत्त्यर्थं च दण्डकपाठः। स्वस्य च महिम्नः प्रतिषेधार्थम्।

८. प्रधानहविर्निगमनम्। उक्तं दण्डकपाठप्रयोजनम्।

९. अक्रातामित्यन्यत्रापि। द्विदेवत्य एवमेव यथा स्यादिति सकलपाठः। ननु कीदृशो ऽन्यथा प्राप्नोति। उच्यते। अक्षपातामिति। किं कारणम्। ऊहस्याच्छान्दसस्मरणात्। अक्रातामिति तु च्छान्दसम्।

१०. यथेष्टं व्यवस्था।

११. पूर्ववद्विचारः।

१२. यथेष्टं व्यवस्था।

१३. यथेष्टं व्यवस्था।

१४. अत्रापि अक्रतेत्येवमेव बहुदेवते नियमो[1] यथा स्यात्। अक्षपतेति लाक्षणिको मा भूदिति सानुषङ्गः पाठः।

---

१ C निगमो।

१५. स्विष्टकृन्निगममेतत्। अतश्च पित्र्यायामूहः। अग्निः कव्यवाहनो होत्रेण हविरजुषतावीवृधत महो ज्यायो ऽकृतेति।

१६. अत्राप्यवधानं हविर्नामधेयग्रहणात्।

१७. असावसौ इति एवं प्रथमया विभक्त्या युक्ते नामनी यजमानस्य। न होतुः। अभिव्याहृत्य। असौतिवचनान्नोपनामकेन। विस्पष्टं निरवकाशम्[१]। तथा च श्रुतिः। उच्चैर्गृहीयाद्यथाचार्यः स्यात् इति। नामनी इति शाखान्तरात्। असावसाविति वीप्सानिर्देशः प्रथमानिर्देशश्च समासप्रतिषेधार्थं पृथगवसानार्थं च। ननु कतमे द्वे नामनी। उच्चैर्गृहीयादिति वचनादुपनामकस्याप्राप्तिरेव। गुह्यनाम्नोऽपि। तदस्य पिता माता च विद्यातामिति नियमादिहाप्राप्तिः। नामकरणे पूर्वं तु दैवतं सर्वत्रेति[२] तुशब्दप्रयोगात्। सर्वत्रेति वचनादिह नक्षत्रदेवताश्रयं पूर्वं व्यावहारिकमुत्तरम्।

१८. अभिव्याहृत्येति क्त्वाप्रत्ययदर्शनात् द्वितीयेन नाम्ना उत्तरां देवयज्यामित्येवमादेर्निगदखण्डस्य संधानम्। अथ पञ्चाग्निषो वदतीति वचनात्पञ्चाग्निषः पठित्वावसानम्।

१९. अवसानमत्र वाक्यपरिसमाप्तेः। अत्र सूक्तवाके ऽग्निशब्दो होतृशब्दरहितः। ततश्चाहवनीय उच्यत इति शङ्का। संप्रैषे तु दैव्या होतारा इति दर्शनात्स्विष्टकृतो ऽभिधानमिति शङ्का। एवमयं चोदनासंदेहः। तस्मादेषामग्निपदानां विकारेष्वप्यनूहः।

---

१ B C निरवाशक्रम्। २ शा॰ गृ॰ १ २४।

२०. एनमित्यस्य पदस्य स्थाने न इति वा प्रचिपेत्।

२१. इष्टं च वीतं चेत्यारभ्य नमो देवेभ्य इत्यवस्येत्। ननु संज्ञाकरणं विना कथमस्य शास्त्रे संव्यवहारः। स्विष्टकृन्निगदे सूक्तवाके च (१. १६. १०.) अन्यच चाग्नीषोमीयात्सूक्तवाके नामग्रहणं (६. १. २४.) इत्यादिषु। उच्यते। संप्रैषोच्चारणसामर्थ्याद्यथा सामिधेनीनाम्। सूक्तवाकमन्त्राणामूह उच्यते। द्वियजमानके। श्रोमन्वती वामस्मिन्यज्ञे यजमानौ द्यावापृथिवी स्ताम्। बहुयजमानके। श्रोमन्वती वो ऽस्मिन्यज्ञे यजमाना द्यावापृथिवी स्ताम्। अस्मात्प्रभृतीति ऋधिधातुर्द्विवादौ स्यादौ च पठ्यते। ततश्चोदनासंदेहादनूहः। द्वियजमानके। आशासाते इमौ यजमानौ। बहुयजमानके। आशासत इमे यजमानाः। स्वयमपि सत्रादिषु यजमानस्य होत्रं कुर्वतो ऽहं यजमान इति न भवति। सरिमान्यजमानानिति महामते दर्शनात्। द्वियजमानके। अग्निशर्मप्रजापतिशर्माणौ। देवदत्तयज्ञदत्तावुत्तरां[1] देवयज्यामाशासाते भूयो हविष्करणमाशासाते आयुराशासाते सुप्रजास्त्वमाशासाते दिव्यं धामाशासाते। यदनेन हविषाशासाते तदश्यास्तां तदृध्यास्तां तदाभ्यां देवा रासन्तां तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परि मानुषाः। अथ बहुयजमानके। अग्निशर्मप्रजापतिशर्मसोमशर्माणो देवदत्तयज्ञदत्तविष्णुमित्रा[2] उत्तरां देवयज्यामाशासते भूयो हविष्करणमाशासत आयुराशासते सुप्रजास्त्वमाशासते दिव्यं धामाशासते। यदनेन

---

१ A •इत्तशर्मायो। २ A •मित्रशर्माय।

हविषाशासते तदस्यामुष्टमृथाममुष्टदेभ्यो देवा रासन्तां तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परि मानुषाः।

२२. स्तीर्णे बर्हिषि अञ्जलिमुभयहस्तसंयोगं निधायावसाय जपति नम उपेत्यन्तं मन्त्रम्। अथ बर्हिषि प्राञ्चमञ्जलिं निधाय जपति नम उपेतीति श्रुतेः।

२३. शंयोर्ब्रूहीत्येवमन्तेन निगदखण्डेन संप्रेषितो ऽध्वर्युणा होता तच्छंयोरावृणीमह इत्येतामृचमुक्तोपसृष्टेत्। परिभाषिते ऽपि संप्रैषवशात्कथं नाम होत्रावृत्तिः स्यात्[1]। शंयोर्वाक इति शास्त्रसंव्यवहारार्थं संज्ञाकरणम्। पुरा शंयोर्वाकात् शंयन्ता वेत्येवमाद्यर्थम्। उक्तोपसृष्टेति क्त्वाप्रत्ययः शंयोर्वाकस्योपसर्गनमङ्गमित्येतस्य ज्ञापनार्थम्।

२४. अग्निर्होता वेत्तित्यादि सुगादापनम्। तत आरभ्य मन्द्रया वाचा तावद्यावदुत्तम आज्यभाग इष्टः। जपानामयं नियमो न भवत्यप्राप्तत्वात्। अग्निमन्थन एववामाकाशादीनामनियमः प्राक् स्रुगादापनात्।

२५. प्रधानयागादारभ्य परं मध्यमया मध्यमेन स्थानेन।

२६. अनुयाजेभ्य आरभ्य उत्तमया वाचा उत्तमेन स्थानेन। अनुयाजप्रभवद्यानुयाजाङ्गत्वादूर्ध्वं।

---

१ A ms. इति पुनर्वचनम्।

## १५.

१. उपांशु मृदुना शब्देन पत्नीसंयाजसंज्ञकैर्यागैश्चरन्ति पत्न्याग्नीध्राध्वर्यवः। होतुरपि तद्देशगमनं तथैव च क्रियेत्येवमर्थमिदमुक्तम्।

२. सोमाद्याश्चतस्रो देवता यजति। ते वै चत्वारो भवन्तीति श्रुतेः।

३. राका च सिनीवाली च राकासिनीवाल्यौ द्वे देवते। उभयपदार्थप्रधानत्वाद्द्वन्द्वस्य। प्रजाकामस्येति प्रजोत्पत्तिमिच्छतो यजमानस्य। ननु षष्ठीनिर्देशः किमर्थम्। उच्यते। यजतीति पूर्वसूत्रे परस्मैपदनिर्देशाद्धोतुर्यजमानार्थं प्रजामिच्छत इत्याशङ्क्येताध्वर्युं मृतमिच्छन्निति यथा। पूर्वं गृहपतेरिति राकासिनीवाल्योर्यागक्रमात् पाठक्रमस्य सर्वत्र विवक्षित इत्येतज्ज्ञायते। गृहपतिरित्येकदेशनिर्देश उपलक्षणत्वात्।

४. यजतीत्युक्तम्। कथमित्याकाङ्क्षिते याज्यानुवाक्याः प्रतीकग्रहणेन पठति। ताश्चैता ऋचो द्वादश पर्णां यागानां प्रत्येकं यथासङ्ख्येन द्वे द्वे भवतः। सोमस्य याज्यापुरोनुवाक्यायुगलम्। आ प्यायस्व समेतु ते पुरोनुवाक्या सं ते पयांसि समु यन्तु वाजा इति याज्या। आ प्यायस्व मदिन्तमेत्येषा न भवति। गायत्रीरहितत्वात्। अप्राधान्याच्च। एवमपि सति ग्रावस्तोत्रे सकलपादपाठः। अनेनैव क्रमेण तत्र तिस्रो मा भूवन्निति। ननु आप्यायितवतीनास्मिति तत्रोक्तेः कथं संदेहः। आपोहिष्ठीयाभिरितिवदाशङ्क्येत[१]।

---

१ B इति यद्वा॰।

सोमाप्यायने तु सोम विश्वेभिरंशुभिरिति लिङ्गात् सुतरामाशङ्क्येत। तस्मात्सकलपादपाठः। त्वष्टुर्याज्यानुवाक्यायुगलम्। इह त्वष्टारमग्रियं पुरोनुवाक्या। तन्नस्तुरीपमध पोषयित्नु याज्या। ननु तन्नस्तुरीपमद्भुतमिति प्रथमा। कस्मादतिक्रम्यते। उच्यते। त्रिष्टुप् याज्या कर्तव्या। न च सा त्रिष्टुप्। यत्र पुनस्त्रिष्टुबपि पुरोनुवाक्यात्वेन विनियोक्तुमिष्यते तत्र सकलपादपाठः संदेहव्युदासार्थः। तद्यथा। पिशङ्गरूपः सुभरो वयोधाः तन्नस्तुरीपमध पोषयित्नु देवस्त्वष्टा सविता विश्वरूप इति पुरोनुवाक्या इति। अग्नीषोमीयप्रकृतित्वात् लाङ्गस्य तुल्यप्रतीकत्वात् प्राथम्याच्च। तन्नस्तुरीपमद्भुतमिति मा भूदिति सकलपादपाठः। एवं वैश्वामित्रीणां पश्नौ यातयामत्वे वासिष्ठी[1] प्रयुज्यते। देवानां पत्नीनां याज्यापुरोनुवाक्यायुगलम्। देवानां पत्नीरुशतीरवन्तु नः पुरोनुवाक्या। उत ग्ना व्यन्तु देवपत्नीरिति याज्या। यदि देवानां पत्नी राकामहं सिनीवालीति हुत्वा इत्युच्येत ततः पाठक्रमनियम[2] एवाङ्गीकृतः स्यात्। ततो देविकाहविःषु विपर्यासो न स्यात्। प्रत्येकं प्रतीकग्रहणाद्यत्र[3] यातयामदोष[4] उत्प्रेक्ष्यते तत्र[5] विपर्यासः सिद्धो भवति। राकाया याज्यानुवाक्यायुगलम्। राकामहं सुहवां सुष्टुती हुवे पुरोनुवाक्या। यास्ते राके सुमतयः सुपेशस इति याज्या। सिनीवाल्या याज्यानुवाक्यायुगलम्। सिनीवालि पृथुष्टुके पुरोनु-

---

१ B ins ष्याला। २ C om नियम। ३ A यत्रयत्र। ४ A •यामत्व दोष। ५ A तत्रतत्र।

वाक्या। या सुबाहुः स्वङ्गुरिरिति याज्या। अग्नेर्गृहपतेर्याज्यानुवाक्यायुगलम्। अग्निर्होता गृहपतिः स राजा पुरोनुवाक्या। वयमु त्वा गृहपते जनानामिति याज्या। वयमु त्वा गृहपत इत्यत्र इतिकरणो नियमार्थः। अत्रैवैता भवन्ति। अन्यथा[१] प्रथमोपदिष्टत्वात् सर्वत्र प्राप्नुयुः।

५. यथा ह त्यद्वसवो गौर्यं चित्। एतामेव ऋचं जपित्वा नान्यत्किंचित् तत इळामुपह्वयते। इळोपहूतेत्येवमादिना निगदेन। अथ यदृचं जपति स्वस्त्ययनमेव तत् कुरुत इत्यर्थवादान्तरादर्गनादेतावानेव जपो नोपहूतं वृहदिति।

६. अत्र पत्नीसंयाजवेलायां उपहूतो ऽयं यजमान इत्यस्य स्थाने उपहूतेयं यजमानीति वा विकारो भवति। ननु यजमानशब्दो ऽकारान्तस्ततो यजमाना एव प्राप्नोति। तद्यथा। पचमाना ब्राह्मणीति। सत्यम्। पुंयोगादाख्यायामिति (पा० ४. १. ४८) वचनाद्यजमानीति भवति। तत ईकारं पठन् सूत्रकार एतज्ज्ञापयति यजमानप्रयुक्तो याग इति। किमेतस्य ज्ञापने प्रयोजनम्। सत्रेषु मृते यजमाने न परिसमाप्तिः पत्नी जीवतीति कृत्वा। अतश्च नेदिष्ठिना सत्रेतरे यजमानाः परिसमापयन्ति। मृतभर्तृकायास्तु तदन्तकर्म। ननु ये च यज्ञपतिं वर्धानित्यत्र कथं। उच्यते। विभाषा सपूर्वस्येति (पा० ४, १, ३४)। ईकारस्य पक्षे विधानादेवमपि साधुः प्रयोगः। यथा ग्रामस्य पतिर्ब्राह्मणीति (पा० ४. १. ३३)। द्विपत्नीके। उपहूते इमे यजमान्यौ। बहुपत्नीके। उपहूता इमा

---

१ A ञ्न्यत्र।

यजमान्यः। ननु प्रकृतावूहो न प्राप्नोति। उत्तरस्यां ततावूहनवचनात्। सत्यम्। किं तु प्रकृतौ यथार्थानां[1] स नियमः। अयथार्थानां[2] तु प्रकृतौ विकृतौ च सर्वत्रोहः कर्तव्यः। विकारग्रहणाच्च। अश्वमेधे दर्शपूर्णमासादिभिः संस्कृतायतस्रो जाया उपकॢप्ता भवन्ति। तत्र संस्कारत्वादूहः। पत्नीः संनह्येति च शाखान्तरे प्रैषपाठात्[3]।

७. येयमनन्तरेला एतदन्ताः पत्नीसंयाजाः। पत्नीसंयाजा इत्यधिकारे पुनः पत्नीसंयाजा इति वचनं नियमार्थम्। तेन दृष्टौनामिलान्तत्व उक्ते पूर्वा इला प्रत्येतव्या। उत्सृजन्तः कर्माणि यन्तीति ज्ञापकम्।

८. शंयोर्वाकः शंयुन्तदन्ताः पत्नीसंयाजा वा भवन्ति। अस्मिन्नपि पक्षे इला कर्तव्यैव। कुत एतत्। पूर्वविधानादिलायाः।

९. प्र त्वा मुञ्चामि वरुणस्य पाशादित्येवमादिना मन्त्रेण पत्नीसंनहनं योक्त्रं नान्यत्। पत्नीसंयाजप्रकरणात्[4]। तद्विमुञ्चति। वेदं विमुच्य पूर्वतरम्। ननु क्रियामन्त्रयोर्मध्ये वेदं विमुच्येति किमर्थम्। उच्यते। साहचर्यार्थम्। अतश्च यत्र वेदविमोकप्रतिषेधस्तत्र योक्त्रविमोकप्रतिषेधोऽपि भवति। तद्यथा। दीक्षणीयाप्रभृत्यानूबन्ध्यायाः संस्थानात्र वेदे पत्नीं (८. १२. ९) वाचयतीत्येवमादिषु योक्त्रविमोकप्रतिषेधः सिद्धो भवति।

१०. अञ्जलिरुभयहस्तसंनिवेशः। तस्मिन्नञ्जलौ पत्नीसक्तं योक्त्रं वेदं च विमुक्तं कृत्वा वक्ष्यमाणं करोति। पत्न्याः संनिधानाभावे

---

१ A प्रकृतौ यथार्थानां यमर्थेनार्थानां तु स नियम। २ A यथार्थादयथा॰ C (sec. h) adds यथार्थानाम्। ३ C प्रैषाभावात्। ४ A॰ पाशा इति करणात्।

अनालम्भुकले वा तद्देशे। तदा च न मन्त्रः[१]। कुत एतत्। अग्निहोत्रहोमे अञ्जलौ च पत्न्याः सं त्वा सृजामि प्रजया धनेनेत्यञ्जलाविति (२. १०. ५) यत्नात्। पत्न्यनेकत्वे ऽप्येकस्याः[२] परार्थत्वात्। संभवे सति एवंरूपाणि क्रत्वर्थानि ज्येष्ठा पत्नीति[३]। कुतः। सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा इति[४] स्मरणात्।

११. अद्भिः परिषिञ्चन्निति वचनात्सर्वत्र परिषेको ऽनिर्दिष्टद्रव्यको ऽद्भिः कर्तव्यः। अन्यदृष्टं सर्वत्र भवतीति। वेद्योक्त्वे इति यदि नोच्येत वेदस्यैव केवलस्य स्यात्। अनन्तरत्वात्। जपतीति वचनादुपांशुप्रयोगः। अनेकस्यर्थं च।

१२. एवमन्तं मन्त्रं वेद्योक्त्वे परिषिञ्चञ्जपेत्।

१३. घृतवन्तं कुलायिनमित्येवमादिकं मन्त्रं वेदे अञ्जलौ स्थिते ऽपनीय योक्त्रं होता पत्नीं वाचयति। भाणयतीत्यर्थः। शक्तौ सत्यामर्धर्चमर्धर्चं भाणयेत्। अर्धर्चन्यायाश्चर्च इति वचनात्। अशक्तौ तु यथाकथंचित्। वाचनस्य प्राधान्यात्।

१४. सा पत्नी तृणानि वेदादुत्थाप्य अन्तरेण मध्य ऊरू न्यस्यत इति। प्रक्षिपतीत्यर्थः। उपसर्गादस्यत्यूह्योरित्यात्मनेपदम्[५]। न्यस्यत इति। कर्तृभिप्रायेण क्रियाफलार्थं वा। ततश्चानेका अपि कुर्युः।

१५. तन्तुं तन्वन्नजसो भानुमन्विहि इत्यनेन मन्त्रेण गार्हपत्यादुत्तरतः। आ बर्हिषः स्तीर्त्वा यावद्बर्हिराहवनीयान्तं स्तीर्णं तावत्। उत्तरेण गार्हपत्यमित्यसति पत्नीदेशादेव प्राप्नुयात्।

---

१ B C •कल्पेन न तद्देशे। कुत•। २ A ins एव। ३ B C ज्येष्ठपत्नीति or •मौनि। ४ याज्ञवल्क्य १. ८८। ५ See Mahābhāshya ed. Kielhorn I 232

१६. आपूर्णो ऽसीत्येवमादिना मन्त्रेण वेदशेषं वेदस्यावशिष्टं यत्तदुपतिष्ठते। वेदाधिकारे ऽपि पुनर्वेदवचनमास्तरिह्वविकल्पे ऽपि होतुरुपस्थानार्थम्। कथं वास्तरिह्वविकल्पः। उच्यते। तमा वेदेरास्तृणातीति शतपथे पक्ष्या आस्तरिह्वविधानात्।

१७. एतेनाग्ने ब्रह्मणा वावृधस्व अयाड् यज्ञं जातवेदा आभ्यामृग्भ्यामाहवनीयमुपस्थाय। उपस्थानं नाम भक्तिभरेण मनसाभिलषितार्थसिद्धये देवतोपधावनं तत् कृत्वा ततः।

१८. प्रथमे उपसर्गने उपस्पृश्य। द्रव्यमुक्तं आपः ता उपस्पृश्य। ननु अनन्तर आहवनीयो ऽधिकृतस्तमुपस्पृशेत्कस्मान्[1] भवति। उच्यते। वेदशेषमुपस्थायेति प्रकृते पुनराहवनीयमुपस्थायेति वचनात्। अथ यदप उपस्पृशति शान्तिर्वै भेषजमापः शान्तिरेवैषा भेषजमन्ततो यज्ञे क्रियत इति श्रुतेः। उत्सृज्यते होता। यथायथादिष्वनादृतो[2] भवतीत्यर्थः।

---

१६.

१. व्याख्यातावङ्गप्रधानद्वारेणोक्तौ दर्शपूर्णमासौ। व्याख्यातव्यान्यपि दर्शपूर्णमासयोरङ्गानि सन्ति। तद्यथा। प्रथमप्रयोगे ऽन्वारम्भणीया। अनुनिर्वाप्यः पिण्डपितृयज्ञश्च केषांचित्। तेषामपि विकृतावतिदेशः प्राप्नोति। तन्निवृत्त्यर्थं व्याख्यातवचनम्। दर्शपूर्ण-

---

१ A स्पृशति। २ B ॰त्रिनो A C ह C (sec. h.) ह।

मासाविति च व्याख्यातयोः संज्ञाकरणं शास्त्रसंव्यवहारार्थम्। वक्ष्यति। पूर्वां दर्शपूर्णमासाभ्यामन्वारम्भणीयेष्टिरित्येवमादिषु अनयोरुपस्थानं यथा स्यात्[1]। न च कौण्डपायिनामयनीययोर्ग्रहणमनयोरेव धर्माख्यानात्। दर्शशब्देनामावास्यमुच्यते। तस्य पूर्वनिपातः समासे ऽल्पाच्तरत्वात्। अनुष्ठाने तु पौर्णमासं प्रथमम्। कुत एतत्। यद्यपरपक्षे भक्तं नीयान्नास्य यज्ञविकर्षः स्यादिति[2] ज्ञापकात्। प्रकृतिराद्या प्रकृतिर्मूलं[3] योनिरित्यनर्थान्तरम्। केषां प्रकृतिः। इष्टिपशुबन्धानां इष्टीनां पशुबन्धानां च इष्टिरिति प्रयाजानुयाजाद्यङ्गकलापसहितं यागकर्मोच्यते। पशुबन्धशब्देनापि श्रौतः पशुयागः। अतश्च न शाखापशूनां दर्शपूर्णमासौ प्रकृतिः। अपरे तु वर्णयन्ति। व्याख्यातवचनं शिष्यबुद्धिसमाधानार्थम्। अतश्च याः काश्चिदिष्टयस्तासां प्रथमप्रयोगे दर्शपूर्णमासाङ्गत्वादन्वारम्भणीयेज्या भवति। न च पिण्डपितृयज्ञो दर्शस्याङ्गम्। न्यायान्तरमेतद्व्याख्यातम्।

२. व्याख्यातो ऽग्निष्टोमः प्रकृतिर्द्वादशाहस्यैकाहानां (८.१.१) चेत्यग्निष्टोमः स्वधर्मैर्द्वादशाहमन्वेति। व्याख्यातो द्वादशाहः प्रकृतिः सत्राहीनानामिति द्वादशाहः स्वधर्मैरहीनमन्वेति। अग्निष्टोमश्च चोदकपरंपरयान्वेति। तत्राग्निष्टोमस्यापि प्रकृतित्वं यथा स्यादिति सूत्रारम्भः। किं सिद्धमिति चेत्। श्रूयमाणं प्राकृतं नामधेयमन्यस्मिन्नर्थे प्रकृतिं (८.१.२) निवर्तयतीत्याग्निष्टोमिकस्याप्यहीने निवृत्तिः सिद्धा भवति। अत्रोदाहरणम्। संपातौ तु निविद्धाने

१ A om. यथा। २ कौषीतकि ब्रा॰ ४.१.। ३ B C प्रकृतिमूलं।

इति (१६. २०. १५.) श्रूयमाणे जनिष्ठाउग्रयोरिन्द्रस्य नु वीर्याणी-त्येतयोर्निवृत्तिः सिद्धा भवति। कस्य पुनरन्वयो येनैवमुच्यते। अन्वयस्य प्रकृतिरित्याख्येति। फलस्य नान्वयः। कर्मनिबन्धनत्वात्। तथा यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्यस्य नियमस्य विकृतिष्वनन्वयः। दर्शपूर्णमासकर्मनिबन्धनत्वात्। यत्र दर्शपूर्णमासौ तत्रायं नियमो न च विकृतिषु दर्शपूर्णमासौ। किं तर्हि तद्धर्मता। तथा च जैमिनिः। कर्मणस्त्वप्रकृतित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वादिति।

३. येयं प्रकृतिरुक्ता दर्शपूर्णमासाख्या। अस्यामेव तावच्चिन्त्यते। किं प्रधानं कानि चाङ्गानीति। किमेतया चिन्तया प्रयोजनम्। प्रधानविनाशे आवृत्तिः। अङ्गविनाशे चानावृत्तिः। प्रकृतौ चैतच्चिन्त्यमानं विकृत्यर्थमपि भवतीत्ययमवसरः। अन्तरेणाज्यभागौ स्विष्टकृतं च यदिज्यते तत्प्रधानमिति संबन्धः। यस्यायं प्रदेशः स्विष्टकृदाज्यभागयोरन्तरावर्ती तमावाप इत्याचक्षते। जैमिनिप्रभृतयः सूत्रकाराः। अनया संज्ञया व्यवहरन्ति। अस्य तु प्रयोजनं। अनिर्दिष्टस्थानभाक्किन् देशे[१] ओप्यत इति। तेन संज्ञानमिति च जपेरन् (३. ६. ३)। अग्ने वायो विद्युदित्येवमादि (४. ८. ४) प्रधानानन्तरं प्राक् स्विष्टकृतो भवति।

४. यानि सामिधेन्यनुवचनादीनि आज्यभागान्तानि यानि च स्विष्टकृत्प्रभृतीनि परतस्तानि[२] तदङ्गानि। तदिति सर्वनाम्ना

---

१ B प्रदेशे। २ A om तानि।

आवापिकं[1] प्रधानं निर्दिश्यते। तस्य इतराण्यङ्गानि। उक्तमङ्गचिन्ताप्रयोजनम्।

५. तेषामङ्गानामभिन्नकाले प्रधानप्रयोजने विभवः शक्तिरस्ति। शक्नुवन्ति हि सकृत्सतान्युपकर्तुमित्यर्थः। तद्यथा। पौर्णमासे प्रधानबहुत्वे ऽपि कालाभेदात्सकृदङ्गानि। तुरायणे च कालभेदात्पृथक्।

६. यत्सकृत्सतं[2] बहूनामुपकरोति तत्तन्त्रमित्युच्यते। अतश्च लक्षणसूत्रमेतत्। तेन दीक्षणीयादि सकृदुर्गणे।

७. यत्र तद्धितेन वा चतुर्थ्या वा मन्त्रवर्णेन वा देवताभिः संयुक्तः शब्दः श्रूयते। किंविशिष्टाभिर्देवताभिः। उच्चावचाभिर्बह्वीभिरल्पाभिर्वा। तत्र सर्वत्र प्रदानं[3] प्रत्येतव्यम्। प्रदानं याग इष्टिरित्येको ऽर्थः। प्रधानप्रक्षेपस्य[4] चेयं संज्ञा। प्रदानमावर्तते। तस्य प्रदानं स्विष्टकृदिलं चेति (१५.१.१७) शास्त्रसंव्यवहारार्थम्। ननु उच्चावचाभिरिति न वक्तव्यम्। पक्षान्तरस्यासंभवात्। उच्यते। प्रदानाभिप्रायमेतत्। तद्यथा। मित्रविन्दायां बह्वीनामेकं प्रदानम्। पशुदेवतायामेकस्या एव प्रदानद्वयं[5] च। तस्मात्प्रदानविशेषणमुच्चावचाभिरिति। ननु पञ्चबिलश्चरुः पञ्चपशुर्विशाखयूप इति देवतासंयोगाभावात् प्रदानं न प्राप्नोति। उच्यते। समाप्ते श्येनौष्पतीभ्यामिति समाप्तिवचनाद्भविष्यति। विशाखयूपे च यूपवचनात्। यथा लोके किशोरेण सह वडवेत्युक्ते धेनुर्वडवेत्यनुक्तमपि ज्ञायते श्रूयत इति

[1] A आवापादिकम् C (see h) आग्नेयादिकम्। [2] C ins च। [3] B (orig) प्रधा०। [4] B ०क्षेपतस्य C ०क्षेपस्य, त over the line. [5] B त्रय instead of द्वय।

वचनाच्छाखान्तरश्रुतस्यापि देवतासंयोगस्य परिग्रहः पञ्चबिलस्य च देवतासंयोगः शतपथश्रुतौ[1]। महर्त्विग्भ्यो निर्वपतीति न प्रदानमृत्विगुद्देशेन[2] विहितत्वात्। कुतः। शतपथे तमेते चत्वार ऋत्विजः प्राश्नन्तीति प्राशनवचनात्। तथा तेभ्यो ऽध्वर्युश्चातुष्प्राश्यं ब्रह्मौदनं निर्वपतीति च।

८. तत्र तस्मिन्प्रदानस्य नानारूपे श्रवणे यो विकारो भवति स उच्यते। याया देवता विकृतौ चोदिता तद्देवते याज्यापुरोनुवाक्ये एव भवतो नान्ये। एकमपि वैकृतं प्रधानं बह्वनां प्राकृतानां निवृत्तिं करोति। प्रधानत्वसामान्यात्।

९. इदं चान्यत्। निगमस्थानेषु वक्ष्यमाणेषु देवतादेशनव्यूहनादिषु[3] च सा देवता या यत्र चोदिता। न पर्यायेणात्मैकत्वरूपेण वा नैरुक्तवत्। अतश्च येनैवाभिधानेन चोदिता तेनैवोपलक्ष्यते। प्रकाश्यत इत्यर्थः।

१०. निगमस्थानशब्दव्युत्पत्तिरादरार्था। स चादरः प्रायश्चित्तविशेषार्थः। ततश्चावाहनादीनामन्यथाकरणेन मन्त्रानुजपमात्रं प्रायश्चित्तम्। अपि च। यस्मादिज्यमाना एव निगच्छन्ति तस्मान्निगमस्थानानीतिवचनात्स्विष्टकृद्यागाभावे अग्निं होत्रायावहत्येतत्पदं न भवति। कुतः सदेहः। होतृत्वकार्ययोगादग्नेर्होतुः। आवाहनादीनि वर्जयित्वान्यत्रानिज्यमानस्यापि शब्दोच्चारणमस्त्येव। तद्यथा। अग्निर्होता वेत्वग्निर्होत्रमित्यादौ। वनस्पतिप्रैषे च। यत्राग्नेर्होतुः प्रिया धामानि। सूक्तवाकप्रैषे च। अग्निमद्य होतारम-

---

१ B ॰पथे श्रुत। २ A उपदशेन B ॰त्विगुद्देशेन। ३ A B देशन॰।

आवापिकं[1] प्रधानं निर्दिश्यते। तस्य इतराण्यङ्गानि। उक्तमङ्गचिन्ताप्रयोजनम्।

५. तेषामङ्गानामभिन्नकाले प्रधानप्रयोजने विभवः शक्तिरस्ति। शक्नुवन्ति हि सकृत्कृतान्युपकर्तुमित्यर्थः। तद्यथा। पौर्णमासे प्रधानबहुत्वे ऽपि कालाभेदात्सकृदङ्गानि। तुरायणे च कालभेदात्पृथक्।

६. यत्सकृत्कृतं[2] बहूनामुपकरोति तत्तन्त्रमित्युच्यते। अतश्च लक्षणसूत्रमेतत्। तेन दीक्षणीयादि सकृदहर्गणे।

७. यत्र तद्धितेन वा चतुर्थ्या वा मन्त्रवर्णेन वा देवताभिः संयुक्तः शब्दः श्रूयते। किंविशिष्टाभिर्देवताभिः। उच्चावचाभिर्बह्वीभिरल्पाभिर्वा। तत्र सर्वत्र प्रदानं[3] प्रत्येतव्यम्। प्रदानं याग इष्टिरित्येको ऽर्थः। प्रधानप्रक्षेपस्य[4] चेयं संज्ञा। प्रदानमावर्तते। तस्य प्रदानं स्विष्टकृदिलं चेति (१५.२.१७) शास्त्रसंव्यवहारार्थम्। ननु उच्चावचाभिरिति न वक्तव्यम्। पक्षान्तरस्यासंभवात्। उच्यते। प्रदानाभिप्रायमेतत्। तद्यथा। मित्रविन्दायां बह्वीनामेकं प्रदानम्। पशुदेवतायास्त्वेकस्या एव प्रदानद्वयं[5] च। तस्मात्प्रदानविशेषणमुच्चावचाभिरिति। ननु पञ्चबिलश्चरुः पञ्चपशुर्विशाखयूप इति देवतासंयोगाभावात् प्रदानं न प्राप्नोति। उच्यते। सगाप्ते श्येनीश्वपतीभ्यामिति समाप्तिवचनाद्भविष्यति। विशाखयूपे च यूपवचनात्। यथा लोके किशोरेण सह वडवेत्युक्ते धेनुर्वडवेत्यनुक्तमपि ज्ञायते श्रूयत इति

---

१ A आवापादिकम् C (sec. h) आग्नेयादिकम्। २ C ins. च। ३ B (orig.) प्रधा॰। ४ B ॰क्षेपमस्य C ॰क्षेपस्य, म over the line. ५ B वयं instead of द्वय।

वचनाच्छाखान्तरश्रुतस्यापि देवतासंयोगस्य परिग्रहः पश्वविलस्य च देवतासंयोगः शतपथश्रुतौ[1]। मरुत्विम्यो निर्वपतीति न प्रदानम्रत्विगुद्देशेन[2] विहितत्वात्। कुतः। शतपथे तमेते चत्वार ऋत्विजः प्राश्नन्तीति प्राशनवचनात्। तथा तेभ्यो ऽध्वर्युश्चातुष्प्राश्यं ब्रह्मौदनं निर्वपतीति च।

८. तत्र तस्मिन्प्रदानस्य नानारूपे श्रवणे यो विकारो भवति स उच्यते। याया देवता विकृतौ चोदिता तद्देवते याज्यापुरोनुवाक्ये एव भवतो नान्ये। एकमपि वैकृतं प्रधानं बहूनां प्राकृतानां निवृत्तिं करोति। प्रधानत्वसामान्यात्।

९. इदं चान्यत्। निगमस्थानेषु वक्ष्यमाणेषु देवतादेशनव्यूहनादिषु[3] च सा देवता या यत्र चोदिता। न पर्यायेणात्मैकत्वरूपेण वा नैरुक्तवत्। अतश्च येनैवाभिधानेन चोदिता तेनैवोपलक्ष्यते। प्रकाशन इत्यर्थः।

१०. निगमस्थानशब्दव्युत्पत्तिरादरार्था। स चादरः प्रायश्चित्तविशेषार्थः। ततश्चावाहनादीनामन्यथाकरणेन मन्त्रानुजपमात्रं प्रायश्चित्तम्। अपि च। यस्मादिज्यमाना एव निगच्छन्ति तस्मान्निगमस्थानानीतिवचनात्स्विष्टकृद्यागाभावे अग्निं होत्रायावहत्येतदं न भवति। कुतः संदेहः। होतृत्वकार्ययोगादग्नेर्होतुः। आवाहनादीनि वर्जयित्वान्यत्रानिज्यमानस्यापि शब्दोच्चारणमस्त्येव। यथा। अग्निर्होता वेत्वग्निर्होत्रमित्यादौ। वनस्पतिप्रैषे च। यत्राहोतुः प्रिया धामानि। सूक्तवाक्प्रैषे च। अग्निमद्य होतारम-

[1] B ॰पशं वत। [2] ॰ऋत्विगुद्देशेन B ॰लिङ्गवद्देशेन। [3] B देशेन।

वृणीतेति। उत्तमे प्रयाज इत्यत्र उत्तमशब्दो यदि न क्रियेत ततः प्रयाज इज्यमाना निगच्छन्तीति त्वष्टृवनस्पत्योः प्रयाजेष्विज्यादर्शनात् तयोरेव निगमनानि स्युः। स्विष्टकृन्निगद इति निगदवचनं संज्ञार्थम्। देवतावचनं चोदितदेवतार्थम्। ततो आज्यावाहितस्वेज्यमानस्यापि न निगमाः। ननु पर्यग्निकृतस्य त्वाष्ट्रस्येज्यमानाभावान्निगमाभावः प्राप्नोति। तथा तत्रैव वनस्पतेः स्विष्टकृदिलं भक्षश्च। उच्यते। पर्यग्निकृतमुत्सृजन्ति (८.१७.५) इति सिद्धे न संस्थापयन्तीति वचनं सर्वधर्मप्रापणार्थम्। ततो भवत्येवावाहनम्। तथा[1] देवतादेशनादिष्वपि निगमस्थानसंज्ञा। देवतारम्भात्। अत उपांशुहविःषु तेषामप्युपांशुता भवति। न च त्वाष्ट्रे दृष्टत्वादन्येषां कपिञ्जलादीनां पर्यग्निकृतानां त्वाष्ट्रधर्माः अनुक्रामन्तश्च विकारान्व्याख्यास्याम इत्युत्तरसूत्रे यस्मात्।

११. अन्यमनुसरन्तो विकारानुक्रमेभ्यो विकारेभ्यो ये अन्यथा भवन्ति तान्व्याख्यास्यामः। असंमोहेन प्रदर्शयिष्यामः। ये चोक्तास्ते च सन्ति याज्यानुक्रमिष्याम इति चशब्दः। तद्देवते याज्यापुरोनुवाक्ये इत्युक्तम्। अनुक्रामन्तो ऽन्यथा वदिष्यामः। तद्यथा। एन्द्र याहि हरिभिः सखे विष्णो वितरं वि क्रमस्वेत्यत्र न विकल्पः। इज्यमाना देवता निगच्छन्तीत्युक्तम्। तदन्यथाप्यनुक्रामन्तो वर्णयिष्यामः। यथा। इन्द्रं वसुमन्तमावहेत्यादौ। अनिरुक्तेषु पर्यायेणापि देवतामात्रेत्येवमादिश्रुतेर्वचनादन्यथा वक्ष्यामः।

१२. वक्ष्यति। अग्नये पवमानायेष्टिः पौर्णमासीविकारः। तत्र

१ A B तेषाम्।

वार्चघ्नावाज्यभागौ प्रतीयाज्ज्ञानीयादित्यर्थः[१]। सामिधेनीस्विष्टकृत्प्रतिषेधार्था इयं परिभाषा। अन्यथा चोदितेन सह विकल्पः स्यात्। ननु वार्चघ्नौ वृधन्वन्ताविति सर्वत्र वक्तव्यं किं पौर्णमासीविकारोऽमावास्याविकार इति वचनेन। उभयसंज्ञार्थम्। किं कृतं भवति। पौर्णमासं प्रथमायै तन्त्रं भवतीत्यध्ययनमेवार्थं इति ज्ञापितं भवति।

१३. प्रतीयादिति वाक्यशेषः।

१४. पौर्णमासीविकार इत्युक्ते वार्चघ्नौ। अमावास्याविकारे वृधन्वन्तौ इति वचनात्[२] अनुक्ते न किंचित्प्राप्नोतीति तदर्थं वचनम्। विकल्पभूतौ विकल्पेन भवत इत्यर्थः।

१५. देवतया हेतुभूतया प्रतीयात्। कथम्। यत्राग्निर्देवतात्वेन श्रूयते ऽग्नीषोमौ वा तत्र वार्चघ्नौ। यत्रेन्द्र इन्द्राग्नी वा तत्र वृधन्वन्तौ।

१६. इयमपि हेतावेव पञ्चमी। हविषा वा हेतुभूतेन हविषा वा लिङ्गेन प्रतीयात्। कथम्। औषधद्रव्यं पौर्णमासे[३]। सांनाय्यद्रव्यममावास्यायाम्।

१७. प्रतीयादिति वर्तते। यत्र हेतुसंनिपातः। तद्यथा। ऐन्द्रमेकादशकपालं पुरोडाशं निर्वपेदाग्नेयं पय इति। तत्र हविषो बलीयस्त्वम्। तत्र ऐन्द्रे पुरोडाशे वार्चघ्नौ। आग्नेये पयसि वृधन्वन्तौ।

१८. सर्वार्था इयं परिभाषा। आज्यभागार्थायामत्र विकल्पस्यानवकाशः स्यात्। अत्रोदाहरणानि। विराजौ (३. १२. २३)

---

१ C ins - वाक्यम। नेवां ऐवमाकन्दादिष्वपि नियमश्चाम्नातत्वात्। २ B विष माद् instead of वचनाद्। ३ B पौर्णमासे resp. अमावास्याम्।

स्विष्टकृत इत्युक्तेरुक्तसामान्यादृगेव[1] नियम्यते। न निगदः। अतो निगदानिवृत्तिः। कयाशुभीयेन जनिष्ठाउग्रीयस्य निवृत्तिः। सूक्तेन सूक्तस्यैव सामान्यात्। बहुदेवतस्य प्रहृत्यभिसंनमने[2] तत्र ऐन्द्राग्नं याज्यानुवाक्यायुगलम्। इन्द्राग्नी वै सर्वे देवा इत्यर्थवादसामान्यात्। अन्याय इति चेत्। उच्यते। अगत्यां गतौ येन केनचित्सामान्येन व्यवस्था युक्ता।

१९. तदन्यत्र सायनाभ्यां दर्शपूर्णमासाभ्यामित्यत्र (१.४.१२) वस्तुवृत्तेनोक्तं न शब्दतः। तदिहानूद्यत एवासंदेहार्थम्। उत्तरसूत्रार्थं च। चशब्द इष्टिपशुबन्धाधिकारानुकर्षणार्थः।

२०. अविकल्पार्थं सूत्रम्। इष्टिपशुबन्धेष्वेव वचनादन्यत्[3]। सोमे तु सत्यपि वचने दीक्षणीयादिषु विकल्पो भवति। तथा च शतपथे। तस्य सप्तदश सामिधेन्यो भवन्ति। उपसत्सु तु यावदादिष्टं कुर्यादिति यत्नात्र विकल्पः। नामधर्मातिदेश इति न्यायाचातुर्मास्यसोमेषु। पित्र्यायामेकैव सामिधेनी। अतश्च मित्रविन्दायां पञ्चदशैव सामिधेन्यः। शाखान्तरे तु सहस्रं सामिधेनीनामाम्नातम्। तेन सह विकल्पो न भवति। ननु विश्वजिति[4] केषांचिदेकविंशतिः सामिधेन्यः शाखान्तरे। तथा इष्टकापशौ शतपथे। तस्यैकविंशतिः सामिधेन्यस्तेषां चतुर्विंशतिः सामिधेन्य इति तत्र कथम्। उच्यते। अस्माकं तत्र विशेषाभावात्साप्तदश्येन सह विकल्पः।

---

१ A ०न्युक्तेरुक्तसा० B ०न्युक्ते हत्वसा०। २ A प्राहृता० C प्राहृतासंनमनमैन्द्राग्नं पा०। ३ A C (in marg) ins. इष्टिपशुबन्धेष्विति वचनात्। ४ A ins विश्वजि।

२१. काम्यासु कामसंबन्धेन चोदितासु। तद्यथा। सार्वकामिकाग्नये कामाय इत्येवमाद्यासु स्त्रीलिङ्गनिर्दिष्टासु उपांशुहविष्ट्वं कार्यम्। यज्ञायज्ञवर्णं वै काम्या इष्टयस्ता उपांशु कर्तव्या इति श्रुतेः। लिङ्गदर्शनाच्च। अपरो सर्वे वै कामा विभक्तिषु तस्मादुपांशु भवन्तीति स्वश्रुतौ (२.५)।

२२. अकाम्यास्वपि दौचणीयाद्यासु तथा अनिर्दिष्टेष्वपि च तद्यथा सौर्यस्योपांशु प्राजापत्यस्योपांशु इत्यादिषु। ग्रन्थमनुसरन्तो व्याख्यास्यामः। अविकल्पार्थो ऽयं योगः। देवत उच्चैरुपांशुतायां (१२.१.२) चेत्युक्ते ऽपि स्वमतपरिग्रहार्थं वचनम्।

---

## १७.

१. हविषां विधानप्रक्रमे[1] प्रतीकग्रहणमृगादिग्रहणं याज्यापुरोनुवाक्यानां प्रत्येतव्यम्। एतासामृचां प्रतीकानि विभक्तय इति श्रुतौ प्रयोगदर्शनात्। एतदुक्तं भवति। यागचोदनाप्रक्रमे[2] यत्प्रतीकग्रहणं तद्याज्यापुरोनुवाक्यानां प्रतीयात्। यद्यन्यः प्रयोजनान्तरसंबन्धो नास्ति। अत्रोदाहरणानि। सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमिति यजतीति प्रक्रत्याह। आ प्यायस्व सं ते पयांसीह त्वष्टारं तं पत्नीरोपमित्यादि। तथाग्नये ऽग्निमत इति प्रक्रत्या[3]ग्निमग्निं हवीमभिरित्यादि। तथा प्रायणीयेष्टिः। पथ्यां स्वस्तिमग्निं सोममित्याद्यनुक्रम्य स्वस्ति नः पथ्यासु स्वस्तिरिद्धग्ने नयाग्ने

---

१ A ०प्रधान० B ०विप्रदान०। २ A ०प्रकरणे B याज्याशो०। ३ B ins चाह।

तं पारयेत्यादि। न चेदन्यो ऽर्थसंयोग इति क्रमात्। उच्यते। आग्नेयो वा इयोः पूर्वाज्येन तनूदेवताः पुरस्तात्पुरोनाग्याग्निं पवमानं पावकं च शुचिं चोपरिष्टादित्येभिरग्ने अग्निभिरग्ने विश्वेभिरग्निभिरिति (९.३.८.१०) लिङ्गदर्शनेन संयोगात्प्रधानस्ते न भवत'। अग्नेर्जुषस्वेत्याहुती ह्रूयमानायाम्। उपप्रियमित्याश्वनीये ह्रूयमानायामिति नैते याज्ये। अग्नीषोमप्रणयनसंयोगात्।

२. द्विप्रकृतिषु 'यजतिषु देवतालिङ्गरहितेष्वपि चोदनानुपूर्व्येण याज्यापुरोनुवाक्ये भवतः। तद्यथा। दूतं वो विश्ववेदसमिति द्विदेवत्यानामिति (१४.५१.१४) चोदनाग्रहणे असति यागानुपूर्व्येण स्यात्। को दोष इति चेत्। उच्यते। पशुपुरोलाशे ऽक्रियमाणे ये एव पशुपुरोलाशस्य प्राप्ते ते एव प्राप्नुतः पशोः। तस्मा भूदिति चोदनाग्रहणम्।

३. न केवलं चोदनानुपूर्वेण व्यवस्था किं तर्हि दैवतेन प्राधान्यस्तुतिभाजा शब्देन। चोदितदेवतापर्यायेणापीत्यर्थः।

४. लिङ्गमुच्यते। लिङ्गेनायन्तमहृपरितं' यदुपादेमाणं लिङ्गिनं प्रत्याययति। यथा। धूमकेतुः पुरुश्चन्द्र इत्यग्नेः। तेन लिङ्गेन। न केवलं पूर्वैरेव कारणैर्व्यवस्था।

५. उपसर्जनमुपसर्गो गुण इत्यर्थः। अतश्च सगुणासु देवतासु चोदितासु अनधिगच्छन् अप्राप्नुवन् तल्लिङ्गे सगुणे देवतालिङ्गे दैवतेन देवताशब्देन केवलेन तुष्येत्। आत्मनस्तुष्टिं कुर्यात्। नवे तु

१ A om यजतिषु। २ A लिङ्गिनोत्य० B लिङ्गेनोत्यन्त० C लिङ्गिनात्यन्तं।

न कुर्यात्। यच सूत्रकारेण याज्यापुरोनुवाक्ये नोक्ते तत्रैव कुर्यात्। तद्यथा। विश्वेभ्यो देवेभ्यो वार्षिकेभ्यो जागतेभ्य सप्तदशेभ्यो वैरूपेभ्य इत्यादौ।

६ उपसृष्टा सगुणा एव निगमस्थानेषु भवन्ति। तद्यथा। अग्नि तपस्वन्त जनद्वन्त पावकवन्तमावहेति।

७ अभीक्ष्ण पुन पुनर्या काचिद्देवता तस्यैतस्यै देवतायै हवि श्चोद्यते। एकस्मिन्नेव कर्मणि। तद्यथा। आग्नेय कृष्णग्रीवमालभेत सौम्य बभ्रुम्। आग्नेय कृष्णग्रीवमिति चरकाणाम्। तत्र प्रथमस्याग्नेयस्याग्ने नयेति यक्ष्ण। द्वितीयस्य ते वत्सो मनो यमदित्यग्नये कामाय यक्ष्ण उक्त। ननु सगुणा एता। उच्यते। निर्गुणस्य चोदितस्य गुणो भवन्नपि न दुष्यति। यथा प्र तत्ते अद्य शिपिविष्टेति। देवतायै हविश्चोद्यत इति देवतावचनात्कार्ये प्राजापत्या प्राजापत्य इतरे। को वै प्रजापतिरित्यर्थवादात्। तथा प्रजापतिर्वै क इति च। हविश्चोद्यते तत्रेति वचनाद्यस्मिन्नेव हविषि पूर्वमुपदेश औषधमाज्य वा तत्र व्यवस्था। प्रथमोपदिष्टे प्रथमचोदनायामुपदिष्टे इत्यर्थ। याज्यानुवाक्ये इति। ननु याज्यैव केवला। यातयामत्वदोषाशङ्कया ते इति वचनाद्विपर्यासेनापि ते एव। वर्षीयसी (१ १० ११) तु याज्येति तत्र तुशब्दान्नियम। सर्वत्र प्रतीयात्। सर्वत्रैव जानीयात्।

८ इद चान्यदुच्यते। इष्टयो बहुप्रकारा शाखान्तरेषु कामविशेषसयुक्ता पठ्यन्ते। ताश्च पृथक्कृत नानात्वेन न शक्या विगणयितु तद्यान्यासनपि धर्मान्ययोक्तानतुतिष्ठेत्। तद्यथा। स यदि

वृष्टिकामः स्याद्दीक्षा वा यजेत दर्शपूर्णमासयोर्वैवं ब्रूयादृष्टिकामो वा अस्मीति तचोक्ता अध्वर्युं ब्रूयात्पुरोवातं च विद्युतं च मनसाध्यायेति अभ्राणि मनसाध्यायेत्याग्नीध्रं स्तनयित्नुं च वर्षं च मनसाध्यायेति होतारं सर्वाण्येतानि मनसाध्यायेति ब्रह्माणमित्येवमादयो धर्माः शाखान्तरीया याह्या इत्येवमर्थः सूत्रारम्भः।

९. तत्र तेष्वपि शाखान्तरेषु या अनादिष्टयाज्यापुरोनुवाक्या देवताः तासु गायत्रीत्रिष्टुभौ। गायत्री पुरोनुवाक्या त्रिष्टुब्याज्या इत्येतया व्यवस्थया। तद्देवते या देवता चोदिता। न तु भक्तिमात्रेण। यथा। आग्नेयी गायत्रीति। परीक्षेत्। सर्वतोऽन्विच्छेत्।

१०. गायत्रीत्रिष्टुभोरलाभे उष्णिहं बृहतीं च परिहाप्य अन्यानि प्राकृतानि विराडष्टमानि छन्दांसि ग्रहीतव्यानि। कुतः[१]। विराडष्टमानि ह वा एतं छन्दांसि गोपायन्ति योऽसौ तपति तां ते संपदं मोहयन्ति ये ऽतिच्छन्दोभिर्यजन्तीत्यपरेण दर्शनात्। नोष्णिहा वषट्कुर्यान्न बृहत्या वषट्कुर्यादिति चरकाणाम्[२]। अभावे ऽन्ययापि शुनासीराविमामिति यत्नात्।

११. पुरोनुवाक्यातो याज्या वर्षीयसी गुरुतरा कर्तव्या। तुशब्दो नियमार्थः। तेन यत्र विपर्यासेन लघीयसी तत्र न विपर्यस्येत् यद्यपि अभीक्ष्णचोदना[३] ये ते इति परियत्नात्। तथा च महिम्नो याज्यापुरोनुवाक्याविपर्यासे[४] सूत्रकारेणैव कृतो यत्नः

१ B om the words from चलाभे to कुत C orig from विराड॰ to कुत।
२ B कुर्यादिति च कारणम्। C कुर्यादिति च। विराडष्टमानि छन्दांसि ग्रहीतव्यानि। कुत कारणम्। ३ B अभीक्ष्णचोदनाया यो न इति परियत्नात् C अभीक्ष्णदेवतात्। ४ C om. याज्यापुरोनुवाक्या।

उत्तरस्य महिम्नो याज्यापुरोनुवाक्ये विपर्यस्येदिति (१६.७.१२)। विच्छन्दसो न विपर्यासो भवति। त्रिष्टुप्जगत्योश्च त्रिष्टुप् वर्षीयसी। शौनकवचनात् गुर्वक्षराणां गुरुत्वात्ति सर्वं गुर्वक्षरं त्रैष्टुभमेव विद्यादिति (३.१८.२३)।

१२. पूर्वाक्राभावे सति समे वा। तुल्यप्रमाणे कल्पयितव्ये।

१३. यत्र यथोर्याज्यापुरोनुवाक्ययोरेतेषां वक्ष्यमाणानां लक्षणानां किंचिद्भवेत्। पुरोनुवाक्यालक्षणान्यसंभवे याज्यायां ग्राह्याणि। याज्यालक्षणान्यपि पुरोनुवाक्यायाम्। कथं नाम स्युरित्येवमर्थं सूत्रारम्भः। किंचित्स्यादिति वचनात् ऊवे ह्नयामि आऊवामहे पिब पाहि अपाः एवमादि। न तु यथापठितान्येव ग्राह्याणि।

१४. ऊवे ह्वामहे शुध्यागह्येदं बर्हिर्निषीद देवतानामेति पुरोनुवाक्यालक्षणानि। ऊवे ह्वामहे एते एव कर्तृवचने। नान्ये लक्षणत्वेन ग्रहीतव्ये ददामि ब्रवीमीति। कुतः। किंचिद्वचनात्सिद्धे तुल्यार्थयोः पाठात्। आगहीति सोपसर्गमतः पुनःपाठः। निषीदेति सोपसर्गमेकं लक्षणम्। देवतानामेति। नामधेयमिति नोक्तं पर्यायान्तरस्यापि ग्रहणार्थम्। न चेष्टय दृतीयाधिकारे ऽपि सति लक्षणानीति वचनात्पाठ्यकान्यप्येतानि लक्षणानि।

१५. अद्धि पिबेत्येतेषां न स्वरूपेण ग्रहणम्। किं तर्हि उपलक्षणमात्रेण। कुतः। लक्षणाधिकारे पुनर्लक्षणानीति वचनात्। अतश्च कचिद्धातुव्यत्ययो भवति। न चैतल्लाक्षणिकं नैगमेषु तत्रतत्र ग्रहणात्। तथा च श्रुतिः। आऊतीरधमित्यभिरूपा (८.८)। जुषस्व

प्रतिहर्यत्यभिरूपा। देव याज्येत्यभिरूपा। हविष्मती हविषः। वंहिष्ठमिति बहुल इव हि पुरोलाशः। प्र वाहवा सिसृतं जीवसे न (कौ० ब्र० १८.१२) इति हविषो वाहवेति तद्धविषो ऽङ्गानां रूपं इत्येवमादीन्याह। किमेवं सिद्धमिति चेत्। उच्यते। गायत्रः सर्वत्वार इति प्राकृतानां स्थाने तल्लिङ्गयुक्ता गायत्र्यः कर्तव्याः। तत्र केनचित्सामान्येन लिङ्गं सिद्धं भवति।

१६. पूर्वस्मिन् प्रदेशे लक्षणं यस्याः स्यात् सा पुरोनुवाक्या समृद्धलक्षणा।

१७. उपरिलक्षणं यस्याः सा उपरिष्टाल्लक्षणा। द्वितीये ऽर्धर्चे[1]वा पादे लक्षणं यस्याः सा याज्या समृद्धा। प्रदेशविशेषस्योक्तस्याभावे अनियम इति[2] पृथक्सूत्रारम्भात्।

१८. अनधिगच्छन्नलभमानस्तद्देवते। तदिति सर्वनाम्ना चोदितायाः परामर्शः। सा देवता अनयोरिति अतद्गुणसंविज्ञानो[3] बहुव्रीहिः। तेनैतत्सिद्धं भवति। ऋगन्तरस्थेनापि देवतापदेनोपलक्षिते ग्राह्ये। यथाभितष्टीयसूक्तांशादिषु। अधिगमानधिगमौ च बह्वृचशाखाविषयौ। तथा दैवते दर्शनात्। तत्र द्विशतयीप्रधानैव देवताचिन्ता[4]। यतः नवाभ्यां यजेत्। नवाभ्यां नमनशीलाभ्यां पुनःपुनःप्रयोगे ऽप्ययातयामाभ्यामित्यर्थः। यजेदिति वचनादिष्टिपशुसोमेषु सर्वत्र।

१९. इतिशब्द एवशब्दस्यार्थे। ऊहेदेव। न विकल्पं कुर्यात्।

---

१ C ins ऽर्धे। २ A om इति। ३ B om वि A ॰गुण। ४ A चिन्मयत B चिन्मयेत।

स्वस्तु विकारो न विद्यत इत्यनेन ऊहेद्यथार्थं प्रापयेदित्यर्थः। द्विदेवतबहुदेवतेषु हविःषु। अनयोर्ऋचोर्गुणिपदस्याभावात्कदाचिदाहवनीयो हविर्वहनार्थमभ्यर्थ्यत इति संदेहः स्यात्तदर्थं द्विदेवतबहुदेवतेष्विति वचनं। अहेलता मनसेत्यनयोर्वा अनूहार्थम्। मनसा देवानां वाचा पार्थिवानामिति लोकप्रसिद्धेः॥ आवृणुतं आवृणुत॥ वां गीर्भिः। वो गीर्भिः॥ निषीदतं नः। निषीदत नः॥ गच्छतं। गच्छत॥ जुषेथां। जुषध्वं॥ वीतं। वीत॥

२०. इद चानादिष्टयाज्यापुरोनुवाक्यासु पक्षान्तरम्। प्राकृतीर्याज्यापुरोनुवाक्याः स्वधर्मेणानुब्रुवन् होता तां विकृतिचोदितां देवतां प्रणमेत्। कथम् आत्मनोऽभिमुखीकृत्य यदि विज्ञानमयी प्रकृतिमभिलिख्य नानालचिकैकलैः[1] संकल्प्य मनसा ध्यायेत्। तथा च श्रुतिः। यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्निति। द्विरभ्यासोऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति॥

इति शाङ्खायनसूत्रपूर्वार्धभाष्ये प्रथमोऽध्यायः।

---

१ C संकं०, in marg द्दि।

## अथ द्वितीयो ऽध्यायः ।

१.

१. उक्तमेतद्व्याख्यातौ दर्शपूर्णमासौ प्रकृतिरिष्टिपशुबन्धानामिति न च दर्शपूर्णमासादिकाः क्रिया गार्हपत्याहवनीयान्वाहार्यपचनादिभ्यो विनापि सिध्यन्ति । आधानादिगुणविशिष्टाश्च गार्हपत्याद्याख्यां लभन्ते । नान्येनोपायेनाहृताः । तदर्थमुच्यते । वसन्ते ब्राह्मणस्याग्न्याधेयमिति । वसन्त ऋतुस्तस्मिन् ऋतौ ब्राह्मणस्य यजमानस्याग्न्याधेयाख्यं कर्म भवति । कुत एतत् । ब्राह्मणो वसन्त आदधीतेति श्रुत्यन्तरात् । स्वशाखायामप्यग्न्युत्पत्तिशेषत्वेन तनूदेवताश्च दृष्टय उक्ताः । अस्मिन्वै लोके उभये देवमनुष्या आसुरित्युपक्रम्य एता वा अग्नेस्तन्वस्तद्यदेता देवता यजत्यचाग्निः साङ्गः सतनूः प्रीतो भवतीति ।

२. समानं पूर्वेण ।

३. कृतव्याख्यानम् ।

४. वैश्यस्यायं विकल्पो ऽनन्तरत्वात् ।

५. शिशिर ऋतुः सर्ववर्णानां वसन्तादिभिर्विकल्प्यत इति वाक्यशेषः । एवमेव शाखान्तरे श्रुतत्वात् ।

६. वसन्तादिष्वपि अनियमः सोमेन यक्ष्यमाणस्य । तथा च श्रुतिः । सोमेन यक्ष्यमाण आदधानो नर्तु पृच्छेन्न नक्षत्रम् ।

७. उक्तेषु ऋतुष्वेवानयोस्तिथ्योराधानं कुर्यात् । तत्रामावास्या-

धाने पूर्वस्यामुपवासाद्युपक्रम उत्तरस्यामग्न्युत्पत्तिरिष्टयश्च। कुतः। शतपथश्रुतेः। पौर्णमास्याधाने तु चतुर्दश्यामुपवासाद्युपक्रमः पौर्णमास्यामग्न्युत्पत्तिरिष्टयश्च। श्वोभूते ऽन्वारम्भणीया पौर्णमासं च। कुतः। काठके दर्शनात्। तत्र पठ्यते। आधानं चेत्पौर्णमास्यां पूर्वां तनूर्देवताश्च उपवसेदुत्तरामन्वारम्भणीयायै पर्वणे चेति।

८. उक्तेष्वेवर्तुषु पूर्वेण सह विकल्पार्थो वाशब्दः। शुक्लपक्षे शुक्लपक्षे पुण्ये नक्षत्रे पुष्यादौ आदधीत।

९. कामसंयुक्तानि यथाश्रुतानि ब्राह्मणेति शेषः। तद्यथा। बह्वेव प्रजया पशुभिर्भवति य एवंविद्वान्रोहिण्यामाधत्ते। श्रियं ह गच्छति य एवंविद्वान्मृगशीर्ष आधत्ते। पूर्वयोरादधीत पुरस्तात्कल्पं हैवास्मै भवति। उत्तरयोरादधीत श्वःश्रेयसं हैवास्मा उत्तरावद्भवति। हस्ते अग्नी आदधीत य इच्छेत्प्र मे दीयेतेति। चकारो विकल्पानुकर्षणार्थः।

---

## २.

१. उद्यन्त इति वाक्यशेषः। किमर्थमेतत्। उच्यते। पूर्वकालैः सह समुच्चयो मा विज्ञायीति। अथशब्दस्तर्हि अनर्थको ऽनन्तरमेव कालवचनात्। सत्यम्। इष्टिकाला इत्यस्य पूर्वपदेन सहानन्तर्यार्थेनार्थवान् भवति[1]। तथाहिताग्निले सत्यपि इष्टिकरणपक्षे ऽग्नीहते यावदिष्टयो न कृतास्तावदन्याः क्रिया यागहोमरूपा

---

[1] C om. सह।

न भवन्ति । अदितिं वा अन्वग्न्याधेयं संतिष्ठत इति (१४. २. २१) लिङ्गात् ।

२. वाशब्दः प्रत्येकमभिसंबध्यते । सद्यस्तस्मिन्नेवाहनि । द्वादशाहे द्वादशाहान्ते । सप्तमीनिर्देशात् । एवं मासादयो द्रष्टव्याः । कुतः । शाखान्तरश्रवणात् ।

३. एतास्ता इष्टय उच्यन्ते यासां काला उक्ताः । अग्नये पवमानगुणायेष्टिः कर्तव्या । एवमेव श्रुतत्वात् ।

४. वार्त्रघ्नावाज्यभागावित्यर्थः । सिद्धमेवैतत् । पुरोलाशहविष्ट्वादाग्नेयत्वाच्च । तथाप्युच्यते । अस्या एव द्वितीयत्वे वृधन्वन्तौ मा भूताम् । आमावास्यं द्वितीयाया इति श्रुतेः ।

५. अग्न आयूंषि पवसे पुरोनुवाक्या । अग्ने पवस्व स्वपा याज्या ।

६. तं हि शश्वन्त ईळते अनुवाक्या । ते स्याम ये अग्नये याज्या । एते स्विष्टकृतौ । ईळितवत्यौ हव्यवाड्वत्यौ प्रथमायै संयाज्ये इति श्रुतेः । श्रूयमाणं प्राकृतं नामधेयमन्यस्मिन्द्रव्ये प्रकृतिं निवर्तयतीति प्राकृतयोर्निवृत्तिः । निगदस्य चानिवृत्तिः । अतुल्यत्वात् । गृहमेधीयायां च निगदप्रतिषेधात् ।

७. अग्नये पावकगुणायैकं हविः । अग्नये शुचिगुणाय द्वितीयम् । एषा द्वितीया इष्टिः स्त्रीलिङ्गनिर्देशात् । पावकशुची गुणौ । द्वौ ह्यग्नी यजतीति श्रुतेः । अग्नये च पावकाय शुचये चेति नोक्तम् । [1]शुचेरेवाग्निरहितस्य यागो मा विज्ञायीति । एता

---

[1] A B C शुचिरे॰ ।

वा अग्नेस्तन्वन्तरदेता देवता यजतीति संदेहः स्यात्। अन्यथा सह समानतन्त्रोपदेशे एतदीयं तन्त्रं दिशशब्दात्।

८. वृधन्वन्तावाज्यभागौ।

९. अग्ने पावक रोचिषा पुरोनुवाक्या। स नः पावक दीदिवो याज्या प्रथमस्य हविषः।

१०. अग्निः शुचिव्रततम इति पुरोनुवाक्या। उदग्ने शुचय-स्तव याज्या द्वितीयस्य हविषः। ता वै गायत्र्यो भवन्ति। अभि-रूपा भवन्तीति लिङ्गात्।

११. अग्निमग्निं हवीमभिः पुरोनुवाक्या। अग्निनाग्निः समि-ध्यते याज्या। द्व्यग्नी द्वितीयाया इति श्रुतेः।

१२. इष्टिग्रहणमनुवर्तते। अदितये तृतीया इष्टिर्भवति। द्वितीयात्तृतीयाग्रहणमिष्टित्रयेणायमेक आधानकल्प इत्यस्यार्थस्य प्रतिपादनार्थम्।

१३. त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इत्येतावाज्य-भागौ। सदन्तौ नाम वेदितव्यौ। संज्ञाकरणं शास्त्रसंव्यवहारार्थम्।

१४. उत त्वेर्मषा ऋक् प्रधानस्य पुरोनुवाक्या।

१५. महीमूष्वादिका प्रधानस्य याज्या।

१६. प्रेद्धो अग्ने दीदिहि पुरो नः स्विष्टकृतः पुरोनु-वाक्या। इमो अग्ने वीततमानि हव्येति याज्या। सप्तदशसामि-धेनीका तृतीयेत्यारभ्य सर्वस्य एवमेव श्रुतत्वात्। अयमाधानकल्पः समाम्नायासूक्त। वक्ष्यमाणस्तु शाखान्तरात्। ननु सदद्विराजोः संज्ञाकरणं विनापि शास्त्रसंव्यवहारसिद्धिः। यथा वैराजमाज्यं

एतस्तोमीयं वेति। तथापि संज्ञा कृता। कथं नाम सार्वकामिक्यां भूतिकामस्य सहन्तौ स्याताम्। दीप्यन्नाद्यश्रीकामस्य विराजाविति वृद्धसंप्रदायः।

१७. चतस्र इष्टयः कार्या इति श्रुत्यन्तरम्। तन्मतानुसारिणो ऽग्नये प्रथमां कुर्युः। ननु देवतोपदेशो न कर्तव्यो याज्यानुवाक्यालिङ्गसिद्धेर्वङ्कदेवतावत्। उच्यते। इदमेवोदाहरणमङ्गीकृत्य ब्रूमः। अग्ने द्युम्नेन जागृवे। एवमादिगुणयुक्तो ऽग्निः प्रतीयते। ननु याज्यायां गुणाभावादसंदेहः। उच्यते। नावश्यं याज्यानुवाक्ययोरुभयोरपि गुणा दृश्यन्ते। यथा शुनासीरीये। तस्मादुक्ता देवतेति। अग्नये प्रथमा। अग्नये पवमानाय द्वितीया। द्वितीयात्वे पौर्णमासीविकार इत्युक्तत्वात्पौर्णमासावाज्यभागौ। अग्नये च पावकायाग्नये च शुचये तृतीया यथोक्ता। अदितये चतुर्थी यथोक्तैव।

१८. अग्ने द्युम्नेन जागृवे पुरोनुवाक्या। उप त्वा शुक्रो मम याज्या।

१९. अर्चन्तस्त्वा हवामहे पुरोनुवाक्या। अग्निं स्तोमेन बोधय याज्या। स्विष्टकृत एते भवतः। ता वै गायत्र्यो भवन्तीति। अभिरूपा भवन्तीति लिङ्गात्।

---

## ३.

१. कल्पान्तरमासां चतसृणामिष्टीनाम्। प्रथमा च द्वितीया च समानतन्त्रे भवत। अग्निरग्निश्च पवमानः। तच पवमानाश्रयं तन्त्रमित्युक्तम्। इष्टिवचनात्। तत्संयाज्यारूपमिति च श्रुते। अतस्त्वास्यां

पौर्णमासावाज्यभागौ। यथोक्ता याज्यानुवाक्या। तं हि प्रश्नन्त ईलते ते स्याम ये अग्नय इति स्विष्टकृतः।

२. समानतन्त्रे भवतः। तत्राग्नेयी प्रथमा। ततः पवमानपावकशुचयस्तन्त्रं तत्र भूयसां साधर्म्यमिति न्यायेन (१३.१४.५) पावकशुच्याश्रयं तन्त्रम्। तेनामावास्याविकारः। उक्ताः प्रधानयाज्यानुवाक्याः। अग्निनाग्निं हवीर्भिरग्निनाग्निः समिध्यत इति स्विष्टकृतः। ततो ऽदितये तृतीया।

३. अपरः कल्पः। पूर्वोक्तान्येव पञ्च हवींषि द्विशः कृत्वा। अग्निश्च शुद्धः। अग्निश्च पवमानः। ईदृशी प्रथमा। तत्र पवमानसंबन्धि तन्त्रं। तदुक्तमिष्टिवचनात्। अतः पौर्णमासीविकारः। तं हि प्रश्नन्त स्यामेति संयाज्ये। अग्नये च पावकायाग्नये च शुचये द्वितीया यथोक्ता।

४. द्विहविष इति पञ्चभिर्न संभाव्यते। तदर्थमाह। अदितिदेवत्यस्य हविष ऐन्द्राग्नो द्वितीयो भवति। ब्राह्मणस्य यजमानस्य। अत्रादितिप्राधान्यात्सप्तदश सामिधेन्यः सद्वन्तावाज्यभागौ विराजौ संयाज्ये। अदितिः उत त्वामदिते महि महीमू षु मातरमिति। ऐन्द्राग्नस्त्वेन्द्राग्नी अवमा प्र चर्षणिभ्य इति।

५. द्वितीयो ब्राह्मणस्य। अत्राग्नीषोमा सवेदसा युवमेतानीति विशेषः।

६. आदित्यस्य द्वितीय ऐन्द्रः। राजन्यस्य क्षत्रियस्येत्यर्थः। याज्यानुवाक्ये इन्द्र वो विश्वतो मादयस्व हरिभिरिति।

७. आदित्यस्य द्वितीयो वैश्वदेवः। वैश्यस्य यजमानस्य।

८. विश्वे देवास आ गत पुरोनुवाक्या। स्तीर्णे बर्हिषि समिधाने याज्या। भारद्वाज्यौ। यत्तु ता वै गायत्र्यो भवन्तीति श्रुतिवचनं तत्तनूदेवताविषयं तत्प्रकरणात्। द्वितीय इत्यप्रधानवचनात्पूर्वोक्तासु अदितिप्रधानतन्त्रम्।

९. अनन्तरं कल्पद्वयमुच्यते। तत्रैकस्मिन्कल्पे आग्नेयी ऋद्धा प्रथमा। अदितये द्वितीया। अयं प्रथमः कल्पः। अपरस्मिन्कल्पे तनूदेवतास्विति आग्नेयः पूर्वस्यां। द्वितीया त्वदितय एव। अयं द्वितीयः कल्पः। कुत एतत्। आग्नेयीति तद्धितनिर्देशात्। द्वयोरिति द्वयोः कल्पयोः। अनन्तरे द्वितीयावचनात् (२.३.९२) पूर्वेत्युत्तरस्यां सत्यामर्थसिद्धमेव। तथाप्युच्यते। अग्नये प्रथमामिति यदुक्तं अस्यां तस्य प्रापणार्थं। तेनाग्ने द्युम्नेनोप त्वा जुह्वो ऽर्चन्तस्त्वाग्निं सोमेनेति स्विष्टकृत इति सिद्धं भवति।

१०. अयमपरः कल्पः। पुरोलाशस्याग्नेयस्य पुरस्तात्प्रागात् आज्येन तनूदेवताः। आज्येनेति वचनम्। एता एव तनूदेवतासंज्ञा या आज्येनेज्यन्ते। पुरस्तात्पुरोलाशस्येति आज्यभागानन्तरम्। अग्निं पवमानं यजति। तस्य पूर्वोपदिष्टे याज्यानुवाक्ये। ततो ऽग्निं यजति। तस्याग्ने द्युम्नेनोप त्वा जुह्वः। यद्यप्यग्निर्मूर्धा भुवो यज्ञस्येति प्रथमोपदिष्टे तथापि ते न भवतः। कुतः। इयमन्यविकृताग्नेयीति ज्ञापकात्। आधानिकीनामेवातिदेशो भवति। पुरोलाशयागानन्तरं पावकशुची द्विशब्दात्।

११. यस्मिन्पक्षे आज्येन तनूदेवता इज्यन्ते तस्मिन्नेव स्विष्टकृतो याज्यानुवाक्ये भवतः।

१२. उभयोरपि कल्पयोः । द्वितीयेति वचनात् ।

१३. वृधन्वन्तावाज्यभागावित्यर्थः । आमावास्यं द्वितीयाया इति मात्र एव वचनमन्येषामदितिधर्माणां प्रापणार्थम् । तेन सप्तदश सामिधेन्यो विराजौ संयाज्ये इति एतद्भवति । अन्यथा तृतीयाल एवैते धर्माः स्युस्तत्र दृष्टत्वात् । न द्वितीयाल इति ।

१४. तत्त्वा एतास्तात्त्व इष्टयः । तथा त्रैवर्णिक एवानया वृत्त्या जीवन् रुद्धा वा एवमुच्यते । तस्य शाखान्तरे विशिष्टकालमाधानमुक्तम् । तस्यैता इष्टयः शाखान्तर एवोक्तास्तल्लिङ्गेन सूत्रकारो व्यवहरति । अतश्च नान्यस्यैता भवन्ति । तनूदेवताभिरिति तनूदेवतासंज्ञकैर्हविर्भिरेकहविष इष्टयस्त्र्यहं कर्तव्याः । एकस्मिन्नहनि अग्नये पवमानाय यथोक्ता । द्वितीये ऽहनि अग्नये पावकाय । अमावास्याविकारो ऽग्ने पावक स नः पावकाग्निमग्निं हवीमभिरग्निनाग्निः समिध्यत इति स्विष्टकृतः । तृतीये ऽहनि अग्नये शुचये । तस्या अप्यमावास्याविकारो ऽग्निः शुचिव्रततम उदग्ने शुचयो अग्निमग्निं हवीमभिरग्निनाग्निः समिध्यत इति स्विष्टकृतः । एवमेतास्तिस्र इष्टयस्त्रिभिरहोभिः कुर्यात् । वैष्णवद्वितीयाभिरपरं त्र्यहं एवमेव व्याप्नुयात् । वैष्णवो द्वितीयो यासां ता वैष्णवद्वितीयाः । काः पुनस्ताः । तनूदेवताः । कुतः । प्रकृतत्वात् । वैष्णवस्य द्वितीयात्वेन गुणभावेन निर्देशात्तनूदेवताधीनानि तन्त्राणि । इदं विष्णुर्वषट् ते विष्णविति वैष्णवस्य याज्यानुवाक्ये । आदित्यतृतीयाभिरपरम् । तनूदेवताभिरिति वर्तते । वैष्णवद्वितीयाभिरिति च । आदित्यं तृतीयं हविरासां वैष्णवद्वितीयानां तनूदेवतानाम् । आदित्यतृती-

यास्तनूदेवता इति समासार्थः। अतस्तत्प्रधानत्वात्तदधीनानि तन्त्राणि। एवं नवभिरहोभिर्नवैता द्रष्टव्यः। दशम्यविकृताग्नेयी। दशमे ऽहनि [1]अविकृता न तनूदेवतासंसृष्टा आग्नेय्येवेष्टिः। अविकृतेत्यसति आव्येन तनूदेवताः स्युः। अतश्च तनूदेवतावर्जं तद्धर्मप्राप्तिः। तेन विश्वेभिरग्ने अग्निभिरग्ने विश्वेभिरग्निभिरिति स्विष्टकृतः। अग्ने शुम्नेनोप ला जुष्ट इति प्रधानस्य।

१५. सर्वाखाधानेष्टिषु उपांशुहविष्टा। हविःशब्देन प्रधानं लच्यते। उपांशुत्वं प्रधानदेवतायागस्येत्यर्थः। सर्वशब्दो ऽनन्तराणामेव मा भूत्।

१६. सर्वासु चशब्दात्।

१७. सर्वग्रहणमनुवर्तमानमपोह्य न संबध्यते। विभक्तिभेदात्। न चायं देवताधर्मो भावप्रत्ययेनानिर्देशात्[2]। अतश्च व्यामिश्रायां न साप्तदश्यम्।

१८. सर्वास्विष्टिषु प्रतिविभज्य दीयन्ते। तन्त्रान्तरदर्शनात्। चतुर्विंशतिं दद्यादिति शतपथे। गवामेषा संख्या न्यायसिद्धा।

१९. दक्षिणा इति प्रकृतम्। द्वादश दद्याद्द्वादश वै मासाः संवत्सरः संवत्सरस्यैवाप्त्या इति श्रुतेः। यजमानो दद्यात्। नर्त्विक्। आजीविकास्मरणादार्त्विज्यस्य।

२०. वाशब्दो विकल्पार्थः। पूर्वयोरपि योगयोर्द्रष्टव्यः।

२१. दक्षिणेति वर्तते। असमासनिर्देशः क्रमार्थः।

२२. सुवर्णशतमानं प्रसिद्धम्। रथो युक्तः सामर्थ्यात्। वासो

[1] B ms. अधिकृता। [2] A C निर्देशात्।

वस्त्रम्। अजश्छागः पुलिङ्गात्। यद्यस्तानः स्यादग्नीध एवैनं प्रातर्दद्यादिति शतपथे। चशब्दः सर्वास्वित्यनुकर्षणार्थः। अतः प्रतीष्टि प्रतिविभज्य दानम्।

२३. आहितेष्वग्निष्वनन्तरं द्वादशरात्रं स्वयं यजमानो ऽग्निहोत्रं जुहुयात्। एतस्मादेव द्वादशरात्रनियमादेतज्ज्ञायते। अन्यत्र ऋत्विगग्निहोत्रहोता। पक्षे यजमानः। क्षत्रियवैश्ययोस्तु स्वयंहोमः पक्षे ऽपि न प्राप्तः। तयोरप्यत्र[1] द्वादशरात्रमविशेषेणोच्यते। कुत एतत्। शतपथश्रुतेः। ते होचुः। को न इदं होष्यतीति। ब्राह्मण एवेति पृष्टप्रतिवचनम्।

२४. द्वादशरात्रमेव चशब्दात्।

न नर्मयुक्तं वचनं[2] हिनस्ति न स्त्रीषु राजन्न विवाहकाले।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि॥

(महाभारत १. ३.४ १२)

इत्येवंविषयमप्यनृतमेष्वहःसु प्रतिषिध्यते। यत्तु साक्ष्ये

शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः।
तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते॥ (मनु ८. १०४)

एवमाद्यप्यनेन श्रौतेन बाध्यते। कर्माङ्गत्वादवश्यम्।

२५. द्वादशरात्रमेव। बहुभ्यो ऽपि बहुवचनात्। भृत्योपरोधेनापि। कर्माङ्गत्वात् सत्यवदनं चातिथिभ्यश्च दानमिति यावज्जीवं केचिदिच्छन्ति।

---

१ A चान्यत्र। २ B om तु A वचनं।

२६. आहिताग्निग्रहणादाग्रयणेष्टिश्च एते व्रते। व्रतग्रहण-मग्नये व्रतपतय इत्यस्याः प्रापणार्थम्। अनिष्ट्वा निरूढपशुना। तस्यैव नित्यत्वात्। मांसमर्थप्राप्तम्। न त्वग्नीषोमीयादिषु। तत्र विशेषवचनात्। ओषधीनामारण्येनानिष्ट्वा आरण्यानाम्। ग्राम्येण ग्राम्याणाम्। ओषध्यः फलपाकान्ता इति प्रसिद्धम्।

---

४.

१. दर्शपूर्णमासारम्भ इति श्रुतत्वात्। सोमाधाने ऽपि निवृत्ते सोमे दर्शपूर्णमासारम्भ एव। दर्शग्रहणं वसिष्ठयज्ञयाजिनस्तदारम्भे ऽपि यथा स्यात्। अन्वारम्भणीयेत्यारम्भमनुभवति। तेन सकृत्प्र-योगः सिद्धो भवति।

२. आग्नावैष्णव एकादशकपालः। सरस्वत्यै चरुः। सरस्वते द्वादशकपालः। एवमेव शाखान्तरे श्रुतत्वात्।

३. पुरोनुवाक्या।

४. याज्या।

५. पावका नः सरस्वती पुरोनुवाक्या। इमा जुह्वाना युष्मदा नमोभिः याज्या।

६. जनीयन्तो न्वग्रवः पुरोनुवाक्या। स वावृधे नर्यो योष-णासु याज्या।

७. पूर्वैः सह समुच्चयार्थश्चशब्दः। अन्वारम्भणीयामेके शाखिनः पञ्चहविषं कुर्वन्ति। त्रीणि पूर्वोक्तानि। अग्नये भगिने चतुर्थम्। अग्नये व्रतपतये पञ्चमम्। एक इति विकल्पार्थम्।

८. त्वमग्ने वीरवद्यशः पुरोनुवाक्या। त्वं भगो न आ हि रत्नमिषे याज्या।

९. त्वमग्ने व्रतपा असि पुरोनुवाक्या। यद्वो वयं प्र मिनाम व्रतानीति याज्या।

१०. उभयथाविशेषात्।

११. उभयथैव चशब्दात्।

---

## ५.

१. कामेभ्यो हितं काम्यम्। पुनराधेयमिति शास्त्रसंव्यवहारार्थम्। वक्ष्यति। पञ्चकपाली पौनराधेयिकीष्टिः। याः पुनराधेये ता हविष (८. १२. ४. ५) इति। अज्ञानानस्य कामान् कुर्वतो ऽपि काम्यानि। यस्यासंपत्तिः स एवमुच्यते।

२. उद्वासनमिष्टान्युत्सर्गः[१]। स च पुनराधेयार्थ एव[२] प्रकरणात्।

३. पुरोनुवाक्या।

४. पृष्टो दिवि पृष्टो अग्निः पृथिव्यां याज्या। अग्नेर्वैश्वानरगुणस्य। आग्नेयस्याग्निर्मूर्धा भुवो यज्ञस्य।

५. वर्षाणां मध्ये पुनराधेयस्य सोद्वासमस्य कालः।

६. मध्यावर्ष एव। चशब्दात्सर्वचानिमित्ते[३]। नचत्रवचनात्पुनर्वस्वोः।

७. अयं वा कालः। या आषाढ्या उत्तरा अनन्तरेत्यर्थः।

---

१ AC• इष्टायुत्सर्गः। २ A एवाप्रक•। ३ A निमित्ते।

तदेव तस्मिन्काले पूर्वपक्षे पुनर्वसुभ्यां संपद्यते यैवैषाषाढ्या उपरिष्टादमावास्या भवति तस्यां पुनरादधीतेति (कौ॰ ब्र॰ २.३) श्रुतेः।

८. मध्यन्दिनो मध्याह्नः। मध्यन्दिनश्च कालः अन्यैः सह समुच्चीयते चशब्दात् कालवचनाच्च स्वतन्त्रो ऽपि।

९. पञ्चकपालः पुरोडाशो भवतीति श्रुतेः। श्रुत्यनुकरणं तद्भक्त्याज्यानुवाक्याव्यवस्थार्थं च। चशब्दादन्यचाप्यस्मिन्मदपङ्क्त्यः।

१०. पञ्चकपाल एव चशब्दात्।

११. त्रिषु मध्यमेषु वक्ष्यमाणेषु। चशब्दान्नराशंसे समुच्चीयमाने श्रुत्यन्तर उभयोः प्रयोगदर्शनात्। अग्निशब्दान्न वेतु व्यन्त्विति शब्दौ विकृतौ नाभ्यधिकौ। एतस्माच्च नियमादग्नीन्यजेत्यपि संप्रैषे ऽन्यवानूहः।

१२. तनूनपादग्न ऽग्निमिति प्रयोगो मा भूदिति वचनम्। तनूनपादिति प्रदर्शनार्थमतो नराशंसयाजिनो नराशंसो ऽग्निमिति भवति। कुतः। विभक्तिभिः प्रयाजानुयाजान्यजतीति (कौ॰ ब्र॰ २.४) विशेषश्रुतेः।

१३. वार्चघ्नस्त्वेव स्थित इति श्रुतिवचनात्।

१४. पूर्व आज्यभाग इति वर्तते। अग्निं स्तोमेन बोधयेति वाग्नये बुधिमते पूर्वं कुर्यादिति हैक आहुरिति (कौ॰ ब्र॰ २.४) श्रुतेः।

१५. अग्न आयूंषि पवस इत्युत्तरस्य पुरोनुवाक्येति श्रुतेः। अथ यद्यग्नये पवमानाय भ्रियेरन्नग्नये पवमानायानुब्रूहीति ब्रूयात्सो ऽन्वाहाग्न आयूंषि पवस इत्यादि (२.२.३.१२) शतपथश्रुतेः।

१६. उत्तर आज्यभाग इति वर्तते। इन्दुमद्गुणायाग्नये वा।

उत्तर आज्यभाग इति शाखान्तरात्। अथ यद्यग्नय इन्दुमते ध्रियेरन्नग्नय इन्दुमते ऽनुब्रूहीति ब्रूयात्त्वो ऽश्वाहेन्न्र् पु भवाणीति (२.१.३.२३) शतपथश्रुतेः।

१७. अग्निर्मूर्धा दिवः ककुदयं वा उत्तर आज्यभागः शाखान्तरात्।

१८. यथाचोदितं तथैव यजति चतुर्थ्यन्तेन। तद्यथा। जुषाणो ऽग्निः पवमानो जुषाणो ऽग्निरिन्दुमान् इत्यादि। तथा चैव शतपथश्रुतिः। यथाचोदितवचनं नियमार्थम्। ततः सार्वकामिकयामचोदितत्वाच्छदादिर्न याज्ययोः[1]।

१९. अग्ने तमद्येति पुरोनुवाक्या। एभिर्नो अर्कैरिति याज्या। अधा ह्यग्ने पुरोनुवाक्या स्विष्टकृतः। आभिष्टे अद्य याज्या। हविष इत्युक्तं व्यवहितत्वाच्चोदनाप्रकरणस्य। पदपङ्क्त्यो याज्यापुरोनुवाक्याः। व्यतिषक्ता भवन्तीति (कौ॰ ब्र॰ २.५) श्रुतेः।

२०. अनुयाजयोरयं विकारः। अग्ने स्तोमं मनामहे ऽग्ना यो मर्त्यो दुव इति श्रुतिप्रदर्शितत्वात्।

२१. यो ऽयमग्निशब्दः षट्सु स्थानेषु तं विभक्तिसंज्ञयाचक्षते याज्ञिकाः। एतासामृचां प्रतीकानि विभक्तय इति (कौ॰ ब्र॰ ९.४) श्रुतेः।

२२. ता हविरन्तपचे ऽप्युपांशु। ता इत्यतिरेकात्। आगन्तु भवतीति हेतोरविशेषात्। चशब्द उत्तराभ्यां सह समुच्चयार्थः।

२३. चशब्दात्पूर्वश्च बुद्धिमान् यदि। आगन्तुत्वाविशेषात्।

---

१ C याज्याया।

२४. चयमु हैक उपांशु कुर्वन्ति विभक्तीरुत्तरमाज्यभागं हविरिति (कौ॰ ब्र॰ २.५) श्रुतेः।

२५. सर्वं वा कर्म सह पूर्वाभ्यामनुयाजाभ्यामुपांशु भवति। सा सर्वैव समामिधेनीकोपांशु भवत्या पूर्वाभ्यामनुयाजाभ्यामिति (कौ॰ ब्र॰ २.५) श्रुतेः।

२६. अयं वा पक्षः। हविरन्तमुपांशु भवति। श्रुत्यन्तरात्।

२७. केवलमुपांशु भवति। शाखान्तरादेव।

२८. संव्यायः पटः प्रावारो वा। स कीदृशः। जरत् जीर्णत्वाच्च पुनरुत्स्यूतः। सूच्या वा[१] संहतः[२]। कद्रथः चिक्कलः संस्कृतोऽपि कुयन्त्रः। अनड्वान् बलीवर्दः तृतीयः। हिरण्यं वा तृतीयमेषा दक्षिणा।

२९. द्वितीयेति सिद्धे सति वचनं पुनराधेयसोमे ऽन्वायातनप्रतिषेधार्थम्।

३०. आमावास्यावाज्यभागौ। शिष्टं प्राकृतं तन्त्रम्।

३१. वाशब्दो विकल्पार्थः। अमावास्याविकार इति वर्तते।

३२. स त्वं नो अग्ने ऽवमो भवोतीति पुरोनुवाक्या। त्वं नो अग्ने वरुणस्य विद्वान् याज्या। इतिकरणादस्यां संस्थितायामग्निहोत्रहोमो न तु पञ्चकपालेष्ट्यां। कुतः संदेहः। श्रुताविदं त्वेव प्रत्यक्षं पुनराधेयस्य रूपमित्युपक्रम्य तस्यां संस्थितायां यजमानो ऽग्निहोत्रं जुहोति संस्थिते ह्याग्न्याधेये ऽग्निहोत्रं हूयत इति संदेहः स्यात्। अत्र याज्ञिकमीमांसकानां विप्रतिपत्तिर्दक्षिणायाम्। उभ-

१ C सया वा संहत. in marg सूच्या। २ A B संचित।

यौर्दक्षिणा ददाति या अग्न्याधेये श्रुता याश्च पुनराधेये ताः समुच्चिताः पुनराधेये दीयन्त इति याज्ञिकाः। तथा च कात्यायनः। अग्न्याधेयिकीश्चैकश्रुतेरित्याह (४.११.१२)। मीमांसकास्तु वदन्ति। नाकृताधानः पुनराधेयाधिकारी। तेनाधाने दक्षिणा याश्चोदितास्ता दत्ताः पुनराधेये च पौनराधेयिकीर्ददाति। स एवमुभयीर्ददाति। अत्र निर्णयः। अन्यस्याः शाखाया उपलभ्य कात्यायनेनोक्तम्। अन्यशाखान्तरीयं मीमांसकैर्विचारितम्। द्वादशरात्रं स्वयंहोमी स्यादित्यादि समानमाधानेन। तथा च कात्यायनः। अग्न्याधेयवदन्यदित्याह (४.११.१४)।

---

## ६.

१. अग्निहोत्रमिति वक्ष्यमाणस्य दर्विहोमकर्मणो नामधेयम्। तदाहिताग्निर्यावज्जीवं सायंप्रातरभ्यस्तं कुर्यात्। यावज्जीवमग्निहोत्रं जुहोतीति शाखान्तरश्रुतेः। इहापि सायं च प्रातश्चेति द्विरुक्तकरणादयमेवार्थः प्रतीयते। जुहोतिग्रहणं जुहोतिधर्मप्रापणार्थम्। जुहोतिरासेचनाधिक उपविष्टहोमः स्वाहाकारप्रदानः। सायमारम्भश्चायं प्रातरपवर्गः। तथा हि संप्रदर्शनाच्छतपथे। तस्येतिकर्तव्यतोच्यते।

२. अस्तमयसंनिधौ हि प्रायेण छायाः संसृज्यन्ते। तस्मात्कालात्पुरा गार्हपत्यादग्नेराहवनीयं पृथक्करोति।

३. प्रातस्तनं होमं कर्तुमुद्यतः प्रभातायां रात्र्यां गार्हपत्यादाहवनीयमुद्धरेत्।

४. प्रादुःशब्दः प्रकाशनवचनः। प्रकाशीकरणं कुर्युः सर्वेषामग्नीनां नित्यधृतो यजमानाः। अस्मिन्नेवोद्धरणकाले। नित्यधृत इति बहुवचनं सर्वप्रकारार्थं ततश्च सोमे ऽप्यस्मिन्नेव काले ऽग्नीनां प्रकाशनम्। तथा च चरकाणां। दीक्षित वाचं यच्छ। पत्नि वाचं यच्छ। आग्नीध्राग्नीन्प्रज्वालयेति प्रैषः।

५. गतश्रियः प्राप्तश्रियो वक्ष्यमाणाः। शुश्रुवान्ब्राह्मणः श्रुतसंपन्नः। ग्रामणीर्ग्रामस्वामी। राजन्यश्च राजनि साधुः। क्षत्रियो वा। एते नित्यधृतो भवन्ति।

६. उद्धरणमन्त्रो ऽयं लिङ्गात्।

७. अनेन मन्त्रेण भूमौ अग्निं स्थापयेत्। मन्त्रलिङ्गात्। प्राञ्चं प्रणयेत्। तस्मात्प्राञ्चमग्निं प्रणयतीति दर्शनात्। वैश्यकुलाद्वित्तवतो वा (आश्व॰श्रौ॰२.२.१) भ्राष्ट्राद्वा तूष्णीं गार्हपत्याद्वितीये दक्षिणतो दक्षिणाग्निं स्थापयेत्। शाखान्तरश्रवणात्। अस्माकं तु समानयोनिकावाहवनीयदक्षिणाग्नी। अरण्योर्निर्गार्हपत्यः। तस्मादितरौ। अथ यदरण्योरग्नीन्समारोहयत इति लिङ्गदर्शनात्।

८. अङ्क्ता यदेन इत्यच रात्र्या यदेन इति विकारः। प्रातर्होमार्थ उद्धरणे।

९. प्रदक्षिणमग्नेः समन्तात्पाणिना सोदकेन त्रिः प्रमार्ष्टि तत्समूहनमित्याचक्षत इति गृह्योक्तेन विधानेन परिसमुह्य होष्यन् होमं करिष्यन्नित्यर्थः। अतो न कृत्वा परिसमूहनं पर्युक्षणवत्। होमकर्मणैव परिसमूहनपर्युक्षणे होष्यन्निति वचनात्।

१० ऋतं त्वा सत्येन इत्येवमादिना मन्त्रेण त्रिस्त्रिर्वोक्षानि-

र्द्वेशान्मन्त्रावृत्तिः। एकैकमग्निं पर्युक्ष्य धारां नयेदिति वाक्यपरि-समाप्तिः। कृत्वा चैवमेव पर्युचणं। लाघवार्थमिहैवोक्तम्।

११. प्रातर्होमे सत्यं त्वर्तेन परिषिञ्चामीति पर्युचणम्।

१२. यज्ञस्य संततिरसीत्येवमादिना मन्त्रेण गार्हपत्यादार-भ्याविच्छिन्नामुदकधारां आहवनीयात् अभिमायाहवनीयं धारां नयेत्। एवमेव शाखान्तरश्रवणात्।

१३. होमकाल एवैतत्प्रायश्चित्तं प्रकरणात्। यदि प्राग्धारा-दानादग्नीनामन्तरा श्वापदो यायात् ततस्तन्तुं तन्वन् रजसो भानुम-न्विहीत्येवमादिना मन्त्रेण धारां दद्यात्। षयो ह वाव पशवो ऽमेध्या दुर्वराह एडकः श्वेति शतपथे (१२.४.१.४) विशेषश्रवणादे-तेष्वेवान्तरा गच्छत्सु प्रायश्चित्तम्।

---

## ७.

१. प्रथमास्तमिते ऽस्तमितमात्रे इत्यर्थः। सायमस्तमिते पुरा तमसस्तस्मिन्काले जुहुयादिति (कौ० ब्र० २.८) श्रुतेः।

२. वाशब्दो विकल्पार्थः। यद्दवर्श्मैकदिनचचोद्गिदकाले जुहु-यात्। एवमपि शाखान्तरात्।

३. प्रातस्तमो होमकालः। उषोदयमुदयसमीपे विगताया-मुषसि। प्रातः पुरोदयादपहते तमसि तस्मिन्काले जुहुयादिति (कौ०ब्र०२.८) श्रुतेः।

४. वाशब्दो विकल्पार्थः। प्रथम इति वर्तते। प्रथमोदित आदित्ये जुहुयादेवमपि शाखान्तरे श्रुतत्वात्।

५. पुरस्ताद्यो ऽभिहितः कालः प्रथमास्तमिते प्रातरुपोदयं व्युषिते तत्रैव मनः कुर्यात्। इतरौ तु कालौ पश्चादभिहितौ। दृश्यमाने वा नक्षत्रे उदिते वेति तौ मनस्यपि नारोपयेत्। ननु प्रतिषिद्धयोः किमर्थमुपदेशः। ज्ञापनार्थः। यत्र स्वश्रुतिरस्ति तत्र शाखान्तरं विद्यमानमपि नादर्तव्यम्। तुशब्दो नियमार्थः। ततः कौण्डपायिनामयने ऽप्ययमेव कालः। अपरे लादिविकल्पार्थमेतत्सूत्रं व्याचक्षते।

६. अत एव प्रथमास्तमितानुदितयोर्होतव्यं येन तस्यापराधे प्रायश्चित्तं श्रुत्यन्तरे पठ्यते। इतरथा हि उदिते ऽपि विधानादपराधाभावात्प्रायश्चित्तविधानमनर्थकं स्यात्। आदिसंकल्पितस्येति व्याख्यान्तरम्।

७. यदि संस्कृतं हविरादित्यो ऽभ्युदियात्ततस्तदाहवनीयहोमार्थमुद्धृत्यानुच्छ्रसंस्तावदासीत यावत्तमनमुच्छ्वासाभिकाङ्क्षा। ततः समिदाधानानन्तरं यथाप्राप्तमाहुतिद्वयं हुत्वा प्राग्ग्या यज्ञस्येत्येतस्माज्जपादूर्ध्वं दत्त्वा गौर्ब्राह्मणस्य वर इति। ततो भूरिति पूर्वस्या आहुतेरनुमन्त्रणं चरकश्रुतेः। स्वयंहोमी पूर्ववर्लिजे अन्यस्मै ब्राह्मणाय वा दद्यात्। प्रोषिते ऽपि च दानमन्वाहार्यवत्। कौण्डपायनीये सत्त्वाद्दानम्। अहुताभ्युदित एवैतत्प्रायश्चित्तम्। नेतरत्र। तथा श्रवणात्। निवृत्ते चाहवनीये होमे ऽभ्युदये सर्वप्रायश्चित्तम्। विशेषप्रायश्चित्तावचनात्[1]। अनुद्धृताभ्यस्तमये च नैतत्। अभ्युदितमिति हविषो निर्देशात्।

---

१ C विशेषात्। प्रायश्चित्तावचनात् B ॰अवच॰।

८. अथवा अङ्गलेव तदभ्युदितं हविः उदुह्य अपनीय पूर्वमुद्धृतमाहवनीयं अन्यं प्रणीय विना मन्त्रेण। प्रणीयेति ग्रन्थान्तरेण निर्देशात्। जुहुयादिति होममात्रोपदेशाच्च परिसमूहनादिः। होमार्थस्यैवैतत्। न साधारणस्य। विरोधात्।

९. पयो ऽग्निहोत्रीक्षीरम्। न लौकिकम्। यवागूः पाकविशेषो विरलद्रवा। सा च व्रीहियवयोरन्यतरद्रव्यका। दधि गव्यं अनग्निहोत्र्या अपि। तथैवाज्यम्। इति नित्यानि कामसंयोगं विनाग्निहोत्रहवींषि। पयसा जुहुयादेष ह वै सर्वासामोषधीनां रसो यत्पयो सर्वैरेव तद्रसैरग्नीन्प्रीणातीति (कौ० ब्रा०२.१) श्रुतेः। तद्वा आज्यमिव गमनस्यैव जुहुयादिति च।

१०. दध्नो नाधिश्रयणमुदग्निरुद्वेषु समिधमादीप्यावज्योतनमर्पा प्रत्यानयनं पुनरवज्योतनं च भवति।

११. आज्ये ऽग्निहोत्रहोमार्थत्वेनादिष्टे नापः प्रत्यानयति। श्रुत्यन्तरात्। ततो ऽधिश्रयणमवज्योतनं पुनरवज्योतनं च भवति। यानि पुनर्होमद्रव्याणि शाखान्तरेषु श्रुतानि। तद्यथा। तण्डुलैर्बलकामो मांसेनाभिचरन्सोदनेनान्नाद्यकामो ऽह्निर्दृष्टिकामः सोमेन यज्ञकामस्तैलेन वर्चस्काम इति वचनानि[१]। तेषां च तत एव यथाश्रुताः संस्काराः कार्याः।

१२. अथमपरो विशेषः[२]। आज्यस्योद्वासितस्य सतः स्रुग्गतस्य शङ्खोक्षणादौ तूष्णीमाज्ये प्रत्यस्य तत्स्थयोरेव पवित्रयोरुत्पवेत्।

---

१ B वचनात्। २ C विकल्पः।

इदं धारादानं प्रायश्चित्तप्रसक्तानुप्रसक्तम्[१]। इदानीं धारादानादनन्तरं यत्कर्तव्यं तदुच्यते।

१३. अन्वाहार्यपचन इति दक्षिणाग्नेः संज्ञा। तस्मादुत्तरतः पश्चात्स्थितः प्रत्यङ्मुखो यजमानस्तिष्ठन्नृजुकायावस्थ आदित्यमुपतिष्ठते। स्तुत्या अनुकूलयति। सत्य ऋताय त्वेत्येवमादिना मन्त्रेण। सायं सायंतने होमकर्मणि। अस्तमितयेद्गार्हपत्यमुपतिष्ठेतेति छन्दोगानाम्। तमप्येतस्मिन्नेव देशे स्थितः अनेनैव मन्त्रेण। पूर्वाह्णे चेदुद्‌वसानीया समाप्यते तत्र संस्थितायां सायमग्निहोत्रं जुहोतीति वचनात्। तत्रादित्योपस्थानं प्राङ्मुखः कुर्यात्। उपस्थानस्य तथा न्यायात्।

१४. प्रातर्होमे यजमान आहवनीयं समीपे स्थित्वोपतिष्ठते। ऋत सत्याय त्वेत्येतेन मन्त्रेण।

१५. उत्तरेण देशेनान्वाहार्यपचनं यजमानस्य संचरः। प्रवेशनिष्क्रामौ। यजमानवचनाच्च केवलमग्निहोत्रे।

१६. दक्षिणदेशस्य पश्चादाहवनीयादवधेरासनं यजमानस्य सर्वत्र। तस्माद्दक्षिणवेद्यन्तमधिसृप्यासीतेति शतपथे।

१७. दक्षिणतःपश्चाद्गार्हपत्यादित्यर्थः।

१८. वृष्टिरसीत्येवमादिना मन्त्रेणाप आचामति मन्त्रलिङ्गात्।

१९. यजमान एव चशब्दात्।

---

१ A om. प्रायश्चित्त B ०नुषक्तं A B add कथितं after सक्तम्।

८.

१. दक्षिणतो वितानस्याग्निहोत्रीमग्निहोत्रहोमार्थां धेनुमुपसृजन्ति सवत्सां कुर्वन्ति। ये तत्र परिचारकाः। बहुवचनमविवक्षितम्। तेन द्वौ वाप्येको ऽपि वा। अग्निहोत्रीति संज्ञा व्यवहाराय।

२. उपसृष्टारो यजमान ऋत्विक् चशब्दात्। एते ऽग्निहोत्र्यग्नीनां चान्तरेण न संचरेरन्।

३. शूद्रेणाग्निहोत्रीं न दोहयेत्। न चोपसर्जयेत्। स्वयमुपसर्जनदोहनेन विरुध्यते घ्नन्तत्वात्।

४. अग्नये देवेभ्यो धुक्ष्वेत्येतत्सायं जपति। होमयिता। सायंसंयोगेन विधानाच्च मध्यन्दिने।

५. सूर्याय देवेभ्यो धुक्ष्वेतीमं मन्त्रं प्रातर्जपेत्। सा या पूर्वाहुतिस्ते देवा इत्यनया कल्पनया देवेभ्यो धुक्ष्वेति। दक्षिणान्याहुत्यभिप्रायं वा।

६. अशनायापिपासे इत्यादिकं मन्त्रं सायंप्रातर्जपेत्। सायंप्रातरित्युच्यते। प्रायेणाशनायापिपासे अहन्येव पीडाकरे इति कस्यचिदाशङ्का। सा मा विज्ञायीति।

७. अग्निहोत्र्या अन्वाहार्यपचनेन वीरेणेति एवं स्तौवत्सायां गवि जपेत्।

८. उदीच इत्यनुच्यमाने प्राचां निहरणं स्यात्। एषा हि तस्य दिक् प्रज्ञातेति श्रुतेः। अनधिश्रयणीये ऽपि होमद्रव्ये निहरणमवज्योतनार्थम्। यन्तानङ्गारान्करोतीत्यविशेषश्रुतेः (कौ० ब्रा० २. १)। उदग्निहृद्वेष्वधिश्रयणम्। उत्तरत उपाचार इति परि-

भावितत्वात्। गार्हपत्येन वीरेणेति विकार इति नियमार्थः। तत कौण्डपायिनीये[1] न प्राजहितेन वीरेणेति। ननु स गार्हपत्यो ऽत इति वचनाच्छालामुखीय एव श्रयणं प्राप्नोति। नेति ब्रूमः। मांसमग्निहोत्रं जुहोतीति नाम्ना धर्मातिदेशात्प्राजहित एव गार्हपत्यः। शालामुखीय एव च होमो[2] वचनात्। [3]तदितराहवनीयमुपकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयादिति शतपथे।

८. यदधिश्रितं तद्गार्हपत्य उत्तरतो निरूढेष्वङ्गारेषु समिधमादीप्याग्नेष्टा चक्षुपावेव इत्यनेन मन्त्रेणावज्योतयेत्। अथ यदधिश्रित्यावज्योतयतीति श्रुतत्वात्।

१०. समाप ओषधीनां रसेनेत्यनेन मन्त्रेण स्रुवेणापः प्रत्यानीय। अथ यदपः प्रत्यानयतीति स्वश्रुतिः (२.१)। स्रुवेण मन्त्रस्य शाखान्तरात्।

११ प्रतितप्यापः तूष्णीं पुनरवज्योत्य। अथ यत्पुनरवज्योतयत्यप एव तच्छ्रपयतीति (२.१) श्रुतेः। प्रतितप्येति तूष्णीमिति शाखान्तरात्।

१२. त्रिरित्युपसादनावृत्तिः। उपसादमिति णमुल्। उपसाद्योपसाद्येत्यर्थः। उदगिति दिङ्नियमः। त्रिरुपसादमुदग्घोमीयमुद्वासयतीति (२.१) श्रुतेः।

१३. एवमुपसादयन्नुद्वासयेत्। अनुच्छिन्दन्निव हरेदिति (२.१) श्रुतेः।

१४. नमो देवेभ्य इत्यनेन मन्त्रेण गार्हपत्यस्य ये दक्षिणतो

[1] A om न। [2] C चाहोमो। [3] C (orig) न हि नदवकल्पते।

ऽङ्गारांस्तानुपस्पृशेत्। अथोपवेषेण दक्षिणतोऽङ्गारानुपस्पृशति नमो देवेभ्य इति श्रुतेः।

१५. सुभूताय व इति अनेन मन्त्रेण ये उदीचोऽङ्गारास्ता-न्प्रत्यूहेत्। प्रतिपादयेदित्यर्थः। तथा प्रत्यूहेद्यथा सुप्रत्यूढा भवन्ति[१]। तथा चैव श्रुतत्वात्।

१६. गार्हपत्ये संस्कारा इति तन्त्रान्तरे परिभाषितत्वात्। गार्हपत्ये स्रुवं प्रतितप्य स्रुचं चानेन क्रमेण प्रत्येकं द्विश्चकारकर-णात्। उन्नयति स्थालीतः। स्थाल्याः स्रुवेणोद्धृत्य स्रुचि उन्नयति[२]। अशनायापिपासीयेन मन्त्रेण स्रुचा स्रुवेण वीरेणेत्येतावान्विकारः।

१७. चतुरावृत्तं वा पञ्चावृत्तं वा विकल्पः। चतुरुन्नयेच्चतु-ष्टयं वा इदं सर्वमस्त्येव सर्वमस्मिन्पञ्चकृत्व उन्नयेत्पाङ्क्तो वै यज्ञो यज्ञस्यैवाप्त्या इति (२. १) श्रुतेः।

१८. उन्नीयमाने प्रतिस्रुवं मन्त्रावृत्तिः शाखान्तरात्। मन्त्रोऽपि शाखान्तरादेव।

१९. उन्नीते सर्वस्मिन्न प्रतिस्रुवम्। स्रुचं स्रुक्पुष्करं संस्पृ-शेत्। स्रुवं स्थाल्यां मुक्त्वा शाखान्तरात्।

२०. समूर्द्देवेभ्य इत्यादिकं मन्त्रं भार्यं जपेत्। समुपस्पर्शन-मन्त्रो[३]मा विश्वायौति जपतीत्युक्तम्।

२१. प्रातरयं जपः। कौण्डपायनीये[४] मध्यन्दिने ऽपि शाखा-न्तराद्धोमः। तच्च तत एव यथोक्तम्।

---

१ A सुप्रत्य प्र। २ A निनयति Bom उद्। ३ A उपस्पर्शने। ४ Mss कु०

९. क्रुतयोराहुत्योरुत्तरत उत्तरे देशे प्रतीचीं प्रत्यगभिमुखीं स्रुचं सायंतने होमकर्मणि द्विरुपशोधयति हस्तेन। तामुत्तरतः सायमुपमार्ष्टि प्रतीचीमिति (२.२) श्रुतेः।

१०. उपमार्ष्टीति वर्तते। पुष्करस्य दक्षिणं प्रदेशं लेखान्त उपमार्ष्टि[1]।

११. कुशेषु स्रुग्धारणार्थेषु पूर्वमुपमार्जनं निलिम्पेदोषधीः प्रीणामीति ध्यायन्। यत्पूर्वमुपमार्ष्टि तत्कूर्चे निलिम्पतीति (२.२) श्रुतेः। उत्तरत उपाचार इति परिभाषणादयेषु।

१२. यदुत्तरं तदेवं प्रतिपादयेत्। सहैव तेन पाणिमुत्तानं दक्षिणेन कूर्चे निदध्यात्[2]। पितॄन्प्रीणामीति मन्त्रं मनसा ध्यायन्। प्राचीनापवीती अप उपस्पृशेत्। यद्द्वितीयं तद्दक्षिणेन कूर्चमुत्तानं पाणिं निदधाति पितॄंस्तेन प्रीणातीति (२.२) श्रुतेः।

१३. द्विः प्रदेशिन्या प्राश्नात्यारभ्य प्रागुदीचीमुद्दिशतीति सूत्रच्छेदः। तथापि तु व्यवस्थानि खण्डश उच्यन्ते। प्रदेशिन्यङ्गुष्ठानन्तरा। तथा क्रुतशिष्टं द्विः प्राश्योपब्दिमच्छब्दवदित्यर्थः। अथ यद्द्विः प्रदेशिन्या प्राश्नातीति (२.२) श्रुतेः।

१४. स्रुचमुदङ् पर्यावृत्य श्रुत्यन्तरात्।

१५. तया स्रुचा प्राग्दण्डया भक्षयित्वा शाखान्तरात्।

१६. तां प्रत्यग्दण्डां पर्यस्य परिक्षिप्य।

---

१ B लेखां तत्र उप॰ C लेखा न उप॰। २ Paddhati कुशमूले उत्तानं पाणिं कुर्वन् पितॄन् प्रीणामीति निलिम्पत्युत्तरमुपमार्जनम्।

१७. जिह्वया नितरामास्वाद्य। अथ यत् स्रुचं निर्लेढि सर्पदेवजनांस्तेन प्रीणातीति (२.२) श्रुतेः।

१८. तामेव स्रुचं प्रक्षाल्य। अथ यत् स्रुचं मार्जयते रक्षोदेवजनांस्तेन प्रीणातीति (२.२) श्रुतेः।

१९. अनन्तरमाचम्य।

२०. प्रागुदक्षिता अप आसिच्य तयैव स्रुचा प्रक्षतत्वात्। अथ यत्प्रागुदीचीरप उत्सिञ्चतीति (२.२) श्रुतेः।

२१. तां स्रुचं प्रागुदक्षितामुद्यमयति। अथ यत्प्रागुदीचीं स्रुचमुद्दिशतीति (२.२) श्रुतेः। स्रुचा भक्षयति स्रुचं निर्लेढीति हस्ते संपादयेत्। हस्तस्य स्रुक्संपत्तिदर्शनान्मारुतेषु। तदाहुः। कथमस्यैते पुरोनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा कृता भवन्तीति। एतेषां वै सप्तपदानां मारुतानां यानि त्रीणि प्रथमानि पदानि सा त्रिपदा गायत्री पुरोनुवाक्याथ यानि चत्वार्युत्तमानि सा चतुष्पदा त्रिष्टुब्याज्येदमेव कपुच्छलमयं[1] दण्ड इति (शतपथब्रा॰ ९.३.१.१६) अभिनयेन[2] हस्तं दर्शयति। तस्माद्धस्तेन प्राशनं हस्तस्य[3] निर्लेहन। शिष्टाचारश्च एवमेव।

२२. एकस्मिन् होम एकहोमः। यदुक्तं तदेकहोमे ऽपि कर्म भवति। परिसमूहनपर्युक्षणे होमप्रयुक्ताशङ्कया न प्राप्नुतः। तदाशङ्कानिवृत्त्यर्थं वचनम्। अतश्च यत्पूर्वमुक्तं यच्च वक्ष्यमाणं तत्सर्वमेकहोमे ऽपि भवति। आहवनीय एव जुहुयादिति हैक आहुरिति (२.२) वचनात्।

---

१ B ॰लम॰। २ A चनभिनयेन। ३ A हस्तस्य।

२३. ततः सर्वेषु न केवलमाहवनीये गार्हपत्यदक्षिणाग्न्यो-रपि। तुशब्दः स्वमतप्रकटनार्थः। सर्वेषु त्वेव जुहुयात्। पूर्णामुदकस्य स्रुचमुत्तरेण गार्हपत्यमदूरेण निधायावस्थाय।

---

# १०.

१. इह पुष्टिमित्यादिभिः समन्त्रिकास्तिस्रः। एका त्वमन्त्रिका इति गार्हपत्ये।

२. पूर्णां स्रुचमिति स्रुग्ग्रहणात्स्रुवेणैता आहुतयः। तूष्णीमिति वचनादसंसृजन्नुत्तरतः। चतुर्थीति वचनं पुष्टिपतिर्दधातु जनयत्विति मन्त्रान्तो मा विज्ञायीति। गार्हपत्यग्रहणं यावन्तो गार्हपत्यास्तावत्सु कुण्डपायनीये होमः। समिधमाधाय होमः। आहुतिस्तत्समिधि वसतीति श्रुत्यन्तरदर्शनात्। अन्वाहार्यपचनग्रहणं गार्हपत्यवत्। तत्सवितुर्वरेण्यमित्युक्तसंदेहनिरासार्थं चतुर्थीग्रहणम्।

३. भूर्भुवः स्वरित्येता महाव्याहृतयः प्रसिद्धाः। ताभिः प्रतिमन्त्रं तिस्र आहुतयः। तिस्र इति वचनान्न पूर्वाभिः सह समुच्चयः। ब्रह्मवर्चसकामस्य फलसंबन्धेन पक्षान्तरम्।

४. अग्नये ऽन्नादायान्नपतये स्वाहेत्येषैव चतुर्थी। न तु व्याहृत्युपहिता।

५. याः स्रुचि स्थापिता आपस्तास्त्रेधा करोति। कथम्। अग्निहोत्रस्थाल्यां भागः। तथा गार्हपत्यस्य पश्चाद्भागः। अञ्जलौ च

पत्न्यास्तृतीयो भागः। यद्यप्यनालम्भुका पत्नी बह्व्यो वा पत्न्यस्तथापि वैधमेव। आरम्भसामर्थ्यात्।

६. अनालम्भुकायां पत्न्यामासनप्रदेशे तूष्णीमपो निक्षिपेत्। अञ्जलौ मन्त्रवचनात्। एकवचनं च विवक्षितम्। ततः पत्नीसङ्गले ऽपि एकैवाञ्जलिं[1] प्रतीच्छेत्।

७. स्रुचैवापस्त्रिषु स्थानेषु हृत्वा तां प्रतितप्य गार्हपत्ये ततो निदधाति स्थापयति।

---

## ११.

१. दक्षिणतः स्थितस्य न्यायवचनादुदङ्मुखस्य प्राङ्मुखस्य वा यथासम्भवम्।

२. उपप्रयन्तो अध्वरम्। अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः। उभा वामिन्द्राग्नी आहुवध्यै। अयं ते योनिर्ऋत्वियः। अयमिह प्रथमो धायि धातृभिः। अस्य प्रत्नामनु द्युतम्। एतासां षण्णामित्युच्यते किमर्थम्। केषां चिच्छाखिनामन्यः क्रमः। तन्मुद्रार्थं। तदेतत्समाहार्यं षड्चम्। तस्य त्रिः प्रथमां त्रिरुत्तमामिति। तस्योपवती प्रथमा प्रतवत्युत्तमेति। तथा स वै त्रिः प्रथमां जपति त्रिरुत्तमामिति (शतपथब्रा॰ २.३.४.१७) च। अतस्य जपित्वेति सूत्रशेषः।

३. आयुर्दा इत्येवमादिकं मन्त्रं जपित्वा ततः।

---

१ C एकामेवा॰। (sec. h) प्रयच्छत्।

४ चित्रावसो स्वस्ति ते पारमशीय इमं मन्त्रं त्रिर्जपति।

५ सं त्वमित्यादिकं मन्त्रमुपविश्य जपेत्। अथासीनः सं त्वमग्ने सूर्यस्य वर्चसागथा इति (शतपथब्रा॰ २. ३. ४. १७)।

६. अम्भ स्थ इत्येवमादिना मन्त्रेण अग्निहोत्रीं गामभ्येति प्रकरणात्। अथ गामभ्येत्यम्भाम्भो वो भक्षीय मह स्थ महो वो भक्षीयेति शतपथश्रुतेः (२. ३. ४. २५)।

---

## १२.

१. संहितासि विश्वरूप्यूर्जा माविश गौपत्येनेत्यनेन मन्त्रेण अग्निहोत्र्या ललाटमुपस्पृशेत्।

२. उप त्वाग्ने दिवेदिवे इति तृचेनाग्ने त्वं नो अन्तम इति द्वैपदेन तृचेन गार्हपत्यमुपतिष्ठत इति वाक्यशेषः। स गार्हपत्यमुपतिष्ठत उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्। नमो भरन्त एमसीति शतपथश्रुतेः (२. ३. ४. २८)। अथ द्विपदा अग्ने त्वं न इत्यादि।

३. इल एहीत्यादिना मन्त्रेणाग्निहोत्रीं गामभ्येति प्रकरणात्।

४. काम्या एतेत्येवमादिना मन्त्रेणाग्निहोत्रीवत्सस्य ललाटमुपस्पृशेत्।

५. सोमानं स्वरणमित्यनेन तृचेनोत्तरतः स्थितः प्राङ्मुखो ऽन्वाहार्यपचनमुपतिष्ठते। अथान्तरेणाहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन्नग्निमीक्षमाणो जपतीति शतपथश्रुतेः।

६. अन्तरेण गार्हपत्याहवनीयौ स्थितो महि त्रीणामवो ऽस्त्विति सूक्तं जपित्वा तत आहवनीयमुपतिष्ठते।

७. तत्सवितुर्वरेण्यमित्यस्याः श्रुतिः। अथ सावित्री। कद्रा चन स्तरीरसीति वालखिल्यासु। अस्याः श्रुतिः। अथैन्द्री। परि ते दूलभो रथः। अस्याः श्रुतिः। अथाग्नेयी। तथा चिरेतां जपतीति शतपथश्रुतयः[1]। एवं यजमानेनाहवनीयोपस्थाने कृते ऽनन्तरमार्त्विज्यम्।

८. सर्वेषु लेव जुहुयादिति स्वश्रुतौ (कौ॰ ब्रा॰ २. ३) प्रयत्नादयमेव पक्षः सूत्रकारस्याभीष्ट इति ज्ञापनार्थस्तुशब्दः। महाव्याहृतिभिस्तिसृभिर्मन्त्रैः प्रत्येकम्। तिस्रस्तिस्रः समिधो ऽभ्यादधाति यो जुहुङ्गवति। यजमानो ऽन्यो वा। य पुनरेकहावी एकहवनसाधुकारी स आहवनीय एवाभ्यादध्यात्। यजमानो ऽन्यो वा।

९. वाचं विसृजत इति सूत्रान्तः। याजमानमेतन्मन्त्रार्थसामर्थ्यात्। दैवस्त्वनुरसीत्यादिना मन्त्रेण आहवनीयस्य दक्षिणतो ऽङ्गारमुपस्पृशेत्[2]।

१०. ततो ऽपि तत्नुरसीत्येवमादिना मन्त्रेण सुवीर्यणेत्येवमन्तेन आहवनीय एव प्रार्थ्यते। मानुष इत्यारभ्य पुत्रग्रहणान्तो[3] मन्त्रः। यावत्पुत्रमावर्तते पक्षे। आमन्त्रितान्तेनाभिव्याहरणमसावित्यस्य स्थाने पुत्रनामग्रहणम्। वाक्यार्थसामर्थ्यात्। जन्मना

१ शतपथब्रा॰ ९ ३ ४ १०. Kat Sr S IV 12, 10 (Comm) Kat Paddh pag 396, 19 S'ankh Paddh fol 20 तत्सवितुर्वरेण्य कद्रा चन स्तरीरसि परि ते दूलभ इति त्रि त्रिभिराहवनीयमुपस्थाय। २ B ॰रान्। ३ A नामग्रह॰।

ज्येष्ठम्। सुब्रह्मण्यादर्शनात्। दीक्षितस्यापि नामग्रहणमविशेष-श्रुतेः। जीवतां नामग्रहणं भवतीति वचनात्।

११. आत्मनो गृह्णीयादविद्यमानपुत्रः वचनसामर्थ्यात्। अपुत्र इति वक्तव्ये ऽजातग्रहणं पुंस्त्वविज्ञानार्थम्। पुत्राधिकारे पुनःपुत्र-ग्रहणान्न क्षेत्रजादीनां। न दुहितुः। न शूद्रस्य। त्रयाणां वर्णा-नामित्यधिकारात्।

१२. सत्येनावभृथमित्यनेन मन्त्रेणाचम्य यजमानो वाचं विसृ-जते। अथ यदप आचम्य व्रतं विसृजते ऽस्येव तद्व्रतं दधाति। ता अस्य व्रतं गोपायन्त्या पुनर्होमादिति (कौ० ब्रा० २. ४) श्रुतेः।

---

## १३.

१. पूर्वमसंयुज्य विहितत्वान्माध्यन्दिने ऽपि भवति कुण्डपाय-नीये। अनुपस्थानं वा प्रातरिति (२. १२. ८) प्रतिषेधो ऽग्नि-होत्रादिविशेषाधिकारादस्यैव भवति। न तु यत्पूर्वमुक्तमृत सत्याय त्वेति।

२. याजमानमधिकृतं। भूर्भुवः स्वरित्येवमादिना मन्त्रेणाहव-नीयमुपतिष्ठते।

३. दक्षिणतःपश्चादाहवनीयादासनमित्युक्तं। तत्रोर्ध्वं आहव-नीयोपस्थानं कृत्वा तस्मिन्नेव देशे स्थित इतरावग्नी उपतिष्ठते। अन्यत्राप्येतच्छाखान्तरीयाद्वचनात्कर्तव्यम्। एकदीक्षे चोपस्थान-मिति (५. ४. ३)। तत्राप्येवमेवेच्छन्ति।

४. अभयं त इत्येवमादिना मन्त्रेण गार्हपत्यमुपतिष्ठते।

५. अभयं त इत्येवमादिना मन्त्रेणान्वाहार्यपचनमुपतिष्ठते। अन्वाहार्यपचनो दक्षिणाग्निः।

६. उपतिष्ठत इति वाक्यशेषः। तन्त्रेणोपस्थानम्। बहुवचनात्। तत्रैव स्थितः। तुल्यत्वाद्देशस्य।

७. समानं तूष्णीं सायंतनेन यच्चार्त्विज्यं यच्च याजमानम्। महाव्याहृतिभिस्तिस्रस्तिस्रः समिधो ऽभ्यादधातीत्यत आरभ्य यावद्व्रतं विसृजत इति। किमन्यदास्ते येनैवमाह। एतत् ज्ञापयति। सायमपि व्रतविसर्जनादनन्तरं पर्युक्षणं भवति यजमानस्य। इतरस्य समिदाधानात्।

८. अनेन अथ प्रातरित्यादिना (९. १३. १) पक्षे सायमपि याजमानं भवति। पक्षे सायं वात्सप्रेण। एवकारकरणाद्यस्मिन्नपि पक्षे प्रातरुपस्थानं तस्मिन्नपि पक्षे प्रातस्तनं याजमानं वात्सप्रेण सह सायंहोमे विकल्प्यत एव। किं च कारणम्। न स्यात्। संनियोगशिष्टस्यान्यतरापाये इतरस्याप्यपाय इति न्यायात्।

९. एतस्मिन्नपि पक्षे समानं समित्प्रभृतीति समानवचनाद्भवत्येव।

---

१४.

१. याजमानप्रसङ्गेन प्रवासप्रारम्भे याजमानमुच्यते। प्रवत्स्यन्नग्नीन्विहृत्याप्रयक्रान्[1] गार्हपत्यस्य पश्चात्प्राङ्मुखःस्थितः सर्वानीक्षते। अभयं वो ऽभयं नो ऽस्त्वित्यनेन मन्त्रेण। एतावानेव मन्त्रः। न

---

१ A ॰ह्त्य। प्रव्राक्तिन्या॰ C (in marg) व्यक्रिमा B seems to read like C.

कामेन व उपतिष्ठ इत्याद्यनुषङ्गः[१]। तचोपस्थानमिहेत्तणमिति विशेषात्।

२. नर्येत्येवमादिना मन्त्रेण गार्हपत्यमुपतिष्ठते। कुत एतत्। उपतिष्ठत इति श्रुतेः। अथ यत्प्रवत्स्यंश्च प्रोषिवांश्चाग्नीनुपतिष्ठत इति विशेषात्। शतपथे च। स गार्हपत्यमुपतिष्ठते नर्य प्रजां मे पाहीति।

३. अथर्येत्येवमादिना मन्त्रेणान्वाहार्यपचनमुपतिष्ठते। उत्तरेण स्थितः। तमिति यत्नादागत्याप्येवमेव। अर्थाद्दक्षिणेक्षमाणः[२]।

४. शंस्येत्येवमादिना मन्त्रेणाहवनीयमुपतिष्ठते। दक्षिणाग्निमुत्तरेण गत्वा। ननु चायमेव संचरः सर्वदा प्राप्तः। उच्यते। व्यवेतो ऽग्नीन्प्रवसतीत्यविशेषात्कदा चिदितरयोरप्युत्तरेण[३] यायात्। तन्निवृत्त्यर्थं वचनम्।

५. अन्नसेतावता मन्त्रेण त्रीणि पदान्यभ्युद्धृत्य। त्रिः पादविहरणं समन्त्रकं कृत्वेत्यर्थो वीप्सोपदेशात्।

६. प्रज्वलितानामुपस्थानम्। यावत्प्रज्वलितास्तावदागमनमित्येतदुभयमनेन सूत्रेणोक्तम्।

७. अग्निशब्देनाग्निहोत्रहोमो लक्ष्यते। उपस्थानशब्देन च याजमानम्। अतश्चैतदुक्तं भवति। अग्निहोत्रहोमीययाजमानस्थानर्थलुप्तं संभवदर्थं प्रवसन् जपेद्यजमान.। अत्र श्लोकः।

---

१ C om उपतिष्ठ, A C om आदि। २ Paddhati अथर्ये पितु म इत्यादिना अन्वाहार्यपचनम्। समन्वाहार्यपचनमुत्तरेण गत्वा शंस्य पश्चन्म इत्यादिना। ३ C (orig) अन्तरेण।

याजमानं जपेत्सर्वं न लभ्य स्व न संहिता[1]।
नेले न काम्यातो दैवः प्रोषितो यचनातुरः ॥

८. याजमानग्रहणं क्रत्वर्थाक्रत्वर्थयोरनुष्ठानार्थम्। तत्र क्रत्वर्थं प्रातिनिधिकः कुर्यात्पुरुषार्थं यजमानः। चशब्दो ऽनर्थलुप्तमित्यस्यानुकर्षणार्थः। अग्न्यन्वाधानपिण्डपितृयज्ञौ तु प्रातिनिधिकः कुर्यात्। नद्वत्वेन यजमानस्य पाठव्यवधानात्। पर्वणीति वचनात्। येष्वेव संवत्सरसन्धिषु नित्यानि यजमानेन प्रत्यक्षेणोपक्रान्तानि तेष्वेव प्रोषितो याजमानं कुर्यात्। तद्यथा। पचसन्ध्योर्दर्शपूर्णमासौ। क्रतुमुखेषु चातुर्मास्यानि। अयनाद्यन्तयोर्निरूढपशुबन्धः। तथा च मनुः।

अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा।
दर्शेन चार्धमासान्ते पौर्णमासेन चैव हि॥ (४. २५)
सस्यान्ते नवसस्येष्ट्या तथर्त्वन्ते द्विजो ऽध्वरैः।
पशुना ह्ययनान्ते च समान्ते सौमिकैर्मखैः॥ (४. २६)

यस्य यावज्जीविकः प्रयोगः तस्य याजमानं प्रोषितो ऽपि कुर्यात्। तथैव प्रक्रमात्। कथं कुर्यात्। जपेन संपादयेत्। तदुच्यते। इष्टिरसि पाप्मानम्। अग्ने वायो अनुपदस्यम्। मर्यादमिन्द्रम्। आ प्यायतां ध्रुवा। सदसि सन्न इत्यादौ। सं ज्योतिषाभूमेत्युच्यते। तथा भूर्भुवः स्वः सं मेति। तथैव अग्ने व्रतपते यो नो दूरे द्वेष्टीति च। श्लोकौ चात्र।

इष्टिरग्नौ ऽनुपदस्यं मय्याप्यायनमेव च।

---

१ C (in marg): कम्ब स्वाभो म'। चहितावि। इत्त एरि। काम्या एत मयि ष'। दैवअन्तरवि।

जपाः पञ्च क्रमेण प्राक् पूर्णपात्राभिमर्शनात् ॥
अग्निसंबद्धमुत्सृज्य जप्यमूर्ध्वमशेषतः ।
अग्ने व्रतपते जप्यं पाहि मां च विकल्पतः ॥

९. अनपेतमनपगतं कारणं हेतुर्याजमानस्य। तत्प्रयुक्तत्वात्कर्मणः। अतश्च प्रोषितो ऽपि ध्यानेन संपादयेत्। प्रक्रान्ते चेद्यजमान आगच्छेत्पूर्वं जपित्वा शेषं कुर्यादिति तैत्तिरीयाणाम्। नैमित्तिकमपि क्षामवत्यादि प्रातिनिधिकेन कारितं प्रोषितो यदि जानीयात्। ततस्तत्रापि याजमानं कुर्यात्।

१०. सन्धिवेलयोरग्निहोत्रवेलयोरित्यर्थः। द्विवचननिर्देशात्। वाशब्दो ऽग्न्युपस्थानस्यानर्थलुप्तं प्रवसन् जपेदित्यनेन सह विकल्पार्थः। एवमर्थमेवैतस्य सूत्रस्यारम्भः। पर्वणीति सिद्धे ऽपि सति। आचम्य वाग्यतो भूत्वा यावद्धोमकालः। पुनराचम्य ततो महाव्याहृतिभिर्विसर्गः।

११. अग्न्यागारस्य दर्शनगोचरे वाग्यमनं कुर्यात्। प्रोष्यायन्नुपस्थायाप्रसर्गं तेन चैवोत्सृज्यत (२.१५.७) इति वाग्यमः।

---

## १५.

१. अभयं वो ऽभयं नो अस्त्विति उत्तरतो वितानस्य स्थितः। तथैवेति प्राप्ते चकार उपस्थानस्य प्रकारान्तरमपि चास्तीति प्रज्ञापनार्थः। तथा च शतपथे। स वै खलु तूष्णीमेवोपतिष्ठेतेति।

२. उपतिष्ठते पश्चादाहवनीयस्य प्राङ्मुखः स्थितः। मृतनष्टेष्वपि पशुषु मन्त्रो भाविनीमाशिषमङ्गीकृत्य।

३. विद्यमानानां तृणानामपचयनं उपविश्य कर्तव्यम्। ततं उत्थाय समिदाधानम्। एतत्सर्वेष्वग्निषु कार्यम्। अथोपविश्य तृणान्युपलुम्पतीति वाजिश्रुतेः।

४. उपतिष्ठत इति वाक्यशेषः।

५. उपतिष्ठत इति शेषः। अभिद्युम्नादिपाठो ऽग्ने पुरीष्याधर्याग्ने गृहपते नर्येति मा विश्वायीति।

६. व्यवायं कुर्वन्प्रवसति। आहवनीयमपरेणोदङ्मुखस्तेन चैवोत्सृज्यत इति समानम्। अनुपशान्तेषु च प्रतिनिवृत्तस्य[१] त एवाग्नयो ऽग्नीनिति वचनात्। प्रवासार्थत्वादुद्धरणस्य। प्रवासे ऽनिवृत्ते ऽनपवृत्तकर्माणो न लौकिकाः।

७. तेनैव मार्गेण तेनैव च न्यायेन प्रतिदिशमप्युपस्थाय प्रोषित उत्सृज्यते। वाग्यमादिनियमान्मुच्यते।

---

## १६.

१. वास्तोष्पतीयं हविः कर्तव्यम्। प्रोष्य प्रवासे। कुतः। प्रवत्स्यन्नित्यधिकारात्। स एव ध्रुवः प्रवासो यच पुनर्गृहं नागन्तव्यम्। इतरस्त्वध्रुवः यत्र प्रोष्यायन्निति भवति। तेनैतदुक्तं भवति। यायावरप्रतिपत्तौ वास्तोष्पतियागो भवति। न केवलं गृहान्निष्क्रामतः किं तर्हि अन्येष्वपि संप्रयातेषु। संप्रवृत्तेषु प्रयाणकेष्वित्यर्थः। किमेकैकमप्यहरवस्थाय यानि[२] संप्रयातानि। नेत्युच्यते। दशरात्रादूर्ध्व-

---

१ A •न्तेषु निवृ•। २ B •स्थाय यानिसं• C •स्थायपाय•।

भवंरे अर्धे दशरात्रः[1] सर्वस्तोक इत्यर्थः। तथा च तैत्तिरीयकम्। यत्र दशरात्रमुषित्वा प्रजेत्तत्र वास्तोष्पतिं यजेदिति।

२. अग्नयो यत्र तिष्ठन्ति तदनो ऽग्निष्ठम् (आप. ६.२८.७)। तस्य दक्षिणे अनडुहि युक्ते। दक्षिणो युक्तो भवति सव्यस्य योक्त्रं पर्याहृतमिति चरकाणाम्। ननु एवं सति अनोयायिनामेवैतत्कर्म। नेत्युच्यते। प्रयाणप्रयुक्तत्वात्स्कन्धवाहिनामपि भवति। उपोह्य चीवरम्। आरोप्य वित्तमित्यर्थः। अग्निष्ठस्था[2] एवाग्नयः समाख्यानात्। वास्तोष्पते प्रति जानीह्यस्मानिति पुरोनुवाक्यामनूच्य वास्तोष्पते शग्मया संसदात इति यजति। प्राप्तस्य पुनर्वचनं परिसङ्ख्यार्थम्। परिसङ्ख्या च प्रकृतिं निवर्तयतीति। प्राकृतस्य कंप्रपद्यादेर्निवृत्तिः। प्रत्याग्रनाम्न्यन्वाधानयोरनिवृत्तिः।

३. कृते हविष्यनावर्जितं[3] त्यजेत्। यज्ञपात्रं[4] चीवरं चेति चशब्दः। तथा च शाखान्तरम्। यायावरप्रतिपत्तौ गृहपतिरित्यागममधिकृत्य।

न हीनमन्वावर्तयेद्रुद्राय हि तद्दीयते।
यद्धीनमन्वाहरेत्तद्रुद्रभूतमन्वाहरेयुरिति॥

---

१ A अर्धे दशरात्रैः स० B अर्धो C अर्धद० Paddhati : वास्तोष्पतीयं कर्म यायावरस्य प्रतिपत्तौ भवति। न केवलं गृहाग्निष्क्रामतो यजमानस्य किं तर्हि दशरात्रादूर्ध्वं प्रवृत्तेषु मानुषेषु सतो ऽप्यदीयं कर्म। २ B अग्निषु स्था A om एव। ३ B अञ्जवर्जि०C० अन्नाव० Paddhati : कृते च अनाहितं त्यजेत्। यज्ञपात्राणि गृह्याग्नेः नित्यहोमस्य वेषा चतुर्दश चतुर्गृहीतानि सकृदुन्नयते हविः एका समित्वाक्षो होमो अर्धमासाय कल्पते। एवं गार्हपत्ये च दक्षिणाग्नौ च जुहुयात्। ४ A अग्निपा०।

## १७.

१. समारोहयमाणो यजमानः। याजमानमेतत्। आत्मनेपदप्रयोगात्। गार्हपत्ये ऽग्नौ हस्तौ प्रतितप्य प्राणान् मुख्यलोकेन क्रमेण संमृशेत्। एहि मे प्राणानारोहेत्यनेन मन्त्रेण।

२. सकृत्संमर्शनं प्राणानां मन्त्रेण कृत्वा पुनः पाणी प्रतितप्य[1] तूष्णीं प्राणसंमर्शनम्। सकृदेवमेवापरम्। ततः पाणी प्रतितप्य पूर्ववन्मन्त्रेण प्राणसंमर्शनम्। पुनस्तूष्णीं पूर्ववद्भिः। न तु प्राणगता वीप्सा मन्त्रे बहुवचनात्।

३. अयं ते योनिर्ऋत्विय इत्यनेन मन्त्रेणारणी[2] प्रतितपति। पूर्वमधरारणिं तत उत्तरारणिम्। अरण्यनुप्रहरणे तथा दृष्टत्वात्। अस्मिन्पक्षे[3] ऽरण्योरेवारोपणमतो न प्राणान्संमृशेत्।

४. पूर्ववद्व्याख्या। तत्र संमर्शनमिह प्रतितपनम्। एतावान्विशेषः।

५. उद्धृत्याहवनीयं यथा गार्हपत्यात्प्राणेष्वरण्योर्वा। एवमाहवनीयादपि।

६. नित्यधृतादाहवनीयादन्यस्मिन्नरणिभाण्डे समारोपः। पृथगरण्योर्ग्नीन्समारोहयत इति यावन्तो धार्यन्ते विज्ञायन्ते सहारणीभिस्तावतीभिर्हि संकर्षे।[4] संकर्षो हि नाम मीमांसा[5]द्वादशाध्या-

---

ग१ C (in marg) पुन। २ A मन्त्रेण वारणी। ३ C अन्यस्मिन्। ४ A यावतीभि॰ सहस्रोभिर्हि संकर्षो नाम। ५ C om हि नाम, et h adds नाम।

यादूर्ध्वमस्ति। आहवनीयवचनाद्दक्षिणाग्निर्नित्यधृतो ऽपि समारोप्यते। तयोरेवारण्योः। अथ यदरण्योरग्नीन्समारोहयत इति (कौ॰ब्र.२.६) श्रुतेः।

७. अनस्तमिते आदित्ये यथाग्नि मन्थनं भवति। चशब्दादनुदिते च। एकयोनिसमारूढानां सकृन्मन्थनं कृत्वाहवनीयदक्षिणाग्न्योरुद्धरणम्। आरण्यके दर्शनात्। मथित्वाग्नीन्विहृत्येति। तथैव चानयनं नित्यधृतो नित्यधृतत्वात्।

८. उपावरोहेत्येवमादिना मन्त्रेणात्मनः सकाशादरण्योरुपावरोह्य। कथम्। नासिकया प्राणमरण्योर्मन्त्रान्तेन निक्षिप्य ततो मन्थनं कुर्यात्। दुरोण इति लिङ्गाद्गृह एव स्थितस्य यः समारोपस्तत्रैवैतद्भवतीति[1] नाशङ्का कर्तव्या। भार्या यजाग्नयो ऽपि वेति गृह्यवचनात्तदपि गृहमेव। प्रवत्स्यन्निति चात्रानुवर्तते। तेन साग्निकः प्रवत्स्यन्समारोहयमाणो ऽन्यत्रापि च[2] यत्र समारोपस्त्वोद्यते तत्रैवं कुर्यात्। मन्थनाधिकारे मन्थनग्रहणं लौकिके मन्थनप्रतिषेधार्थम्। कथं विद्यमाने ऽग्नौ[3] मन्थनं प्राप्नोतीति चेत्। उच्यते। लौकिके चेति लौकिके काष्ठे न संस्कृतयोररण्योरुपावरोहणमित्येव[4] कस्य चिदाशङ्का स्यात्।

९. पक्षान्तरमेतत्। लौकिके वाग्नावुपावरोह्य तत उद्धरणं कृत्वा ततो होमः। ततः परिसमाप्ते होमे लौकिक एव[5] प्राणेश्वर-

---

१ C om चव। २ B क्ष। ३ A ins लौकिके। ४ C om उपावरोहणम् and has in marg उपावरोहणयोर् instead। ५ B ins अग्नि।

ष्वोर्वा समारोपयितव्यः। द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति।

## इति शाङ्खायनश्रौतसूत्रभाष्ये द्वितीयो ऽध्यायः समाप्तः।

---

शाङ्खायनकसूत्रस्य श्रमं शिष्यहितेच्छया।
वरदत्तसुतो भाष्यमानर्तीयो ऽकरोच्छ्रवम्[1] ॥

---

[1] om in D.

# अथ तृतीयो ऽध्यायः ।

१.

१. संस्थितायां समाप्तायां पौर्णमास्यां पौर्णमासे कर्मणि । कुतः । कालस्यासंस्थानात् । इन्द्राय विमृद्गुणाय । इष्टिग्रहणं वाक्यसाकल्यर्थं गुणस्येष्टिशब्दव्यवधानात् । केवलाय चेन्द्राय केचित् । अनुनिर्वाप्यया वै देवा इत्यारभ्य एवमेव विधानात् । ननु अन्वारम्भणीयाप्रकरण एवैतद्विधानं संबद्धतरम् । सत्यम् । नित्यत्वात् । वैलक्षण्यादिह विधानम् ।

२. वृधन्वन्तावाज्यभागौ ।

३. इन्द्र क्षत्रमभि वाममोजः प्रधानस्य पुरोनुवाक्या । मृगो न भीमः कुचरो गिरिष्ठा याज्या ।

४. जुष्टो दमूना अतिथिर्दुरोणे पुरोनुवाक्या। अग्ने शर्ध महते सौभगाय याज्या स्विष्टकृतः ।

५. अमावास्ये कर्मणि परिसमाप्ते अनन्तरमदितय इष्टिं कुर्यात् ।

६. पौर्णमासावाज्यभागावित्यर्थः ।

७. ये वैमृधस्य स्विष्टकृतो याज्यानुवाक्ये जुष्टो दमूना अग्ने शर्धेति ते अत्रापि भवतः । ये ते इति वचनादिदं वैमृधस्य क्रिया [1]ततो ऽस्यापीत्यनेन विकल्पमुभयोः प्रदर्शयति । स चादितिविकल्पः शाखान्तरात् ।

१ B क्रियते ।

८. एते इष्टी प्रक्रम्य यावज्जीवं कर्तव्ये। दर्शपूर्णमासयोरपि यावज्जीवमेव क्रिया संस्थितायामिति वचनसामर्थ्यात्। यत्रब्दाच्छाखान्तरोक्तश्च त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत पञ्चदश दाक्षायणयाजीति कालः सिद्धो भवति।

९. अतीतायां फलेच्छायामवाप्ते वा फले प्रयोग आ अन्तात्परिसमापयितव्यः।

---

## २.

१. अनागते अनुपस्थिते पर्वणि पचसन्धौ यथोक्तम्। श्वो न द्रष्टेति यदहश्च न दृश्येतेत्यस्मिन्नाम्न्या। आमावास्ये कर्मणि प्रक्रान्ते अभ्युदिता नाम इष्टिः कर्तव्या। तस्मिन्नेवाग्न्यन्वाधान इष्टिमात्रं[१] न प्रायश्चित्तान्तरमिष्टिवचनात्। संज्ञाकरणं सहकारिसंप्रत्ययार्थम्।

२. सगुणानि त्रीणि हवींषि यथोक्तानि श्रुतौ। इतिकरणो नियमार्थः। समस्ता एव यष्टव्याः। अतश्च यद्येकस्मा अपि यागे निवृत्ते ऽभ्युदयविज्ञानं स्यात् न देवतापनयः। सामर्थ्याभावात्।

३. निरुप्ते कृते हविर्ग्रहणे जानन्नभ्युदितं चन्द्रमसं तानेव ये गृहीतास्तांस्तण्डुलीभूतान्विभजेत्। आध्वर्यवमपि यदेतदुच्यते[२]। आवाहने ऽपि कृते ऽदेवतापनयज्ञापनार्थम्। तानेवेत्यतिरेकाद्दर्शनाम्न्ययाजिनो ऽपि विभागः।

४. अग्ने दा दाशुषे रयिं पुरोनुवाक्या। दा नो अग्ने इहतो दाः सहस्त्रिणो याज्याग्नेर्दातुः।

---

१ B om न। २ C यदेव instead of यदेतद्।

५. महत्ता ते शता वयं पुरोनुवाक्या। आ तू भर माकिरेतत्परि ष्ठात् याज्या इन्द्रस्य प्रदातुः। किमित्ते विष्णो परिचक्ष्यं भूत्पुरोनुवाक्या। वषट् ते विष्णविति याज्या। विष्णोः शिपिविष्टस्य।

६. वृधन्वन्तावाज्यभागावित्यर्थः। कर्मान्तरमेतत्। नामावास्यमतश्च सप्तदश सामिधेन्यः।

७. धेनुर्दक्षिणा। किंविशिष्टम्। चौयु। श्मिमध्याका इयवो यस्य तदेवमुच्यते। चशब्दादन्वाहार्यश्च।

८. यथाविहिते काले चामावास्यं भवति। यद्येवं नोच्येत दोषनिर्घातार्थत्वात् प्रायश्चित्तानां न स्यादामावास्यम्। चशब्दात्कृते ऽप्यामावास्ये पुनःक्रिया। कालो हि नित्यानां करणे निमित्तम्। श्लोकमप्युदाहरन्ति।

एवं हि कर्माणि कृतान्यकाले कार्याणि नित्यानि पुनः स्वकाले।
कालो हि तेषां करणे निमित्तं यतः श्रुतौ यज्ञपथादपायः।

तथा च शाखान्तरम्। अनस्तमिते चेदग्निहोत्रं जुहुयाद्भुव इत्युपस्थाय पुनरस्तमिते जुहुयात्। अव्युष्टायां चेत्पुनर्व्युष्टायामिति। यानि तु विशेषवचनानि तत्र वचनसामर्थ्यात्। किमन्यत्। उच्यते। तद्यथा। उदवसानीयान्ते ऽग्निहोत्रहोमः। मुमूर्षोश्च प्रातराहुतिरामावास्यं च। तथा च।

चतुर्दश गृहीतानि सकृदुन्नयते हविः।

एका समित्सकृद्धोमो ऽर्धमासाय कल्पते। वचनान्तराण्येतानि। अतश्च यथाश्रुतस्य कालस्य स्वविषयेष्वपवादत्वेन[१] वर्तन्ते। कस्मा

१ B स्वविषये ऽप्यप॰।

चिदध्वर्युशाखायां अभ्युदिते पिष्टविभागः। कस्यां चित्पक्षे पुरोडाशो दधिपयोभ्यां मिश्रयित्वा। क्वचिद्विभागासंभवात् प्रायश्चित्तं समाप्य पुनःक्रिया। प्राक् चेत्कालादामावास्यं पौर्णमासं वा प्रवर्तिताग्ने नय आ देवानामिति संयाज्ये कुर्यादिति तैत्तिरीयाणाम्। असंनयतश्च विभाग इत्येवमादि शाखान्तरीयमभिमेत्य काले[1] चामावास्यमिति। चशब्द आचार्येणोक्तः।

८. अभ्यावृत्तिः अभ्यावर्तनं पुनःक्रियेत्यर्थः। सा पिण्डपितृयज्ञस्य नास्ति। कुत एतत्। परिगणितानामेव पदार्थानां शाखान्तरेऽनुवादात्। यत आह। स यद्यगृहीतं हविरभ्युदियात् प्रज्ञातमेव तदेयैव व्रतचर्या यत्पूर्वेद्युर्दुग्धं दधि हविरातञ्चनं तत्कुर्वन्ति। प्रतिप्रसुवन्ति वत्सांस्तान् पुनरपाकुर्वन्ति तानपराह्णे पर्णशाखयापाकरोतीति शतपथे ११.१.४.१)।

---

३.

१. श्वो न द्रष्टेति यदहय न दृश्येत ते अमावास्ये इत्येतस्मिन्नतीते पर्वणि यद्यामावास्यं प्रक्रान्तं भ्रान्त्या ततोऽभ्युदृष्टा नामेष्टिर्भवति।

२. अग्नये पथिकृते प्रथमं हविः द्वितीयमिन्द्राय वृत्रघ्ने तृतीयमग्नये वैश्वानराय। एवमेव श्रुतत्वात्।

---

[1] B काले।

३. वेत्था हि वेधो अध्वनः अग्नेः पथिकृतः पुरोनुवाक्या। आ देवानामपि पन्थामगन्मेति याज्या।

४. वार्चहत्याय शवसे इन्द्रस्य वृत्रघ्नः पुरोनुवाक्या। महदातं पुरुहूत चियन्तमिति याज्या।

५. वैश्वानरस्य पुरोनुवाक्या।

६. नाभिं यज्ञानां सदनं रयीणामिति याज्या।

७. अग्निः प्रत्नेन सोम गीर्भिरिति।

८. दण्डश्च उपानहौ च दक्षिणा। पूर्वं एवाग्निग्रहणे[1] ऽभ्युद्दृष्टा प्रायश्चित्तत्वात्। सर्वाणि चास्यामङ्गानीष्टिवचनात्।

९. अभ्युद्दृष्टायां समाप्तायां तस्मिन्नेवाहन्यामावास्यं भवति। सायंदोहो ह्यस्तनो विद्यत एव। चशब्दात्। पूर्वमपि कदा चिदामावास्यम्। तथा च शतपथे। स आमावास्येन विधिनैवेष्ट्वाथेष्टिमनु-निर्वपति तदहर्वैव श्वो वेति॥

१०. अतश्च कुण्डपायिनामयने सत्क्रिया। अमावास्यायां च श्राद्धे [2]अन्वार्थयोरप्यग्नौकरणपिण्डदानयोरनभ्यावृत्तिः एतस्मादेव यत्नात्। एकस्मिन्नहनि न श्राद्धद्वयं समानधर्मकं भवति। पिण्ड-दानावृत्तिप्रतिषेधादिति वृद्धसंप्रदायः।

---

४.

१. अग्नये किंविशिष्टाय। अग्निमते। एतदुक्तं भवति। अग्नि-रग्निमानश्च देवता। तस्मै इष्टिं कुर्यात्। यदि पूर्वादृष्टते ऽग्नौ

---

१ B एवमेवाग्नि॰ A ॰ग्निपंद॰। २ A B न्वाय्यपोर॰।

यत्यन्यो ऽग्निरभ्युद्‌ध्रियते। ननु कार्यं नियमो भूमावेवाग्निरुद्धर्तव्य इति। उच्यते। अग्निं पृथिव्यामिति लिङ्गात्। ननु विध्यपराधे प्रायश्चित्तमिति तस्मिन्नेव प्रकरणे एता इष्टयः कस्मान्नोच्यन्ते। धर्मभेदादिति ब्रूमः। तत्र हि कर्तृद्रव्यकालाभावे तस्यैतस्यै देवतायै पूर्णाहुतिं जुहुयात्। याज्यापुरोनुवाक्ये वा अनुद्रुत्य जुहुयात्। याज्यां वा केवलामनुद्रुत्येति पक्षत्रयं तस्मिन्प्रकरणे विहितानाम्। इह तु पक्षे यथोक्ता इष्टयः। पक्षे सर्वप्रायश्चित्तमिति। कुतः। व्यवस्थैषा श्रुतेः।

२. अग्नये पथिकृते ऽष्टाकपालं पुरोडाशं निर्वपेदिति शतपथे। यदि विहितानग्नीनन्तरेण प्रकटं यायाद्विनियतकालानां वा दर्शपूर्णमासादीनामतिपत्तिः स्यात्।

३. मिथः परस्परतः संसृष्टेष्वग्निषु। अनपहृत्तकर्मसु। द्वयोरपि संसृष्टयोर्बहुवचनस्याविवक्षितत्वात्। अग्नये वीतये इष्टिः कर्तव्या।

४. इष्टिरे वाग्नये विविचये। ग्राम्येण सह संसर्गे। लौकिकेनेत्यर्थः।

५. अरण्ये प्रकर्षेण प्रदहन् ग्राममभ्यागतः प्रदाव्य इत्युच्यते। तेन सह संसर्गे अग्नये संवर्गाय इष्टिः कार्या।

६. अग्नये शुचय इष्टिं कुर्यात्। क्रव्येण शवाग्निना संसर्गे।

७. अग्नये ऽप्सुमत इष्टिं कुर्यात्। यदि वैद्युतेनाग्नयः संसृज्येरन्।

८. व्याधिमात्रुर्यं स्वजनविषयम्। तस्मिन् सति रुद्राय इष्टिं

कुर्यात्। अग्नय इति नानुवर्तते। अग्नये कामायेति ज्ञापकात्।

९. महत्यध्वन्यध्वप्रसिद्धिर्लोके[1]। तदुपक्रमे पूर्वे पथिकृत इष्टिं कुर्यात्।

१०. सर्वकामप्रयोजना सार्वकामिकी इष्टिः। अग्नये कामाय कर्तव्या। प्रतिकामं प्रयोगो न्यायात्।

११. अग्नये व्रतपतय इष्टिः कर्तव्या। कस्मिन्निमित्ते। व्रत-वेलायां[2] व्रत्यमहः सकलं प्रवासेन व्याप्य[3]। अव्रत्यं वा मैथुनमांस-भोजनादि चरित्वा।

१२. अग्नये व्रतभृत इष्टिं कुर्यात्। व्रतवेलामिति संबध्यते। आर्त्यश्रुकरणं विशिष्टं तन्त्रान्तरे।

१३. अग्नये क्षामवत इष्टिं कुर्यात्। गृहदाहे निमित्ते।

१४. मरुद्भ्य इष्टिं कुर्यात्। यमौ प्रजातायाम्। शूद्रायामपि तुल्यत्वात् भवति। गृह्योक्तं कर्म। यमौ प्रजातायामिति लिङ्ग-सङ्ख्ययोरविवक्षा।[4]

---

## ५.

१. अग्निमग्निं हवीमभिरग्नेरग्निमतः पुरोनुवाक्या। अग्निनाग्नि समिध्यते याज्या। अग्नेः पथिकृतो वेत्था हि वेध आ देवानाम्।

२. अग्न आ याहि वीतये अग्नेर्वीते. पुरोनुवाक्या। यो अग्निं देववीतये याज्या।

---

१ A ०ध्वप्रपन्निर्लोके B ०ध्वन्यप्रसिद्धिर्लोके। २ B om ३ C (in marg) प्रोष्य। ४ The Comm on Sūtra 14 is om in A.

३. कया नो अग्ने वि वसः सुवृक्तिं अग्नेर्विविचेः पुरोनुवाक्या। त्वामग्ने मानुषीरीळते विशः याज्या।

४. कुवित्सु नो गविष्टये अग्नेः संवर्गस्य पुरोनुवाक्या। मा नो अस्मिन्महाधने परा वर्ग्भारभृदिति याज्या। अग्निः शुचिव्रततमः उदग्नेः शुचयः इत्यग्नेः शुचेः।

५. अप्स्वग्ने सधिष्टव अग्नेरप्सुमतः पुरोनुवाक्या। उरौ महाँ अनिबाधे ववर्ध याज्या।

६. कद्रुद्राय प्रचेतसे रुद्रस्य पुरोनुवाक्या। अश्याम ते सुमतिं देवयज्यया याज्या।

७. वयमु त्वा पथस्पते पूष्णः पथिकृतः पुरोनुवाक्या। पथस्पथः परिपतिं वचस्या याज्या।

८. अग्निः परेषु धामस्वित्येवमादिका राजत्यन्ताग्नेः कामस्य पुरोनुवाक्या। अश्याम तं काममग्ने तवोती याज्या। त्वमग्ने व्रतपा असि वयमग्नेर्व्रतपतेः।

९. अग्नेर्व्रतभृतः पुरोनुवाक्या।

१० याज्या।

११. कृष्णा रजांसि पत्सुतः अग्नेः क्षामवतः पुरोनुवाक्या। त्वे वसूनि पुर्वणीक होतः याज्या।

१२. मरुतां पुरोनुवाक्या।

१३. वातत्विषो मरुतस्त्वेषनिर्णिजः मरुतां याज्या। श्रिये कं वो अधि तनूषु वाशीरिति वा। अत्र व्यवस्थितविकल्पं दृष्टयाज्ञिका व्याचक्षते। इयोः मरुपयोर्जनने वातत्विषः। अमरुपयोर्मङ्-

जनने वा[1] श्रिये कं वः। उक्तानां चतुर्दशानामिष्टीनां सप्तदश सामिधेन्यः पौर्णमासावाज्यभागौ नित्यः स्विष्टकृत्।

---

## ६.

१. ज्ञातयः सपिण्डाः सनाभयो ऽपि वा। असंविदानाः कार्येषु भिन्नमतयः संमतिं कृत्वा। बहुदेवतासंज्ञकामिष्टिमेकां निर्वपेरन्। यजेरन्नित्यर्थः। संभूयाग्नीनाहिताग्नयः। अनाहिताग्नयस्त्वितरानुपासते। द्वयोश्चापीष्टिरुपपातात्। आश्वलायनके उच्यते। संज्ञान्यामग्निर्वसुमान्सोमो रुद्रवानिन्द्रो मरुत्वान्वरुण आदित्यवानिति। तथैवास्माकमपि। मन्त्रलिङ्गात्। अग्निहोत्रायणिनः पूर्णाहुतिरर्थलोपे प्रतिनिधिरिति वचनात्। यदि ज्ञातीनां केचिद्दर्शपूर्णमासयाजिनः केचिदग्निहोत्रायणिनस्ततः सर्वेषां पूर्णाहुतिरविरोधात्[2]

२. पुरोनुवाक्या।

३. याज्या। एकं प्रदानमेकत्वाद्याज्यानुवाक्यायुगलस्य। आवहस्वाहाश्रयाटत्रोपणशब्दाः[3] सकृत्प्रदानवत्। प्रदानं च। मुख्यया वृत्त्या यज्ञशब्दः। यज्ञाभिप्रायेण चावहस्वाहादयः। कुत एतत्। शतपथश्रुतेः। तमुत्तमे प्रयाजे स्वाहाकारेणैव सर्वं यज्ञं समस्थापयन्निति। एकप्रदानानामेकेनैव कृतार्थत्वात्सकृदावाहनशब्दः। ननु च किं कारणमग्निं वसुमन्तं सोमं रुद्रवन्तमिन्द्रं मरुत्वन्तं वरुणमादित्यवन्तमावहेत्येवं भवति न[4] भिन्नविभक्तिका देवता उच्चार्यन्ते। उच्यते। होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाणमिति दर्श-

---

१ A om. वा। २ A॰ मेषात्। ३ C शब्दात्। ४ B C (orig) om. न।

नात्। सूत्रकारेण च होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाण-मिति प्रैष इत्येतस्यैवार्थस्य द्योतनार्थं गुरुनिर्देशः कृतः।

४. संज्ञानमुशना वददित्येतत्सूक्तं जपेरन्। ज्ञातय एव नर्लिं-जशब्दात्। सूक्तं जपेरन्। लिङ्गेन परिभाषायां बाधितत्वात्। प्राक् स्विष्टकृतो जपेरन् प्रधानसंनिधानात्।

---

७.

१. विधिं वक्ष्याम इति वाक्यशेषः। मित्रकामस्य भवत्यन्वर्थ-संज्ञाकरणात्।

२. शाखान्तरश्रुतेः।

३. अग्निना रयिमश्नवत् आग्नेयः। गयस्फानो अमीवहेति सौम्यः।

४. पुरोनुवाक्या।

५. याज्या।

६. नू नो रास्व सहस्रवत्स्विष्टकृतः पुरोनुवाक्या। उत नो ब्रह्मन्नविषः याज्या।

७. गवां न्यायसिद्धे।

८. एकप्रदानत्वादङ्गदेवतावन्निगमाः। पुरोनुवाक्यायां यः क्रमो देवतापदानां तेन क्रमेणावाहनादिषु देवताप्रकाशनम्। तद्यथा अग्निं सोमं वरुणं मित्रमिन्द्रं बृहस्पतिं सवितारं पूषणं सरस्वतीं त्वष्टारमावहेति। यः सहस्री गोभिरवशा रूपाणि समनक्तु यज्ञै-रिति [1]निगमेषु देवताग्रहणात्।

---

[1] A B ins म।

९. येयजामहानन्तरं य आदेशस्तत्र देवतानुपूर्व्यं याज्यावत्कुर्यात्। तद्यथा। ये यजामहे त्वष्टारं सरस्वतीं पूषणं सवितारं बृहस्पतिमिन्द्रं मित्रं वरुणं सोमं अग्निम्।

१०. देवतादेशन एवायं विकल्पः श्रुत्यन्तरात्।

---

## ८.

१. फाल्गुने मासे भवा फाल्गुनी पौर्णमासी। ननु फाल्गुनीयेति प्राप्नोति वृद्धाच्छ (पा० ४.२.११४) इति। नैष दोषः। संज्ञापूर्वको विधिरनित्य इति। प्रयोगः प्रारम्भः। न सकृत्करणम्। अदीचितायनानां सर्वेषां[१] पक्षाणेव।

२. फाल्गुनमास एव या अमावास्या। न तु वर्षासु[२] फाल्गुनीभिर्युक्ता। कुतः। मुखं वा एतत्संवत्सरस्येति (कौ० ब्र० ५.१) प्रकरणात्।

३. इयन्तं कालं दाचायणसंज्ञकस्यानुष्ठानम्।

४. सर्वेषामदीचितायनानां संवत्सरंसंवत्सरं वा क्रिया। यावज्जीवं वा। दर्शपूर्णमासायनत्वात्। काम्यत्वे संवत्सरमेव[३]।

५. अदीचितायनानि काम्यान्यपि प्रयुञ्जानस्य दर्शपूर्णमासौ न वर्तेते। न क्रियेते इत्यर्थः। नित्ययोः प्रतिषेधः। कौण्डपायनीयौ तु भवत एव।

६. विधिं वच्याम इति वाक्यशेषः।

---

१ B ins म। २ B ins पा after वर्षासु। ३ A काम्यात्व B काम्यत्वे C काम्यात्व।

७. पौर्णमास्यां भवानि पौर्णमासानि हवींषि। आग्नेयः पुरोलाशः अग्नीषोमीय उपांशुयाजः अग्नीषोमीयः पुरोलाशः। एतानि पूर्वस्यां पौर्णमास्यां भवन्ति।

८. पुरोलाशः। केवल एव वाग्नीषोमीयः पूर्वेद्युर्भवति।

९. उत्तरस्यां पौर्णमास्यां आग्नेयः पुरोलाशः। ऐन्द्रं च सांनाय्यं भवति। ऐन्द्रं चेत्येवं नपुंसकनिर्देशात्। सांनाय्ये सिद्धे सांनाय्यवचनममावास्याविकारार्थम्। पौर्णमास्यामित्यतिरेकः[1] पिण्डपितृयज्ञनिवृत्त्यर्थः।

१०. अपरपक्षं कृष्णपक्षं सकलं[2] दीक्षितव्रतो भवति। तानि च दीक्षितव्रतान्याध्वर्यवादेव गमयितव्यानि। यथा वपाश्रपण्यौ शूलगवे। अग्निहोत्रहोमो न प्रतिषिध्यते। पुरुषसंस्कारप्रकरणात्[3]। तथा चातिथिभ्यो दद्यातीत्युक्तम्।

११. पूर्वं वेति विकल्पः। अपराधे व्रातपती व्रतग्रहणात्[4]।

१२. अभ्यञ्जनं शरीराभ्यङ्गः। तत्साहचर्यादाविकस्याप्युपभोगप्रतिषेधः। अतश्चाविके ऊर्णामये शयनप्रतिषेधो ऽपि। हतमन्येन परिहितं तच्च वस्त्रे न परिधत्त इत्यर्थः। पल्पूलितं रजकधौतम्। आच्छादनार्थो ऽपि वसिरनेकार्थत्वाद्धातूनामुपभोगार्थो द्रष्टव्यः।

१३. हविरुच्छिष्टमग्निहोत्रहोमावशिष्टमश्नीयात् केवलम्। दीक्षितव्रतपक्षे ऽपि। वक्ष्यतेश्चावपि वचनात्। इत्साभक्षवत्।

---

१ C इति रेका in marg शब्द। २ C सकलं। ३ C in marg वचनात्। ४ A ॰ग्रहणयोगात्।

१४. तथाऽग्नीयाद्यया सुब्रह्मता न भवति ।

१५. सोमं राजानमित्येवमादिकं मन्त्रं मनसानुद्रुत्य तमेवार्थं ध्यायन्नश्नाति नावघ्रेयति ।

१६. पूर्वस्याममावास्यायामामावास्यानि हवींषि भवन्ति शाखान्तरात् ।

१७. स्वश्रुतेः । अमावास्याविकार उभयत्र ।

१८. आग्नेयो मैत्रावरुणी च पयस्या । चशब्दादाग्नेयेन समानतन्त्रा श्रुता । श्रुतावियमेवैकेति संदेहः स्यात् । अमावास्यावचनमत्र पिण्डपितृयज्ञार्थम् । अमावास्याविकारार्थे पयस्यावचनम् ।

१९. घृतेन यावृतावृधौ पयस्यायाः पुरोनुवाक्या । उत वां विशु मद्यास्वन्धः याज्या ।

२०. तच्छंयोरिति शंयोर्वाकः छतसंज्ञकः । तस्मात्पुरा ऊर्ध्वं वा अनन्तरमनावाह्य अनावाहितान्वाजिनो यजति । इज्यमाना देवता निगच्छन्तीत्यङ्गभावेनापीज्यमानानां[1] निगमने प्राप्ते तदपवाद उच्यते । तथा चौक्षमनुक्रामन्तस्य विकारान्व्याख्यास्याम इति ।

२१. यागक्रमः शाखान्तरेष्वन्यथापि भवति[2] । निगमस्थानमे पदे प्रयाजसूक्तवाकयोः । परिसंख्यार्थमेतत्सूत्रम् । अतश्चान्यत्र प्रतिषेधः । आज्यपा जुषाणा इत्यस्यानुयाजार्थत्वादनन्तरं वाजिपदं सूक्तवाके च स्विष्टकृत्पदानन्तरम् । स्वशाखायामस्मिन्नेव क्रमे

[1] C (in marg) इज्यभावेन instead of अङ्गभावेन । [2] B चान्यथा ।

वाजियागात्। तत एवं प्रयोगः। स्वाहा देवा आज्यपा जुषाणा स्वाहा वाजिनो अग्न आज्यस्येति। वाजिनो अग्न इति सन्धिः। समिद्धो अग्न इति दृष्टत्वात्। यथार्थं च सूक्तवाक इति। यदि प्राक् सूक्तवाकाद्वाजिनः प्रचारस्ततः प्रकृतिवन्नियमः। सूक्तवाके जुषिपदं कारितान्तं न भवति। देवा इति तु भवति श्रुत्यन्तरसामर्थ्यात्। ऊर्ध्वं तु सूक्तवाकाद्वाजिनप्रचरणम्।

२२. श्रुत्यन्तराद्यथापठितमेव प्रयोक्तव्यम्।

२३. शं नो भवन्तु वाजिनो हवेषु वाजिनस्य पुरोनुवाक्या। वाजेवाजे ऽवत वाजिनो न इति याज्या। ऊर्ध्वजानुरूर्ध्वज्ञुः। अनासनोपविष्ट इत्यर्थः। अनवानमनुच्छ्रस्यार्धर्चे यजति। ऊर्ध्वज्ञुरनवानमिति याज्यायामेव यजतिशब्दातिरेकात्। णमुल्निर्देशाच्चानवानाशक्तौ पुनःपुनरावृत्तिः। यावच्छक्तितमनवानम्। तथा च षष्ठे ऽहनि श्रुतिः[1]। यद्यथवान्यात्पुनःपुनः प्रतीसारमुपशिक्षेतैव। (कौ॰ब्रा॰ २३.५)।

२४. आसन उपविश्य वाजिनस्याग्ने वीहीत्यनुवषट्कारं कुर्यात्। अनुवषट्कारसंज्ञा येयजामहप्रतिषेधार्थम्। वषट्कारमनु क्रियत इत्यनुवषट्कारः। अतो न संप्रेषमपेक्षते।

२५. यजमानाद्यो वाजिनशेषमन्योऽन्यमुपहूय भक्षयेयुः।

२६. उभयत्र यजमानो भक्षयति। ऋत्विजां प्रथमः पश्चिमश्च।

---

1 C सर्वं वयो इदति श्रुतिः instead of तथा च षष्ठे ऽहनि श्रुतिः।

१४. *तथाश्नीयाद्यथा सुहृप्तता न भवति ।*

१५. सोमं राजानमित्येवमादिकं मन्त्रं मनसानुद्रुत्य तमेवार्थं ध्यायन्नश्नाति नावशेषयति ।

१६. पूर्वस्याममावास्यायामामावास्यानि हवींषि भवन्ति शाखान्तरात् ।

१७. स्वश्रुतेः । अमावास्याविकार उभयत्र ।

१८. आग्नेयो मैत्रावरुणी च पयस्या । चशब्दादाग्नेयेन समानतन्त्रा श्रुता । श्रुतावियमेवैकेति संदेहः स्यात् । अमावास्यावचनमत्र पिण्डपितृयज्ञार्थम् । अमावास्याविकारार्थं पयस्यावचनम् ।

१९. घृतेन द्यावापृथिवी पयस्यायाः पुरोनुवाक्या । उत वां विशु मद्यास्वन्धः याज्या ।

२०. *तच्छंयोरिति शंयोर्वाकः कृतसंज्ञकः । तस्मात्पुरा* ऊर्ध्वं वा अनन्तरमनावाह्य अनावाहितान्वाजिनो यजति । इज्यमाना देवता निगच्छन्तीत्यङ्गभावेनापीज्यमानानां[1] निगमने प्राप्ते तदपवाद उच्यते । तथा चोक्तमनुक्रामन्तास्य विकारान्व्याख्यास्याम इति ।

२१. यागक्रमः शाखान्तरेष्वन्यथापि भवति[2] । निगमस्थाने पदे प्रयाजसूक्तवाकयोः । परिसंख्यार्थमेतत्सूत्रम् । अतश्चान्यत्र प्रतिषेधः । आज्यपा जुषाणा इत्यस्यानुयाजार्थत्वादनन्तरं वाजिपदं सूक्तवाके च स्विष्टकृत्पदानन्तरम् । स्वशाखायामग्निमेव क्रमे

१ C (in marg) इज्याभावेन instead of अङ्गभावेन । २ B अनन्यथा ।

वाजियागात्। तत्र एवं प्रयोगः। स्वाहा देवा आज्यपा जुषाणा स्वाहा वाजिनो अग्न आज्यस्येति। वाजिनो अग्न इति सन्धिः। असिद्धो अग्न इति दृष्टत्वात्। यथार्थं च सूक्तवाक इति। यदि प्राक् सूक्तवाकाद्वाजिनः प्रचारस्ततः प्रकृतिवन्नियमः। सूक्तवाके जुषिपदं कारितान्तं न भवति। देवा इति तु भवति श्रुत्यन्तर-सामर्थ्यात्। ऊर्ध्वं तु सूक्तवाकाद्वाजिनप्रचरणम्।

२२. श्रुत्यन्तराद्यथापठितमेव प्रयोक्तव्यम्।

२३. शं नो भवन्तु वाजिनो हवेषु वाजिनस्य पुरोनुवाक्या। वाजेवाजे ऽवत वाजिनो न इति याज्या। ऊर्ध्वजानुरूर्ध्वज्ञुः। अनासनोपविष्ट इत्यर्थः। अनवानमनुच्छ्वस्यार्धर्चे यजति। ऊर्ध्वज्ञुर-नवानमिति याज्यायामेव यजतिशब्दातिरेकात्। एमुलनिर्देशा-दानवानाशक्तौ पुन पुनरावृत्तिः। यावच्छकितमनवानम्। तथा च षष्ठे ऽहनि श्रुतिः[१]। यद्ययवान्यात्पुनःपुनः प्रतीमारसुपशि-क्षेतेव। (कौ० ब्र० २३.५)।

२४. आसन उपविश्य वाजिनस्याग्ने वीहीत्यनुवषट्कारं कुर्यात्। अनुवषट्कारसंज्ञा येयजामहप्रतिषेधार्थम्। वषट्कारमनु क्रियत इत्य-नुवषट्कारः। अतो न संप्रेषमपेक्षते।

२५. यजमानाद्यो वाजिनशेषमन्योऽन्यमुपहूय भक्षयेयुः।

२६. उभयच यजमानो भक्षयति। ऋत्विजां प्रथमः पश्चि-मश्च।

---

१ C एवं वषट् इदानि कति instead of तथा च षष्ठे ऽहनि श्रुति।

२७. यन्मे रेतः प्र धावतीत्यादिर्वाजो मयि धेहीत्यन्तो वाजिनभक्षमन्त्रः।

---

९.

१. विधिं वक्ष्याम इति वाक्यशेषः।

२. आग्नेयः पुरोलाशः सरस्वत्यै चरुः। चशब्दाद्विहविरेकतन्त्वा शाखान्तरश्रुतेः। पौर्णमासीविकारो न्यायात्।

३. अग्नीषोमीयः पुरोलाशः सह उपांशुयाजेन। अग्नीषोमीय एवोपांशुयाजः साहचर्यात्। सांनाय्यं चैन्द्रं नपुंसकनिर्देशात् सांनाय्ये सिद्धे अमावास्याविकारार्थं सांनाय्यवचनम्।

४. अपरपक्षं दीक्षितव्रत इत्यादीनि व्रतानि। चेति सिद्धे दाक्षायणयाज्ञिकानीति वचनात् ज्ञायते अदीक्षितायनेषु पूर्वस्य प्रकृतित्वं नास्ति।

५. द्विहविरेवेष्टिः शाखान्तरात्।

६. ऐन्द्राग्नस्य मैत्रावरुण्या पयस्यया सहैकतन्त्रता चशब्दात्। पयस्याग्रहणममावास्याविकारार्थम्।

७. समान तुल्य वाजिन दाक्षायणयाज्ञिकेन सह। कुतः तत्रैवेतिकर्तव्यताविशिष्टस्य दृष्टत्वात्।

---

१०.

१. सार्वसेनियज्ञेति वक्ष्यमाणस्य कर्मणो नामधेयं तत्र यदक्षय्यं तदुच्यते।

२. उभयानि दार्शपौर्णमासिकानि। कुत एतत्। पौर्णमासानि पूर्वाणीति वचनात्। उभयानीति वचनात् उभयविध उपांशुयाज एकस्यामेवेष्टौ।

३. अव्यवहितानि वचनात्।

४. अर्चन्तस्त्वा हवामहे पुरोनुवाक्या। अस्माकमग्ने अध्वरं जुषस्व याज्या। उत्तरस्याग्नेयस्येति वचनादसिष्टयज्ञे ऽप्युत्तरस्यैव (३. ११.१.)।

५. दर्शप्रतिषेधो ऽयं श्रुत्यन्तरात्।

६. श्रुत्यन्तरवचनात्। तुशब्दाञ्जीवपित्रकशौवान्तर्हितयोस्तथैव विकल्पः।

७. शौनकयज्ञसाकंप्रस्थाय्ययोर्होत्रं दर्शपूर्णमासात्र विक्रियते। दर्शपूर्णमासवदित्यर्थः। ततः सहानुनिर्वाप्याभ्यां कर्म। अन्येषु त्वदीक्षितायनेषु नानुनिर्वाप्ये कृत्स्नोपदेशात्। ननु सार्वसेनियज्ञो ऽनन्तरस्तदीया धर्मा अत्र कस्मान्नाशङ्क्यन्ते। उच्यते। नादीक्षितायनेषु परस्परतः प्रकृतिविकारभावो ऽस्ति। कुतः। व्रतानि च दाक्षायणयाज्ञिकानीति व्रतानि चेति सिद्धे दाक्षायणयाज्ञिकानीति दृष्टार्थे वचनात्। काम्ययोस्तु शौनकयज्ञसाकंप्रस्थाय्ययोः फलभेदादाध्वर्यवे च कर्मविशेषाम्नानाद्धोतुरपि विकारो ऽस्त्येव।

---

## ११.

१. सार्वसेनयज्ञे यद् व्याख्यातं तदसिष्टयज्ञे ऽपि भवतीत्यर्थः। किं च तत्। उभयानि हवींष्येकस्यामिष्टौ। ननु सार्वसेनियज्ञ-

दिति कस्मान्नोक्तम्। उच्यते। अमावास्यायां प्रयोगप्रतिषेधार्थममावास्याविकारार्थं च।

२. तुशब्दाद्यथाप्राप्तानामेष प्रयोगः[1]।

३. अयं च वशिष्ठयज्ञे विशेषः।

४. इत्येतानि यान्युक्तानि दाक्षायणयज्ञप्रभृतीनि तानि दर्शपूर्णमासायनानि। ततश्च दर्शपूर्णमासतुल्यानि। यत्पुनः फलं श्रूयते गुणात्तन्न प्रधानात्। यथा दध्नेन्द्रियकाम जुहुयादिति ।

५. चकारो ऽत्राध्याहर्तव्यः। तथा च श्रुतिः। अथो यंयं काममच्छंसंतमेतैरयनैराप्नुरिति। फलसंकल्पकृतो विशेषः। संवत्सरप्रयोगस्य।

६. उभयोरपि पक्षयोः।

७. मुन्ययनमित्याचक्षत इति वाक्यच्छेदः। क्रमेण तु व्याख्या। आग्नेय आग्नावैष्णवश्च।

८. सर्वकामत्वात्। कदाचिदन्नकामस्य स्यात्तत्र सद्धन्तौ प्राप्नुतस्तौ मा भूतामिति वचनम्।

९. आग्नेयाग्नावैष्णव्या इष्ट्या। अहरहर्यजते पर्वाणि वर्जयित्वा। पर्वाणि पक्षसन्ध्यर्त्वयनसंवत्सराख्यानि। तेषु यथावचनं दर्शपूर्णमासचातुर्मास्यनिरूढपशुसोमाः। ततो ऽन्यत्राग्नेयाग्नावैष्णवीष्टिर्भवति। संस्थितदर्शपूर्णमासस्य सर्वपर्वस्वपि यागः। सदाग्रहणात्।

१०. केचिन्मुन्ययनमित्याचक्षते। केचिन्मुनिमखेष्टिम्। तथा च संव्यवहारो मुनिमख्येष्येति।

[1] 'एष प्रयोगक्रमः।

११. आग्नेयैन्द्रो पुरोलाशौ वैश्वदेवश्चरुः।

१२. नियमार्थं वचनम्।

१३. उक्तार्थम्।

१४. प्रतिपूर्वामुचिरावबन्धने। कृष्णाजिनमात्मन्यासजत इत्यर्थः। अदीक्षितः अकृतपावनः। दीक्षाप्रतिषेधादन्येषां कृष्णविषाणादीनां दीक्षारूपाणां प्राप्तिर्भवति।

१५. श्रुतिवचनादुक्तम्।

१६. मुन्ययनतुरायणे संवत्सरप्रयोगे भवतः। चशब्दात् श्रुत्यन्तरोक्ताश्च धर्माः। यदुक्तं संवत्सरंसंवत्सरं वा सर्वेषां न प्रयुञ्जानस्य नित्यौ दर्शपूर्णमासौ वर्तेते इति पक्षमेव तत्। षड्ग्रहणं तु न कृतम्। शाखान्तरे द्यावापृथिव्योरयनमस्ति। तथा संक्रमयज्ञ इत्येवमादीनामदीक्षितायनधर्मप्राप्त्यर्थम्।

---

## १२.

१. सौमदैवत्यो नवश्यामाकयागः। वर्षास्वागते श्यामाकस्य इति (४.१२) श्रुतेः। तद्धितनिर्देशात् इष्टिवचने सिद्धे वेणुयवा अनित्यत्वज्ञापनार्थम्। तथा चाश्वलायन आग्रयणं व्रीहिश्यामाकयवानामित्याह।

२. सौम्येव। वेणुयवा वंशफलानि।

३. ऐन्द्राग्नः पुरोलाशः स्वश्रुतेः। आग्नेन्द्रो वा शाखान्तरात्। वैश्वदेवश्चरुर्द्यावापृथिवीय एककपालः स्वश्रुतेः।

४. सौमी इतरा च सद्दाज्यभागे भवतः। तथैव श्रुतत्वात्।

५. इमं यज्ञमिदं वचः सौम्यस्य पुरोनुवाक्या। या ते धामानि दिवि या पृथिव्यां याज्या। इतीति वचनात् सोमेज्याख्ये हविर्यज्ञसोमे। वपायामेते एव विपर्यस्ते इति।

६. मधुपर्को दधि मधु च मिश्रम्। सौम्यस्येति ब्रुवन्नेतज्ज्ञापयति। नैन्द्राग्नादीनां मधुपर्को न सौम्यस्य वत्सः। किमेतस्य ज्ञापने प्रयोजनम्। विराजौ स्विष्टकृत उभयत्र।

७. इयं वामस्य मन्मन ऐन्द्राग्नस्य पुरोनुवाक्या। शुचिं नु स्तोमं नवजातमद्य याज्या।

८. आ घा ये अग्निमिन्धते आग्नेन्द्रस्य पुरोनुवाक्या। सुकर्माणः सुरुचो देवयन्तः याज्या।

९. मही द्यौः पृथिवी च नो द्यावापृथिवीयस्य पुरोनुवाक्या। उर्वी पृथ्वी बहुले दूरेअन्ते याज्या। वैश्वदेवस्य पूर्वोपदिष्टे विश्वे देवासः स्तीर्णे बर्हिषीति।

१०. वैश्वदेवद्यावापृथिवीयौ यागा उपांशु भवतः। यद्यब्दाप्राजापत्यस्य वैगुण्याम्। तां हैक आग्नेयीं वा वारुणीं वा प्राजापत्यां वा कुर्वन्तीति श्रुतेः (कौ० ब्रा० ४. १३)। असुवर्णं चकारेणैव लभ्यम्।

११. सर्वायणेष्वसंयोगविधानात्।

१२. प्रथमगर्भजः प्रथमज उच्यते।

१३. तन्त्रशब्देनाचाङ्गान्युच्यन्ते। दर्शपूर्णमासशब्देन चाग्नेयादीनि। तथाग्नेयादीनां यान्यङ्गानि तान्येवात्र भवन्ति। नाभ्यधिकानीत्येतत्सामान्यम्। एतदिकल्पेनोच्यते। पूर्वमाग्नेयादीनि तत

ऐन्द्राग्नादीनि। दर्शपूर्णमासाभ्यामिति। सहार्थे तृतीया। अपि वा पौर्णमासे वामावास्ये वा हवीय्यनुवर्तयेदिति (कौ॰ ब्रा॰ ४ १४) श्रुते। दक्षिणान्वाहार्य एव तद्येतस्मै ग्लायादिति श्रुते। अन्यत्र तु समानतन्त्रवचने दक्षिणाया अग्रहणम्। कुत। वैगुण्यव्यामेतत्तन्त्र-मेषा देवतैषा दक्षिणेति तन्त्रदक्षिणयोर्भेदेन ग्रहणात्।

१४. वाशब्दो विकल्पार्थः। नवाना व्रीहीणां यवाना च यथाकाल पौर्णमास वा दार्श वा कुर्यात्। आग्नेयादीनि व्रीहिय-वद्रव्यकाणि नवै कुर्यादित्यर्थ।

१५ अथ वा पत्र। अग्निहोत्र यवाग्वा सायप्रातर्जुहुयात्। एवमेव प्राप्ते सायप्रातर्वचन परिसङ्ख्यार्थम्। तेन समानतन्त्रा वा दर्शपूर्णमासाभ्यामित्यन्यतरस्य ग्रहणम्। दर्शपूर्णमासौ वा नवाना-मित्यत्र च।

१६ अग्निहोत्री धेनु ता नवान्व्रीहीन्यवान्वा आदयित्वा। तस्या सक्तूनर्पिताया दुग्धेन सायप्रातरग्निहोत्र जुहुयात्। तस्या इत्येतत् श्रुत्यनुकरण कुर्वता सूत्रकारेण श्रुत्यन्तरोक्ता विधय सूचिता। तथा च। कुण्डपायिनामयने छन्दोगानां हविष्यस्याध्व-र्युर्जुहुयात्। कात्यायनश्चाह (४ ६ १०)। दर्शपूर्णमासानीजानो दक्षिणाग्निपक्व चानुप्राश्य ब्राह्मणान्भोजयेत् किंचिद्दद्यात्। अग्नि-होत्रायणिनो नवै सायप्रातरग्निहोत्रहोम। तदाशिताया वा पयसा। दीक्षितव्रत च उपसत्सु रौहिणौ कुर्वीत। सुत्यासु सव-नीयानिति (४ ६ ११—१५) श्रुत्यन्तराणि।

१७ एतद्यावस्थाविशेषेण पदान्तरम्। स्वयकर्तृकमेव गार्हपत्ये

नाहवनीये तच्छ्रापिणो ऽपि। स्थालीपाकं तद्विधिना। आग्रयण-देवताभ्य इति वचनात् सौम्यस्यापीति वृद्धसंप्रदायः। आहवनीये जुहुयादित्याहवनीयवचनं प्रकृतत्वात् गार्हपत्ये मा भूत्। स्विष्टकृच्चतुर्थी इति मति संभवे चतुर्थ्यैभ्यः। स्वाहाकारेणेति। आग्रयण-देवताशब्देन स्वाहाकारान्तेन जुहुयात्। प्रतिश्रुतहोमधर्मप्राप्ति-र्जुहोत्युपदेशात्। चरोः पाकयज्ञत्वाद्वरो दक्षिणा। सर्वत्र स्थालीपाकादिषु कर्मस्विति वृद्धसंप्रदायः।

---

## १३.

१. श्रुतिपाठक्रमेण चातुर्मास्यान्याह। फाल्गुने मासे भवा फाल्गुनी पौर्णमासी। श्रुतौ नक्षत्रयोग औचित्यानुवादः। तस्यां चातुर्मास्यप्रारम्भो भवति। चातुर्मास्यानीति वक्ष्यमाणस्य वैश्वदेवादेः पर्वचतुष्टयस्य नामधेयम्। सौमिकानामपि फाल्गुन्यामेव सुत्या। पुरस्ताद्दीक्षोपसदः कृत्वा। कुत एतत्। नामधेयसामर्थ्यात्।

२. चातुर्मास्यप्रयोगः। शाखान्तरात्।

३. चातुर्मास्यान्यारप्स्यमानो वैश्वानरीयपार्जन्यया यजेतेति चरकाणाम्। आरप्स्यमान इति तस्मिन्नेवाहनि इति भविष्यद्वचनम्। तस्माच्च चतुर्दश्यामग्निग्रहणम्। इष्टिग्रहणात्पृथक्तन्त्रा एकस्मिन्पर्वणि[1]।

४. एतावानं वैश्वानरं नाभिं यज्ञानामिति वैश्वानरस्य। पर्ज-

---

१ C स्वकरवहारि।

न्याय प्र गायत पार्जन्यस्य पुरोनुवाक्या। यस्य व्रते पृथिवी नन्न-मीति याज्या।[१]

५. उत्तरस्यां पौर्णमास्यां वैश्वदेवाख्यं पर्व भवति। संज्ञाकरणं शास्त्रसव्यवहारार्थम्। प्रधानानि तावदाह।

६. हविर्विशेष. शाखान्तरात्।

७. सौम्यो ऽपि चरकाणामुपांशु। तदभिप्रायः समासः।

८. चरुसामान्यात्समासः।

९. हविर्विशेषः शाखान्तरात्।

१०. पयस्या स्त्रीलिङ्गाच्छ्रुतेश्च।

११. एककपालः श्रुतेः। चशब्दो ऽष्टानां समुच्चयार्थः।

१२. आग्नेयसौम्ययोः पूर्वोपदिष्टा एव। हिरण्यपाणिमूतये सवितु पुरोनुवाक्या। उदीरय कवितमं कवीनामिति याज्या। सारस्वतस्य पूर्वोपदिष्टे एव।

१३. पूषन्तव व्रते वय पौष्णस्य पुरोनुवाक्या। शुक्रं ते अन्यद्यजतं ते अन्यद्याज्या।

१४. इहेव व. स्वतवसः मरुतां स्वतवसां पुरोनुवाक्या। प्र चित्रमर्कं गृणते तुराय याज्या। वैश्वदेवद्यावापृथिवीययोः पूर्वोप-दिष्टाः।

१५. अग्निमन्थनीया इत्यधिकारः। ता आग्नेयेषु हविःषु भवन्ति। अवधिश्चायम्। तेनोर्ध्वमपि व्रतग्रहणात्। कुत एतत्। बर्हिरासादनधर्मो ऽभिमर्शन तत्सवद्ध च व्रतग्रहणम्। प्राकृतानां

---

१ (in mar.) मार्जन्यो निरपेक्षिहहदविशेषात्।

धर्माणां यद्यभ्यधिकमाह तत्र प्रायशः सूत्रकारस्त्वशब्दं प्रयुङ्क्ते।

१६. आहेति वाक्यशेषः। संप्रेषितवचनं तद्वशाद् भेष आह-त्यर्थम्।

१७. अभि त्वा देव सवितरीशानम्[१]।

१८. मही द्यौः पृथिवी च नः।

१९. त्वामग्ने पुष्करादधीत्येतास्तिस्रः। पूर्वं च द्वे। न विकल्पो मन्थनलिङ्गाशङ्कया।

२०. जातायानुब्रूहीत्युक्तः। उत ब्रुवन्तु जन्तव इत्याह।

२१. यदा हस्तेन धार्यते। संप्रैषो ऽपि केषांचिदस्ति। तद्योतनार्था धार्यमाणायेति चतुर्थी।

२२. आयं हस्ते न खादिनमित्यस्या एवोत्तरे ऋचौ प्र देवं देववीतये आ जातं जातवेदसीत्येते प्रह्रियमाणायानुब्रूहीत्युक्त आह।

२३. एतामाह।

२४. एतामाह।

२५. तं मर्जयन्त सुक्रतुं एतामाह।

२६. इतीति वचनान्न क्वचिदिक्रियन्ते। अग्निमन्थनीया इति शास्त्रसंव्यवहारार्थं संज्ञा।

२७. अयं चापरः प्रकृतितो विशेषः। तथा च श्रुतिः। अत्र यत्र प्रयाजा नवानुयाजा इति।

२८. चतुर्थं कृत्वा उत्तममकृत्वा अन्तरेण चत्वारो भवन्ति।

१ om. in C.

२९. अयमेकः।

३०. आगन्तूनां द्वितीयः।

३१. आगन्तूनां तृतीयः।

३२. आगन्तूनां चतुर्थः। एते चत्वार एवमेव शाखान्तरे पठिताः।

३३. त्वमग्ने सप्रथाः सोम यास्त इति।

३४. सावित्रद्यावापृथिवीयौ यागावुपांशु भवतः। चशब्दाद्वैश्वदेवी पयस्या। शतपथश्रुतेः।

३५. प्रेद्धो अग्न इमो अग्न इति। तथैव श्रुतत्वात्।

३६. एवमेव श्रुतत्वात्।

३७. श्रुतत्वात्।

३८. प्रथमं च द्वितीयं चान्तरेण षट् कुर्यात्। तुशब्दो नियमार्थः। क्वचित्पशावभ्यासेन द्वादशसङ्ख्यापूरणम्। तत्राप्येते षळेव।

३९. षण्णां प्रथमः।

४०. षण्णां द्वितीयः।

४१. षण्णां तृतीयः।

४२. षण्णां चतुर्थः।

४३. षण्णां पञ्चमः।

४४. षण्णां षष्ठः। शाखान्तरे एवमेव पठितत्वात्।

४५. समानं तुञ्जं दाक्षायणयाजिकेन वाजिनम्। तत्र धर्मविधानात्।

४६. समाप्तायां वैश्वदेविक्यामिष्टौ पौर्णमासं कुर्यात्। अथ यत्परस्तात्पौर्णमासेन यजत इति श्रुतेः। अयनयाजिनो यथाप्राप्तम्।

अत्र संस्थितायां पौर्णमासमिति वचनं ज्ञापकम्। प्रक्रान्तकर्मव्यवाये ऽपि नित्यानां कालो न बाध्यत इति।

४७. प्रागुत्सर्गादेतान्यन्तरालेषु व्रतानि कुर्यात्। व्रतवचनाद्धेषे व्रातपती भवति। मांसम्यार्यपाञ्चस्यानशनम्। ब्रह्मचर्यं च मैथुननिवृत्तिः। अयं पुत्रवतः प्रथमः कल्पः। प्राक्शिरा अधः शेते। अधःशयनं तैत्तिरीयाणामुक्तम्। उपस्तीर्णमनुपस्तीर्णं वा यत्र वातो नान्तरा यायात् काष्ठासने वा अधःशयनमिति। आसनमप्यध एव। कुतः। तस्माद् काममेवोपरि शयीतेति श्रुतौ सत्यां मांसोपर्यासने चेच्छन्निति (१६.१.२८) कात्यायनेनासनशयनयोः साहचर्यसूचनात्। ऋतुकाले वा जायामुपेयादिति अपुत्रस्य वा जायांरक्षणार्थं वानुकल्पः। जायाग्रहणं समानजातीयार्थं विन्नार्थं[1] च। सत्यवदनं येषामाधाने द्वादशरात्रमेवेति पक्षस्तेषामिह कर्माङ्गत्वेनोच्यते। येषां तु तत्र यावज्जीवमिति पक्षस्तेषां सत्यं हैवास्योदितं भवतीति विदुषो ऽपि प्रतिषेधार्थम्।

---

## १४.

१. वरुणप्रघासा इति वक्ष्यमाणस्य कर्मणो नामधेयम्। ते वरुणप्रघासा आषाढ्यां भवन्ति। फाल्गुनीप्रयोगस्य यजमानस्य। आषाढीगुणाद्दत्या प्रतिपद्वाभिधीयते। ननु चातुर्मास्यानीति समाख्यानात्कालसिद्धिः। नेत्युच्यते। अधिकमासिके ज्येष्ठ्यां वरुणप्रघासाः प्राप्नुवन्ति। तन्निवृत्त्यर्थं वचनम्। आषाढद्वये तु प्रथम

---

१. A विभागार्थं।

एवाषाढे। प्रथमं वा निधयेति न्यायात्। न च पुनर्द्वितीये। उपचारो ऽविज्ञात एवेति श्रुतेः। एवमितरयोरपि।

२. चैत्रीप्रयोगस्य यजमानस्य श्रवणायाम्। प्रतिपद्येव। शाखान्तरश्रुतेः।

३. वैश्वदेवे भवन्ति हवींषि पौष्णपञ्चमानि भवन्ति तथैव श्रुतेः। वैश्वदेविकानीति वचनात्तद्धर्मकाणि। ततः सावित्रस्योपांशुता।

४. अथ यदैन्द्राग्नो द्वादशकपाल इत्येवमादिश्रुतेः(कौ०ब्रा०५.४)।

५. चोदनाप्रकरणे हविषां प्रतीकग्रहणं याज्यापुरोनुवाक्यानामिति परिभावितत्वाद्याज्यापुरोनुवाक्या उच्यन्ते। तत्र पौष्णान्तानामैन्द्राग्नस्य च पूर्वोपदिष्टा एव। इमं मे वरुण श्रुधी हवं पुरोनुवाक्या वारुण्याः। तत्त्वा यामि ब्रह्मणा वन्दमानः याज्या। पयस्यावचनाद्यच पयस्यया वरुण इज्यते तत्रैते याज्यानुवाक्ये। तेन सौत्रामणे वारुणस्योदुत्तमं वरुणाव ते हेल इति।

६. मरुतो यद्ध वो बलं मारुत्या पुरोनुवाक्या। यूयमस्मान्नयत वस्यो अच्छ याज्या।

७. हिरण्यगर्भः समवर्तताग्रे पुरोनुवाक्या कायस्य। यः प्राणतो निमिषतो महित्वा याज्या। इतिकरणो नियमार्थः। ततः पशुमत्सु मारुते पशौ विपर्यास इति वृद्धसंप्रदायः।

८. तत्प्रयुक्तमनुवचनमित्यभिप्रायः। आहवनीयग्रहणं तस्योत्तरतो ऽवस्थानार्थम्। पशमौनिर्दिशादिकदेशप्रणयने[1] प्रणयनीयाः।

---

[1] A रव instead of रव।

९. प्र देवं देव्या धियेति प्रवन्तं तृचं प्रह्रियमाणायाम्वाहेति ( कौ०ब्र०९.२ ) श्रुतेः। आसां तिसृणामासीनः प्रथमामाह। आसीनवचनादिलायास्त्वेत्यादेरनुवचनशेषस्यानियमः।

१०. उत्तरे द्वे प्रणीयमानमनुसंयन्ननुब्रूयात्।

११. इलायास्त्वा पदे वयं एतां साद्यमानयोरग्न्योरनुब्रूयात्।

१२. अग्ने विश्वेभिः स्वनीक देवैः सीद होतः स्व उ लोके चिकित्वान् नि होता होतृषदने विदान इति सन्नवतीभिः सन्नमनुस्तौतीति (कौ०ब्र०९.२) श्रुतेः। त्वं दूतस्त्वमु नः परस्पा इति दूतवत्या परिदधातीति श्रुतिवचनात् न त्वं दूतो अमर्त्य इति। नि होतेति द्वे इति नोक्तम्। शाखान्तरे पाठक्रमान्यत्वात्।

१३. गायत्रः सर्वस्तार इत्युच्यमाने ऽप्येता एव। कुतः। इतिशब्दात्। अग्निप्रणयनीया इति संज्ञा शास्त्रसंव्यवहारार्थम्।

१४. अयं च प्रणयनीयाधर्मस्त्रशब्दात्। यस्मिन्प्रदेशे आसीनेन प्रथमानूक्ता तत्र स्थितोऽसृज्यते वाग्यमात्। परिधाय दक्षिणं बाहुमन्वावृत्य वाचंयमो यथेतं प्रत्येत्येति न सूचितं परिभाषितत्वात्।

१५. अत्र द्वे वेदी। दक्षिणा चोत्तरा चेति। तेनानियमे प्राप्ते नियम उच्यते। उत्तरस्यां वेदौ होतृकर्मेति होतृवचनाद्ब्रह्मयजमानयोर्दक्षिणस्याम्। कर्मवचनात्समासनिर्देशाच्च पशुमतस्तु मैत्रावरुणस्यादि।

१६. श्रुतत्वात्पशुरपि।

१७. गौश्च गर्भग्रहणसमर्था। अनड्वांश्च सेचनसमर्थः। एतौ दक्षिणा।

१८. न प्रतिप्रस्थातुरप्राधान्यात्। न चोभौ[1]। मिथुनार्थवादात्। अत एव विमोचनवाचने अप्येतस्य।

१९. वारुण्याः पयस्याया यो निष्कासः शेषस्तेन यागद्रव्येणावभृथमवैति यथा सोमे। तत्र श्रुतौ[2] धर्माख्यानात्। ननु हविरुपदेशः किमर्थमुच्यते। चोदनाप्रकरणे हविषां प्रतीकग्रहणं याज्यापुरोनुवाक्यानामिति परिभाषया उरुं हि राजा शतं त इति याज्यानुवाक्ये यथा स्याताम्। वारुण्या इति वचनं निष्कासयागशेषप्रज्ञापनार्थम्। अतो निष्कासविनाशे आज्येनावभृथो न तु वाजिनवन्निष्कासोत्पादनम्। यथा सोम इति वचनाद्दक्षिणानिवृत्तिः।

२० उरुं हि राजा वरुणश्चकार पुरोनुवाक्या। शतं ते राजन्भिषजः सहस्रं याज्या। अथ यदप्सु वरुणं यजतीति (कौ॰ब्रा॰ ५. ४) श्रुतेः। अथ पद्धतिः। यजमानो धिष्ण्यान्समीक्षत इति धिष्ण्याभावाच्च भवति। ऋत्विगीक्षणं तु सोम एव। कुतः। अचानूबन्ध्यायां वेति सूत्रे अचशब्दाद्दार्श्यकृतवरुणप्रघासयोः प्रतिषेधः। उरुं हि राजेति यजमानो जपत्येव। सोमाभावान्न सामनिधनम्। अप्सु पादावधानं यजमानस्य ऋत्विजां चास्त्येव। कुतः। अवधाय वारुणीष्टिरिति स्ववादेशात्। सर्वा चेष्टिरस्त्येव। सह प्रायश्चित्तैरिति वचनात्। प्रधानयाज्यानुवाक्ये उक्ते एव। शेषं यथासूत्रं सौमिकेन पौर्णमासीविकार इत्यारभ्याहवनीये समिधावादधाति देवानां समिदसीति पूर्वां तूष्णीमुत्तरां तूष्णीं पत्नी गार्हपत्य इति यावत्

---

1 A B वेनेभौ C न चोभौ। 2 A श्रुतौ।

(८. ११. २. १७)। इति मृदुधियां सुखप्रतिपत्त्यर्थमुक्तम्। प्रकृतमुच्यते।

२१. अग्निमन्यनीयास्वित्येवमाद्यत्र तुल्यं वैश्वदेवेन।

---

## १५.

१. साकमेधा इति कर्मणो नामधेयम्। तत्प्रयोगः कार्त्तिक्यां भवति फाल्गुनीप्रयोगस्य यजमानस्य।

२. आग्रहायणी मार्गशीर्षी पौर्णमासी। तस्यां साकमेधा-श्चैत्रीप्रयोगस्य यजमानस्य।

३. अग्नये ऽनीकवहुणायेष्टिः। सद्यःकाला पूर्वस्यां पौर्णमा-स्याम्। पूर्वेद्युर्माद्याहविष्या इत्यर्थः। पूर्वाह्न इति सौरमानाभि-प्रायेण।

४. अग्नेरनीकवतः पुरोनुवाक्या।

५. सेनानीकेन सुविदत्रो अस्मे याज्या। पौर्णमासावाज्यभागौ नित्यः स्विष्टकृदविशेषात्।

६. मरुद्भ्यः सांतपनगुणेभ्यो मध्यन्दिने चरुर्भवति। अथ यन्मध्य-न्दिने मरुतः सांतपनान्यजतीति (कौ०ब्रा० ५. ५.) श्रुतेः।

७. सांतपना इदं हविर्मरुतां सांतपनानां पुरोनुवाक्या। यो नो मरुतो अभि दुर्हणायुर्याज्या। यो नो मरुतो वृकताति मर्त्य इति न भवति जगतीत्वात्। आमावास्यावाज्यभागौ देवतातः।

८. सायं रात्रौ मरुद्भ्यो गृहमेधविशिष्टेभ्यश्चरुर्भवति। सायं दिनान्तमिति यदुच्यते तदिह न भवत्यर्थवादमन्त्रलिङ्गदर्शनात्।

सांतपनीयायां तूत्कर्षेदग्निहोत्रमित्यस्मिन्नपि विचारे अस्तमित एव गृहमेधीया प्रतीयते। ननु कथं सांतपनीयायामसमाप्तायां अन्तरामग्निहोत्रं हूयते। उच्यते। पौर्णमासस्यैवोत्कर्षः श्रुतेः। पूर्वपक्षे साकमेधैरिष्टं भवतीति च हेतुदर्शनादग्निहोत्रं यथाकालमेव। ततो गृहमेधीया।

९. अग्निना रयिमश्नवदाग्नेयः। गयस्फानो अमीवहा सौम्यः। नियमार्थं वचनम्।

१०. गृहमेधास आ गत मरुतां पुरोनुवाक्या गृहमेधानां। प्र बुध्न्या व ईरते महांसि याज्या। केषां चिच्छाखिनां मरुतो गृहमेधिनो ऽत्र देवतालिन। तत्पक्षे देवतादेशनम्। ये यजामहे मरुतो गृहमेधिनः प्र बुध्न्या वः। अस्मत्पक्षे तु ये यजामहे मरुतो गृहमेधान्प्र बुध्न्या वः।

११. त्वां चित्रश्रवस्तमं स्विष्टकृतः पुरोनुवाक्या। यद्वाहिष्ठं तदग्नये याज्या।

१२. स्विष्टकृन्निगदस्य प्रतिषेधः। प्रकृतत्वात्।

१३. कंप्रपद्यादि पञ्चदशेन वज्रेण पाप्मानं भ्रातृव्यमवबाध इति सप्तदशेन वेति यावत्सर्वं प्रतिषिध्यते सामिधेन्यङ्गार्थवादात्।

१४. आज्यभागादियागक्रिया इडामार्जनान्ता या इडा अस्या इज्यायाः। इज्यावचनादियमेवेज्या न प्रयाजाः। किमत इति चेत्। मानुष इत्युक्तस्य देव सवितरित्यारभ्य[1] प्राक् स्रुगादापनात्कर्तव्य-

---

१ Com. देव सवितरित्यारभ्य।

तोक्ता भवति। यद्यध्वर्युर्मानुष इति न ब्रूयादैन्द्रीमावृतमावर्तं इत्यादि प्राक् स्रुगादापनात्कार्यम्।

१५. तस्य गृहमेधीयस्य चरोर्निष्काषं स्थालीविलग्नद्रव्यकं प्रातः पूर्णदर्व्याख्यं कृत्वा। कृते वाकृते वाग्निहोत्रे। कुतः। शत-पथात्। अथ प्रातर्हुते वाग्निहोत्रे ऽहुते वेति। तस्य निष्काषमिति ब्रुवन् पराङ्गतां दर्शयति। ततो ब्रह्मणो न मन्त्रेणोपवेशनम्। ननु पूर्णदर्वं कृत्वेष्टिमिति भिन्नकर्तृके कथं क्त्वाप्रत्ययः। उच्यते। पूर्ण-दर्वः केषां चिद् यजतिरपि भवति। तथा चाश्वलायनः। पूर्णदर्वं चेदाश्रावयेयुरिति। अत्र याज्यानुवाक्ये।

पूर्णा दर्वि परा पत सुपूर्णा पुनरा पत।

वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो (मै॰ स॰१.१०.२)॥

पुरोनुवाक्या।

देहि मे ददामि ते नि मे धेहि नि ते दधे।

अपामित्यव संभर को अस्माददते ददत् (आश्व॰ २.१८.१३)॥

इति याज्या। यथाश्रावितमादेशनम्। मरुद्भ्यः क्रीळिभ्य इष्टिं कुर्यात्। इष्टिवचनमतिरिक्तं केषां चिच्छाखिनामन्यदपि हविर-स्तीति ज्ञापयति।

१६. क्रीळं वः शर्धो मारुतं मरुतां क्रीळिनां पुरोनुवाक्या। पर्वतश्चिन्महि वृद्धो बिभाय याज्या। पौर्णमासावाज्यभागौ नित्यः स्विष्टकृदविशेषात्।

१७. इत उत्तरं यदुच्यते तन्महाहविष्येव भवतीति वेदित-व्यम्। अतो ऽन्यासामिष्टीनां दक्षिणा प्रकृतिवद्भवति।

१८. ऐन्द्राग्नान्तानि वारुणप्रघासिकानि षड् हवींषि भवन्ति। वारुणप्रघासिकानीति वदंस्तद्धर्मांश्चाम्नान्दर्शयति। अतश्चावभृथः प्राप्तः प्रतिषिध्यते।

१९. माहेन्द्रस्तद्वैश्वकर्मणश्च एककपालः।

२०. पशुं माहेन्द्रस्य च पूर्वोपदिष्टाः। विश्वकर्मणो वाचस्पतिं विश्वकर्माणमूतये पुरोऽनुवाक्या। या ते धामानि परमाणि यावमा याज्या। क्वचिद्ध्वर्युवशाद्वैश्वकर्मणं हविः पशुश्च वैश्वकर्मण एकस्मिन्कर्मणि स्यातां। तत्र वपायां विपर्यासार्थ इतिकरणः।

२१. वैश्वकर्मणो याग उपांशु भवति शाखान्तरात्।

२२. समानमन्यद्वरुणप्रघासैरिति वचनात् द्वयोः प्रणयने प्राप्ते वचनम्। किं चान्यत्।

२३. ऋषभो वृषभ इत्येकार्थः। अनड्वान् सेक्ता दक्षिणा। अथ यदृषभं ददातीति (कौ० ब्रा० ५ ५.) श्रुतेः।

२४. साकमेधेषु न वाजिनयागो भवति। नावभृथः। वाजिनप्रतिषेधं कुर्वन्नेतज्ज्ञापयति। पयस्यायां सत्यामपि पृथक्चोदनया वाजिनं भवति। अतश्च पूर्वकारिवशात्सोमे क्रियमाणमप्यसाकमचोदितमिति कृत्वाविवाक्य ऽनुष्टुप्पक्षपदि न संख्येयम्।

२५. वरुणप्रघासधर्मातिदेशो ऽयम्। अतश्च सद्दाज्यभागादि सर्वं भवति। ननु समानमन्यद्वैश्वदेवेनेत्युच्यमाने ऽवभृथप्रतिषेधो ऽपि न कर्तव्य। उच्यते। समानानि षट् संचराणीति (कौ० ब्रा० ५.५) श्रुतत्वात्। यथाश्रुति सूत्रकरणं न्याय्यतरम्।

---

## १६.

१. तस्मिन्नेवाहन्यपराह्णे। कुतः। श्रुतेः। अथ यदपराह्णे पितृयज्ञेन (कौ०ब्रा० ५.१) चरन्तीत्यथशब्दस्यानन्तर्यवाचित्वात्। पित्र्येति संज्ञा। चिह्नविर्वक्ष्यमाणैर्हविर्भिः। ननु वक्ष्यमाणत्वादेव सिद्धे चिह्नविरिति किमर्थम्। उच्यते। केषां चिद्यमो ऽप्यत्र चतुर्थः। तस्य चातुर्मास्यदेवतासंख्या मा भूत्। इष्टिवचनादाश्वमेध एतद्देवत्याः पशवः। तथा च कात्यायनः पितृत्र्यम्बकपुनरुक्तवर्जमित्याह (२०.७.२२.)। पुरुषमेधे तु भवन्ति। असंभवात्संख्यायाः।

२. यथोद्दिष्टा देवताः।

३. अयं च प्रकृतेर्विकारः। यानि स्विष्टकृदाचिकान्यग्निपदानि तानि कव्यवाहनविशिष्टानि भवन्ति। तद्यथा। अग्निं कव्यवाहनं होत्रायावह। अग्निः कव्यवाहनो होता वेत्वग्निः कव्यवाहनो होत्रं वेतु। यो अग्निं कव्यवाहनं होतारमवृथाः। यद्यप्यध्वर्युर्वरणं न करोति तथाप्यावाहने कृतत्वात्। ये यजामहे ऽग्निं कव्यवाहनमयाळग्निः कव्यवाहनः। यचदग्नेः कव्यवाहनस्य होतुः प्रिया धामानि। अग्निः कव्यवाहनो होत्रेण हविरजुषतेति।

४. त्वं सोम प्र चिकितो मनीषा। सोमो धेनुं सोमो अर्वन्तमाशुं सोमस्य पितृमतः पुरोनुवाक्ये। त्वं सोम पितृभिः संविदानो याज्या। पितृमत इति सिद्धे सोमस्येति वचनं नियमार्थम्। ततः पुरुषमेध एतद्देवत्ये पशौ यातयामदोषात्सौम्यस्य चरोरन्ये कल्पयितव्ये।

५. उदीरतामवर उत्परासः। अङ्गिरसो नः पितरो नवग्वाः पितॄणां सोमवतां पुरोनुवाक्ये। ये नः पूर्वे पितरः सोम्यासः याज्या।

६. उपहूताः पितरः सोम्यासः। आहं पितॄन्सुविदत्राँ अवित्सि पितॄणां बर्हिषदां पुरोनुवाक्ये। बर्हिषदः पितर ऊत्यर्वाक् याज्या।

७. अव सृज पुनरग्ने पितृभ्यः। ये चेह पितरो ये च नेह पितॄणामग्निष्वात्तानां पुरोनुवाक्ये। अग्निष्वात्ताः पितर एह गच्छत याज्या। देवतावचनं नियमार्थम्। ततः पशूनामप्येवंदेवताना-मेता एव।

८. य एते तृचा उक्तास्तेषां प्रतिदेवतमेकैका याज्या भवति। एवमुक्ते न ज्ञायते कतमा सेति। तदर्थमाह। द्वेद्वे पूर्वे पुरोनु-वाक्ये। स द्वेद्वे पुरोनुवाक्ये अन्वाहेति शतपथे। अथ यत्तिस्रस्तिस्र एकैकस्य हविषो भवन्ति। तथाह्वयत्येवैनाग्प्रथमया द्वितीयया गमयति प्रैव तृतीयया यच्छतीति (कौ० ब्रा० ५.७) श्रुतेः।

९. ते पुरोनुवाक्ये नानाप्रणवसंयुक्ते। न च प्रणवेन संतते भवतः।

१०. ये तातृपुर्देवत्रा जेहमानाः अग्नेः कव्यवाहनस्य पुरोनु-वाक्या। त्वमग्न ईळितो जातवेदा याज्या। कव्यवाहनस्येत्येताव-तापि सिद्धे स्विष्टकृत्पदनिरासार्थमग्ने कव्यवाहनस्येति वचनम्। अतश्च ये यजामहेऽग्निं कव्यवाहनमथाळिति प्रयोगः।

११. सर्वस्य कर्मणः प्राचीनावीतित्वे प्राप्ते वचनं श्रुत्यन्तरात्।

पितॄन् सोमवतः पितॄन् बर्हिषदः पितॄनग्निष्वात्तानग्निं कव्यवाहन-मेता देवताः प्राचीनापवीती यजति।

१२. येषुयेषु स्थानेषु[1] देवताभिधानं तेषुतेषु प्राचीनापवीती न केवलं याग एव। अनुवर्तयतीति वचनादावहशब्दमाहवनीयाभि-धायिनमपि प्राचीनापवीती। ननु सोमे पितृमतीज्यमाने व्यूहन-मन्त्रे अपनुदत्विति किं यज्ञोपवीतिना वक्तव्यमुत प्राचीनापवीति-नेति। उच्यते। प्राचीनापवीतिना। कुतः। भूयसा साधर्म्यात्।

१३. न कचित्पितृमतः सोमस्य प्राचीनापवीतित्वमित्यर्थः।

१४. सर्वमेव यज्ञोपवीती कुर्यादिति शाट्ठकर्ण्य आचार्यो मेने।

१५. संप्रैषेष्वाश्रावितादिषु स्वधाशब्दे ऽध्वर्य्वादिभिः क्रियमाणे ये यजामहे इत्यस्य स्थाने तद्धर्मकमेव ये स्वधामहे इति ब्रूयात्। वषट्कारस्य स्थाने स्वधा नम इति।

१६. अन्वाहार्यपचनाद्दक्षिणे देशे अदूरत एव परिहृते[2] पित्र्यया चरन्ति। होतुः प्रदेशविज्ञानार्थमिदमुक्तम्।

१७. माहाहविषौ[3] वेदिमग्रेण गत्वा पैतृयज्ञियसंचरेण प्रविश्य दक्षिणाभिमुखस्तिष्ठति। ननु कथं ज्ञायते माहाहविषौ वेदिमिति। उच्यते। तदीयस्यान्वाहार्यपचनस्य प्रकृतत्वात्। पराङ्मुखस्य च क्रियासंन्यायात्। अग्रेण वेदिं गत्वेत्येतत् कथं लभ्यते। गत्वेति वाक्यशेषाध्याहारात्। सूत्रकारेण तु वाक्यशेषो न पठितो ऽस्मिन् कर्मण्ययमेव संचरो[4] न गमनमात्रमित्यभिप्रायेण। तिष्ठतीति होतुर-

१ C ins स्थितौ। २ A ०श्रि०। ३ A महाहविषां। ४ A B om न।

नुवादो ऽधिकारार्थ । पूर्वांश्चास्तु मघर सर्वेषाम्। अथ यदुदश्च परेत्याय यश्चाश्च उपनिक्रम्येति बहुवचन श्रुते ।

१८ प्राकृत बर्हिराक्रमण न करोति । अध्वर्युवशादुपांशु-चरण चशब्दात् ।

१९ प्राकृताना अपानामुत्सर्ग शाखान्तरात् ।

२० येषु कर्मसु करणमन्त्रप्रयोगो जपवदुपांशु भवति तेषु मन्त्राणामुत्सर्ग । कर्माणि तु कर्तव्यानि । तद्यथा । भूमिसमर्शना-ध्वर्युसमर्शनबर्हिर्ध्यञ्जलिनिधानानि ।

२१ वक्ष्यति । उपसदा चरन्तीति । तत्राप्यय धर्म । आचार्य-ग्रहण विकल्पार्थम् ।

२२ पित्र्यायामविकल्पार्थं[१] वचनम् । प्रकरणात्कर्तव्यान्येव जपमन्त्राणि कर्माणि । अनुत्सर्ग इत्येष न्याय । एतदुक्ततरमित्यर्थ ।

२३ उपनस्तानि धीमहीत्येका सामिधेनी त्रिरुक्तार्षेयमुत्सृज्य देवेद्ध इत्यादि ब्रूयात् ।

२४ बर्हिर्वर्जितान्प्रयाजानिष्ट्वा तत आ नो अग्ने त्व सोमसित्ये-तावाज्यभागौ। जीवनवन्ताविति सञ्ज्ञा आयुष्कामस्य सार्वकामिकयर्या।

२५ इला नेति सिद्धे उपह्वयेति वचनमोष्ठाञ्जनप्रयोगार्थम् । प्राश्नन्तीति लिङ्गात्सदेहो मा भूत् ।

२६ भागानवप्रायोज्ज्ञन्ति । उत्तरेलायामप्येवमेव । भाग-त्वाविशेषात् । बहुवचन पूर्वकारिवशात् कदाचिद्भिचणमपीति नियमार्थम्।

---

१ C (or g ) अपि विकल्पाच ।

२७. अनन्तरमध्वर्युर्यजमानो वा पितृभ्य उदकादि ददाति। तस्मिन्दत्ते मार्जनम्। तथैव श्रुतत्वात्।

---

## १७.

१. यत्र सर्वो दक्षिणाग्निः प्रणीयते तत्र दैवरक्षाः किंशुकाः। भागग्रस्तेदया विष्टेत्येवमादिकं मन्त्रं जपन्त उत्तरेणान्वाहार्यपचनं गत्वा। कथम्। माहाहविषौ वेदिमग्रेण ततः सव्येनावृत्यापरेण गार्हपत्यं यजमानसंचरेण प्राञ्जलाहवनीयमुपतिष्ठन्ते।

२. सुमंदृशं त्वा वयं पङ्क्तिः प्रायस्यात्। अचक्षमीमदन्त उपोषु शृणुही गिरः। एताभिराहवनीयमुपस्थाय। आहवनीयश्चात्र महाहविषः। यत्पुनराहवनीयप्रेक्षणं प्रायश्चित्तहोमस्य तत्परिश्रितस्थे ऽग्नौ। कुतः। दक्षिणाग्निराहवनीयवदिति कात्यायनवचनात्।

३. मनो न्वा हुवामह इत्यादिना तृचेन दक्षिणाग्निमुपतिष्ठन्ते। उपस्थानाभावः सर्वप्रणयने। समाप्ते पुनरानीतो ऽसौ दक्षिणाग्निर्भविष्यतीति चेत्। सत्यम्। तावदसावाहवनीय एव।

४. आ त एतु मनः पुनरित्यस्याः स्थाने आ म एतु मनः पुनरिति ब्रूयुः।

५. अग्निं तं मन्ये यो वसुरित्यादिना तृचेन। अग्ने त्वं नो अन्तम इति च द्वैपदेन तृचेन गार्हपत्यमुपतिष्ठन्त इति वाक्यशेषः।

६. तच्चक्षुर्देवहितं शुक्रमुच्चरदित्येतयादित्यमुपतिष्ठन्ते। अथ यमाय उपनिष्क्रम्यादित्यमुपतिष्ठन्त इति (कौ० ब्रा० ५.७) श्रुतेः।

७. देवं बर्हिरिति वर्जयित्वा अनुयाजौ यजेत्। अथ यत्प्रया-जानुयाजेभ्यो बर्हिरन्ता उत्सृजन्तीति (कौ० ब्र० ५.७) श्रुतेः।

८. नामनी यजमानस्याभिव्याहृत्येति चोदकप्राप्तस्य प्रतिषेधः। अथ यत्सूक्तवाके यजमानस्य नाम न गृह्णातीति (५.७) श्रुतेः।

९. अप्यन्तेवेयमिष्टिर्भवति। अथ यत्पत्नीसंयाजैर्न चरन्तीति श्रुतेः।

१०. जुहोतिमुदायत्स्वका इति। तान्संस्थाप्य ततो मैत्रश्चरुः अथ यदुदञ्च पर्येत्य अम्बकैश्चरन्तीति श्रुतेः। अज्ञातार्थ उपदेशः। पाकयज्ञो ऽयम्। मैत्रश्चरुरिति हविरुपदेशादश्वमेधे नैतद्देवत्यः पशुः।

११. वाशब्दो विकल्पार्थः। अदितये वा चरुर्भवति। अथ यदन्तत इष्ट्या यजत इति श्रुतेः।

१२. मित्रस्य चर्षणीधृतो मित्रस्य पुरोनुवाक्या। मह्वी आदित्यो नमसोपसद्यो याज्या। ननु अदित्या अयेते कस्माच्च भवतः। वैलक्षण्यनिर्देशात्। एकत्र तद्धितः एकत्र चतुर्थी।

१३. सस्थितायां चरुहविरिष्ट्यां पौर्णमासं पर्व भवत्येवमेव श्रुतत्वात्।

---

## १८.

१. शुनासीर्यमिति चतुर्थस्य चातुर्मास्यपर्वणो नामधेयम्। तत्र विधिं वक्ष्याम इति वाक्यशेषः।

२. पौष्णपर्यन्तानि वैश्वदेविकानि वैश्वदेवधर्मकाणि हवींषि भवन्ति।

३. शुनासीर्यः पुरोलाशः। वायव्यं पयः। पयोवचनं याज्या-पुरोनुवाक्ययोर्नियमार्थम्। सौर्य एककपालः।

४. शुनासीराविमां वाचं जुषेथां शुनासीरीयस्य पुरोनुवाक्या। शुनं नः फाला विकृषन्तु भूमिं याज्या।

५. तव वायवृतस्पते वायोः पयोहविषि पुरोनुवाक्या। अध्वर्यवश्चकृवांसो मधूनि याज्या[१]।

६. तरणिर्विश्वदर्शतः सौर्यस्य पुरोनुवाक्या। दिवो रुक्म उरुचक्षा उदेतु याज्या। इतिकरणान्नैते वपायाः।

७. सौर्यो याग उपांशु कर्तव्यः।

८. शुक्लो ऽश्वो दक्षिणा भवति। अथ यच्छ्वेता दक्षिणेति श्रुतेः।

९. श्वेत एव। यद्यश्वं श्वेतं न विन्देदपि गौरेव श्वेतः स्यादिति शतपथे।

१०. आयोगो युगं बलीवर्दाभ्यां सहितमुच्यते। ते आयोगा द्वादश यस्मिन् सीरे तद्द्वादशायोगम्। सीरं हलमुच्यते। सा वा दक्षिणा भवति। द्विर्वाशब्दान्न चतुर्विंशतिरपि गावः श्वेताः।

११. समानमन्यद्वैश्वदेवेनेति प्राप्तं प्रतिषिध्यते।

१२. अग्निमन्थनादि।

१३. अमथ्यमाने त्वग्नौ प्राप्तमपि वैश्वदेविकं तन्त्रं न भवति। किं तु पौर्णमासं भवति। कुतः। न मन्थन्त्यग्निं पञ्च प्रयाजा भवन्ति त्रयो ऽनुयाजा इति शतपथे। स्वश्रुतिस्तु यद्यु न मथ्यते पौर्णमासमेव तन्त्रं भवति। ननु एवं श्रूयमाणे पादत्रयं प्राप्नोति।

१ C in marg: यद्यवा शाखान्तरात्।

नेत्युच्यते। एवं श्रुतायामेवोदवसानीयायां पौर्णमासीविकारवचनात्सा तदर्थं यथा तद्वदिहापि। अध्वर्युवशात्तु सहापि मन्थनेन पौर्णमासमेतत्तन्त्रम्। दक्षिणा तु चोदकप्राप्तापि विशेषश्रुतया बाध्यत एव।

१४. अध्वर्युवशात्पक्षे शुनासीराविन्द्रवन्तौ तयोरियं पुरोनुवाक्या।

१५. याज्या।

१६ इन्द्राय वा शुनासीराय कात्यायने। तस्येन्द्रस्य शुनासीरस्येयं पुरोनुवाक्या।

१७. याज्या।

१८. शुनं हुवेम मघवानमिन्द्र इन्द्रस्य शुनस्य पक्षे हविः। केषां चिदध्वर्यूणां तद्वशादियमिन्द्रस्य शुनस्य पुरोनुवाक्या। अश्वायन्तो गव्यन्तो वाजयन्तो याज्या।

१९. साकमेधाख्यं पर्व परिसमाप्य तस्मिन्नेव विहारे शुनासीर्यं पर्व कार्यम्। ननु अनन्तरशब्दात्तस्मिन्नेव क्षण इत्येतत्सिध्यति न तु तस्मिन्नेव विहार इति। उच्यते। सिद्धं वैजवापकादवचनात्प्राक् पौर्णमासात्सिद्धो ऽधिकार इति। तच्च पचते। प्राक् पौर्णमासात् शुनासीर्यम्। अतस्तस्मिन्नेव विहार इति सिद्धम्। पशुमत्तु यूपो ऽपि स एवाविशेषात्।

२०. वाशब्दो विकल्पार्थः। शुनासीर्यस्य माघ्यां वा करणम्। पौर्णमासीग्रहणान्मुख्यासुख्ययोरनियमः।

२१. सोमेनाग्निष्टोमेन। उत्सर्गो व्रतोन्मोचनम्। अयं तावत्प्रथमः कल्पः। तदभावे पशुना इष्ट्या वा। तुल्यो विकल्पः। एव-

मेवाश्वलायनवचनात्। ननु कथमेतत् ज्ञायते। अग्निष्टोमेनेति। प्रत्यवरोहणीयः सौमिकानामुत्सर्गः। तच संकल्पविकृतस्योपदेशात्। ऐकाहिकमनादेश इति वचनात्। अग्निष्टोमेनाग्नेयेन पशुनाग्नेय्येष्ट्येति शाखान्तरात्।

२२. सांवत्सरिकाणि चातुर्मास्यान्युक्तानि स्वश्रुतिपाठक्रमेणैव। पञ्चवर्षप्रयोगाणि शाखान्तरीयाणि। तेषु वैश्वदेवात्पूर्वेषुः शुनासीर्यमपरेद्युर्वैश्वदेवं भवति। आरभ्यमानसंयोगाद्वैश्वानरीयपार्जन्या[1] आदावेवान्तत एवोत्सर्गः।

---

## १९.

१. विधिः कर्तव्याकर्तव्यप्रतिपादकः शब्दः। तत्प्रतिपादितस्य कर्मणो अपराधे भ्रेषे प्रायश्चित्तं भवति। अथ यत्प्रायश्चित्तप्रतिनिधीन् कुर्वन्ति यदाकूतीर्शुक्रतीति शुनासीर्यादनन्तरं श्रुतत्वात् तेनैव क्रमेण सूचितम्। लक्षणसूत्रमेतत्पूर्वकार्युक्तस्यापि करणार्थम्। ब्रह्मणा यानि होतव्यानि तान्येवाचोच्यन्ते। अन्यत्र तु यथाधिकारं कर्तव्यवस्था। तत्राग्निहोत्रहोमे तत्कर्तैव। शूलगवपठितानि अनेकपश्वर्थानि[2]। त्रयोदशाध्यायविहितानि होतुरेवेति वृद्धसंप्रदायः। स्मृतौ ब्रह्मणस्तत्र होमवचनात्।

२. प्रायश्चित्तं प्राकृतमेव। तच्चेष्टिपशुसोमदर्विहोमानां विध्यपराधजं नैमित्तिकमङ्गम्। तस्य यथाचोदितस्यासंभवो ऽर्थलोपः

---

१ C चारिष्यमा०। २ C has शाखापश्वर्थानि instead। ३ A C (see b) ०रार्थे आते निमि०।

कर्तृद्रव्यकालाभावलक्षणस्तत्र प्रतिनिधिर्भवति। आनुकल्पिको विधिर्भवतीत्यर्थः। तद्यथा। सर्वप्रायश्चित्तं सर्वैः प्रत्यक्षविहितैः सह विकल्पेनापि भवति। तुल्यत्वात्। न चायं[1] द्रव्य एव नियमः प्रतिनिधिरिति[2]। कुतः। एष प्रतिनिधीनां धर्म इत्यविशेषवचनात्। अतश्चाभावविकल्पाः प्रतिनिधिशब्देनेहोच्यन्ते। तद्यथा[3]। प्रायश्चित्तेष्टीनां स्थाने तस्मै तस्मै देवतायै पूर्णाहुतिं जुहुयादित्याश्वलायनस्य। याज्यापुरोनुवाक्याभ्यामृग्भ्यामिति चरकाणाम्। तथा च स्मृतिः।

इष्टिं वैश्वानरीं नित्य निर्वपेदब्दपर्यये।

कॢप्तानां पशुसोमानां निष्कृत्यर्थमसंभवे॥ (मनु ११. २७.)

३. असमुच्चविधानासिद्धे[4] संज्ञार्थं वचनम्। सर्वप्रायश्चित्तसंज्ञे आहुती इत्यभिप्राय। महाव्याहृतिसर्वप्रायश्चित्तप्राजापत्यान्तरमित्येवमाद्यर्थमदोषेष्वपि संज्ञाकरणम्। आहुती इति लिङ्गसिद्धे वचनं परिसङ्ख्यार्थम्। आहुती एव केवले। नान्यदाघाराद्याराद्युपकारकमङ्गम्। परिसमूहनादि तु संनिपत्योपकारकं भवत्येव। ननु काम्या[5] विशेष.। उच्यते। गार्ह्याणां कर्मणां कालातिक्रमादिष्वेषः[6] प्रतिश्रुतस्तन्त्राद्बहि'। अतन्त्रेषु[7] तु गार्ह्येषु श्रौतेषु वा होममात्रम्। परतन्त्रोत्पत्तयो जुहोतिमात्रा इति कात्यायनवचनन्यायात्। ननु श्रौतविध्युपदेशो गार्ह्ये संभवन् भवति[8]। गार्ह्ये च परिसमूहनादि श्रौते इत्येतत्कथं लभ्यते। न्यायसूत्रप्रणयनाद्वृद्धसंप्रदायाच्च। तत श्चस्विधानारण्यकयोरप्येतत्समानम्।

[1] B न चायं। [2] B नियमाः A नियम। [3] C om. यथा। [4] B विशेषभावात्। [5] C मम कस्य विषय। [6] A ॰षेष्वपि B C ॰षेष। प्रतिश्रुत॰। [7] B चतस। [8] A om. ॰भवन्।

४. आहवनीयो ऽग्निराधारः सर्वाहुतीनां न केवलं प्रायश्चित्ताहुतीनामेवेति सर्वग्रहणम्। परिभाषासूत्रमेतत्। एवं चेत् प्रथमाध्यायादौ सूत्रमेतदुच्यते। नेति ब्रूमः। सार्वयज्ञिकमिति तत्र वचनादाहिताग्नेराहवनीय एव पाकयज्ञाहुतयो मा भूवन्निति च सूचितम्। आहवनीय इति प्रथमानिर्देशाद्यो यत्राहवनीयः स्थानापत्त्या वचनेन वा तत्संबन्धा एव प्रायश्चित्ताहुतयो ऽपि कर्तव्या इत्येतत् सिद्धं भवति।

५. चशब्दः सर्वग्रहणानुकर्षणार्थः। सर्वाहुतीनां होमपात्रं जुहूर्भवति। ननु पाकयज्ञेषु कथम्। उच्यते। को ऽत्र विशेषः। स्मार्ता जुहोतयः पाकयज्ञा उच्यन्ते। तेन सर्वाहुतीनामित्युच्यमानं जुहोतिसामान्यात्तत्रापि भवत्येव। यत्र त्वग्निविशेषस्य पात्रविशेषस्य वा स्मरणमस्ति तत्र तदेव भवति। तद्यथा।

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही।
दायकालाहृते वापि श्रौतं वैतानिकाग्निषु॥

इति याज्ञवल्क्ये (१, ९७)। तथा च गृह्ये। स्रुवः पात्रमाज्याहुतिषु। ननु कथं ज्ञायते आज्याहुतिष्विति। उच्यते। आज्ये हविषि सव्ये पाणौ ये कुशास्तान् दक्षिणेनाग्रे संगृह्य मूले सव्येन तेषामग्रं स्रुवे समनक्ति मध्यमाज्यस्थाल्यां मूलं चेति स्रुवस्याज्याहुतिषु दर्शनात्। अथ चेत् स्थालीपाकेषु स्रुच्यग्रं मध्यं स्रुवे मूलमाज्यस्थाल्यामिति विशेषदर्शनादाज्याहुतिषु स्रुवः पात्रमित्यवगम्यते। ननु पूर्णाहुतिहोमो ऽग्निहोत्रहोमो ऽपि वा स्थालीपाकमेवेत्याग्रयणचरुः शूलगवश्च पाकयज्ञधर्मकास्तेषु वै स्रुवेणाज्याहुतीरिति नियमात्

प्रायश्चित्तानि पार्वणवत् स्रुवेण प्राप्नुवन्ति। सत्यम्। तदपवादार्थमेव सूत्रमारब्धम्। इह सूत्रपठितानां जुह्वा पात्रमिति। परिधिकर्मणि तु पाकयज्ञधर्मके प्राप्तस्य स्रुवस्य वारणेन स्रुवेणेति पुनर्ग्रहणात्प्रायश्चित्तहोमे ऽपि जुह्वं भवति। पिण्डपितृयज्ञे जुह्वेव दर्शाङ्गत्वात्। एतेनैव धर्मेणानाहिताग्नेः पिण्डपितृयज्ञ इत्येतावन्मात्रातिदेशादनाहिताग्नेः प्रायश्चित्ताहुतिषु स्रुव एव पात्रं धर्मवचनात्। पूर्णाहुतिषु सर्वत्र स्रुचा पूर्णया चतुर्गृहीतमाज्येनोपायेन संपाद्य जुहुयात्। कुत एतत्। तन्त्रान्तरे दर्शनात्।

६. चतुर्गृहीतमाज्यं प्रायश्चित्तेषु जुह्वा होतव्यमित्ययं नियमः। कुतः। श्रुतेः। प्रायश्चित्तवचनमधिकारार्थम्।

७. अनन्तरमव्यवहितं दोषादपराधात्प्रायश्चित्तम्। कुतः। यस्मादनिर्हृतदोषेण सहोत्तरस्य[1] संबन्धो नास्ति।[1]क्रमकोपपरिहारार्थो होतुः। दोषवचनाद्व्यवहितविज्ञातस्यापि दोषनिर्घातो युक्तः। अतश्च शस्त्रानुवचने समाप्य प्रवृत्तस्य चाङ्गकर्मणो ऽन्ते प्रायश्चित्तहोमः। प्रवृत्तिनिषेधात्।

८. दोषविशेषे मन्त्रविशेषेणैव शाखाद्विहितं स्वशाखायामन्यत्र चास्ति। तच तस्मिन्नुभे कुर्यात्। के उभे। किं शाखान्तरीयं च स्वशाखोत्थितं च। नेत्युच्यते। सर्वप्रायश्चित्तम् चाधिकारिकं च। विशेषाधिकारविहितमाधिकारिकम्। तत्कृत्वा ततः सर्वप्रायश्चित्तम्। सूत्रे

१ C ०न्तरेण। १ A क्रमकाप।

तु सर्वप्रायश्चित्तस्य पूर्वपाठादसंभवे सर्वप्रायश्चित्तेनापि दोषोपघातः। द्विश्शब्दाद्धोमप्रायश्चित्त एव समुच्चयो नेतरस्मिन्।

९. यस्य प्रमादादुद्धरणार्हे आहवनीये अनुद्धृते आदित्यो ऽभ्यस्तमियात् सो ऽन्येन याज्ञिकेन ब्राह्मणेन श्रोत्रियपुत्रेणोद्धरण कारयेत्। तस्य च कुर्वतः सुवर्णं दर्भप्रबद्धमग्रतो नयेयुस्त्रैवर्णिकाः परिचारकाः। रजतमभ्युदिते। अन्यत्पूर्ववत्। उद्धरणकर्त्रे वरो देयः। शाखान्तरात्।

१०. यद्यग्निहोत्रहोमार्थमुद्धृत आहवनीयो ऽनुगच्छेत् ततो गार्हपत्यादुद्धरणं मन्त्रेण कृत्वा तस्मिन्नेवोद्धरणे तत्काल एवाग्नये ज्योतिष्मते इष्टिं कुर्यात्। शाखान्तरश्रुतेः। यस्याहवनीय उद्धृतो ऽग्निहोत्र उपयायात्सो ऽग्नये ज्योतिष्मते ऽष्टाकपालं निर्वपेदिति। ननु पौर्णमास्याममावास्यायां वा क्रियमाणायां ज्योतिष्मत्यां चोदको ऽनुग्रहकृतो भवति। किमर्थं निमित्तादनन्तरं क्रियते। उच्यते। सत्यमेव यदि दयमग्न्युत्पत्त्यर्था न स्यात्। अग्न्युत्पत्त्यर्था तु ज्योतिष्मती। तस्मात्तस्मिन्नेव काले कर्तव्येति। प्रासङ्गिके तु दर्शपूर्णमासार्थं उद्धृते उद्धरणकाले ऽप्यनुगते ज्योतिष्मती न कर्तव्या। कुतः। प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वादिति न्यायात्। नित्यधृते ऽप्यनुगते न[1] ज्योतिष्मती। पुरुषार्थत्वान्नित्यधारणस्य। तथा जैमिनिः। धारणे च परार्थत्वादित्याह।

११. उदग्ने शुचयस्तवाग्नेर्ज्योतिष्मतः पुरोनुवाक्या। वि ज्योतिषा बृहता भात्यग्निर्याज्या।

---

[1] C

१२. अभ्यस्तमिते ऽभ्युदिते च प्रकरणात्। गार्हपत्ये ऽनुगते पूर्वमुद्धृतमाहवनीयं गार्हपत्यत्वेनाध्यवसाय दक्षिणाग्निमपयतो नीत्वा आहवनीयं विना मन्त्रेणान्यं प्रणीयाग्निहोत्रं जुहुयात्। होमः प्राप्त एवानूद्यते प्रायश्चित्तहोमप्रतिषेधार्थम्। होमार्थमेव गार्हपत्याध्यवसानम्। ततः परिसमाप्ते होमे ऽन्यस्य मन्थनम्। जुहुयादिति वचनादिष्ट्यर्थे विहारे नैतद्भवति। तत्र मन्थनं कृत्वा सर्वप्रायश्चित्तं हुत्वा गार्हपत्यस्य स्थापनं कार्यम्[1]। अथ यदि गार्हपत्यो ऽनुगच्छेद् रणी वाव स गच्छत्यरणिभ्यां हि स आहृतो भवतीति शतपथश्रुतेः।

१३. अयमपरः पक्षः। आहवनीयं समारोह्योत्तरतः स्थित्वा निर्मथ्य गार्हपत्यमाहवनीयं प्रणीय दक्षिणाग्निं च विहृत्य तत्र होममध्यवस्येत्। परिसमापयेदित्यर्थः। कथं चासौ परिसमापितो भवति। यदि सायं तर्हि प्रातस्तनो ऽपि होमस्तत्रैव क्रियते। प्रातश्चेन्निमित्तं प्रातस्तन एव केवलो होमः। परिसमाप्ते प्रातस्तने होमे ततः समारोपाग्नीनरण्योर्निर्मथ्य चिरंतनेभ्यो ऽग्निस्थानेभ्यो भस्मोद्धरणं कृत्वोपलिप्य गार्हपत्यमुपस्थापयेत्। तथा च शतपथः। इत्यमेव कुर्यादरण्योरग्नीन्समारोह्योदङुद्रवसाय निर्मथ्य जुहुयादित्ये तत्राह न त्वां चन परिचर्यां करोति नवावसान उ अस्याभितोरात्रं हुतं भवति (शतपथब्रा० १२. ४. ३. १०.)।

१४. उभयोर्गार्हपत्याहवनीययोरभ्यस्तमितयोरभ्युदितयोर्वा-

---

[1] A अथ गार्हपत्यस्य मन्थनं कृत्वा संस्थाप्याहवनीये जुहुयात प्रायश्चित्तम् अथ C (in marg.) स्थापनं कार्यं instead of मन्थनं कार्यं of B C.

न्यतरस्मिन् सन्ध्याकाले गार्हपत्योल्मुकमधरारणिं कृत्वा उत्तरारण्यां मन्थनं कुर्यात्। एवमेव शाखान्तरे श्रुतत्वात्।

१५. अथ चेद्गार्हपत्योल्मुकं मन्थनयोग्यं न विद्यते ततो ऽरणी गार्हपत्यभस्मना संस्पृश्य गार्हपत्यं मथित्वा विहृत्याग्नये तपस्वते जनद्वते पावकवत्पुणयेष्टिं कृत्वा ततो होमः।

१६. पुरोनुवाक्या।

१७. इति याज्या। पुनरेतच्छ्रुत्यन्तरम्। यद्योभावनुगतावादित्यो ऽभिनिम्रोचेदभ्युदियाद्वा[1] पुनराधानमेव तत्र प्रायश्चित्तिरिति वचनसामर्थ्यात्तेन सह विकल्पः। वक्ष्यमाणसूत्रोक्तो वा तस्यापि विषय इति।

१८. इत्येवंप्रकार एवाग्न्यभावे सायमभ्यस्तमितयोरनुगतयोस्तद्वस्थयोः प्रातरभ्युदितयोः प्रायश्चित्तमुच्यते। किं तत्। अग्न्याधेयेनोत्पादयेत्। अनन्तरमेव। न वसन्ताद्यपेक्षेत। तथा अभ्यस्तमितयोरिति निमित्तान्तरम्। प्रातर्होमकाले ऽनुगतयोरभ्युदितयोस्तद्वस्थयोरेवाभ्यस्तमितयोरग्न्याधेयमेव तत्र प्रायश्चित्तम्। तथा अनुगमादन्येन कारणेन नष्टयोर्दस्युभिरदर्शनं नीतयोरनुपलभ्यमानयोर्महता वा भयेन पुनराधानाप्राप्तयोरग्न्याधेयमेव प्रायश्चित्तम्। केचिदध्याहारेण सूत्रावयवं वर्णयन्ति। अन्येन वा कारणेनोत्पन्नयोर्नष्टयोरिति कारणशब्दमध्याहारं कृत्वा। अरणी एक कारण प्रसिद्धमेव। अन्यत्कारणमुपावरोहणमन्त्रः। उपावरोह जातवेद इति। तत्र लौकिके ग्रावुपावरोहणे कृते प्राक् समारोपादनुगत-

1 A B (?) स्तमियादद्य०।

योरन्याधेयमेव प्रायश्चित्तम्। द्विवचनमप्यविवक्षितम्। अन्यभाव-मात्रं विवक्षितमिति।

---

२०.

१. उपसृष्टा सवत्सीकृता यद्यग्निहोत्री धेनुरा दोहनिष्पत्ते-र्वाश्येत ततः सूयवसाद्भगवती हि भूया इत्यनेन मन्त्रेण घासमुष्टिं तस्यै दद्यात्। तदाऽऽहुर्यस्याग्निहोत्री दोह्यमाना वाश्येत किं तत्र कर्म का प्रायश्चित्तिरिति स्तम्बमाच्छिद्य ग्रासयेदेतदेव तत्र कर्मेति श्रुतपथे।

२. यद्युपसृष्टैवोपविशेत्तत आर्द्रदण्डप्रहारेणोत्थापयेत्। यस्मा-द्भीषेत्येवमादिना मीढुष इत्येवमन्तेन मन्त्रेण उत्थाप्य च। उद-स्थाद्देव्यदितिरित्येवमादिना वरुणाय चेत्येवमन्तेन मन्त्रेण तामेवानु-मन्त्रयेत्।

३. अथवा येयमुपविष्टा तामुत्थाप्यादुग्धां देयाय ब्राह्मणाय दद्यात्। अर्थादनृत्विजे। ऋत्विक् तु नैव देयो ऽनाचारात्। तथा च जैमिनिः। देयो वा चोदनादित्याह।

४. हविरेव संस्कृतं होमार्थं द्रव्यम्। तस्मिन् भूमौ पतित इदं प्रायश्चित्तम्। अच्छायं वो मरुतः श्लोक एतु एतयर्चा[1]। तथा ययोरोजसेत्यादिना पूर्वहृतावित्यन्तेन अद्भिरुपनिनीयाश्नीयेत्यर्थः। ततो ऽस्कानद्येत्यादिना अद्भिरित्यन्तेन स्कन्नमनुमन्त्रयेत।

५. यद् ब्राह्मणो भोज्याभोज्यनिन्दकः साधुकारी न भक्षयेदेत-

---

१ C has सर्वा instead

दुष्टस्य लक्षणम्। अनेन दुष्टमध्यवस्येच्चान्येन। लक्षणग्रहणात्कीटाद्युपहतस्य हविषो न मृत्प्रक्षेपेण शुद्धिः।

६. तस्य दुष्टस्य प्रतिपत्तिरप्यपेक्षस्याप्सु प्रक्षेप इत्यर्थः।

७. दुष्टादन्यस्मिन्नदुष्टे शेषे विद्यमाने प्रयोजनसमर्थे तेन समापनं कार्यम्।

८. यत्र तु मध्यादवद्यति पूर्वार्धादवद्यतीत्यादिवचनं तत्र मध्यपूर्वार्धादिर्नाशदोषापहारे शेषस्य निष्प्रयोजनत्वादभाव एव। अतस्तत्स्थान्यदुत्पादयेन्मध्यपूर्वार्धाद्यर्थत्वात्संस्काराणाम्[1]।

९. प्रक्रान्तश्रुतद्रव्यापहारे तज्जातीयासंभवे यद्रूपतो रसतश्च सामान्यतमं तत्कार्यक्षमं च मन्येत तत्प्रतिनिदध्यात्। कुतः। यागचोदनयैव द्रव्यस्य प्राप्तत्वान्नियममात्रे व्रीह्यादिश्रुतयः। न च नियमानुरोधेन प्रधानकर्मणो हानिर्युक्ता तस्मात्प्रतिनिधिनापि प्रक्रान्तं परिसमापयितव्यम्।

१०. वाचनिकानामपि प्रतिनिधीनां एष एव धर्मो यः पूर्वसूत्रोक्तस्ततो नेदिष्ठिनो यजमानधर्माः। तथाच कात्यायनः। स तद्धर्मकर्मयोगादिति।

११. अयं चापरः प्रतिनिधेर्धर्मः। अविकारः अनूहः शब्दानाम्। श्रुतद्रव्याभिधायिनां शब्देनाभिधानं न प्रतिनिधिद्रव्याभिधायिनाम्। तद्यथा। छागाभावे मेष उपादीयमाने होता यजदग्नीषोमौ छागस्येव ब्रूयात्। नन्वेवमनभिधानान्मन्त्रप्रयोगानर्थक्यं स्यात्। उच्यते। तद्धि प्रतिनिधिद्रव्यं श्रुतद्रव्यबुद्ध्यैवोपादीयते।

१ A C (ms. I.) °र्थाद्यर्थत्वा°।

न द्रव्यान्तरबुद्ध्या। उद्दश्य क्रियमाणो द्रव्यान्तरबुद्धिं जनयेत्तस्माद्-विकारः शब्दानाम्।

१२. अप्रत्तदैवतं यावद्देवतामुद्दिश्य न प्रक्षिप्तं तादृशे दुष्टे हौचस्थानावृत्तिः। किं कारणम्। अप्रंसर्गितत्वात्। प्रोक्षणादेस्तु संस्कारस्यावृत्तिर्भवति। सांनिपातिकत्वात्। अत उच्यते। अन्यद्धविः संस्कृत्य प्रयच्छेद्देवताया इति।

१३. प्रक्षिप्तावदानशेष यदि दुष्टं स्यात्ततस्तस्मिन्प्रत्तदोषे सति हविरन्तरस्थानावृत्ति'। अनुत्पादनमित्यर्थः। प्रधानार्थं हि हवि-रुत्पाद्यते न गुणार्थमतः शेषभाजां स्विष्टकृदादीनां लोपो भवति।

१४. यत्परं कार्यमारादुपकारकं न प्रतिपत्तिकर्म तदाज्येन कर्तव्यम्। तद्यथा निष्काषहोम उच्यते। [1]पयसाग्निहोत्राहुता प्रव-र्ग्यशेषहोम इत्येवमादीन्युदाहरणानि। यत्पुनः पुरुषार्थं यथा हविरुच्छिष्टाशनो हवि.शेषभच इति तच प्रतिनिषिध्यते। समाप्तिः श्रेयसीति ह स्माह कौषीतकिरिति (८.९) श्रुतेः।

१५. चोदिताभ्यो या अन्यास्तासु देवतास्विष्टासु अप्रत्तादा दुष्टद्रव्येणेष्टासु अपरिसमाप्ते तन्त्रे प्रदानमावर्तते। पुरोनुवाक्या शेषो याज्या च। प्रदीयते अनेनेति प्रदानम्।

१६. अशेषे तन्त्रे सकला इष्टिरावर्तते दुष्टादुष्टसमुदाये ऽप्या-वृत्तिः श्रुतत्वात्।

१ A पयसा अग्निहोत्राहुताप्रवर्ग्य C पयसा यज्ञो अग्निहोत्राहुताप्रवर्ग्यशेष, sec. h del यज्ञो B पयसाघञोग्निहोत्राहुता।

१७. यो यस्योपकरोति स तस्य गुण उच्यते। यथा उद्धरणमन्त्रो ऽग्नेः। अवद्योतनादयश्च संस्कारा हविषः। तत्र प्रमादादुद्धरणमन्त्रस्य लोपे उद्धरणस्यावृत्तिर्न भवति। अवद्योतनादीनां च प्रमादादकरणे ऽन्यस्य हविषः पुनःक्रिया न भवति। कुतः। संनिपातप्रधानत्वात्। संनिपतन्ति यस्मिन्गुणाः स संनिपातस्तस्य प्रधानत्वादनावृत्तिः। प्रधानवशवर्तिनो हि गुणाः। न गुणवशवर्ति प्रधानम्। ननु सर्व एव धर्माः प्रकरणात्प्रधानात्पूर्वप्रयुक्तास्ततश्चावद्योतनादयस्तादर्थ्येन कस्मान्न क्रियन्ते। उच्यते। संनिपत्य हि ते प्रधानस्योपकुर्वन्ति। नान्यथेति।

१८. यत्र मन्त्रेणाकृतिरुक्ता यथा प्रजापत इति चतुर्थीति सा प्रमादात्प्रजापतये स्वाहेति कृता प्रजापते न त्वदिति मन्त्रो न प्रयुक्तः। क्वचित्प्रदानं याज्यापुरोनुवाक्याभ्यां विना प्रत्तम्। तत्र पश्चान्मन्त्रः प्रयोक्तव्यो न प्रयोक्तव्य इति संदेह आह। मन्त्रं नानुजपेत्। कुतः। अभिधानसंस्कारद्वारेण स्मारयन्त उक्ता मन्त्रा उपकुर्वन्ति। अतिक्रान्तश्च स कालस्तस्मान्नानुजपेत्।

१९. अनुजपेन्मन्त्रमित्येवं जातूकर्ण्य आचार्यो मन्यते। आचार्यग्रहणं विकल्पार्थम्। उभयथा श्रुतेः। प्रयोगनियमाददृष्टम्।

२०. चोदिताभ्यो या अन्यास्ताभ्यो हविर्ग्रहणे कृते ऽन्यासु वा आवाहितासु न ग्रहणं नावाहनं चाङ्गीकुर्यात्। किं तर्हि चोदिताभ्यः प्रयच्छेत्। कुतः। चोदितायाः[1] प्राधान्यात्। यास्त्वावाहिता हविर्ग्रहणे वा भ्रान्त्या संकीर्तितास्ता आज्येन यजेत्। श्रुत्यन्तरात्।

---

१ A चोदभावा।

## २१.

१. इष्टयो दर्शपूर्णमासाद्याः। पशुबन्धा अग्नीषोमीयप्रभृतयः। बहुवचनं पशुबन्धानामनेकप्रकारत्वात्। सोमे चेति जातावेकवचनं। एतेषु प्रायश्चित्तं ब्रह्मा जुहोति। कुतः। एतेष्वेव ब्रह्मणो वरणं लिङ्गात्। तदाहुः किंविदं किञ्छन्दसं ब्रह्माणं वृणीतेत्यध्वर्युमित्येके स परिक्रमाणां चेत्रज्ञो भवतीति। छन्दोगमित्येके तथा ह्यस्य त्रिभिर्वेदैर्हविर्यज्ञाः संस्क्रियन्त इति। प्रायश्चित्तं ब्रह्मा जुहोतीत्येतदपि श्रुतेरेव। यद्वै यज्ञस्य स्खलितं वोल्बणं वा भवति ब्रह्मण एव तन्माहुस्तस्य चय्या विद्यया भिषज्यतीति (कौ० ब्रा० ६. ११. १२)।

२. इष्टिपशुबन्धेषु सोमे चेत्यनुवर्तते। ऋग्वेदविहिते कर्मणि यदि विध्यपराधो भवेद्भूः स्वाहेत्येतावता मन्त्रेण गार्हपत्ये जुहुयात्। अथ यद्यृच्युल्वणं स्याच्चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये प्रायश्चित्ताहुतिं जुहुयाद्भूः स्वाहेति (६. १२) श्रुतेः।

३. यदि यजुर्वेदविहितकर्मसंबन्धी विध्यपराधः स्यात्ततो भुवः स्वाहेत्येतावता मन्त्रेण प्रायश्चित्ताहुतिं जुहुयादन्वाहार्यपचने ऽग्नौ।

४. सोमे तु वितते आध्वर्यवे भ्रेष आग्नीध्रीये जुहुयात्। अथ यदि यजुष्युल्बणं स्याच्चतुर्गृहीतमाज्यं गृहीत्वान्वाहार्यपचने प्रायश्चित्ताहुतिं जुहुयात् हविर्यज्ञ आग्नीध्रीये सौम्ये ऽध्वरे भुवः स्वाहेति (कौ० ब्रा० ६. १२) श्रुतेः। प्रागाग्नीध्रोत्पत्तेर्दक्षिणाग्नौ। आहवनीय इत्यपरे।

५. सामवेदविहिते कर्मणि चेद्विध्यपराधः स्यात्स्वः स्वाहेत्येतावता मन्त्रेणाहवनीये जुहुयात्। आहवनीयग्रहणं पूर्वयोराग्न-

ह्यानिवृत्त्यर्थम्। अथ यदि साम्युल्वणं स्याच्चतुर्गृहीतमाज्यं गृहीत्वाहवनीये प्रायश्चित्ताहुतिं जुहुयात्स्वः स्वाहेति श्रुतेः।

६. यत्र वेदविशेषत्वेन दोषो न विज्ञायते। यथा। यज्ञोपवीतिना कर्तव्यं बद्धशिखेन कर्तव्यमिति तस्यापराधे भूर्भुवः स्वः स्वाहेत्येतावता मन्त्रेणाहवनीय एव जुहुयात्। आहवनीय सर्वाहुतीनामिति परिभाषितत्वात्। अथ यद्यविज्ञातमुल्वणं स्याच्चतुर्गृहीतमाज्यं गृहीत्वाहवनीय एव प्रायश्चित्ताहुतिं जुहुयाद्भूर्भुवः स्वः स्वाहेति श्रुतेः।

७. उपस्थानासंभवे प्रतिनिधिरयम्। प्रायश्चित्तप्रतिनिधोः प्रकरणात्। यदि कथं चित्प्रवत्स्यन्नग्नीन्समीक्षत इत्येवमादिकं विधिमकृत्वा प्रवासो भवति ततो ऽनुपस्थाय प्रसर्गे ऽग्निभिः सह वियोगे प्रवासे इत्यर्थः। प्रतिदिशमुपस्थानम्। यस्यां दिश्यग्निहोत्रगृहं तत्प्रत्यभिमुखः कुर्यात्।

८. अग्नीनुपस्थायाप्रसर्गे यथा प्रोष्यायन्नित्युक्तं तथैव कुर्यात्। प्रतिदिशमुपस्थायाप्रसर्गे प्रतिदिशमेव कुर्यात्। तत इह सूत्रारम्भान्तृणापचयनमग्निदाधाने न भवतो ऽर्थलोपात्।

९. समारोहयमाण इत्यादिना समारोह्यप्रवासे सति न लौकिक उपावरोह्योपस्थानम्। किं तर्हि मन्थनं कृत्वोपस्थानं कुर्यादिति वाक्यशेषः।

१०. अनुपस्थाय प्रसर्गे। यथा गार्हपत्यस्तयोराहवनीयदक्षिणाग्न्योरुपस्थानं तयारप्योरपि प्राप्तं प्रतिषिध्यते।

११. अन्येन कारणेन अनिच्छया वा निमित्तभूतया शक्ति-

हौत्रो ऽपि कर्मभ्यो ऽग्नीन्नोत्सृजेत् । कर्मार्था अग्नयस्तदशक्तौ निःप्रयोजनं धारणमिति कृत्वा कस्य चिदुत्सिसृक्षा स्यात्तन्निवृत्त्यर्थं वचनम् ।

१२. अनुत्सृजन् किं कुर्यादित्याकाङ्क्षित आह । यदाक्रियासमर्थस्तदा कालातिक्रमनिमित्तं प्रायश्चित्तं कृत्वा । तुशब्दाच्छाखान्तराम्नातमपि । ततो ऽतीतानि कर्माणि प्रतिनिदध्यात् । प्रतिनिधिश्च शाखान्तरे विहितः । तद्यथा[1] ।

चतुर्दश चतुर्होतानि सकृदुन्नयते हविः ।
एका समित्सकृद्धोमो ऽर्धमासाय कल्पते ॥

तस्यायमेव विषयः । द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति ।

## इति शाङ्खायनश्रौतसूत्रभाष्ये तृतीयो ऽध्यायः समाप्तः ।

---
१ C

# अथ चतुर्थो ऽध्यायः[1]।

१.

उक्तानि प्राक्सौमिकानि कर्माणि। तेष्वेव याजमान वक्तव्यम्। तदुच्यते।

१. व्रत्यमिति वक्ष्यमाणनियमवद्भोजनाद्युच्यते[2]। तत्पत्नीयजमानौ चरतः। तयोर्हि याजमानमिति न्यायसिद्धत्वात्। तत्र भोजनस्य कालनियमं तावदाह।

२. वत्सापाकरणमिति गोमिनां प्रसिद्धः कालो ऽपराह्णः। तत. प्राग्वक्ष्यमाणमश्नीयाताम्। किं पुनस्तद्द्रव्यमित्याकाङ्क्षित आह।

३. उक्तेभ्यो यदन्यत्तद्द्रव्यम्। मांसादीन्यव्रत्यानि। तस्मादेतेषां यथाविषयमुपभोगवर्जनम्। अन्यथाकरणे ऽव्रत्यं वा चरित्वेति व्रातपतीष्टिः। येन च द्रव्येण यक्ष्यमाणः स्यादिति प्राधान्येन यथागमाधन तज्जानीयात्। यदन्यत्तद्द्रव्य तदश्नीयात्। यक्ष्यमाण इति च भविष्यत्कालनिर्देशाद्यागात्पूर्वधर्मत्वचरणम्।

---

१ A adds वरदत्तसुतो भाष्यमानर्तीयो ऽध्यायो व्रतीयम्। २ C वक्ष्यमाणम्।

## २.

१. अग्न्यन्वाधानमिति नाम्ना कर्म शाखान्तरे प्रसिद्धम्। तदुच्यते। यजमानाधिकारो ऽनुवर्तते। न पत्न्याः सामर्थ्यात्। अग्नीन्विहृत्य प्रादुष्कृत्य वा नित्यधारी तानन्वादधाति समिधः। कथमेतत् ज्ञायते समिध इति। आदधातिशब्दात्। क्वैतत्कर्म। उच्यते। इष्टिपशुबन्धेषु। कः पुनरस्येष्टिपशुबन्धाङ्गस्य कर्मणः[१] कालः। उच्यते। पूर्वेद्युः। पूर्वस्मिन्नहनीत्यर्थो ऽर्थाद्विभक्तिर्विपरिणम्यते। इष्टिपशुबन्धेभ्यः पूर्वेद्युरिति। उपदिष्टः कर्ता होमद्रव्यं कालश्च। विधिमिदानीमुपदिशति।

२. आहवनीये ऽग्नौ महाव्याहृत्योत्तमया स्वरित्येतया समिधमादध्यात्। समिदाधानमन्त्राणां चेत्यन्ते स्वाहाकारः। महाव्याहृतयो विशिष्टक्रमाः सार्थवादाः व्यस्ताः समस्ता उक्ताः। तत्र सूत्रकारस्य व्यवहारः।

३. गार्हपत्ये ऽग्नौ प्रथमया महाव्याहृत्या समिधमादध्याद्भूरित्येतया।

४. मध्यमया महाव्याहृत्या भुव इत्येतया दक्षिणाग्नौ समिधमादध्यात्।

५. इंडे चिष्ण्यग्निषु चशब्दात्समुच्चिताः[२] प्रत्येकं मन्त्रवत्या सह तूष्णीमादध्यात्।

६. पूर्वोक्ताः समिधो नव। दशमीं समिधमाहवनीय आद-

१ A om चङ्ग। २ A ०शब्दात्समिधस्ता प्र० B ०शब्दात्समुच्चिता C ०शब्दात्समुच्चितशब्दा' प्र०, in marg समिच्चिता'।

# अथ चतुर्थोऽध्यायः[1]।

—

## १०

उक्तानि प्राक्सौमिकानि कर्माणि। तेष्वेव याजमानं वक्तव्यम्। तदुच्यते।

१. व्रतमिति वक्ष्यमाणनियमवद्भोजनादुच्यते[2]। तत्पत्नीयजमानौ चरतः। तयोर्हि याजमानमिति न्यायसिद्धत्वात्। तत्र भोजनस्य कालनियमं तावदाह।

२. वत्सापाकरणमिति गोभिलीयं प्रसिद्धः कालोऽपराह्णः। ततः प्राग्वक्ष्यमाणमश्नीयाताम्। किं पुनस्तद्द्रव्यमित्याकाङ्क्षित आह।

३. उक्तेभ्यो यदन्यत्तद्द्रव्यम्। मांसादीन्यव्रत्यानि। तस्मादेतेषां यथाविषयमुपभोगवर्जनम्। अन्यथाकरणेऽव्रत्यं वा चरित्वेति व्रातपतीष्टिः। येन च द्रव्येण यक्ष्यमाणः स्यादिति प्राधान्येन यद्यागसाधनं तच्चाश्नीयात्। यदन्यत्तद्द्रव्यं तदश्नीयात्। यक्ष्यमाण इति च भविष्यत्कालनिर्देशाद्यागात्पूर्वेद्युर्व्रतचरणम्।

———

१ A adds वरदराधुनो भाष्यमामर्षयो ऽकरोत्तम्। २ C वक्ष्यमाणम्।

## २.

१. अन्वाधानमिति नाम्ना कर्म शाखान्तरे प्रसिद्धम्। तदुच्यते। यजमानाधिकारो ऽनुवर्तते। न पत्न्याः सामर्थ्यात्। अग्नीन्विहृत्य प्रादुष्कृत्य वा नित्यधारी तानन्वादधाति समिधः। कथमेतत् ज्ञायते समिध इति। आदधातिशब्दात्। क्वैतत्कर्म। उच्यते। इष्टिपशुबन्धेषु। कः पुनरस्येष्टिपशुबन्धाङ्गस्य कर्मणः[1] कालः। उच्यते। पूर्वेद्युः। पूर्वस्मिन्नहनीत्यर्थो ऽर्थाद्विभक्तिर्विपरिणम्यते। इष्टिपशुबन्धेभ्यः पूर्वेद्युरिति। उपदिष्टः कर्ता होमद्रव्यं कालश्च। विधिमिदानीमुपदिशति।

२. आहवनीये ऽग्नौ महाव्याहृत्योत्तमया स्वरित्येतया समिधमादध्यात्। समिदाधानमन्त्राणां चेष्यन्ते स्वाहाकाराः। महाव्याहृतयो विशिष्टक्रमाः सार्थवादाः व्यस्ताः समस्ता उक्ताः। तत. सूत्रकारस्य व्यवहारः।

३. गार्हपत्ये ऽग्नौ प्रथमया महाव्याहृत्या समिधमादध्याद्भूरित्येतया।

४. मध्यमया महाव्याहृत्या भुव इत्येतया दक्षिणाग्नौ समिधमादध्यात्।

५. इद्धे विहृतेष्वग्निषु यशब्दात्समुच्चिताः[2] प्रत्येकं मन्त्रवत्या सह तूष्णीमादध्यात्।

६. पूर्वोक्ताः समिधो नव। दशमीं समिधमाहवनीय आद-

---

[1] A om च॰। [2] A ॰शब्दात्समिधमा स॰ B ॰शब्दात्समुचिता C ॰शब्दात्समु चितमध्वा स॰, in marg समिदिता।

ध्यात्। समस्ताभिर्महाव्याहृतिभिर्भूर्भुवःस्वरिति। एतत्पैङ्ग्यमग्न्यन्वाधानम्।

७. पवान्तरमेतदग्न्यन्वाधानस्य। महाव्याहृतीनां मन्त्राणां स्थाने तेनैवाग्निक्रमेण चतस्र ऋचो विहव्यस्य ऋग्येरेकदेशभूताः। आम्नायक्रमेण प्रथमा प्रयोक्तव्या समिदाधानमन्त्रत्वेन। तद्यथा। ममाग्ने वर्चो विहवेषु अस्त्वित्यनयाहवनीये समिदाधानम्। ततस्तूष्णीं द्वे। मम देवा विहवे सन्तु सर्व इत्यादिकया गार्हपत्ये। ततस्तूष्णीं द्वे। मयि देवा द्रविणमा यजन्तामित्येतया दक्षिणाग्नौ। ततस्तूष्णी द्वे। मह्यं यजन्तु मम यानि हव्येत्यादिकया दशमीमाहवनीये।

८. यो विहव्यस्य शेषो देवीः षलुर्वीरुरु नः कृणोतेत्येवमादिकः षलर्चः सह खिलिकया विहव्यस्येत्यृषिनिर्देशात् तेन शेषेणाग्नीनामुपस्थानं प्रकरणात्। एतत्कौषीतकमग्न्यन्वाधानम्। अपरः कल्पो ऽग्न्यन्वाधानस्य उच्यते।

९. अप नः शोशुचदघमित्येताः सप्त। अग्ने नय सुपथा राये अस्मानित्येका। यस्त्वा हृदा कीरिणा मन्यमान इत्येका। त्वं नो अग्ने अधरादुदक्तादित्येका। एवमेता दश। एताभिर्वा दशभिराहवनीयादिषु पूर्वोक्तेन क्रमेण समन्त्रिकास्तिस्रस्तिस्रः समिध आधाय दशम्याहवनीय आदध्यात्।

१०. प्राग्नये वाचमीरयेति पञ्चकं सूक्तम्। इमं स्तोममर्हते जातवेदस इति षोडशकम्। आभ्यां सूक्ताभ्यामुपस्थानमग्नीनाम्। आरुणमेतदग्न्यन्वाधानम्।

११. पूर्वोक्तेनैव क्रमेण इयापि समिधश्चष्णीमादध्यादित्येतन्माण्डूकेयमन्वाधानम्। आचार्यग्रहणं विकल्पार्थम्।

१२. यत्पूर्वमुक्तं महाव्याहृतिभिरन्वाधानं तत्पैङ्ग्यं मतम्। आचार्यग्रहणं कौत्यर्थम्।

१३. विहव्येन यदुक्तमन्वाधानं तत्कौषीतकं मतम्। आचार्यग्रहणं पूजार्थम्।

१४. अथ न ग्रोम्युचद्दधमित्येवमादिकमन्वाधानमारुणं मतम्। तदेतदनेकविकल्पमन्वाधानं शाखान्तरादाचार्येणोपसंहृतम्।

---

## ३.

१. पिण्डपितृयज्ञ इति वक्ष्यमाणस्य कर्मणो नामधेयं शा ... र्थं पिण्डप्रदानप्राधान्यदर्शनार्थं च। कालमिदानीमाह। अपराह्ण ऽमावास्याया कर्तव्य इति वाक्यशेषः। कथमित्याकाङ्क्षित आह।

२. स्वमचरेण पात्राणि नयेत्। यथोद्दिष्टान्यविरोधात्।

३. गार्हपत्यस्याग्नेः पश्चाद्दक्षिणाग्रेषु दर्भेषु[१] स्फ्यं प्राश्नं निदध्यात्। कुत एतत् प्राश्नमिति। दक्षिणाग्रेषु कुशेष्विति न्यायमात्रस्य पुनर्वचनात्।

४. तस्यैव स्फ्यस्योपरिष्टात्पात्र्याधारान्वोहीन्निदध्यात्।

५. तस्यैव स्फ्यस्य पुरस्ताद्दक्षिणामुखे शूर्पे स्थालीं निदध्यात्।

६. आच्य सव्यं जानु भूमौ निपात्य। नीचा मुष्टिना अधो-

---

१ A कुशेषु।

सुखहस्तमुष्टिनेत्यर्थः। व्रीहीन्गृह्णाति। सकृद्विशेषावचनात्। पितॄन्मनसानुस्मरन्[१]। क्व गृह्णाति। स्थाल्यां शूर्पस्थायां। संनिधानात्। स जघनेन गार्हपत्यं प्राचीनापवीती[२] भूत्वा दक्षिणामीन एवं गृह्णातीति च शतपथे। कियत्परिमाणान्[३] गृह्णातीत्यत आह।

७. नीचा मुष्टिना सकृदपि गृह्णन् आर्यनोपायेन तथा गृह्णीयात् यथा स चरुर्भवति। न यवागूः। कुत एतत्। स इति वचनात्। किंविशिष्टश्चरुः। अधोविलाप्लुतः। स्थालीविलादध आप्लुतश्च। आङीषदर्थे। ईषच्छृत इत्यर्थः। अधोविल आप्लुतश्चेत्यधोविलाप्लुतः। अपूर्णस्थालीको[४] मन्दस्विन्नश्चेत्यर्थः[५]। एवमवस्थो यथा भवति तथा व्रीहीन् गृह्णीयात्।

८. पत्न्या एकवारं कण्डितानित्यर्थः[६]। ईदृशांस्तण्डुलान्।

९. पूर्वोक्तलक्षणं चरुम्।

१०. असंस्कृतेन घृतेन चरुमभिघार्य। कुत एतत् असंस्कृतेनेति। अदेवत्वात्[७]।

११. तं चरुं प्रतीच्यां दिश्युद्वासयेत्।

१२. अवमवि अप्रदक्षिणमित्यर्थः। परिसमुह्य[*] गृह्योक्तेन विधिना। प्रकृतत्वाद्दक्षिणाग्निं परिस्तीर्यानियतार्थैर्दर्भैः। सर्वतः पर्युक्ष्य[८]। क्रियाचयमप्येतदप्रदक्षिणं कुर्यात्। यावदुक्तं चात्र कर्मप्रकृतिविकाराभावात्।

---

१ A B मनसा स्मरन। २ A om च। ३ A B कियत्परिमाणान C °परिमाणेन। ४ A C (sec. h.) °स्थालीपाको। ५ A मन्दपक्वश्चे° B मन्दस्तृतश्चे° ६ A C (orig.) खण्डितानि° B खण्डिता। ७ A B अप्रदेवत्वात्। ८ C (sec. h.) पर्युक्ष्य।

१३. दक्षिणं जानु भूमौ पातयित्वा।

१४. यज्ञोपवीती विशिष्टविन्यासशरीरस्थसूचादिः[1]। प्राङ्मुख आसीनो मेचणेन दर्व्याकारेण प्रादेशमात्रेण प्राङ्मुखेन यज्ञियेन वक्ष्यमाणा आहुतीर्जुहोति। इह यज्ञोपवीतीति प्राङासीन इति वचनात्सर्वं प्राचीनापवीती[2] दक्षिणामुखः कुर्यात्। पत्न्या सक्तुफलीकृतानित्यारभ्य जुहोतीत्यन्तं सूत्रम्। तथापि क्वाप्रत्ययान्तानि खण्डशो व्याख्यायन्ते। सौत्रान् होममन्त्रानिदानीमाह॥

---

४.

१. स्वाहाकारान्तैस्त्रिभिर्मन्त्रैः प्रतिमन्त्रं मेचणेनाङ्गुष्ठपर्वमात्रमवदाय तिस्र आहुतीर्जुहोति।

२. इत्यारभ्यावाचीनपाणिनेति सूत्रान्तः। खण्डशस्तु व्याख्यायन्ते क्वान्तानि प्रतिपत्तिलाघवार्थम्। होमान्ते मेचणमनुप्रहरेत्। अग्नौ मेचणमभ्यादधाति तत्स्विष्टकृद्भाजनमिति शतपथश्रुतेः (२.४.२.)। आहुत्यङ्गत्वादनुशब्दाच्च यज्ञोपवीत्येव।

३. दक्षिणाग्नेर्दक्षिणस्यां दिशि स्फ्येनोद्धन्यादपहता इत्येवमादिना मन्त्रेण वेदिषद इत्येवमन्तेन। विसर्जनीयान्तो मन्त्रः। आध्वर्यवे तथा दृष्टत्वात्। दक्षिणासंस्थं सकृदुन्मार्जनम्। दक्षिणान्यायानि पित्र्याणीति परिभाषितत्वात्। अथ दक्षिणेनान्वाहार्यपचनं सकृदुल्लिखति तद्वेदिभाजनमिति शतपथश्रुतेः।

४. तदुन्मृष्टमुदकेनोपसिञ्चेत्।

---

१ A B सूत्रादि। २ Bom प।

५. ये रूपाणीत्यादिना मन्त्रेण दक्षिणाग्न्युल्मुकं यामि उन्मृष्टस्य दक्षिणार्धे निदध्यात्। कुत एतत् दक्षिणाग्न्युल्मुकमिति। प्रकृतत्वात्। याम्रीति[१] मन्त्रवर्णात्। अथ परस्तादुल्मुकं निदधाति स निदधाति ये रूपाणीति शतपथश्रुतेः (२.४.२.१४)।

६. तस्मिन्नुन्मृष्टे कुशान्निदध्यात्। किंविशिष्टान्। मूले सकृच्छिन्नान्। अथ सकृदाच्छिन्नान्युपमूलं दिनानि भवन्तीति शतपथे। दिनानि च्छिन्नानि।

७. असाविति सर्वनाम्नः स्थाने। पितृनामामन्त्रितमुच्चार्य अवनेनिक्ष्व ये च त्वामत्रानु अनेन मन्त्रेण कुशेष्वाधारेष्वपो निषिञ्चेत्। अवाचीनपाणिना अवाचीनहस्तेन[२] पितृतीर्थेन इत्यर्थः।

८. एवमवस्थेनैव हस्तेन दक्षिणतःपूर्वस्मादवनेजनप्रदेशात्पितामहस्यामन्त्रितनामोद्देशः। पूर्वकेण मन्त्रेणावनेजनं कुर्यात्।

९. एवं दक्षिणत इति वर्तते। प्रपितामहस्यामन्त्रितनामोद्देशः पूर्ववत्।

१०. अयमपि पितृनामोद्देशपूर्वको ऽवनेजनवत्। एतत्त इत्येतावता भिन्नः। तथापि संदेहव्युदासार्थः सकलः पठितः। अनेन मन्त्रेण कृतशेषपिण्डान्[३] यथावनेजितमिति वचनात्तेनैव क्रमन्यासेन निदध्यात्।

११. उभौ पिण्डौ निदध्यादेकस्मिन् स्थाने। पितृभेदे पितृद्विले। पुत्रिकापुत्रादिविषयं च पितृद्वित्वम्। तथा मनुनोक्तम्।

---

१ A inserts ष्ठ। २ C यथाथा हस्तम—C inserts in marg दक्षिणत पूर्वस्मात्। ३ C adds in marg उदात्त।

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरन्।
स एव दद्यात्तत्पिण्डं पित्रे मातामहाय च॥ इति

(८.१३१) एवं द्विगोत्रत्वे पितामहप्रपितामहस्थानयोरपि द्वौद्वौ पिण्डौ निदध्यात्। अवनेजनमप्येवं तादर्थ्यात्।

१२. जीवपितृकस्यैतत्कर्म न भवति। प्रेतेभ्यो ददातीति तन्त्रान्तरदर्शनात् वाक्यशेषाच्च। अथो पराम्र वै परावतं पितरो गता इति।

इमं जीवेभ्यः परिधिं दधामि
मैषां नु गादपरो अर्थमेतम्।
शतं जीवन्तु शरदः पुरूचीर्-
अन्तर्मृत्युं दधतां पर्वतेन॥

इति जीवेभ्यश्चैतां पितृभ्यश्च मर्यादां करोत्यसंभेदाय। तस्मादु हैतज्जीवाश्च पितरश्च न दृश्यन्त इति लिङ्गात्।

१३. जीवतान्तर्हितो जीवान्तर्हितः। को ऽसौ। पितामहादिः पित्रादौ जीवति[1]। तस्मा अपि पिण्डदानं न भवति। कुतः। न जीवन्तमतिददातीति श्रुतेः।

१४. जीवपितृकस्य पक्षान्तरम्। येभ्यः पिता पिण्डान्ददाति तेभ्यः पुत्रो ऽपि दद्यात्। तथा च श्रुत्यन्तरम्। पितापुत्रौ चेदाहिताग्नी स्यातां येभ्यः पिता दद्यात्तेभ्य पुत्रो ददातीति।

१५. न जीवपितुरस्तीत्यथैतत्पक्षान्तरम्। होमान्तो[2] वा पिण्डपितृयज्ञो[3] भवति।

---

१ A inserts सति। २ B in text and com. होमान्त। ३ ॰यज्ञ all MSS।

१६. अत्र पितर इत्यादिकं मन्त्रं जपेत्। अत्र जपत्यत्र पितरो मादयध्वं यथाभागं पितर आवृषायध्वमिति। यथाभागमश्नीतेत्येवैतदाहेति शतपथश्रुतेः। मन्त्रवर्णाच्चानुदेशो[1] ऽप्यवगम्यते।

१७. आसीन एव पर्यावृत्योदङ्मुखो भवेत्। अथ पराङ्पर्यावर्तते तिर इव वै पितरो मनुष्येभ्य इति श्रुतेः (श॰ २.४.२.२१)।

१८. आ तमनात् को ऽर्थः। आ उच्छ्वासाभिकाङ्क्षणात्। एवं चिरामिला ततः।

१९. पिण्डाभिमुखो भूत्वा अमीमदन्त पितर इत्येवमादिकं मन्त्रं जपेत्। स वा आ तमितोरासीतेत्यु हैक आहुरेतावान् ह्यसुरिति स वै मुहूर्तमेवामिलायोपपत्य जपत्यमीमदन्त पितरो यथाभागमवीवृषतेति शतपथश्रुतेः (२.४.२.२०)।

२०. यथापूर्वमवनेजनं कृतं तेनैव प्रकारेणावनेज्यानन्तरम्।

---

५.

१. नमो वः पितरो जीवायेत्यादिना दत्तेत्यन्तेन मन्त्रेण पितृभ्यो नमस्कुर्यात्पिण्डेषु पितॄन्मनसारोपयन्।

२. एतद इत्यादिना मन्त्रेण त्रयाणामपि पिण्डानामेकं सूत्रमुपरि क्षिपेत्। कार्पासमविशेषात्। तथा द्वितीयम्। तथा तृतीयम्। शाखान्तरोपदेशात्।

३. ऊर्जमित्येवमादिना पितॄनित्येवमन्तेन मन्त्रेणावनेजनोदकशेषं पिण्डसंनिधौ निनयेत्।

---

१ A ॰देशो।

४. पिण्डान्यथान्युप्तानेवावजिघ्रेत्। शाखान्तरश्रवणात्। यत्पुनः शतपथमथावजिघ्रन्ति प्रत्यवधाय पिण्डानित्यवधायावजिघ्रतीत्येतस्य प्रतिपादकम्। तेन महास्य विरोधः। इत्येवं सर्वशाखाप्रत्ययत्वे ऽपि प्रतिशाखं व्यवस्थयैव[1] याज्ञिका अनुष्ठानमिच्छन्ति। शाखानानात्वान्यथानुपपत्तेः। इतरथा सर्वं एवोपदेशः शापेच.[2] स्यादिति। विकल्पपक्षे ऽपि स्वशाखोक्तविधिः पक्षे ऽपि भवत्येवेति न दोषः। तथा च।

ऊनो वाप्यधिको वापि यः स्वशाखोदितो विधिः।

तेन संतनुयाद्यज्ञं न कुर्यात्पारतन्त्रिकमिति (गोभिलपरिशि० २. ८९.)।

५. पिण्डानित्येतदधिकृतम्। निर्वापप्रदेशादादाय पिण्डान् पात्रे ऽवधाय प्राश्नीयात्। प्राशनविधानादवधानमर्थप्राप्तमुच्यते। कर्मसमाप्तौ प्राशनं यथा स्यादिति।

६. अथवा तान्पिण्डान् ब्राह्मणाय दद्यात्।

७. अप्सु वा पिण्डान् क्षिपेत्।

८. पुत्रार्थिनी पत्नी मध्यमपिण्डमश्नीयादाधत्तेत्येवमादिना अमदित्येवमन्तेन मन्त्रेण।

९. पिण्डानवघ्रायानन्तरमुल्मुकं दक्षिणाग्नौ कुर्यात्।

१० सकृदाच्छिन्नान् कुशान् दक्षिणाग्नावेवानुप्रहरेत्। अयं क्रमः शाखान्तरात्। [3]शतपथश्रुत्यानुक्रमान्यत्वं अग्नौ सकृदाच्छिन्नान्भ्यादधाति पुनरुल्मुकं विसृजतीति तथापि यथासूत्रमेव कर्तव्यमित्यत्राभिहित एव न्यायः।

---

१ A प्रतिशाखाव्यवस्थयैव B व्यवस्थयैव C प्रतिशाखं व्यवस्थैव। २ A शापेच।
३ A inserts यद्यपि।

११. पिण्डपितृयज्ञो ऽपराह्णे ऽमावास्यायामित्यमावास्याधिकारसुपजीवन्नाह। अथामावास्यायां यवाग्वैवाग्निहोत्रं जुहुयात्। सायंप्रातर्होमद्रव्यनियमार्थं वचनम्। एवमेव शाखान्तरे श्रुतत्वात्। ननु संनयतो ऽयं नियमो यवाग्वाग्निहोत्रहोमः संनयतस्तां रात्रिमिति (का॰ ४. २. १७.) श्रुतिश्च शतपथी सायंदोहप्रकरणएवाह। अथ यवाग्वैवैतां रात्रिमग्निहोत्रं जुहोतीति (१. ७. १. १०)। सत्यम्। अस्ति त्वन्याश्रुतिरविशेषेणामावास्यां[1] प्रकृत्य मैत्रायणीयानाम्[2]। यवागूमग्निहोत्रं जुहोतीति। सैवाचार्येण सूचिता।

१२. पर्वाणि पञ्चर्त्वयनसंवत्सरसन्धयः। पर्वणीति जात्यपेक्षमेकवचनम्। तत्रौपवसथ्यप्रयुक्तो[3] यजमानेन स्वयंहोमः कर्तव्यः। तथा चौपवसथ्यप्रयुक्ततां[4] स्वयंहोमस्यैकत्र शतपथी श्रुतिर्दर्शयति। स यदि ग्राम्या ओषधीरश्नाति पुरोडाशस्य मेधमश्नाति यद्यारण्या ओषधीरश्नाति बर्हिषो मेधमश्नाति यदि वानस्पत्यमश्नातीध्मस्य मेधमश्नाति यदि पयः पिबति सांनाय्यस्य चाज्यस्य च मेधमश्नाति यद्यपः पिबति प्रणीतानां मेधमश्नाति यदि नाश्नाति पितृदेवत्यो भवति। तदाहुः। किमशनमिति स्वय हैवैता रात्रिमग्निहोत्रं जुहुयात्स यद्धुत्वा प्राश्नाति तेनापितृदेवत्यो भवत्याहुतिर्वा एषा स यदेवैतामात्मन्याहुतिं जुहोति तेनो एतेषां मेधानां नाश्नातीति। ननु यद्येवं अग्निहोत्रायणिन.[5] पौर्णमास्यमावास्ययोः स्वयंहोमो न प्राप्नोति। सत्यम्। अविशेषेणैव श्रुतिरन्यत्रास्ति। तथा भविष्यति।

---

१ C ॰वास्य। २ A C (by marg add) मैत्रायणीयानां। ३ A तत्रौपवसथ॰। ४ A चौपवसथप्र॰। ५ यौनां A।

तद्यथा। एते ह वै रात्रीं सर्वा रात्रयः समवयन्ति या आपूर्यमाणपक्षस्य रात्रयस्ताः सर्वाः पौर्णमासीं समवयन्ति या अपक्षीयमाणपक्षस्य रात्रयस्ताः सर्वा अमावास्यां समवयन्ति स यो हैवं विद्वान् स्वयमुपवसथे जुहोति सर्वदा हैवास्य स्वयं हुतं भवतीति शतपथे। नन्वत्राप्युपवसथ इति श्रुतिः। नेत्युच्यते। पौर्णमास्यमावास्ययोर्निगमनमात्रमेतत्। स्वयंहोमस्तु पर्वणीति चशब्दादन्यत्र यदत्र शाखान्तरोक्तम्। किं च तत्। स्वयंहोमाशक्तौ उपासीनो ऽपसर्पणाशक्तावासनमधः[1]।

१३. एतेनैव धर्मेणैत्येवकारकरणाच्च गार्ह्येण। ततश्च इचिपतः पृथक्क्रियते। अनाहिताग्नेः कृतावसथ्यस्येत्यर्थः। पिण्डपितृयज्ञो भवतीति वाक्यशेषः। तथा च श्रुत्यन्तरम्। अथानाहिताग्निना कार्यः।

१४. पिण्डपितृयज्ञ इति वर्तते। विनापि दर्शाङ्गतया पिण्डपितृयज्ञो ऽवश्यं कर्तव्यः। तथा चानुपहृदर्शनम्। तदाहुर्यत्संवत्सराय संवत्सरसदो दीक्षन्ते कथमेषां पिण्डपितृयज्ञो ऽनन्तरितो भवतीत्यौपासनैरिति (१२.३.५.५) शतपथे।

---

## ६.

१. अग्नीनन्वादधातीष्टिपशुबन्धेषु (४.१.१) पूर्वेद्युरित्येतस्मात्सूत्रादिष्टिपशुबन्धेष्वित्यधिकारो ऽनुवर्तते। अग्निहोत्रं यथाग्नेव सायंप्रातरिति सायंप्रातर्ग्रहणमेतत्प्रयोजनम्। कथं नाम प्रातरग्नि-

---

[1] C in marg. पर्व; ॰धोमो or ॰धौमो all MSS.

होत्रे कृते शाखान्तरीयं ब्रह्मवरणं स्यात्। वृतस्य च ब्रह्मत्वमुपदिश्यते। तच्च दक्षिणतोन्यायम्। कर्मणः क्रियमाणस्य दक्षिणतः स्थितेन ब्रह्मत्वमनुष्ठीयमानं न्यायवद्भवति। कुतः। सामर्थ्यात्। अथवा न्यायशब्दः प्राये वर्तते। दक्षिणतोन्यायं ब्रह्मकर्म बाहुल्येनैव। तथा च श्रुतिदर्शनानि। तेन दक्षिणतो ब्रह्मासीत्तस्य दक्षिणतो वर्षीयानुदीचीनप्रवणो यज्ञः संतस्य इति। शतपथे च। ते होचुः। को नो दक्षिणत आसिष्यते। तथाभये ऽनाष्ट्र उत्तरतो यज्ञमुपचरिष्याम इति (४.६.६.१)। अतश्च सोमे ऽप्ययं न्यायस्तुल्यत्वात्।

अभियुक्ततरैरन्यैरुक्ता ये ब्रह्मसंचराः।
न्यायतो वचनाच्चापि श्लोकैस्तान्निबोधत ॥१॥
व्रजेदाहवनीयं तु पूर्वेणाप्यपरेण वा।
इष्टिपश्वोरयं प्रोक्तः संचरो वरणात्सदा ॥२॥
दर्शे च पौर्णमासे च वरणात्प्राङ् न विद्यते।
न चैवोत्सर्जनादूर्ध्वं ब्रह्मकर्म पशौ तथा ॥३॥
न साद्यं पुरुषार्थेषु यज्ञमित्यधिकारतः।
नातः सन्ध्यावाग्यमने[१] शयने न प्रबोधने[२] ॥४॥
न विष्णुक्रमवात्सप्रे न काण्डूयनमेहने।
समिद्धनीवाहभृतौ[३] नैव लक्ष्मप्रवाचने[४] ॥५॥
भस्मोदापे तथारुह्य प्रतिपत्तिक्रियासु च।

---

१ C ॰यमने न। २ C (orig.) प्रबोधयेत्। ३ C (orig.) समिद्धितीया॰। ४ C (orig.) लक्ष्मस्य वाचने।

अग्निष्टोमे श्रुतो भक्षा कुण्डपाय्ये ऽपि तत्तथा ॥६॥
कर्मणः क्रियमाणस्य प्राय आसनसंचरौ।
दक्षिणान्यायतः सूत्रे अग्नीनां चाप्यवायतः ॥७॥
कृते हिरण्यवद्धोमे अनुगच्छति दक्षिणः।
परीत्यानः क्रये वृत्त आ निधानात्तथा व्रजेत् ॥८॥
प्रवर्ग्याभिष्टवे पश्चाद्दक्षिणाग्नेरुदङ्मुखः।
आसित्वा चानुसंयाने यायात्प्राग्दक्षिणेन तम् ॥९॥
आसीतोदङ्मुखो नित्यं वेद्यंसाद्दक्षिणाद्बहिः।
वेदिमानप्रभृत्यान्तात्सति साद्यस्य संभवे ॥१०॥
अग्निप्रणयन आग्नावन्यच च यथोदितम्।
प्रवर्ग्योत्सादने त्वेति दक्षिणेनाविरोधतः ॥११॥
आग्नीध्रे यदि घर्मः स्याद्दक्षिणेनाग्निमासनम्।
स्वरत्पाचोन्तरेणैत्य आसनादेष संचरः ॥ १२ ॥
अनुव्रज्य ततो घर्मं गत्वा तीर्थेन चासनम्।
यज्ञसंचर एष स्यात्प्रत्यग्गमनमिच्छतः ॥१३॥
अध्वर दक्षिणेनैव शालाग्नीनपरेण तु।
मध्यन्दिने चेदाग्नीध्रे घर्मस्तत्रैव संचरः ॥१४॥
प्रविश्य दक्षिणेनैव तत्रैवास्त उदङ्मुखः।
यजसंचरमास्थायानुयायात्सदसः पुनः ॥ १५ ॥
तेनैव ध्रौव्यमागत्य प्राग्घोमात्तत्र चासनम्।
प्राप्ते तेनैव निःसर्पेद्धर्मोत्सादनकर्मणि ॥१६॥
परिस्यन्दमनुव्रज्य प्रत्येयाच्च यथागतम्।

आग्नीध्रीये धिष्ण्यकारे सदस्यपि सकृत्क्रिया ॥ १८ ॥
स्वस्थान एव संस्कारो मार्जालीये ऽथ तत्त्रये।
एष एव विधिर्दृष्टस्तुल्यत्वाद्देशभेदयोः ॥ १९ ॥
कृतो यद्यपि वेद्यर्थे व्यवधानात्पुनःक्रिया।
अग्नेः सोमस्य नयने अग्नीधः शरणे पुनः ॥ २० ॥
स्वासने चासनं कृत्वा पशोरादौ पुनःक्रिया।
आहृतश्चेद्बर्हिरन्त्यं यो ऽपि तत्रात्र वा यदि ॥ २१ ॥
ततः पशुपुरोलाशश्रपणे सन्निधानतः।
कुर्यात्पश्चिमरात्रे च शालायामेव चासनम् ॥ २२ ॥
आज्यग्रहण आग्नीध्रे स्वदेशे च पुनस्ततः।
कार्यो निवापः सोमस्य हविर्धाने तथास्तवे ॥ २३ ॥
सदः प्रविश्य कर्तव्यः सर्वत्रैव प्रसर्पणे।
होमे सान्त्यं सदा कुर्याद्वाक्यस्याविरोधतः ॥ २४ ॥
मानसादौ च कर्तव्यो रथचक्रे तृणं विना।
दध्यादौ सर्वहोमादौ पश्वादौ च प्रकीर्तितः ॥ २५ ॥

८. समानं होत्रा तृणनिरसनं तथोपवेशनमित्यतिदिष्टत्वात्र तृणस्य प्रागग्रता विकारः।

९. बृहस्पतिर्ब्रह्मेत्येवमादिकमोंकारान्तं मन्त्रमुपविश्य जपेत्। अथोपविश्य जपति बृहस्पतिर्ब्रह्मेति श्रुतेः।

१०. सर्वाणि कर्माणि क्रियमाणानि ब्रह्मणा द्रष्टव्यानि। चकारः पूर्वेण सह समुच्चयार्थः।

११. मन्त्रवत्सु कर्मसु क्रियमाणेषु ब्रह्मा वाग्यमनं कुर्यात्।

तस्माद्यावदृचा यजुषा साम्ना कुर्युस्तूष्णीं तावद्ब्रह्मासीतेति श्रुतेः।

१२. ऋत्विजामयं नियमः। बहुत्वयुक्तेन वाक्येन प्रकरणस्य बाधितत्वात्। सर्वेषां वेति च दर्शनात्। सर्वासु गतिषु समन्त्रिकासु। मन्त्रवत्स्विति प्रकृतत्वात्। येन प्रकारेण व्रजन्ति। यथानुपूर्व्या देशान्तरमृत्विजो गच्छन्ति। ततो देशादन्येन प्रकारेण समागन्तव्यम्। यथा मैत्रावरुणप्रभृतयः सदः प्रविष्टा अच्छावाकप्रभृतयो निःसर्पन्ति। एवमन्यास्वपि गतिषु द्रष्टव्यम्। [1]सर्वशब्दात्सर्वासु समन्त्रिकासु। अमन्त्रिकासु चेत्यपरे। कुतः। अयं प्रत्यागमननियमः शाखान्तरात्।

१३. अग्निप्रणयनं विशिष्टधर्मकमुक्तमेव। तस्मिन् क्रियमाणे ब्रह्मानुसमियात्।

१४. स यदा इध्मः संभारेषु प्रतिष्ठाप्यते तदा ब्रह्मणो ऽप्युपवेशनम्।

१५. सत्यग्न्दक्षिणाग्न्याधेये ब्रह्मणो ऽर्थो भवति। तत्रापि सद्देशेनोपवेशनमित्यनेन संबन्धेनेदमायातम्।

१६. सर्वेषां वाग्न्याधेयिकानामृत्विजामर्थो भवति।

१७. कर्मानुज्ञापनार्थमामन्त्रितो ब्रह्मन्निति संबुद्ध्यन्तेन[2] संबोधित ओमिति प्लुतमुक्त्वा[3] यथाकर्म प्रसौति। यद्यत्पृष्टस्तत्तदेवानुजानाति।

---

१ C om सर्वशब्दात्। २ A C संबुध्यन्तेन, B संबुद्धा ते। ३ B C प्लुतमु०।

७.

१. प्रणीताप्रणयनकाले ब्रह्मणो वाग्यमनं भवति। कालवचनादसत्यपि प्रणयने भवति। प्राक् पात्रासादनात्प्रकृतिवत्।

२. हविष्कृदेहीत्युच्यमाने वाग्विसर्गो ब्रह्मणः। प्रणीतासु प्रणीयमानासु वाचं यच्छत्या हविष्कृत उद्वादनादिति श्रुतेः। पशौ हविष्कृतो ऽभावात्प्रणीताप्रणयने वाचं यत्नावधेरभावादनन्तरमेव विसृजेत्। ननु पशुपुरोलाशे हविष्कृदस्ति। सो ऽवधिर्भविष्यति। सत्यम्। पश्वर्थप्रणीतासंयोगेन वाग्यमनं कृतम्। न च तत्र हविष्कृदस्ति। अत एवोक्तं संयोगाद्यावतिष्ठत इति।

३. इष्टे च स्विष्टकृति ब्रह्मणो वाग्यमनम्। किमवधिकम्। उच्यते। अनुयाजप्रसवेन वाग्विसर्गः। वक्ष्यति। ओं प्रतिष्ठेति प्रसौतीति सो ऽनुयाजप्रसवः। इष्टे च स्विष्टकृत्यानुयाजानां प्रसवादिति श्रुतेः। वाग्यमावधिनियमः।

४. प्राशित्रमवदानमध्वर्युणा पात्रस्थमाहृतं मित्रस्य त्वेत्यादिना मन्त्रेण ब्रह्मा प्रतीक्षते।

५. प्रतीक्षणादनन्तरं देवस्य त्वेत्यादिना मन्त्रेण प्रतिगृह्णाति। तदञ्जलिना प्रतिगृह्णातीत्याश्वलायनसूत्रम्[१]।

६. प्रतिगृह्य ततः पृथिव्यास्त्वेत्येवमादिना मन्त्रेण प्राग्दण्डं भूमौ स्थापयेदपोह्य दर्भान्। तद्व्यूह्य तृणानीति (६.१४) श्रुतेः।

७. निधानादनन्तरमुपकनिष्ठिकयाङ्गुष्ठेन च प्राशित्रं गृह्णीयान्न पात्रम्।

---

१ From तदञ्जलिना to °सूत्रम् om in C.

८. तत आदाय पात्रादग्नेष्टाशेन प्राश्नामीत्यनेन मन्त्रेण प्राश्नीयादसंचूर्णयन्। दन्तैरनुपस्पृशन्नित्यर्थः।

९. प्राशित्रं प्राश्याचामेच्छान्तिरसीत्यनेन मन्त्रेण।

१०. आचमनादनन्तरं वक्ष्यमाणान्प्राणान्वक्ष्यमाणैर्मन्त्रैः संमृशति। ननु उभयं यदि सर्वमेव वक्ष्यमाणं को ऽस्य सूत्रस्यार्थः। उच्यते। प्राणसंमर्शनसंज्ञाकरणम्। अतो यत्रयत्रोच्यते समानं प्राणसंमर्शनमिति तत्रतत्रैतदुपस्थापितं भवति।

११. प्राणपा असीत्येवमादिना मन्त्रेण युगपन्नासिकाविवरप्रदेशं मुखविवरप्रदेशं च सलोमकं दक्षिणेन पाणिना संमृशेत्।

१२. चक्षुष्पा इत्येवमादिना मन्त्रेण चक्षुषी युगपत्संमृशेत्।

१३. श्रोत्रपा असीत्येवमादिना मन्त्रेण श्रोत्रे संमृशेत्। प्रतिश्रोत्रं मन्त्रावृत्तिः। युगपत्संमर्शनाशक्तेः।

१४. इन्द्रस्य त्वेत्येवमादिना मन्त्रेण नाभिमभिमृशेत्।

१५. को ऽदात्कस्मा अदादित्येवमादिना मन्त्रेणान्वाहार्यं ब्रह्मा प्रतिगृह्णीयात्। उपस्पृशतीतरदिति वचनादुपस्पृशन्।

१६. ब्रह्मा प्रकृत एव अध्वर्युणा ब्रह्मन्प्रस्थास्यामीति प्रचोदितः किं कुर्यादित्यत आह।

१७. देव सवितरित्येवमादिकं मन्त्रं जपित्वा ततः उत्तमया वाचा ओं प्रतिष्ठेति प्रसुयात्। ओकारो ऽत्र प्लुतः। अचोद्यः। तेन यज्ञपतौ इति दियजमानके। तेन यज्ञपतीनिति बहुयजमानके। तथा बृहस्पतिर्ब्रह्मेति तस्मिन्नपि मन्त्रे। स यज्ञपतौ इति दियजमानके। स यज्ञपतीनिति बहुयजमानके।

१८. प्रणीतासु विसृष्टास्वग्निवधौ ब्रह्मण उत्सर्जनमव्यावर्तनादीनां[1] नियमानाम्। क्वचित्कर्मान्तरेऽन्यस्मिन्प्रणयनमन्यस्मिन्विमोकः। यथा सांतपनीयाप्रणीतानां दर्विहोमान्ते विमोकः। यथा च महाहविःप्रणीतानां त्र्यम्बकान्ते। यथा चाग्निचित्यायामहरन्ते विमोकः। अन्तरोपसदौ चिनोतीति श्रुतेः। एवमादिषु ब्रह्मण आ विमोकादनुत्सर्गः।

१९. ब्रह्मभाग इति समाख्यात आध्वर्यवे। ब्रह्मभागो यजमानभाग इति। तस्य प्रणीतासु विसृष्टासु ब्रह्मणा प्राशनं कार्यम्।

---

## ८.

१. इष्टिपशुबन्धाधिकारोऽनुवर्तते। अदब्धेनेत्येवमादिना मन्त्रेणाज्यमवेक्षते पत्नी। कुतः। शाखान्तरात्[2]। शाखान्तर एव चावेक्षयितुरुपदेशात्तत्प्रयुक्तमवेक्षणम्[3]। अतश्च यूपाञ्जनादिषु न भवत्यवेक्षणम्। अग्नेर्जिह्वासीत्ययमौपमिकस्य आज्यस्य गुणस्तेन विकारेष्वनूहः। आत्मार्थो लिङ्गात्। अतो मुख्यः कुर्यात्परार्थानीत्ययं न्यायो न भवति।

२. आज्यमवेक्षत इत्यनुवर्तते। तेजोऽसीत्येवमादिना मन्त्रे-

---

१ A C (see h) चाव्यावर्तना०। २ om in A। ३ A adds असंस्कृतेन यूपाञ्जनिहोम इति कात्यायन.।

णाज्यमवेक्षते यजमानः। वेद्यासादनमध्वर्युकर्तृकं। तस्मिन्निवृत्ते। अतो न यूपाञ्जत्यादिषु। परार्थः। आग्नीर्योगाभावात्। इत उत्तरं यजमानाधिकारः।

२. वाचं यच्छतीति सूत्रान्तः। खण्डश्च समाप्यन्ते। क्रमवर्तिला-दाचः। ध्रुवा असदन्नित्येवमादिना मन्त्रेणाभिमृशेद्बह्वींपि सकृदाज्ये-वेङ्कवचनात्। आसन्नानि। आसादनक्रमेणेत्यर्थः। अत्र न्यायविदः प्रत्येकं मन्त्रावृत्तिमिच्छन्ति। तेषामसमवेतार्थलात्प्रकृतौ विकारेष्व-नूहः। याज्ञिकास्तु सकृदुच्चारितेनैव सर्वेषामभिमर्शनमिच्छन्ति। तेषां समवेतार्थलाद्विकारेषु यथार्थमूहः। ध्रुवा असदन्ध्रुवाश्चासद-न्नित्यर्थः। यदा त्वेकं तदा ध्रुवमसदत्। यदा द्वे तदा ध्रुवे अस-दताम्। ता विष्णो पाहि तानि विष्णो पाहीत्यर्थः। तत्र एक-हविष्के तद्विष्णो पाहि। द्विहविष्के ते विष्णो पाहि[1]। यज्ञपति-शब्दो यजमानवचनस्तस्य विकारेषु यथार्थमूहः। यज्ञपती द्वियज-मानके। यज्ञपतीन्बहुयजमानके। देशकालयोस्तु भेदे[2] पृथगभिम-र्शनम्। तद्यथा। वरुणप्रघासेषु दक्षिणोत्तरयोर्विहारयोर्देशभेदात्। पशावाज्यानां वपायाः पुरोलाशस्याङ्गानां च पृथक्पृथक्कालभेदात्। पश्वङ्गाभिमर्शने यद्यपि बहून्यङ्गानि तथाप्येकमदानत्वादेकवचनम्। कुतः। तयोर्नानैव हविषी अपचितेति दर्शनात्। सौत्रामण्यां सुराग्रहाणामभिमर्शनं पुरोलाशविकारत्वात्। पयोग्रहाभिमर्शनं सांनाय्यविकारत्वात्। अवभृथहविषो नाभिमर्शनमासादनाभावात्।

---

१ C (orig) om from द्विहविष्के to पाहि and adds (in marg) यज्ञो द्विदत्याके। यज्ञान बहुके। २ C तुल्यभेदे।

परार्थो ऽयम्। कुतः। अत्र हि यजमानो हविःपालनाय विष्णुमधीच्छति।

४. हविरभिमर्शनादनन्तरं यजमान आत्मानमुपस्पृशेत्याहि मामित्येवमादिना मन्त्रेण। हृदयदेशस्याभिमर्शनमात्मायतनप्रसिद्धेः। भिन्नकाले हविरभिमर्शने सर्वान्तस्यानन्तरमात्मोपस्पर्शनं प्रकृतिवत्। आत्मार्थो ऽयम्।

५. आत्मोपस्पर्शनादनन्तरं वृष्टिरसीत्येवमादिना मन्त्रेणाचामेत्। एतावानेव मन्त्रो मा विद्यायीति सकलपाठः। प्रत्यागाशीर्योगादात्मार्थः।

६. आचमनादनन्तरमग्ने व्रतपत इत्येवमादिना मन्त्रेणाहवनीये समिधमाधाय वाग्यमनं कुर्यात्। अत्र हि यजमानेनाहवनीयो ऽधीष्यते[१]। हे भगवन्नग्ने व्रतपते दुःशकमप्येतद्व्रतं त्वत्प्रसादादहं चरिष्यामि। तत्र मे शक्तिरपरिहीणा भवतु। तच्च मे यथाभिलषितफलसंपत्त्या समृध्यताम्। यत इदमनृतान्मानुषात्सत्यं देवत्वमहमुपैमि। मनुष्येभ्यो देवतामुपैमीत्यर्थः। ततश्च सत्यानृतयोरिहान्यार्थत्वात्सत्यपि सत्यवादित्वे व्रतत्वेनाभ्युपगते चातुर्मास्यादिष्वपि प्रयोक्तव्य एवायं मन्त्रः। वरुणप्रघासेष्वाहवनीयद्वित्वे ऽन्यतरस्मिन्समिदाधानमुपैमीत्यभ्युपगतत्वात्। अवभृथे त्वभाव एवैवमादेर्यथा सोम इति वचनात्। सांतपनीया चेत् पूर्वकारिवशात् समिष्टयजुरन्ता ततस्तत्राविमुक्तत्वान्न गृहमेधीयायां व्रतग्रहणम्। सोमा-

१ C ॰धीष्यते; sec. h ॰ध्येष्यते। A B ॰ष्यते।

न्यासन्त्वे न व्रतग्रहणं कृतत्वात्। तथा च कात्यायनः। अग्न्यन्वाधानव्रतोपायनारण्यभोजनदानब्रह्मवरणानि दीक्षणीयाप्रभृति प्रागुदवसानीयाया न भवन्ति[1] सोमे कृतत्वादिति। पित्र्यायां न व्रतग्रहणं महापितृयज्ञे विपो ऽन्तर्भावात्। आत्मार्थं व्रतग्रहणं वाग्यमश्च। पुरुषार्थत्वात्। आचमनव्रतग्रहणयोः साहचर्यम्। मेध्यो भूत्वा व्रतमुपाधानीति व्रतपथे श्रुतत्वात्।

७. अग्ने वायवित्येवमादिकं मन्त्रं जपन्मन्त्रार्थं मनसा ध्यायेत्। हे अग्न्यादयो देवा वो युष्माकं सलोकतामहं प्राप्नुयामिति। अकामो ऽप्युपदेशसामर्थ्यात्। प्रधानयागानन्तरमयं जपो ऽनिर्दिष्टस्थानत्वात्। आत्मार्थं आशीर्योगात्।

८. यत्कामो वा यजमानः प्रधाने भवेत्तं कामं ध्यायेत्सलोकतां व इत्यस्य पदद्वयस्य स्थाने। तद्यथा। कारीर्याम्। अग्ने वायो विद्युचन्द्रमो वृष्टिमशीयेति।

९. अनुपदस्यमित्येवमादिकं मन्त्रं जपन्नाकाशं समुद्रं वा मनसा ध्यायेत्। अस्यार्थ उच्यते। अनुपदस्यं न उपदस्यतीत्यनुपदस्यम्। अनुपक्षयार्थमित्यर्थः। किं तत्। अन्नाद्यम्। आप्नवानीति प्राप्नुयामहमित्यर्थः। उपदेशसामर्थ्यात् कामान्तरेष्वपि। निष्कामो ऽपि यथोक्तं ध्यायेत्। आत्मार्थं आशीर्योगात्।

---

१ C om न भवन्ति का० ८ १ १।

## ९.

१. मयीदमित्येवमादिकं मन्त्रं यजमानो जपेदुपहूतो ऽयं यजमान इत्येवमादाविलोपह्वानशेषे पठ्यमाने। ननु इलायामुपह्वयमानायामित्युक्ते कुतो ऽयं विशेषः। उच्यते। शतपथात्। अथ यथाशिषमाशास्ते तज्जपति मयीदमिन्द्र इत्यादि। आत्मार्थं आशीर्योगात्।

२. अग्न पित्रस्वेत्यादिको राध्यासमित्यन्तः प्रथमो मन्त्रः। अत्र पितर इत्यादिक आदृषायध्वमित्यन्तो द्वितीयः। आभ्यां मन्त्राभ्यां पुरोलाशमभिमृशेद्बर्हिषदमध्वर्युणा कृतं सन्तम्। द्वितीयो मन्त्रः प्राचीनापवीतिना प्रयोक्तव्यः[१]। पितृत्वात्। आत्मार्थः पूर्व आशीर्योगात्। अत्र केचिदध्वर्यवश्चतुर्धाकृतस्य पुरोलाशस्य व्यादेशं कारयन्ति। इदं ब्रह्मणः। इदं होतुः। इदमध्वर्योः। इदमाग्नीध्रस्येति। अस्य चावधी[२] राध्यासमित्येवमन्त्रेण यजुषाभिमर्शने कृते। एतदपि याजमानं शाखान्तरात्।

३. कृताभिमर्शनं ततः पात्र्यामवधाय पुरोलाशममीमदन्तेत्येवमादिकं मन्त्रं प्राचीनापवीती जपेत्।

४. प्रजापतेर्भागो ऽसीत्येवमादिना मन्त्रेणान्वाहार्यं इदयजमानो ऽभिमृशेत्। दक्षिणामभिमृशेत्यवचनान्नान्यस्यां दक्षिणायामेतत्। अन्नोदः। दिव्यमतल्के। अचितिरसि मा नौ चेष्ठाः। अङ्गयजमानके। अचितिरसि मा नः चेष्ठाः। अस्य कर्मण एषा दक्षिणेति याज्ञिकप्रसिद्धा सर्वंच वक्तव्यम्। परार्थः।

---

१ B प्रीक्तव्य। २ C चवधरी।

५. अनुयाजेष्विष्टेष्वित्यनेनोभयं प्रतिपाद्यते। सत्यमनुयाजयागे व्यूहनमिष्टेषु चानुयाजेष्विति व्यूहति प्रेरयतीत्यर्थः। स्रुचौ वक्ष्यमाणे। ननु तस्मादेव सिद्धम्। सत्यम्। अधिकानां प्रतिषेधार्थमेतत्। कथं व्यूहति। अग्नेरग्नीषोमयोरित्यादिना मन्त्रेण जुहूं प्राचीं गमयति दक्षिणेन हस्तेनोत्तानेन। अग्निरग्नीषोमावित्यादिना मन्त्रेणोपभृतं प्रतीचीं गमयति न्युब्जेन सव्येन हस्तेन। आत्मार्थं आग्नीध्रीयागात्। ततोऽनेकयजमानके सर्वे सह कुर्युः। अशक्तौ चान्वारभेयुर्मन्त्रं ब्रुवाणाः।

६. याया प्रधानदेवता[1] तांतामुपलक्ष्य व्यूहनं कार्यम्। मासमेवैतद्दीक्षितायनार्थममावास्यार्थं चोच्यते।

७. पूर्वं गृहपतेरिति यः पत्नीसंयाजेषूक्तः सोऽत्रावधिलेन गृह्यते। तस्मिन्ननिष्टे गार्हपत्ये स्रुवेण जुहुयादेवमेव शाखान्तरे श्रुतत्वात्। प्राग्गृहपतेरिति नोक्तम्। यत्रैव गृहपतियागस्तत्रैवैता आहुतयो यथा स्युरिति। आहुतिधर्मा होमद्रव्यं च परिभाषासिद्धम्। मन्त्रानिदानीमाह।

---

१०.

१. प्रथमा द्वितीयेषु पराक्रमध्वं[2] द्वितीयास्तृतीयेषु पराक्रमध्वं तृतीयाश्चतुर्थेषु पराक्रमध्वं चतुर्थाः पञ्चमेषु पराक्रमध्वं पञ्चमाः

१ A C (sec. h) यथाप्रधान। २ B adds वरुण धर्माणामधिपते इन्द्र ज्येष्ठानामधिपते प्रजापते प्रजानामधिपते देवा देवेभ्य पराक्रमध्वम्।

षष्ठेषु पराक्रमध्वं षष्ठाः सप्तमेषु पराक्रमध्वं सप्तमा अष्टमेषु पराक्रमध्वं अष्टमा नवमेषु पराक्रमध्वं नवमा दशमेषु पराक्रमध्वं दशमा एकादशेषु पराक्रमध्वम्। ईदृशस्य शाखान्तरे पठितस्य मयोक्तस्य संक्षेपमाह।

२. एवं सङ्ख्यानुपूर्व्येण प्रत्यादायोत्तरं प्रथमया विपरिणम्य ततः सप्तम्यन्तेन संदधदेकोत्तरमेकोच्चयेनेत्यर्थः। आ एकादशभ्यो यावद्दशमा एकादशेषु पराक्रमध्वम्। ततः।

३. अग्ने पृथिव्या इत्यारभ्य स्वाहाकारान्तो मन्त्रः। अयमित्यस्य स्थाने यत्कामो यजमानस्तं ब्रूयात्। यद्यथा। स्वर्गप्राप्तिर्मे समृध्यताम्। स्वर्गो मे कामः समृध्यतामित्यपरे।

४. प्रजापते न त्वदेतान्यन्य इत्यनया चतुर्थी होतव्या। सङ्ख्यावचनं नियमार्थम्। अनेकयजमानके ऽपि न प्रतियजमानं[1] होम। ऊहस्तूच्यते। अयं नौ कामः द्वियजमानके। अयं नः काम इति बहुयजमानके।

---

११.[2]

१ आ प्यायतामित्येवमादिना मन्त्रेण यजमानः समिष्टयजुर्होमसंनिधौ स्रुचमाज्येनाप्याययेत् परार्धे.[3]।

१ A ॰न। २ A adds द्वितीया। आप्यायता॰ इत्यस्य सूर्याया॰ न यज्ञयज्ञ ता तामाङ्गति प्रति। देवयज्ञो देवान्हातुमिच्छन्ना पर्याप्तेन घृतेनैव ध्रुवा त्वा प्यायताम्। पुनःपुनः पूर्यताम्। सूर्याया सूर्यपत्न्या उषाया गारूपधारिण्या ऊध पय पूर्णस्तनमधाम इव आप्यायता। किं च। अदित्या ॰दितिरूपाया पृथिव्या उत्सङ्गे वर्तमाना ध्रुवा उरुधारा महाधारा पुन पुन सिच्यमानाभिराज्यधाराभिरुपेता सत एव। ३ C ध्रुवाम् instead of स्रुचम् In marg स्रुव घृतेन पूरयित्वा ध्रुवाभिधा स्रुच वर्धयति।

२. अध्वर्युकर्तृकः समिष्टयजुरित्याख्यो होमः। तत्र यजमानः पात्रमन्वारभते। सामर्थ्यात्परार्थः।

३. सदसि सन्न इत्येवमादिना मन्त्रेण पूर्णपात्रमध्वर्युसमर्पितमभिमृश्य यास्ताचापस्ताभिर्दिशो व्युदुक्षति। वक्ष्यमाणैर्मन्त्रैस्ता अभिषिञ्चतीत्यर्थः। आत्मार्थं आशीर्योगात्।

४. वक्ष्यति। सकृत्सकृन्मन्त्रेण दिर्दिग्व्युदुक्षणीमिति। अतश्च प्राच्येत्येवमादिना मन्त्रेण प्राचीं दिशं व्युदुक्षति। मन्त्रलिङ्गात्। मन्त्रेणैकवारममन्त्रकं द्विः।

५. अपसव्यं कृत्वा पूर्ववद्दक्षिणां दिशं व्युदुक्षति। दक्षिणयेत्येवमादिना मन्त्रेण।

६. प्रतीच्येत्येवमादिना मन्त्रेण प्रतीचीं दिशं व्युदुक्षति। यज्ञोपवीती पूर्ववत्।

७. उदीच्येत्येवमादिना मन्त्रेणोदीचीं दिशं व्युदुक्षति पूर्ववत्।

८. ऊर्ध्वयेत्येवमादिना मन्त्रेणोर्ध्वां दिशं व्युदुक्षति। मन्त्रलिङ्गात्। इतिकरणो मन्त्रान्तप्रदर्शनार्थः। अर्थभेदात्तु प्रतिदिशं यथोक्तो मन्त्रभेदः।

९. उक्तार्थमेतत्। पूर्णपात्राभिमर्शनमाशीर्योगादात्मार्थम्। दिशां व्युदुक्षणमपि तत्संयोगात्।

१०. विष्णुक्रमान् क्रमत इत्येवमन्तं सूत्रम्। त्र्यवन्तानि खण्डशो व्याख्यायन्ते। क्रमार्थश्चायं प्रत्ययः। आपो हि ष्ठा मयोभुव इत्येवमाद्याभिस्तिसृभिर्व्युदुक्षणशेषा अपो ऽभिमृश्य।

११. अच्छायं वो मरुतः श्लोक एतु। यथोरोजसा स्कभिता

रजांसीत्याभ्यां मन्त्राभ्यां ता अपः प्राचीर्निनीयोदीचीर्वेति द्विविकल्पः।

१२. समुद्रं व इत्येवमादिना मन्त्रेण महता अपो ऽभिमन्त्रयेतानुपस्पृशन्[१]। अभिमन्त्रणं तदभिमुखेन भक्त्या मन्त्रोच्चारणम्।

१३. शं नो देवीरभिष्टय इत्येवमाद्याभिश्चतसृभिरपो ऽभिमृशेत्।

१४. समिन्द्र णो मनसा नेषि गोभिः संवर्चसेत्याभ्यां मन्त्राभ्यां प्राणानुपस्पृशेत्। मद्यालोकेन क्रमेण।

१५. अनु न इत्येवमादिना मन्त्रेण मुखमण्डलं पाणिना विशोधयति ततः।

---

१२.

१६. विष्णुक्रमाख्यं क्रमणं करोतीत्यर्थः। क्व पुनस्तत्करोतीत्यत आह।

१. वेद्या दक्षिणश्रोणिदेशो दक्षिणापरः कोणः। तस्मादारभ्य क्रमते तावद्यावदाहवनीयः।

२. स्थानाद्दक्षिणं पादं गमनाभिमुखमुद्यम्य वेदेस्त्रिभागमात्रे स्थापयेत्। दिवि विष्णुरित्येवमादिना मन्त्रेण। तस्मादध्वनो हीनतरं सव्यं स्थापयेत्।

३. अन्तरिक्षे विष्णुरित्येवमादिना मन्त्रेण द्वितीयं क्रमणं कुर्यात्।

---

१ B अप उपस्पृशन् च०।

४ पृथिव्यामित्येवमादिना मन्त्रेण तृतीय क्रमण कुर्यात् ।

५ दिक्षु विष्णुरित्येवमादिना मन्त्रेण तिर्यक्पाद निदधाति। न तु क्रामति परस्मैपदोपदेशात् ।

६ तमहमित्येवमादिक[१] उदर्को वाक्यशेष । समानस्तुल्य । सर्वेषु मन्त्रेषु प्रयोक्तव्य इत्यर्थ ।

७ अगन्म स्वरित्येवमादिना मन्त्रेण प्राची दिशमीक्षते ।

८ ईक्षत इत्यनुवर्तते। स ज्योतिषाभूमेत्यनेन मन्त्रेणाहवनीयमीक्षते। वरुणप्रघासेष्वाहवनीयौ द्वौ। तयोर्द्वयोरपीक्षणमविशेषात् । ऊहश्च न भवति । ज्योति शब्दस्य दीप्तिवाचकत्वात् ।

९ ईक्षत इति वर्तते। समहमित्येवमादिना मन्त्रेण प्राचीमेव दिशमीक्षते । एवकारान्न पूर्वेण सह विकल्प ।

१० जपतीति सूत्रच्छेद । त्र्यवन्तानि तु खण्डशो व्याख्यायन्ते। एव च निर्देश क्रमार्थ । स्वयम्भूरित्येवमादिना मन्त्रेणादित्यमुपतिष्ठते । दर्शनगोचर गत्वा । कुत एतत् । अथानैवेत्येवमादिना ग्रन्थेन महाव्रते विशेषात ।

११ ऐन्द्रीमावृतमित्येवमादिना मन्त्रेण दक्षिण बाहुमावर्तमानमन्वावृत्य। प्रोक्षवदिति नोक्तम्। तत्रावर्तनमात्रमत्र तु भ्रमणमिति विशेषात्[२] ।

१२ सव्यावृद्भूत्वा एत्य गार्हपत्यमुपतिष्ठत इति शेष । कथमुपतिष्ठते तूष्णी मन्त्रेण वेत्यत आह ।

१३ अग्ने गृहपत इत्येवमादिको मन्त्रो गार्हपत्योपस्थाने ।

---

१ C •त्येवमादिना। २ C •मविशेषात् ।

अमुष्यादित्यस्य स्थाने पञ्चम्यन्तं पुत्रनाम गृह्णीयात्। प्रत्येकम्। सर्वेषां तु पुत्राणाम्। नामानीति बहुवचनात्। नामग्रहणप्रयोग उच्यते। अस्थूरि णौ गार्हपत्यानि सन्तु शतं हिमा मह्यं देवदत्तात्। अस्थूरि० मह्यं यज्ञदत्तात्। एवं यथापुत्रमस्थूर्यादेरावृत्तिः सामर्थ्यात्।

१४. भूर्भुव इत्यादिना मन्त्रेणास्य प्रकृतस्य गार्हपत्यस्याङ्गारमुपस्पृशेत्।

१५. यज्ञो बभूवेत्येवमादिकं मन्त्रं स्वदेशे स्थितो जपेत्।

१६. यथा प्राक्कृतग्रहणात्।

१७. अग्ने व्रतपत इत्येवमादिना मन्त्रेणाहवनीये समिधमादध्यात्।

१८. विसृष्टवागनन्तरं कुर्यात्।

---

## १३.

१८. यो नो दूर इत्येवमादिना मन्त्रेणाहवनीयस्य सकाशे विद्यमानि तृणकाष्ठादीनि दग्धशेषाणि तस्मिन्नाहवनीये प्रक्षिपेत्।

१०. गोमाँ अग्ने ऽविमाँ अश्वी यज्ञ इत्येवमादिकं तृचं यजमानदेश आसीनो जपति।

१. प्रजातिकाम इति सूत्रान्तः। ख्यवन्तानि तु खण्डशो व्याख्यायन्ते। उद्वयं तमसस्परि। तच्चक्षुर्देवहितं शुक्रमुच्चरत्। संदृगस्त इत्येवमादिकं यजुः। एतैस्त्रिभिर्मन्त्रैरादित्यमुपस्थाय।

२. यथा पूर्वमुक्तं दक्षिणं वाङ्कमन्वावृत्येति।

३. मध्याद्गत्वोपविश्य ततः।

४. इदं हविरित्येवमादिना मन्त्रेण पयोभक्षं कुर्यात्। प्रजातिकामः प्रसूतिकाम इत्यर्थः।

५. संभूतिर्वृद्धिस्तामिच्छन् संभूयमित्युच्यते। दधिक्राव्णो अकारिषमित्यनेन मन्त्रेण दधिभक्षं कुर्यात्। वाशब्दात्समुच्चयप्रतिषेधः।

६. सं यज्ञपतिराशिषा। अनेन मन्त्रेण यः समाख्यातो यजमानभाग इति तं प्राश्नाति।

७. प्रवसति सति यजमाने समिष्टयजुषा सहाध्वर्युर्जुहुयात्। न प्रातिनिधिकः[1]। पत्नी वा भक्षयेत्। एवमर्थो होमोपदेशः।

---

## १४.

१. यजमानाधिकारोऽनुवर्तते। अग्निहोत्रदर्शपूर्णमासचातुर्मास्यादीनि कर्माणि मुमूर्षोर्यजमानस्य यथाचोदितकालानपेक्षया[2] जीवतो यजमानस्य शीघ्रं प्रधानकरणमात्रेणापि संस्थाप्यानि।

२. यद्यपि प्रक्रान्तापरिसमाप्ते[3]कर्मणि यजमानो म्रियते तथापि तदन्तं तत्कर्म। नास्ति तस्य समापनम्। समापयितुरभावात्।

३. एवमाद्याः क्रिया नैरन्तर्येण हव्योपोद्भ्यग्निभिः। ताः क्रियाः क्रमेणोच्यन्ते। यानि यत्र प्रक्रान्ते कर्मणि हवींषि संभवन्ति तानि तत्र यो ऽयं आहवनीयो मुख्यस्तत्कार्ये वा वर्तते तत्र प्रक्षेप्यानि।

---

१ B ॰निधिका। २ B ॰कालयोरपेक्षया। ३ B प्रक्रान्ते ऽपरिसमाप्ते।

४. संहार्य वापयित्वेत्यर्थः। रोमनखानीति रोमशब्दः केशश्मश्रोरप्युपलक्षणार्थः। प्रेतग्रहणं पत्न्या अपि पूर्वमारिण्याः क्रियार्थम्।

५. आप्लुत्य[1] प्रेतमनुलेपनपुष्पादिभिरलंकृत्य। एतद्गृहे कृत्वा अन्यद्वक्ष्यमाणदेशे कर्तव्यम्। कः पुनः स देश इत्यत आह।

६. किं कुर्यादित्यत आह।

७. इत उत्तरं प्राचीनावीतिना कर्तव्यम्। कुत एतत्। आचारार्थवादमन्त्रलिङ्गेभ्यः। अपेत वीत वि च सर्पतात इत्यादिना पूर्वोक्तं देशं पलाशशाखया विमृज्य।

८. स्फ्येन करणभूतेन उन्मृज्य उद्धृत्येत्यर्थः। अभ्युक्ष्य। अद्भिरुपसिच्येत्यर्थः। कृत्वैवं देशसंस्कारं ततः।

९. प्रागुदक्षिणाभिमुखीं प्रागुदक्षिणायैः काष्ठैश्चितिं[2] कृत्वा।

१०. तस्या एव काष्ठचितेः पुरस्तादाहवनीयं निदध्यात्। पश्चाद् गार्हपत्यं दक्षिणतो दक्षिणाग्निम्। गृह एवोद्धरणं कृत्वा शकटेन नीयन्ते। अग्नयो यजमानस्य शाखान्तरात्[3]।

११. काष्ठचितिमारोपयितुं गार्हपत्यं दक्षिणाग्निं चान्तरेण यजमानशरीरं नयेत्। ननु प्राप्त एव न्यायतो यजमानस्य संचरः। उच्यते। प्रवासे मृतस्याहृतस्य यथेतो ऽग्नीन् प्रवसति तेन चैवोत्सृज्यत इत्याहवनीयं दक्षिणाग्निं चान्तरेणाहरणाशङ्का स्यात् तन्निवृत्त्यर्थं वचनम्।

---

१ A C आशाय। २ Com काष्ठैः। ३ A om the words from गृह to शाखान्तरात्।

१२ काष्ठचितो उत्तान शव निपात्य तत ।

१३ दक्षिणतश्चिते पश्चाद्वा गा चानुस्तरणीमजां वा। अनुस्तरणीति तस्या सञ्ज्ञा । वक्ष्यति। अनुस्तरण्या गोश्चर्माधिषवणमिति। अजां छागी रोहिणीमेव। अनयोरन्यतरां दक्षिणामुखीं प्रोक्ष्य प्रकर्षेण गले गाढ बद्धेत्यर्थ । ननु उभ कुम्भपूरणे स्मर्यते। सत्यम् । अनेकार्था हि धातव इत्यदोष । प्रयोगश्च सदृश्यते । दासा यदी सुसमुब्धमवाधुरिति । ननु च्छान्दसप्रयोगदर्शनात्तत्रैवाय साधु कथ सूत्रकारेण प्रयुक्त । उच्यते। वेदार्थव्याख्योन्मुखाना नाय दोष ।

१४ तस्या अनुस्तरण्या जीवन्त्या मज्ञाया वा वृक्कावुद्धृत्यासावुद्धरेत् । पृष्ठत पृष्ठेनेत्यर्थ ।

१५ तौ वृक्कौ दक्षिणसव्यावीषदुष्णौ कृत्वा तत अति द्रव सारमेयौ श्वानाविति द्वाभ्यामृग्भ्यां हस्तयो प्रेतस्य निदध्यात् । अनाहिताग्नेरौपासने ऽप्याचार्यविकारत्वात्[1] । पिण्डपितृयज्ञवदिति सर्वमेतद्भवतीति वृद्धसम्प्रदाय ।

१६ प्राणायतनानि[2] मुख नासिके चक्षुषी कर्णौ तेष्वेकैक हिरण्यशकल निदध्यात् ।

१७ अग्नेर्वर्म परि गोभिर्व्ययस्वेत्यनया ऋचा अनुस्तरणीवपया शवस्य मुखमण्डल प्रच्छाद्य तत ।

१८ दक्षिणे हस्ते ऽपाश्माग्नेय्यभिमुखानि कार्याणि प्रेतपादौ चेति देवयुव शुक्रमाग्नेय्यर्धा मादयन्तीति शेष[3]। शुक्रादीनामनेकत्व-

1 B O (n marg) पूर्वाधिकारत्वात् । 2 B om प्राणायतनानि । 3 C has only दक्षिण हस्ते धनुं मादयन्तीति n marg ऽश्मग्नेय्यर्धा । देवयुव corrected A देवयु ।

संभवे सर्वेषां यथास्थानं प्रतिपत्तिरविशेषात्। सत्रेषु सत्रिणां साधारण्यान्यानि पात्राणि भवन्ति। तेषां सत्रान्त उत्सर्गः। तादर्थ्यात्[1]। अतश्च सत्रिणो मृतस्य स्वैरेव पात्रैर्दाहः। अपि वान्यानि पात्राणि साधारणानि कुर्वीरन्निति मीमांसकाः। संस्थितदर्शपूर्णमासस्य कृतप्रयोजनान्यपि धारयेद्दाहाय। अनाहिताग्न्यग्निहोत्रायणिनोः स्थालीपाकपूर्णाहुतिस्रुचौ जुह्वविकारत्वात्। एतेन पृषदाज्येन च पूरयित्वा सादयेच्छ्रुत्यन्तरात्। आनुलोम्येन च न्यायात्।

१८. सव्ये पाणौ शवस्योपस्तृतं कुर्यात् पूर्ववत्।

२०. ध्रुवां एतेन पृषदाज्येन च पूरयित्वा प्राग्दक्षिणाचीमेवोरसि[2] सादयेत्।

२१. तथैव पूर्णामनुलोमां च कण्ठे स्थापयेत्।

२२. अग्निहोत्रस्रुवमैष्टिकं च वपाया उपरि नासिकयोः प्रदेशे स्थापयेत्। ननु नासिकयोरित्युक्ते वपाया उपरीति कथं गम्यते। वपया मुखं प्रच्छाद्येति पूर्वविधानात्। एवं च सत्यन्येष्वपि प्रदेशेषु वस्त्रान्तर्हितेषु सादनं युज्यत[3] एव।

२३. प्राशित्रहरणपात्रं दक्षिणे कर्णे निदध्यात्।

२४. प्रणीताप्रणयनं सव्ये कर्णे निदध्यात्।

२५. पुरोडाशकपालानि शिरसि स्थापयेत्।

२६. दृषत्[4] ग्रावाण इति केचित्पठन्ति। स च पाठः सम्यगसम्यगिति श्रुतितो निर्णयः।

---

१ B om तेषां to तादर्थ्यात्। २ C (in marg) प्राचीमुपाम्। ३ C (sec. h.) प्रयुज्यत। ४ C दृषद् in marg. ष।

२७. समवत्तधानीमिलापात्रीमुदरे कुर्यात्।

२८. निदध्यात्। पात्र्यावित्यविवचितं वचनम्।

२९. पूर्ववत्।

३०. क्रत्वर्थस्य कृष्णाजिनस्य प्रतिपत्तिर्न पुरुषार्थस्य।

३१. उपस्य उत्सङ्गः। तस्मिन्नरणी निदध्यात्। अत्रापि द्विवचनमविवचितम्।

३२. ऊर्वोर्द्वयोरप्युलूखलं निदध्यात्। अष्ठीवतोर्मुसलम्। अष्ठीवच्छब्देन[1] शुष्कसन्धी उच्येते।

३३. शूर्पं च शकटं च शूर्पशकटे। ते पादयोर्निदध्यात्।

३४. पादतो ऽग्निहोत्रपात्राणि उपवेषस्थालीकूर्चादीनि। अनाहिताग्नेः[2] पार्वणपित्र्ययज्ञपात्राणि। विकारैकत्वात्।

३५. शुक्रादीनि सर्वाण्युरौहत्योक्त्वा[3] तानीति। एतेन पृषदाज्येन चासंस्कृतेनामदेयत्वात्। सर्वाणि पूरयित्वा पात्राणीतराणि च। तानीति वचनात्।

३६. अयं वै त्वमित्येवमादिकया षट्पदया उपोहन्ति। प्रापयन्त्यग्निभिराहवनीयगार्हपत्यदक्षिणाग्न्याख्यैर्यजमानशरीरम्। पुत्रादयो यथाधिकारम्[4]। असौ स्वाहेत्यसावित्यस्य स्थाने प्रेतनामग्रहणं प्रथमान्तं सामर्थ्यात्।

---

१ A inserts here अष्ठीवन्तौ जानुनी इति यद्भाष्ये पठितमिति मन्त्रभाष्ये। अष्ठीवद्भ्यां जानुभ्यामित्यत्रमे कश्यामिति मन्त्रभाष्ये च। २ B °ह्रे° सर्वत्र पित्रं पित्र°। ३ C सर्वाणि पूरयित्वा The reading of B I have not noted ४ B यथाधिकारम्।

संभवे सर्वेषां यथास्थानं प्रतिपत्तिरविशेषात्। सत्त्रेषु सत्त्रिणां साधारणान्यन्यानि पात्राणि भवन्ति। तेषां सत्त्रान्त उत्सर्गः। तादर्थ्यात्[1]। अतश्च सत्त्रिणो मृतस्य स्वैरेव पात्रैर्दाहः। अपि वान्यानि पात्राणि साधारणानि कुर्वीरन्निति मीमांसकाः। संस्थितदर्शपूर्णमासस्य कृतप्रयोजनान्यपि धारयेद्दाहाय। अनाहिताग्न्यग्निहोत्रायणिनोः स्थालीपाकपूर्णाहुतिस्रुचौ जुहूविकारत्वात्। घृतेन पृषदाज्येन च पूरयित्वा सादयेज्जुह्वन्तरात्। आनुलोम्येन च न्यायात्।

१६. सव्ये पाणौ शवस्योपभृतं कुर्यात् पूर्ववत्।

२०. ध्रुवां घृतेन पृषदाज्येन च पूरयित्वा प्राग्दक्षिणाग्रीमेवोरसि[2] सादयेत्।

२१. तथैव पूर्णामनुलोमां च कण्ठे स्थापयेत्।

२२. अग्निहोत्रस्रुवमैष्टिकं च वपाया उपरि नासिकयोः प्रदेशे स्थापयेत्। ननु नासिकयोरित्युक्ते वपाया उपरीति कथं गम्यते। वपया मुखं प्रच्छाद्येति पूर्वविधानात्। एवं च सत्यन्येष्वपि प्रदेशेषु वस्त्रान्तर्हितेषु सादनं युज्यत[3] एव।

२३. प्राशित्रहरणपात्रं दक्षिणे कर्णे निदध्यात्।

२४. प्रणीताप्रणयनं सव्ये कर्णे निदध्यात्।

२५. पुरोडाशकपालानि शिरसि स्थापयेत्।

२६. दृषद्[4] ग्रावाण इति केचित्पठन्ति। स च पाठः सम्यगसम्यगिति श्रुतितो निर्णयः।

---

१ B om. सेषां to तादर्थ्यात्। २ C (in marg.) प्राग्दक्षिणाग्राम्। ३ C (sec. h.) प्रयुज्यत। ४ C दृषदः in marg. ध।

२७. समवत्तधानीमिडापात्रीमुदरे कुर्यात् ।

२८. निदध्यात् । पात्र्यावित्यविवक्षितं वचनम् ।

२९. पूर्ववत् ।

३०. फलवर्थस्य कृष्णाजिनस्य प्रतिपत्तिर्न पुरुषार्थस्य ।

३१. उपस्थ उत्सङ्गः । तस्मिन्नरणी निदध्यात् । अत्रापि द्विवचनमविवक्षितम् ।

३२. ऊर्वोर्दियोरप्युलूखलं निदध्यात् । अष्ठीवतोर्मुसलम् । अष्ठीवच्छब्देन[1] शुष्कसक्थे उच्येते ।

३३. शूर्पं च शकटं च शूर्पशकटे । ते पादयोर्निदध्यात् ।

३४. पादतोऽग्निहोत्रपात्राणि उपवेषस्थालीकूर्चादीनि । अनाहिताग्नेः[2] पार्वणपितृयज्ञपात्राणि । विकारैकत्वात् ।

३५. जुह्वादीनि सर्वाण्युरीतत्योक्तं[3] तानीति । एतेन पृषदाज्येन चासंस्कृतेनाप्रदेयत्वात् । सर्वाणि पूरयित्वा पात्राणीतराणि च । तानीति वचनात् ।

३६. अयं वै त्वत्त्वमित्येवमादिकया षट्पदया उपोहन्ति । प्रापयन्त्यग्निभिराहवनीयगार्हपत्यदक्षिणाग्न्याख्यैर्यजमानशरीरम् । पुत्रादयो यथाधिकारम्[4] । असौ स्वाहेत्यसावित्यस्य स्थाने प्रेतनामग्रहणं प्रथमान्तं सामर्थ्यात् ।

---

१ A inserts here अष्ठीवन्तौ जानुनी इति पञ्चमाष्टके द्विजानमिति मन्त्रभाष्ये। अष्ठीवद्भ्यां जानुभ्यामित्यष्टमे कण्डिकामिति मन्त्रभाष्ये च। २ B °ग्नेः सर्वेष पितृ पितृ°। ३ C सर्वाणि पुरीतत्य The reading of B I have not noted ४ B यथाधिकारम्।

## १५.

१. मैनमग्ने वि दहो माभि शोच इत्येवमाद्या दश अपिला सव्यावृतः सव्यं बाहुमन्वावृत्यानवेक्षमाणाः[1] पृष्ठतो ऽनिमीलयन्तः शीघ्रं प्रक्रामन्ति। प्रागुदङ्मुखाः।

२. मृत्योः पदं योपयन्तो यदैतेति द्वाभ्यामृग्भ्यामनुमन्त्रयते प्रक्रामतः पुरोहितो ऽन्यो वा।

३. आपो हि ष्ठा मयोभुव इत्येतत्सूक्तम्। सना च सोम जेषि चेति सूक्तम्। आभ्यां सूक्ताभ्यामुदकं संस्पृशन्ति। स्नान्तीत्यर्थः। कथं स्नान्ति। शिरांस्युदके नमनेनाप्रवेशयन्तः असंधावमानाः परस्परमङ्गान्यनत्तुघर्षयन्त इत्यर्थः।

४. प्रत्यायन्तीति सूत्रच्छेदः। ल्यबन्तानि तु खण्डश उच्यन्ते। असाविति नामग्राहं सपिण्डा उदकाञ्जलिमेकं दद्युः।

५. उदकादुत्क्रामन्ति। आपो अस्मान्मातरः शुन्धयन्त्वित्येवमादिना मन्त्रेण।

६. अहतमधौतं नवं वासः परिधायानन्तरम्।

७. तच्चक्षुर्देवहितं शुक्रमुच्चरदित्येवमादिना मन्त्रेणादित्यमुपस्थाय ततः।

८. कनिष्ठो ऽग्रत इतरे तमनु। एवं प्रत्यागच्छन्ति गृहान्। सपिण्डा बहुवचननिर्देशात्।

९. एकस्मिन्नुदपात्रे दूर्वाकाण्डानि यवा धान्यत्वेन प्रसिद्धाः। सर्षपा ओषधिविशेषाः। एतत्त्रयं निचियार्द्रे अशुष्के गोमये

---

[1] C orig °पेक्ष°।

निधाय ततः श्मशानवतौ रौयते संरभध्वमित्येवमादिना मन्त्रेणाभ्यक्रमश्मशानमग्निं च यच्च पूर्वोक्तमुदपात्रमेतत्त्रयमपि संस्पृशन्ति सपिण्डाः।

१०. अधःशय्या भूमौ शयनम्। आसनमप्यध एव। अन्यत्र साहचर्यदर्शनात्। हविष्यमक्षारालवणं तद्व्रतता। भावप्रत्ययनिर्देशो लिङ्गसङ्ख्ययोरविवक्षार्थः। ततश्च सर्वे सपिण्डास्तत्स्त्रियश्च व्रतानि कुर्युः। प्रत्यूहनमकरणं नित्यानां कर्मणां सन्ध्योपासनादीनां दृष्टार्थानां च यथाप्राप्तानां च कृषिनिकर्तनादीनाम्। किमविशेषेण। नेत्युच्यते। वैतानवर्जम्। वैतानं त्रेताग्निकर्म। तस्याप्रतिबन्धः[1]। कियन्तं कालमेतानि व्रतानि। उच्यते। एकरात्रमेकमहोरात्रमित्यर्थः। त्रिरात्रं वा। एवमेव नवरात्रं वेति विकल्पः। आ वा संचयनाद्व्रतानि। अस्थिसंचयनं वक्ष्यति। अपरपक्षे संचित्येत्यादिषु। आ वा तस्माद्व्रतानि भवन्ति। स्मृतिसिद्धस्य वचनमन्यथाकरणे ज्ञापनार्थम्।

११. अघशब्देनात्र मरणमुच्यते। येष्वहःसु सपिण्डमरणं संवृत्तं तान्यघाहानि। कतमानि पुनस्तानि। मरणादारभ्यैकरात्रादीनि। यानि व्रतेष्वाम्नान्युक्तानि तानि न वर्धयेयुर्नाभ्यधिकानि कुर्युः। कर्मानधिकारव्रतैर्न व्याप्नुयुरित्यर्थः। एतदनेनोच्यते[2]। यत्रापरपक्षो ऽन्तर्नवाहं[3] भवति तत्र आ वा संचयनादित्ययं पक्षो ऽङ्गी-

---

१ C तस्य प्रतिषेध। २ A C (orig) यनेनोच्यते B C (sec h) यन्येनोच्यते।
३ B ऽतीक नवाह C orig ऽन्तर्नवाह।

कर्तव्यः। अथ चेदूर्ध्वं नवाहान्नादर्तव्यः। वर्णत्रयस्याप्येतद्संयोगविधानात्। इति ह स्माह कौषीतकिरिति स्वपचदृढीकरणार्थं श्रुतिप्रदर्शनम्।

१२. अरण्ये निखनन्तीति सूत्रच्छेदः। अपरपक्षः कृष्णपक्षस्तस्मिन् या अयुजो विषमसङ्ख्याका रात्रयो मरणादारभ्यैकत्रिपञ्चसप्तसु संचयनमस्थ्नां संगोपनं पूर्वं पलाशपुटे तन्त्रान्तरदर्शनात्।

१३. यं त्वमग्ने समदह इत्येताभ्यामृग्भ्यामुदकेन क्षीरमिश्रेणास्थीनि निर्वापयेदस्थ्नां तापमुपशमयेत्यर्थः। विगततापानामपि निर्वापणमविशेषात्[1]।

१४. शरीरशब्देनात्रास्थीन्युच्यन्ते। तान्यनन्तरं पुराणे घटे प्रक्षिपेत्।

१५. उत्ते स्तभ्नामि पृथिवीं त्वत्परीत्यनेन मन्त्रेण तं घटं मृल्लोष्टेनापिदध्यात्।

१६. उच्छ्वञ्चस्व पृथिवि मा निबाधथा इत्यनेन मन्त्रे खाते सुरुंगयामित्यर्थः। तस्यां निखाय प्रवेश्य ततः।

१७. उच्छ्वञ्चमाना पृथिवी सु तिष्ठत्वित्यनेन मन्त्रेण परिमिते ऽवदध्यात्। परिमितं चित्यकं कुलकं श्मशानमित्येको ऽर्थः। तच्च परिमितद्वारं क्रियते। तत्रास्थिकुम्भं सुरुङ्गायां[2] प्रवेश्यावस्थापयेत्।

१८. यदेतत्संचयनं निखननोपलक्षितमेतदरण्ये कुर्वन्ति।

१९. अग्निभिः संस्कुर्वन्तीति सूत्रान्तः। उपलभ्यमानानि शरीराण्येवादत्य यथोक्ता क्रिया। शरीरेष्वदृश्यमानेषु पुरुषास्थि-

१ C निर्वापम्; in marg. पेप। २ C सुरुगयां A सुरुगायां।

समानसङ्ख्याकैः पलाशवृन्तैः प्रतिनिधिकरणम्। तदुच्यते। चीणि षष्टिशतानि पलाशवृन्तानि विन्यस्तव्यानीति वाक्यशेषः। कथमित्याकाङ्क्षित आह।

२०. वक्ष्यति। पुरुषाकृतिं कृत्वेति। तस्या आकृतेः शिरसि कर्तव्ये चत्वारिंशत्पलाशवृन्तानि निदध्यात्।

२१. ग्रीवायां कर्तव्यायां दश यथाप्रदेशं निदध्यात्।

२२. बाह्वोः कर्तव्ययोः शतं निदध्यात्। किं विशिष्टयोर्बाह्वोः। अंसान्वंसयोः। एकोऽसशब्दोऽसफलकवचनः। अपरोंऽसतिर्धातुरनुशब्दपूर्वो गत्यर्थः। तेनैतदुक्तं भवति। अंसानुगतयोः अंसस्थितयोरिति यावत्[१]।

२३. उरःस्थले कल्पयितव्ये त्रिंशत्पलाशवृन्तानि निदध्यात्।

२४. जठरमुदरं तस्मिन् कल्पयितव्ये यथाप्रदेशं विंशतिपलाशवृन्तानि निवेशयेत्। पलाशवृन्तानि लौकिकेन शब्देन पलाशविटकान्युच्यन्ते।

२५. वृषणप्रदेशे षट् पलाशवृन्तानि अवस्थापयेत्।

२६. चत्वारि पलाशवृन्तानि शिश्ने कल्पयेत्।

२७. ऊर्वोः कर्तव्ययोः शतं पलाशवृन्तानि निवेशयेत्।

२८. द्वयोरपि जानुजङ्घाष्ठीवत्समुदाययोः त्रिंशत्पलाशवृन्तानि निदध्यात्।

२९. पादयोरङ्गुलीषु च सर्वासु यथाप्रदेशं विंशतिपलाशवृन्तानि निवेशयेत्।

---

१ B यमात्।

२०. अविकलाङ्गे यजमाने प्रमीत एवं चीणि षष्टिशतानि। विकलाङ्गे ऽपि सङ्ख्याद्यानिराकृतेः प्रतिनिधित्वात्।

२१. उक्तया पलाशवृन्तरचनया पुरुषाकृतिं कृत्वा तत ऊर्णासूत्रैः स्थूलास्थूलमध्यमैः स्नायुवत्परिवेष्ट्य क्रमेण यवचूर्णैर्मांसवदस्थिभिनैः प्रलिप्य सर्पिषाभ्यञ्ज्यानन्तरमग्निभिर्दाहादिसंस्कारेण संस्कुर्वन्ति पुत्रादयः। एवमेव शाखान्तरविहितत्वात्। जीवतः कर्माणीत्युक्तम्। यदा पुनर्जीवत एव पत्नी म्रियेत ततो यजमानेन किं कर्तव्यमित्यत आह।

२२. अग्निन्वाक्ये नियोगत्रयमुत्प्रेक्ष्यते। पूर्वमारिण्या अग्निसंस्कारो ऽन्यानयनमाधानं[1] च। तत्र पूर्वमारिण्या अग्निसंस्कारायाथाकाम्यं वचनात्। अन्यानयनमर्थाचिप्तं पुनराधानं तु विधीयत इति। सांतपनेन वेति। संतापजैरित्यर्थः। संतापजैरितिकर्तव्यता[2] यजमानदाहविषया शतपथे पठ्यते। इहाप्यविरोधात्सैव द्रष्टव्या। इत्यमेव कुर्यात्तिस्र एव स्थालीरेष्टवै ब्रूयात्तासु गोमयानि च शुल्बलानि चावधाय नाना त्रिष्वग्निषु प्रदह्यात्। ते ये ततः संतापादग्नयो जायेरंस्तैरेनं दहेयुरिति[3] (१२.५.२.२)। इतरेषां परित्यागः कृतार्थत्वात्।

---

१६.

१. परिधिकर्मेति वक्ष्यमाणस्य कर्मणो नामधेयम्। परिधि-

---

१ A पुनराधानं च। २ A C संतापजेतिकम॰ B not quite legible. ३ B दाहयेयु।

मङ्गलं शान्तिरनिष्टान्तर्धानमित्येको ऽर्थः। तदर्थं कर्म परिधिकर्म। तद्भूतापवर्गे कर्तव्यम्। भूतान्युक्तान्यधःशयादीनि। तदन्ते प्रेतकर्म कृत्वा प्रत्येनसा सपरिवारेण गृह्ये ऽग्नौ कर्तव्यम्। प्रत्येना मृतस्य प्रत्यनन्तरो रिक्थभागुच्यते। कथं कर्तव्यमित्यत आह।

२. अनड्वान् बलीवर्दः। तदीयं चर्म रोहितं वर्णतः। तत्पश्चादग्नेरुदग्ग्रीवं प्राग्ग्रीवं वोपरिलोम चोपस्तीर्य तस्मिन्रिक्थभाजः सर्व एवोपविशन्ति। दर्भेषु चोदगग्रेषु प्रागग्रेषु[१] वा।

३. जुहोतीति सूत्रान्तः। ये चर्मण्युपविष्टास्तांस्तास्मिं[२] चान्तरेणाग्मानं हुताभ्यक्तं स्थापयित्वेदमध्यात् प्रतिश्रुतहोमविधेरभ्यधिकम्।

४. शम्या रथाङ्गलेन प्रसिद्धास्ताः परिधिवदावसथ्यस्य पश्चाद्दक्षिणत उत्तरतश्च कृत्वावस्थाप्येत्यर्थः।

५. कृत्वेति वर्तते। शमीमयमनियतसङ्ख्याकमिन्धनार्थं पालाशं वेध्मं च तूष्णीं प्रोक्षितमग्नौ प्रक्षिपेत्।

६. वरणविकारेण कंसविकारेण वा स्रुवेण वक्ष्यमाणा आज्याहुतीर्जुहोति।

७. दक्षिणं पादं तिर्यञ्चमितरस्य जङ्घाया अधो न्यस्येतरं चैवमेवेतरस्य एवमासीनः कृतोपस्थ उपस्थकृत् उच्यते। इत्थंभूत ऋत्विक् जुहोति। किं चान्यत्। समन्वारब्धेषु यानि कर्माणि प्रत्येनसा सहोपदिष्टानि तेष्वन्वारब्धेषु। संशब्दात् कृतोपस्थेष्वन्वारब्धेष्विति लभ्यते। कतमे पुनस्ते आहुतिमन्त्रा इत्याकाङ्क्षित आह।

८. इमं जीवेभ्यः परिधिं दधामि इत्येवमादिकाम्। याजु-

१ C om प्रागग्रेषु वा। २ A C तांस्तास्मिं रिक्थ चा०।

वैदिकां[1] परेतु मृत्युरित्येवमादिकां द्वितीयाम्। अप नः शोशुच-दघमिति सप्ताग्ने नय यस्त्वा हृदा त्वं नो अग्न अधरादित्येता[2] आरुणे ऽग्न्यन्वाधान उक्तास्ता इहातिदिष्टा याश्चारुणे दग्नान्वा-धान इति।

८. तूष्णीमित्येवमन्तं सूत्रम्। खण्डशस्तु व्याख्या क्रियते। द्वादश कृत्वा प्राक् स्विष्टकृतो वक्ष्यमाणमित्येवमर्थं सङ्ख्यावचनम्।

१०. यथाहान्यनुपूर्वं भवन्तीत्याभ्यामृग्भ्यां दक्षिणमंसमनु चर्मोपविष्टानीक्षते।

११. अञ्जनं चैककुदादि एतेन संमृश्य[3] ततः।

१२. दर्भशलाकाभिः स्त्रीणामविधवानां चर्मण्युपविष्टानाम-क्षीण्यनक्ति दक्षिणं पूर्वं सव्यमुत्तरमिमा नारीरविधवाः सुपत्नीरि-त्यनेन मन्त्रेण।

१३. प्रतिस्त्रियमेवं कुर्यात्।

१४. उत्तिष्ठ ब्रह्मणस्पत इत्याभ्यामृग्भ्यां श्रावको ऽनुमन्त्रयते। प्रत्येनःप्रभृतीनुत्तिष्ठतो ब्राह्मणस्य दक्षिणं बाहुमन्वारब्धान्। एवं च सति नैर्ब्राह्मणस्य दक्षिणं बाहुमन्वारभ्योत्थातव्यमिति गम्यते।

१५. अनडुहो वा पुच्छमन्वारब्धानुत्तिष्ठतो ऽनुमन्त्रयते।

१६. अनड्वान् शकटवाहः। नवं वस्त्रम्। कांस्यस्रुवो यदि इतः स एव देयः।

---

१ B om याजुर्वैदिका। २ C अधरादिति वा दशभिरित्येता आरुणे।
३ B संमृश्य।

१७. दक्षिणतो ऽग्नेर्वस्त्रहिरण्यादिवित्तमवस्थाप्य[1] प्रत्येनाः पैतृकर्णापाकरणसमर्थः चिः प्रदक्षिणं धनं करोति।

१८. यदेतत्परिधिकर्माक्रमेतत्प्रत्येनसि सति भवति।

---

## १७.

१. गार्ह्यकर्मप्रसङ्गेनायं[2] शूलगवाख्यः काम्यः शाखापशुरिहोच्यते। श्रुत्यन्तरोक्तत्वात्। स्वशाखायामपथ्य यत्स्वेरग्निभिर्यशमानं संस्थापयन्तीत्यस्यानन्तरं (कौ॰ब्रा॰ ६.१०) प्रजापतिः प्रजातिकामस्तपो ऽतप्यतेत्युपक्रम्य भवशर्वादीनां नाम्नां शूलगववपाहोममन्त्रदृष्टानामर्थवाददर्शनादिहैव सूत्रकारेणोक्तः। तच रुद्रं गवा यजत इत्यनेन श्रुत्यनुकरणेन रुद्राय गोद्रव्यको यागो विधीयते। स्वस्त्ययनायानर्थोपशमनायेत्यर्थः।

२. प्रसिद्धा ह्यस्य शाखान्तरेष्वप्येषा संज्ञा। रौद्राय भूरिशः शूलाद्यो रोगाः। या ते दिद्युदवसृष्टा दिवस्परीत्येवमादिभिर्मन्त्रलिङ्गैस्तत्रतत्र दृश्यन्ते। तन्निवारणार्थं चैतत्कर्म भवतीत्येतदपि संज्ञया ज्ञापितं भवति। इतिकर्तव्यतामिदानीमाह।

३. शुक्लपक्षे शुक्लपक्ष इत्यर्थः। उपोष्येति पूर्वेद्युर्व्रतं यथोक्तं कृत्वा। पुण्ये नक्षत्रे पुष्यादौ। प्रागुदीच्यां दिशि एतत्कर्म भवति।

४. क्रमेणैवमादीन्पदार्थान् कृत्वा नियुनक्ति मथ्यनमात्रमध्य·

---

[1] C °वस्त्रहिरण्या°। [2] D गार्हपत्य° C गार्ह्य।

स्याग्नेररणिभ्यां समारोपपूर्वकम्। वैश्यकुलादाहृतस्यापि वचनात्। प्राञ्चं प्रणीय न प्रागुदञ्चम्। एकदेशस्य प्रणयनमुत्तरत्र पश्चिमे ऽग्नौ पूर्वे ऽग्नाविति (१४) कार्यदर्शनात्।

५. प्रणीतस्याग्नेः पुरस्तात्पर्णां पलाशशाखां निखनेत्।

६. तस्याः शाखाया उत्तरतः पशुं यथाचोदितमुपस्थापयेत्। पशुवचनात्केचिच्छागमपीच्छन्ति।

७. उपाकरणमाध्वर्यवं तस्यायं मन्त्रो लिङ्गात्।

८. पूर्ववत्।

९. रुद्राय त्वा जुष्टं नियुनज्मीत्यनेन मन्त्रेण पशुं नियुनक्ति पलाशशाखायाम्।

१० पर्यग्निकृतमाध्वर्यवेण पर्यग्निकरणेन तमेवोदञ्चं नयन्ति। बहुवचनमविवक्षितं शाखान्तरे शमितुः पशुनयनोपदेशात्।

११. यं नयन्ति तं पशुं संज्ञपयन्ति। प्राक्शिरसं प्राच्यां दिशि शिरः कृत्वा। उदीच्यां पादान्। प्रतीच्यां वा दिशि शिरः कृत्वोदीच्यामेव पादानिति। एवंस्थितं संज्ञपयन्ति। अत्रापि बहुवचनमविवक्षितम्। शाखान्तरे शमितुरेकत्वात्। प्रयोजकत्वेन वा विवक्षा। अरवमाणमवाश्यमानमित्यर्थः।

१२. यत्पशुरित्येवमादिना मन्त्रेण रवमाणे सति पशौ जुहुयात्। प्रायश्चित्ताहुतिरेषा। ततश्च ब्रह्मा चतुर्गृहीतं जुह्वा जुहुयात्। कुत एतत् जुह्वेति। शाखापशोः स्रुवे उपदेशात्।

१३. अध्याहृतीर्जुहोतीति सूत्रच्छेदः। वपोद्धरणं नाभिप्रदेशात्कृत्वा। तथैव वपाश्रपण्योः प्रोर्णवनं कृत्वा ततः प्रक्षाल्य।

१४. यो ऽसौ प्रणीतस्तस्मिन् वपां श्रपयित्वा ततः।

१५. वपामभिघार्य प्रचरयित्वेत्यर्थः[१]। उद्वासोपस्तीर्णायां पात्र्यां निधाय।

१६. पूर्वमग्निं शिवंशिवमित्यनेन मन्त्रेण[२] त्रिः पर्युक्ष्यानन्तरम्।

१७. वक्ष्यमाणैर्मन्त्रैः।

१८.

१. स्रुवेण जुहोति। स्रुवः पात्रमिति गृह्ये[३] तद्धर्मकाणां परिभाषितत्वात्। या तिरश्चीत्येवमादिना मन्त्रेण स्वाहाकारान्तेन।

२. यस्येदमित्येवमादिना मन्त्रेण स्वाहाकारान्तेन द्वितीयामाज्याहुतिं जुहोति। हवामह इति मन्त्रान्तसंदेहव्युदासार्थं द्वितीयावचनम्।

३. अग्ने पृथिव्या अधिपते वायो ऽन्तरिक्षस्याधिपत इत्येवमादिना मन्त्रेण तृतीयामाहुतिं जुहोति। तृतीयाग्रहणं यादृशेन मन्त्रेण याजमाने तृतीया तादृशेनात्रापि यथा स्यात्।

४. प्रजापत इत्येवमादिना मन्त्रेण चतुर्थीमाज्याहुतिं जुहोति। चतुर्थीग्रहणात्प्रायश्चित्तमप्यन्तरा न होतव्यमिति।

५. अनुप्रहरति पलाशानीति सूत्रान्तः। त्रीणि पलाशपत्त्राणि मध्यमानि संहतानि[४] संहत्य संभीर्य्योत्तरार्धेण सौकर्यात्। आज्येनोपस्तीर्य गृह्ये दृष्टत्वात्।

१ C श्रपयित्वेत्यर्थं। २ C adds स्वाहाकारान्तेन। ३ A B गृह्यते। ४ C संहतानि A om

६. उपस्तीर्णे वपामवधाय ततो ऽभिघारणमस्या आज्येन कुर्यात्।

७. यावतामहमित्येवमादिना मन्त्रेण स्वाहाकारान्तेन वपां हुत्वा ततः।

८. आहुत्यनन्तरं पलाशपर्णानि[1] तस्मिन्नेवाग्नौ प्रक्षिपेत्।

९. वपाश्रपण्यौ चानुप्रहरेदाध्वर्यवोक्तलक्षणे। तथैवानुप्रहरेद्यथा तेषामुक्तम्।

१०. दृशीय त इत्यनेन मन्त्रेण वपाश्रपण्यनुप्रहरणादनन्तरमुत्तरामाज्याहुतिं हुत्वा तथैव पर्युक्षति। यथा पूर्वमुक्तं शिवंशिवमिति त्रिः पर्युक्षति। आज्यग्रहणमसंदेहार्थम्। उत्तराग्रहणमन्येष्वपि शाखापशुषु भावार्थम्।

११. स्थालीपाकग्रहणं तद्धर्मप्राप्त्यर्थम्। पश्चिमाग्निग्रहणं पूर्वे ऽग्नावधिकृतत्वान्मा भूत्।

१२. तस्यैवाग्नेरुत्तरतो ऽवदानानि श्रपयेत्। मांसमिति नोक्तम्। कथं नामावदानधर्मा आध्वर्यवोक्ता भवेयुरिति।

१३. यो ऽसौ स्थालीपाकः शृतः तं च यूपं च। यूपशब्देन वसोच्यते। मांसमद्भ्यो ऽवखण्डाज्यं[2] च संहृतं पाठक्रमेण पात्रान्तरे[3] समस्य जुहूा स्थालीपाकधर्मवत्पूर्वे ऽग्नौ शंयोःशंयोरिति मन्त्रेण[4] त्रिः पर्युक्षणं कृत्वा जुहोति। कुत एतत् पूर्वे ऽग्नाविति। अग्नौ पश्चिम इति वक्ष्यमाणत्वात्।

---

१ C पत्राणि। २ C स्ववखण्डाज्य B and A are corrupt. ३ A inserts स्वरेण। ४ From शंयो to कृत्वा om. in C

१६.

१. स्वाहाकारान्तैः पञ्चभिर्मन्त्रैः पञ्चाहुतयः। स्थालीपाकधर्मेण जुहुयात्।

२. शंयोःशंयोरिति चिः पर्युक्षेत्यर्थः।

३. तान्येवावदानानि स्थालीपाकादीनि। न तु जाघनीमेव केवलाम्। न च संनीतावशिष्टं संनीयेति वचनात्।

४. जुहोतीति शेषः।

५. अत्रापि जुहोतिधर्मेणैव। स्वाहाकारान्तैः पञ्चभिर्मन्त्रैः पञ्चैवावदानधर्मविशिष्टा[1] आहुतीर्जुहोति।

६. शंयोःशंयोरित्युक्ते कृते चाविशेषात्[2]।

७. अनुदिशतीति सूत्रान्तः[3]। पश्चिमादग्नेरारभ्य यावद्विकर्तनप्रदेशस्तावत्प्रागुदीच्यभिमुखानि[4] षट् पलाशपत्त्राणि मध्यमानि निदध्यात्।

८. तेषु पर्णेषु लोहितमिश्रमूवध्यमवदध्यात्।

९. तदूवध्यं लोहितमिश्रं रुद्रसेनाभ्यो ऽनुदिशेत्। अनुदेश इदमस्येदमस्येत्यवधार्य समर्पणम्।

१०. षडेता रुद्रसेनाः। षडेव पर्णानि निहितानि। तत्र यथासङ्ख्यमनुदेशो युज्यते। आघोषिण्य इति स्त्रीलिङ्गमन्त्रितबहुवचनान्तः साकाङ्क्षः। तथा प्रतिघोषिण्यः। एवं संघोषिण्यः। तथा विचिन्वत्यः। एवं श्वसनाः। षष्ठस्तु निराकाङ्क्षो मन्त्रः। तदीयो

१ A C om धर्म। २ C om उक्ते। ३ MSS om अनु। ४ C (in marg) चा instead of च्य।

वाक्यशेषः सर्वेष्वनुवक्तव्यस्तुल्ययोगित्वात्। अतश्चैवं प्रयोगः। आघोषिण्य एष वो भागस्तं जुषध्वं स्वाहा। एवमितरेष्वपि द्रष्टव्यम्।

११. रुद्रं मन्त्रवर्णात्। यजमानस्य यस्य प्रकृतो[१]ऽनुपदेशकः।

---

## २०.

१. भूपत इत्येवमादिना मन्त्रेण नम इत्येवमन्तेन कर्तृयजमानौ प्राङ्मुखौ रुद्रमुपतिष्ठेते। असंयुक्तं प्रधानस्येति न्यायात्[२]।

२. कद्रुद्राय प्रचेतसे। इमा रुद्राय तवसे कपर्दिने। आ ते पितर्मरुतां सुम्नमेतु। इमा रुद्राय स्थिरधन्वने गिरः। एतानि सूक्तानि रुद्रस्यैवोपस्थाने विनियोक्तव्यानि। सूक्तानीति वचनात् यद्यपि प्रथमे सूक्ते तिस्रः सौम्यस्तथापि सकलस्यैव विनियोगः।

३. श्रेष्ठस्य गवादेर्दानम्। प्राक् सव्ये पाणौ ये कुशास्तान्दक्षिणेनाग्नेः संस्तृणीयेत्येवमादिकर्मणः (१.८.१२)। न त्वन्या आज्याहुतयो गृह्योक्ताः परिसंख्यातत्वात्[३]। कुशानुप्रहरणं[४] समिदाधानं च पूर्वेऽग्नौ। तच्चाहुतिभूयस्त्वात्। अपरे "कुशानुप्रहरणमन्यतरस्मिन्निच्छन्ति"[५]। समिदाधानं तूभयत्र। पर्युक्षणं नेच्छन्ति। कृतत्वात्। न्याय्यमेव[६] तु नित्यं पर्युक्षणम्। अतुल्यत्वादितरस्य। अत्र पद्धतिः।

पूर्वेद्युरुपोष्य प्रातरावसथ्यं हुत्वा। तमरण्योः समारोप्यायं ते योनिरिति यथोक्तम्। ततः प्रागुदीचीं दिशं गत्वा दीर्घचतुरस्रे उपलिप्ते पश्चार्धेऽग्निं मथित्वा। ततो लेखाकरणाभ्युक्षणाग्निप्रणयन-

---

१ B प्रकृतौ। २ B वचनात्। ३ B ०मन्त्वात्। ४ C कुशानप्र०। ५ C अन्यतमस्मिन्। ६ A न्याय्यमेव।

परिसमूहनानि। ततस्तस्मात्प्रणयनम्। तस्याप्येषैवेतिकर्तव्यता। अत्रैव दक्षिणतो ब्रह्मयजमानावुत्तरतः प्रणीताः। अत्रैव स्तरणं पवित्रच्छेदनमभ्युक्षणं ताभ्यां पर्युक्षणमाज्यस्थाल्यादानमधिश्रयणं पश्चिमे ऽग्नौ। उद्वासनमुत्पवनं प्रोक्षणमेतद्गृह्योक्तं कृत्वा तत आज्यस्य बर्हिष्यासादनम्। पूर्वस्याग्नेः पुरस्तात्पलाशशाखानिखननं। पशोरेकत्वेनोपस्पर्शनमुपाकरणम्। प्रोक्षणं प्रोक्षणावशिष्टाभिरद्भिः। द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वान्तराशृङ्गमभिदक्षिणं बद्धा नियोजनं यथासूत्रम्। तत उल्मुकेन त्रिः प्रदक्षिणं पर्यग्निकरणम्। पशोरालम्भस्तस्य च ततो यथासूत्रम्। पर्युक्षणान्ते सव्येन कुशानादाय दक्षिणेन मूले स्रुवं विष्णोर्हस्तो ऽसीति। ततो या तिरश्चीत्यादि यथासूत्रम्। अवदानानामाध्वर्यवः क्रमः श्रपणं च। दक्षिणादानं प्राक् कुशप्रतिपत्तेः।

४. अमन्त्रिकाः पाशुबन्धिक्य आवृत उपाकरणप्रोक्षणपर्यग्निकरणरूपा अतिदिश्यन्ते। यत्रासामुपदेशस्ततो ग्रहीतव्याः। आध्वर्यवे च सः।

५. यद्यपि श्रौते पशौ यूपवृक्षविशेषाः[१] प्रमाणविशेषाश्च अभ्यञ्जनाष्टाश्रिनियमाश्च सन्ति तथापि शाखापशुषु पलाशशाखैव। इति देवतायै वपामिति। इतिकरणस्तद्धर्मप्राप्त्यर्थः। देवतावचनं यावतामहमीश इत्यस्य[२] निवृत्त्यर्थम्। देवतायै हविः स्विष्टकृते चेति वचनात् वनस्पतियागवपापशुपुरोडाशनिवृत्तिरपि[३]। ननु केन

१ A यूपे instead of यूप। २ B स्ये C स्यै instead of स्य। ३ A om वपापशु B om वपा C has वपापशुपुरोडाशयोर्नि°।

वनस्पतियागपशुपुरोलाशयोः शाखापशुषु प्राप्तिः। उच्यते। श्रौता अपि शाखापशवो[1] ऽवकीर्णभिशस्तादीनां लौकिके ऽग्नौ भवन्ति। तत्रास्ति प्राप्तिः[2]। ननु भूमौ पशुपुरोलाशश्रपणं[3] कात्यायनेनोक्तमवकीर्णिपशोः। सत्यम्। मनुना तूक्तम्। (११.११८)।

अवकीर्णी तु काणेन गर्दभेन चतुष्पथे।
पाकयज्ञविधानेन यजेत नैर्ऋतं निशि॥ इति॥

ननु[4] पाकयज्ञविधानेन पशुपुरोलाशवनस्पत्योः कुतः प्राप्तिरिति। उच्यते। कात्यायनीये प्रत्यचा श्रुतिः। मानवे लानुमानिकीति। सत्यमेव। तथापि वनस्पतेः प्रतिषेधार्थमेतद्वचनम्। देवतायै हविः स्विष्टकृते चेति। गार्ह्यं तु नानया परिसङ्ख्यया निवार्यते। अप्रकृतत्वात्तस्य। संनिपत्योपकारकमपि शूलगवोक्तमन्येषां पशूनां न प्रतिषिध्यते। कुतः। आरादुपकारकाणां परिसङ्ख्यानात्। अतो ऽन्येष्वपि पशुषु यथाप्राप्तं कर्म लिख्यते। तत्रार्घ्यपशुवर्जं पूर्वेद्युरुपवासः आवसथ्यसमारोपो मन्थनं प्रणयनं परिसमूहनं ब्रह्मयजमानयोरुपवेशनं प्रणीताप्रणयनं स्तरणं पवित्रच्छेदनं आज्यस्थाल्यादानं पश्चिमे ऽग्नावधिश्रयणमुद्वासनमुत्पवनं प्रोक्षणं शाखानिखननं उत्तरतस्तस्याः पशोरुपस्थापनं तृणेनोपस्पर्शनं अमुष्मै त्वां जुष्टमुपाकरोम्यमुष्मै त्वा जुष्टं प्रोक्षाम्यमुष्मै त्वा जुष्टं नियुनज्मीति यथादैवतं पलाशशाखायां नियोजनं पर्यग्निकरणं उदग्नयनं संज्ञपनं पुरस्तान्नाभेर्वपोत्खेदनं वपाश्रपण्योः प्रच्छादनं प्रयाम्नेनं

[1] A C om. शाखा। [2] A om प्राप्ति। [3] A om पशु। [4] B C ऋतः instead of ननु।

पूर्वे ऽग्नौ श्रपणं अभिघारणं उद्वासनं ततो विष्णोर्हस्तो ऽसीति कुशस्रुवयोरादानं आघारौ महाव्याहृतिहोमः ततस्त्रिषु पलाशपर्णेषु संछिन्नेषूपस्तरणं[1] वपावधानं अभिघारणं ततो ऽमुष्मै स्वाहेति देवतामुद्दिश्य होमस्ततः पलाशासुप्रहरणं वपाश्रपण्योश्च ततः पश्चिमे ऽग्नौ स्थालीपाकश्रपणं उत्तरतो ऽवदानश्रपणं स्थालीपाकयूषमांसाज्यादीनां संनयनं ततः स्रुचावदानधर्मेणामुष्मै स्वाहेति देवतामुद्दिश्य होमस्ततः स्विष्टकृत्ततो महाव्याहृतयः ततः सर्वप्रायश्चित्तं ततः प्राजापत्यान्तं कृत्वा ततो दक्षिणादानं ततः मध्ये पाणौ ये कुशा इत्यादि अग्नेर्वासो ऽसीति ततः [2]पर्युक्षणमिति।

६. ये पश्वर्थाः स्थालीपाका येषां वा पशुना सह विकल्पः यथाष्टकायां गौपशुरजपशुः स्थालीपाको[3] वेति (गृ० ३.१४.३) तेषामाग्नेयः सौम्यश्चाज्यभागौ। प्राप्तयोरेवाज्यभागयोः पुनर्वचनं शाखापशुषु प्रतिषेधार्थम्। देवतायै वपामिति चरोरुपरि या त्वगिव सा वपाकारसामान्येन[4] वपोच्यते। तां देवतायै जुहुयात्। देवतायै हविः स्विष्टकृते चेति परिसंख्यानात् स्थानापत्तेः प्राप्तानां पशुधर्माणां प्रतिषेधार्थं। आज्याहुतिश्चैवंप्रकारेष्वेव स्थालीपाकेषु स्विष्टकृदनन्तरं पाठक्रमादनुमतये स्वाहेत्यनेन मन्त्रेण स्रुवः पात्रमिति गार्ह्येषु वचनात् स्रुवेण होतव्या।

---

१ A ॰शिविरेषु। २ B ins समिदाधानं। ३ D पशु स्था॰। ४ A सा वपाकासामान्येन वपोच्यते।

## २१.

१. शाखापश्वनुकल्पसंबन्धेनेदमुच्यते। अतो यद्यप्याचार्याया-ग्नेय इत्येवमादयः शाखापशवो गृह्योक्तास्तथापि तेषामिह पाठा-द्वैकल्पिकमनुष्ठानम्। मधुपर्कस्तु [1]नियमतस्त्रैवर्णिकानामाचार्या-दीनां परिसंवत्सराद्गृहमागतानामवश्यं कर्तव्यः। तेनेहाभिधीयते। ऋत्विजो वृणीत इत्यनेनापि वक्ष्यमाणेन यादृशस्तादृशो वास्य संबन्धो नास्ति[2]। तेनेहोपदिश्यते। आचार्यादयश्चत्वारः प्रसिद्धाः। स्नातकश्चात्र समावृत्तमात्रो गृह्यते। प्रियश्च दुहितुः परिणयनार्थ-मागतो वरः। एते ऽर्घ्या भवन्ति। अर्घ्य इति विशिष्टेतिकर्त-व्यताको मान्य इत्युच्यते। प्रियशब्दो विशेषणं मा विज्ञायीति षड्ग्रहणम्।

२. अर्हं वर्ष्मेत्येवमादिना मन्त्रेणाचार्यादिरर्घ्य उदङ्मुखः प्राङ्-मुखो वा विष्टरमधिष्ठायास्ते तं[3] वाधितिष्ठति। वक्ष्यति। कूर्चः पाद्यमर्घमाचमनीयं मधुपर्को गौरिति वेदयेतेति। अतश्चार्घप्रदात्रा पूर्वमावेदितो ऽध्यासनाधिष्ठानयोर्विकल्पः। विष्टरं कूर्चं वोपादाय।

३. अर्घदात्रावेदितं पाद्यं प्रतिगृह्णाति। विराजो दोह इत्येवमादिना मन्त्रेण पादप्रक्षालनार्थमुदकं प्रतिगृह्णीयात्।

४. अर्घ्यमित्युक्तो ऽर्घदात्रानन्तरमपः प्रतिगृह्णीयात्।

५. आचमनीयमिति प्रचोदितो ऽर्घदात्रानन्तरमापो हि ष्ठा मयोभुव इत्येवमाद्याभिस्तिसृभिः प्रत्येकं त्रिराचामेत्।

---

[1] C नियमः। [2] AC (orig) om. न। [3] C °मिष्ठेत्। कूर्चं वा°।

६. मधुपर्क इत्युक्तो ऽर्घदाता पात्रसंपुटं सदधि मधु यथा प्राशित्रं[1] ब्रह्मा ईक्षते तथेक्षणं कुर्यात्। कथं च तत्। मित्रस्य त्वा चक्षुषा प्रतीक्ष इत्यनेन मन्त्रेण। ततो ऽनन्तरम्।

७. तथैव प्रतिगृह्णाति यथा ब्रह्मा। कथं च तत्। देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि। तत्रैतावान्मन्त्रो ऽत्र तु यशसे ब्रह्मवर्चसायेति मन्त्रोपजनः।

८. तत्पात्रं कांस्यमकांस्यं वा[2] कांस्यशब्देनोच्यते। तत्प्रतिगृह्य सव्ये पाणौ निधाय तस्मान्मधुपर्कं गृहीत्वाङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या पूर्वार्धादुपहृत्य पूर्वार्धे कांस्याख्यस्य पात्रस्य निलिम्पेत्। वसवस्त्वेत्येवमादिना मन्त्रेणैकवारं द्वौ वारावमन्त्रकम्।

९. पितरस्त्वेत्येवमादिना मन्त्रेण दक्षिणार्धादुपहृत्य दक्षिणार्धे निलिम्पति। अमन्त्रकं द्विः। कांस्यइत्येतदनुवर्तत एव।

१०. आदित्यास्त्वेत्येवमादिना मन्त्रेण निलिम्पनमादानं च पूर्ववत्। पश्चार्ध इति विशेषः।

११. रुद्रास्त्वेत्येवमादिना मन्त्रेणोत्तरार्धे निलिम्पेत् पूर्ववत्।

१२. पात्रमध्यान्मधुपर्कमङ्गुष्ठोपकनिष्ठिकाभ्यामादाय विश्वे त्वा देवा इत्येवमादिना मन्त्रेणोर्ध्वं क्षिपेत्सकृन्मन्त्रेण द्विस्तूष्णीम्।

१३. उक्तार्थमेतत्।

१४. तं मधुपर्कं महाव्याहृतिभिर्मन्त्रैस्तिसृभिर्भूर्भुवः स्वरिति प्रत्येकं प्राश्नीयात्।

१५. महाव्याहृतिभिस्तिसृभिरित्यनुवर्तते। समस्ताभिस्तिसृ-

---

१ C ॰घुटं। २ C ins. in marg प्रतीक्ष्य। ३ A om कांस्यमकांस्य वा।

भिर्मद्वाव्याहृतिभिश्चतुर्थं पिबेत्। प्राशनत्रयस्य पश्चान्मधुपर्कशेषस्य कियतो ऽपि पानं कृत्वा ततः।

१६. मधुपर्कोच्छिष्टं ब्राह्मणाय प्रदद्यात्। लिङ्गमत्राविवक्षितम्।

१७. सर्वं वा मधुपर्कं पिबेत्।

१८. अप्सु वा प्रक्षिपेदिति शेषप्रतिपत्तिपक्षत्रयम्।

१९. शं नो देवीरभिष्टय इत्यादिकाभिस्तिसृभिर्ऋग्भिरुरःस्थलमभिमृशेत्।

२०. समानं तुल्यमित्यर्थः। अध्वर्युविहितेन वा याजमानविहितेन वा प्राणसंमर्शनमविशेषात्। अत एव च समानमुरोऽभिमर्शनादीति नोक्तम्। साहचर्याद्याजमानेनैव [1]नियमो मा भूत्।

२१. समानं चक्षुर्व्यायाजमानविहितेन। अन्यथासंभवात्[2]।

२२. अनन्तरमर्घदात्रा गौरित्येव वक्तव्यम्। यद्यपि गोच्छागस्थालीपाकानां विकल्पितानामन्यतमस्योपादानं कृतं तथापि गौर्गौरित्येवं वक्तव्यम्। अतः प्रागेतस्माद्गोप्रवदनात्तूष्णीमर्घ्य आसीत।

२३. इयं गौस्त्वदर्थमस्माभिर्हन्तव्येत्यनेनाभिप्रायेण गौरित्यर्घ इममर्थं बोधितः।

२४. अर्घ्यः प्रतिब्रूयात्। ओं कुरुतेति। यथाभिलषितं[3] संपादयतेत्यर्थः। ओमित्येतस्य श्रुतिरभ्यादानार्थत्वात्।

२५. माता रुद्राणां दुहिता वसूनामित्येवमादिकामृचं जपित्वा ततः ओमुत्सृजत तृणान्यत्तु एवं वा ब्रूयात्।

---

१ B ins इति। २ A अन्यथासं०। ३ B ०लषितम् A ०लिखितं।

२६. कूर्चादीनि यथाकालमर्घप्रदो[1] वेदयेत। त्रिस्त्रिर्वेदयेतेति तन्त्रान्तरात्।

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति।

## इति शाङ्खायनश्रौतसूत्रभाष्ये चतुर्थो ऽध्यायः समाप्तः।

---

शाङ्खायनकसूत्रस्य सम्यं शिष्यहितेच्छया।
वरदत्तसुतो भाष्यमानर्तीयो ऽकरोन्नवम्[2]॥

---

१ A अर्घंपाद्यप्रदो B अर्घ्यीयाघप्रदो। २ om in A (B?)

# अथ पञ्चमो ऽध्यायः।

## १.

[१]उक्तानि प्रागेष्टिकानि कर्माणि[२] सौमिकानि कर्माणि। सोमस्यावसरः। तदर्थमाह।

१. श्रुताध्ययनग्रहणधारणश्रौतस्मार्तकर्मानुष्ठानवन्तो ब्राह्मणा ऋषय इहोच्यन्ते। कुतः। को न ऋषिर्भविष्यतीति त एताननूचानानपश्यन्निति निरुक्तदर्शनात्। शतपथश्रुतेश्च। यो वै ज्ञातो ऽनूचानः स ऋषिरिति। तेषां पुत्रा आर्षेयास्तान्यूनस्तरुणाननूचानानध्ययनव्याख्यानक्षमानृत्विजो यज्ञक्रतो वृणीते। यज्ञव्यापारायाभिप्रपादयतीत्यर्थः। सोमेन यक्ष्यमाणः। सोमेन यक्ष्य इत्यभिप्रक्तः[३]। (आश्व० श्र० १.२३.१)।

२. चतुरो महर्त्विजो वृणीते। सर्वान् वा सदस्यसप्तदशान्। उभयं शाखान्तरात्।

३. चन्द्रमा मे दैवो ब्रह्मा एतदुपांशु। त्वं मानुष एतदुच्चैर्ब्रूयात्। एवं ब्रह्माणं वृणीते मन्त्रलिङ्गात्।

४. एवं सर्वान् वक्ष्यमाणानृत्विङ्नामान्तं मन्त्रमुपांशूक्त्वा शेषमुच्चैरिति।

---

१ B ins अथ। २ B C add सौमिकानि कर्माणि, C has वैदिकानि कर्माणि in marg. ३ C ०शय० in marg instead of प्र।

५. उद्गातारं वृणीते मन्त्रवर्णात् । नो देव इति दियजमानके । नो देव इति बहुयजमानके[1] । एवं सर्वेषु वरणमन्त्रेषु पूर्वेषु चोत्तरेषु च ।

६. अनेन मन्त्रेण होतारं वृणीते मन्त्रवर्णादित्युक्तम् ।

७. वायुर्म इत्येवमादिना मन्त्रेणाध्वर्युं वृणीते ।

८. प्रजापतिर्म इत्येवमादिना मन्त्रेण सदस्यसंज्ञकं वृणीते । प्रजापतिर्नौ देव इति दियजमानके । नो देव इति बहुयजमानके । अयमुपद्रष्टा[2] भवति । सर्पत्सु न शून्यं सदस्कुर्यादिति छन्दोगानाम् ।

९. ऋतवो म इत्येवमादिना मन्त्रेण होत्राशंसिनो वृणीते । होत्रका होत्राशंसिन उच्यन्ते ।

१०. भर्ग म इत्येवमादिकं मन्त्रं वृत ऋत्विक् जपित्वानन्तरं जपात्पृच्छति यदि पूर्वं न ज्ञातो यो ऽयं यज्ञः कर्तव्यः । किमयमहीन उत नेति । कच्चिच्छब्दः किंशब्दस्यार्थे । अनुद्देश्यः स उच्यते यः कलान्यस्मै जीवते मृताय वा अनुदिश्यते । यथा कात्यायनेनोक्तम् । उखां चेद्बिभ्रन्म्रियेत सोपकरणमाहिताग्न्याहृता दग्ध्वा नेदिष्ठ्यग्निं चित्वा तमस्मा अनुदिशेदित्येक इति[3] । न्यस्तार्त्विज्यस्तु न्यस्तं परित्यक्तमार्त्विज्यं यस्मिन्नन्येन केनचिद्यजमानस्य दोषेण । नीतासु दक्षिणासु यः शेषः स नीतदक्षिणो यज्ञशेषः । एवं दृष्टादृष्टदोषपरिहारार्थम् । यद्येतेषामन्यतमो न भवति ततः प्रतिशृणोति । इतरया प्रत्याचष्टे । प्रतिश्रवः क्रियाभ्युपगमः । प्रत्याख्यानं तद्विपर्ययः ।

---

१ B ins. सर्वेषु । २ C अयमपि द्रष्टा । ३ का० १६. १७ १ ।

## २.

१. ऋत्विग्वरणादनन्तरं देवयजनजोषणम्। महर्त्विजो यजमानश्च प्राक्प्रवणं देवयजनं जोषयेरन्। शाखान्तरात्।

२. पूर्वोत्तरयोर्दिशोर्यदन्तरालं तदवनतं देवयजनं यशस्कामस्य कुर्यात्।

३. यस्मिन्देवयजने स्थितो होता सामिधेन्याद्यनुब्रुवन्नाहवनीयमादित्यमपश्च नदीतडागादिष्ववस्थिताः पश्येत्तद्ब्रह्मवर्चसकामस्य देवयजनं भवति।

४. शुद्धपक्षे दीक्षाप्रक्रमः। पुण्ये नक्षत्रे पुण्याहे समापनं च सोमस्य।

---

## ३.

१. अपराह्णे दीक्षणीयासंज्ञका अग्नाविष्णुदेवताका इष्टिर्भवति। संज्ञाकरणं चिह्नविश्च[1] दीक्षणीयेत्येवमाद्यर्थम्।

२. नियमार्थं वचनम्। पूर्वकारिवशाद्धविरन्तरे ऽपि।

३. पञ्चदश सामिधेनीरन्वाहेति श्रुतेः।

४. इष्टिर्विशेष्यते। उपांशुहविरियमिष्टिर्यद्यपि बहूनि हवींषि भवन्ति।

५. प्रेद्धो अग्न इमो अग्न इति विराजौ स्विष्टकृतो याज्यानुवाक्ये भवतः शाखान्तरात्[2]।

---

१ A ins. दीक्षणीया पूर्वाह्णे। २ C om. शाखान्तरात्।

६. निर्ये वा स्विष्टकृतो याज्यानुवाक्ये भवतः। विराजौ स्विष्टकृतौ वेति सूत्रे कर्तव्ये विराण्नित्ययोस्तुल्यतामज्ञापनार्थं सूत्रभेदः। अतश्च यत्र यातयामत्वदोष आशङ्क्यते तत्राविनियुक्तयोः क्रिया सिद्धा भवति।

७. उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्ताम्। एता इलायां तिस्र आशिषः। एतासां स्थाने ऽस्य यज्ञस्यागुर उदृचमशीय इत्येतानि[1] षट् पदानि भवन्ति। उपहूतो ऽयं यजमान इत्यस्य प्राकृतस्येह पाठः सन्ध्यर्थः। इतिकरणञ्च विस्पष्टार्थः। इलायामुक्तो विशेषः। सूक्तवाके उच्यते। उत्तरां देवयज्यां भूयो हविष्करणमायुः सुप्रजास्त्वं दिव्यं धामेति पञ्चाशिषो नामग्रहणस्यानन्तराः। तासां स्थाने ऽस्य यज्ञस्यागुर उदृचमशीयेति षट् पदानि भवन्ति। तत्र[2] वक्ष्यमाणसूत्राभिप्रायेण यजमाननामग्रहणमुत्सृज्य तस्मात्पूर्वं पदत्रयं गृहीत्वा सूत्रकारेण प्रयोगः प्रदर्शितः। आशास्त इति चावसानार्थं पठन्ति। एवं व्यवस्थितमिलायां सूक्तवाके च कुर्यात्। प्राक्तार्तीयसवनिक्याः पुरोलाशेलायाः। तृतीयसवने भवा तार्तीयसवनिकी। पुरोलाशेला सवनीयपुरोलाशसंबन्धिनी इला। प्राक् तस्या आगुर उदृचमशीयेत्येवमादि यथोक्तं कर्तव्यम्।

८. वक्ष्यत्याग्नेयः सवनीय इत्यादि। प्राक्तस्मात् ये सूक्तवाकास्तेषु चोदकप्राप्तं यजमाननामग्रहणं प्रतिषिध्यते।

९. इयं दीक्षणीया इष्टिः पत्नीसयाजान्ता भवति। तथैव

---

[1] A C om इति। [2] B तत्र।

श्रुतत्वात्। आहवनीयोपस्थानमप्रतिषिद्धमासीत्तदयनेन प्रतिषिध्यते। चशब्दादयमपि दीक्षणीयाधर्मो न केवलं पौर्णमासीविकारादयः।

---

४.

१. दीक्षणीयानन्तरं नवनीताक्तं कृताञ्जनं निर्वृत्तवापनवाचनं त्यक्ताङ्गुलिं यजमानं शालां प्रवेश्याध्वर्युरौद्ग्रभणानि जुहोति। तमध्वर्युमन्वारभ्य मनो म इत्यादिकैः पञ्चभिर्मन्त्रैः पञ्चैवाहुतीरनुमन्त्रयेत। याजमानमेतन्न हौत्रम्।

२. एतैरेव पञ्चभिर्मन्त्रैः।

३. एकदीक्षे च यज्ञे वक्ष्यमाणमुपस्थानमौद्ग्रभणानन्तरं कुर्यात्। एतदपि याजमानं चशब्दात्।

४. मनो दीक्षामित्येवमादिना मन्त्रेणाहवनीयमुपतिष्ठत इति वाक्यशेषः।

५. वाचं दीक्षामित्येवमादिना मन्त्रेण गार्हपत्यमुपतिष्ठते।

६. प्राणमित्येवमादिना मन्त्रेण दक्षिणाग्निमुपतिष्ठते।

७. बह्वो दीक्षासंख्याविकल्पाः शाखान्तरेषु। तदभिप्रायेणोक्तम्। अपरिमिता दीक्षा इति। दीक्षाधर्मयुक्तान्यहानि दीक्षा इति उच्यन्ते। तासां दीक्षाणामपवर्गे परिसमाप्तावित्यर्थः। [1]प्रायणीयसंज्ञका इष्टिर्भवति। इष्टिग्रहणं विस्पष्टार्थम्।

---

१ A ins. अत ओभते।

५.

१. यजतीति वाक्यशेषः। हविरुपदेशो याज्यानुवाक्यानियमार्थः।

२. चोदनानुपूर्व्येण याज्यानुवाक्यायुगलान्याह। पथ्यायाः स्वस्तेः पुरोनुवाक्या स्वस्ति नः पथ्यासु धन्वसु। याज्या स्वस्तिरिद्धि प्रपथे श्रेष्ठा।

३. आग्नेयस्य पुरोनुवाक्याग्ने नय सुपथा राये अस्मान्। याज्या अग्ने त्वं पारया नव्यो अस्मान्।

४. सोमस्य पुरोनुवाक्या त्वं सोम प्र चिकितो मनीषा। याज्या या ते धामानि हविषा यजन्ति।

५. सवितुः पुरोनुवाक्या तत्सवितुर्वरेण्यं। याज्या य इमा विश्वा जातानि।

६. अदितेः पुरोनुवाक्या सुत्रामाणं पृथिवीं द्यामनेहसम्। याज्या महीमू षु मातरं सुव्रतानाम्।

७. इयं प्रायणीया पञ्चदशसामिधेनीका भवति।

८. अस्या एवापरो धर्म उपांशुहविष्ट्वम्।

९. चोदकप्राप्तयोः प्रतिषेधः शाखान्तरात्।

१०. त्वां चित्रश्रवस्तम स्विष्टकृतः पुरोनुवाक्या। यदाविर्यदपीच्यं तदग्नय याज्या।

११. शंय्वन्ता प्रायणीयेति श्रुतेः। एतावन्तो वैशेषिकाः प्रायणीयाधर्मा नान्य इति चशब्दः। अतश्च ये ऽस्मिन् प्रकरण उक्ताः प्रायणीयाधर्मास्त एवोदयनीयायामतिदिश्यन्ते। नान्ये आग्नेयामनिर्वचनमित्येवमादयः।

# ६.

१. प्रायणीयानन्तरं सोमक्रयः। ततः परिवहनम्। तत्र होतुः संप्रेषितस्यानुवचनम्। तदेतस्मिन्नवधौ भवति। राजानमिति सोमस्य पर्यायो ऽन्यस्मिन्प्रदेशे संव्यवहाराय।

२. शकटचक्रयोस्तलतोः प्रतिष्ठन्ते[1] वर्त्मनी उच्येते। तयोरन्तरेण तिष्ठन् भद्रादभि श्रेय इत्यादिकामनुब्रूयात्।

३. इमां धियं शिक्षमाणस्य देव वनेषु व्यन्तरिक्षं ततान सोम यास्ते मयोभुव इति चतस्रः। एताः यडयन्तरेण वर्त्मनी अनुसंयन्ननुब्रूयात्।

४. शालां पूर्वेणाध्वर्यवः शकटमवस्थाप्य प्रपादयन्ति प्रवेशयन्ति शालायां सोमम्। इशयेये तु ब्रह्मागारं नयन्ति। तत्रापि कथं नाम होतान्वियादित्याध्वर्यवस्य शालामयेणेत्यादिरुपदेशः।

५. येनाध्वर्य्वादयो व्रजेयुर्यथाहवनीयं पूर्वेण वापरेण वा तेनानुसमियाद्धोता।

६. या ते धामानि हविषा यजन्तीति गृहीतसोमान्प्रपद्यमानानतुप्रपद्य ततः।

७. येन व्रजेयुस्तेनानुसमियादिति यद्यपरेणाप्याहवनीयं गतस्तथापि प्रत्येत्याग्रेणाहवनीयं दक्षिणामुखः स्थित आगन्देव ऋतुभिर्वर्धतु चयमिति परिदध्यात्।

८. उपप्रस्थाप उत्सृज्यते वाग्यमादेः।

---

[1] B ॰प्रदे C (orig.) ॰हुदे।

८. उपसर्जनीरधिश्रयति मदन्तीरित्यातिथ्यायां। मदन्त्य आध्वर्यवोक्ता[1] मदन्त्याख्या आपः। ताभिरुदकार्यं उदकप्रयोजनमुपस्पर्शनादि कुर्यादत ऊर्ध्वमाग्नीषोमप्रणयनात्।

---

७.

१. सोमपरिवहनादनन्तरमातिथ्यानामेष्टिर्भवति[2]। वैष्णवी विष्णुदेवत्यमस्यां हविः कर्तव्यम्। संज्ञाकरणं शास्त्रसंव्यवहारार्थम्।

२. वार्त्रघ्नावाज्यभागावित्युक्तं भवति।

३. प्रधानयाज्यानुवाक्ये। विष्णोर्नु कं वीर्याणि प्र वोचमिति पुरोनुवाक्या। प्र तद्विष्णुः स्तवते वीर्येणेति याज्या।

४. होतारं चित्ररथमध्वरस्य यज्ञस्य यज्ञस्य सुहिरण्यो अग्न इति संयाज्ये इति श्रुतेः।

५. अग्निमन्थनीयानुवचनमामन्त्रे हविष्यभिहृष्ट[3] इत्यभिप्रायः। एवं व्रतग्रहणाभावानुवृत्तिर्यजमानस्य प्रदर्शिता भवति। तथा च कात्यायनः। अग्न्यन्वाधानव्रतोपायनारण्यभोजनदानब्रह्मवरणानि दीक्षणीयाप्रभृति प्रागुदवसानीयायाः सोमे कृतत्वादित्यत आह।

६. इयमिष्टिरेवंधर्मिका भवति।

७. एवमेव श्रुतेः।

---

१ B om. मदन्त्याख्या। २ C (in marg) ॰मयपात् instead of ॰वहनात
३ C (in marg) ह instead of ह्न।

## ८.

१. आतिथ्यानन्तरं सर्वे सयजमानका ऋत्विजो मदन्तीरुपस्पृश्य वक्ष्यमाणं तानूनप्त्रावमर्शनं कुर्युः। सर्वावचने होतैव केवलः स्यात्परिभाषितत्वादिति।

२. अनाधृष्टमित्येवमादिना मन्त्रेण तानूनप्त्राख्यमाज्यमृत्विजो यजमानश्च समवमृशन्ति। तदाज्यं च विशेष्यते। सहिरण्यं ध्रुवाया आगतं प्राचीरूयं बर्हिषि स्थापितं सत्। सहिरण्यमिति हिरण्यस्याप्राधान्यात् पक्षे केवलमपि। ध्रौवमाज्यमिति पूर्वकारिवशात् सर्वेषामाज्यग्रहणमिति ज्ञापनार्थम्। बर्हिष्यासन्नमिति निराधारशङ्कया प्राचीस्थमित्युक्तम्।

३. तानूनप्त्रावमर्शनादनन्तरं मदन्तीरुपस्पृश्याग्रेणाहवनीयं परीत्य अंशुरुपस्पृशन्तस्त्विषर्वाणः सोमांशवस्तानुपस्पृशन्तो राजानं सोमं स्पर्शनेन मन्त्रेण चाप्याययन्ते। यजमानषष्ठा होतृमत्रोद्गात्राग्नीध्राध्वर्यवः। अंशुरंशुष्ट इत्येवमादिना मन्त्रेण। अत्र मन्त्रे सुत्यापदस्य विकृतौ सुत्यादित्वे सुत्यावत्त्वे च साधारणे सोमे वचनोहः[१]। सुत्ये उदृचं सुत्या उदृचमिति।

४. सोमाप्यायनं कृत्वा तत्रैव स्थिता उरोऽभिमर्शनं कुर्वन्ति यमादित्या इत्येवमादिना मन्त्रेण।

५.[२] उपस्पृश्येति गृह्यसिद्धस्य वचनं निह्नवाङ्गार्थम्। सोमाप्यायितार उरोऽभिमर्शनं कृत्वा मदन्तीरुपस्पृश्य प्रत्येत्य निह्नुवते।

---

१ A B (sec h) ०नश्च नोहः। २ A om. the comm. on 5 6 and the beginning of 9, 1.

यज्ञं परिभूय यद्दक्षिणतः सोमाप्यायनाय गतास्तद्दुरितं[1] नमस्कारेणापनयन्तीत्यर्थः। कथं तदित्यत आह। दक्षिणोत्तानान्पाणीन्। दक्षिणा उत्ताना इतरे तद्विपरीतास्तानेवं विन्यस्य तादृशान्प्रस्तरे कृत्वा निह्नुवते पौर्वाह्णिके निह्नवने[2]। सव्योत्तानानपराह्णे। आपराह्णिके निह्नवने[2]। एष्टा राय इत्येवमादिना मन्त्रेण।

६. आप्यायनमुपरोऽभिमर्शनं प्रस्तरे निह्नवनमित्येवमाद्युपसदुपसदि[3] प्रतीष्टि परिसमाप्त्यनन्तरं कर्तव्यम्। आतिथ्यानन्तरं श्रुतिपाठक्रमेण प्रवर्ग्यो वक्तव्यो यतो ऽनन्तरमाह।

---

## ६.

१. प्रवर्ग्य इति वक्ष्यमाणस्य कर्मणो नामधेयम्। तद्रहितः प्रथमप्रयोगो भवति। न प्रथमयज्ञे प्रवृञ्ज्यादिति (कौ० ८. ३) श्रुतेः।

२. अधिगतसकलवेदार्थस्यानूचानस्य प्रथमयज्ञे ऽपि विकल्पतः प्रयोगो भवति। कामं तु यो ऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यादिति श्रुतेः।

३. प्रवर्ग्यप्रचार इति वाक्यशेषः। सूत्रारम्भो होतुस्तत्र पश्चादुपवेशनं कथं नाम स्यादिति।

४. अभिष्टौतीति सूत्रच्छेदः। क्रमनिर्देशः क्रमार्थः। महावीरमाचार्य प्रवर्ग्योपयोगीनि। तेषु साध्यमानेषु पूर्वेण द्वारेण पत्नीशालां प्रविशेत्। न्यायप्राप्तमप्येतदुच्यते। यदा मध्यन्दिने प्रवर्ग्य-

---

१ C (in marg.) परीतो। २ A B निह्नुवने। ३ B इत्येतदुप०।

८.

१. आतिथ्यानन्तरं सर्वे सयजमानका ऋत्विजो मदन्तीरुपस्पृश्य वक्ष्यमाणं तानूनप्त्रावमर्शनं कुर्युः। सर्ववचने होतैव केवलः स्यात्परिभाषितत्वादिति।

२. अनाधृष्टमित्येवमादिना मन्त्रेण तानूनप्त्राख्यमाज्यमृत्विजो यजमानश्च समवमृशन्ति। तदाज्यं च विशेष्यते। सहिरण्यं ध्रुवाया आगतं पात्रीस्थं बर्हिषि स्थापितं सत्। सहिरण्यमिति हिरण्यस्याप्राधान्यात् पचे केवलमपि। ध्रौवमाज्यमिति पूर्वकारिवशात् सर्वेषामाज्यग्रहणमिति ज्ञापनार्थम्। बर्हिष्यासन्नमिति निराधारशङ्कया पात्रीस्थमित्युक्तम्।

३. तानूनप्त्रावमर्शनादनन्तरं मदन्तीरुपस्पृश्याग्रेणाहवनीयं परीत्य अंशूनुपस्पृशन्तस्त्रिपर्वाणः सोमांशवस्तानुपस्पृशन्तो राजानं सोमं स्पर्शनेन मन्त्रेण चाप्याययन्ते। यजमानषष्ठा होतृब्रह्मोद्गात्राग्नीध्राध्वर्यवः। अंशुरंशुष्ट इत्येवमादिना मन्त्रेण। अत्र मन्त्रे सुत्यापदस्य विकृतौ सुत्यादित्वे सुत्यावत्त्वे च साधारणे सोमे वचनोहः[१]। सुत्ये उदृचं सुत्या उदृचमिति।

४. सोमाप्यायनं कृत्वा तत्रैव स्थिता उरोऽभिमर्शनं कुर्वन्ति यमादित्या इत्येवमादिना मन्त्रेण।

५.[२] उपस्पृश्येति गृह्यसिद्धस्य वचनं निह्नवाङ्गार्थम्। सोमाप्याययितार उरोऽभिमर्शनं कृत्वा मदन्तीरुपस्पृश्य प्रत्येत्य निह्नुवते।

---

१ A B (see h) •नस्य नोह। २ A om the comm. on 5 6 and the beginning of 9, 1

यज्ञं परिभूय यद्दक्षिणतः सोमाप्यायनाय गतास्तदुरितं[1] नमस्कारेणापनयन्तीत्यर्थः। कथं तदित्यत आह। दक्षिणोत्तानान्पाणीन्। दक्षिणा उत्ताना इतरे तद्विपरीतास्तानेवं विन्यस्य तादृशाग्रस्तरे कृत्वा निह्नुवते पौर्वाह्णिके निह्नवने[2]। सव्योत्तानानपराह्णे। आपराह्णिके निह्नवने[2]। एष्टा राय इत्येवमादिना मन्त्रेण।

६. आप्यायनमुरोऽभिमर्शनं प्रस्तरे निह्नवनमित्येवमाद्युपसद्युपसदि[3] प्रतीष्टि परिसमाप्त्यनन्तरं कर्तव्यम्। आतिथ्यानन्तरं श्रुतिपाठक्रमेण प्रवर्ग्यो वक्तव्यो यतो ऽतस्तमाह।

---

## ९.

१. प्रवर्ग्य इति वक्ष्यमाणस्य कर्मणो नामधेयम्। तद्रहितः प्रथमप्रयोगो भवति। तत्र प्रथमयज्ञे प्रवृञ्ज्यादिति (कौ॰८.३) श्रुतेः।

२. अधिगतसकलवेदार्थस्यानूचानस्य प्रथमयज्ञे ऽपि विकल्पतः प्रयोगो भवति। कामं तु यो ऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यादिति श्रुतेः।

३. प्रवर्ग्यप्रचार इति वाक्यशेषः। सूचारम्भो होतुस्तत्र पश्चादुपवेशनं कथं नाम स्यादिति।

४. अभिष्टौतीति सूत्रच्छेदः। क्वानिर्देशः क्रमार्थः। महावीरपात्राणि प्रवर्ग्योपयोगीनि। तेषु नाद्यमानेषु पूर्वेण द्वारेण पत्नीशालां प्रविशेत्। न्यायप्राप्तमप्येतदुच्यते। यदा मध्यन्दिने प्रवर्ग्य-

---

१ C (in marg) परीती। २ A B निह्नुवने। ३ B इत्येतदुप॰।

चरणमाग्नीध्रीये भवति तदा तस्मिन् प्रवेशो दक्षिणेन द्वारेण व्यवायात्।

५. आहवनीयखरपाचाणामुत्तरत इति नोक्तम्। कस्मिन्नवैयामसंभवात्। तद्यथा। आग्नीध्रीये नाहवनीयो नापि द्वौ खरौ। यथासंभवं संचर आहवनीयासमासाल्लभ्यते[१]।

६. प्रवर्ग्यप्रचारप्रदेशस्य पश्चात्संनिधावुपविशेत्।

७. अध्वर्युणा।

८. अर्धर्चं संदधदेकैकां मकारान्तप्रणवावसानयुक्तामभिष्टौति।

९. एकशतसङ्ख्याको ऽयमृग्गणस्तस्येयं प्रथमा।

१०. शाखान्तरीयत्वात्सकलपाठः।

११. विकल्पितान्तस्य शाखान्तर आम्नानात्[२]। ब्रह्म जज्ञानं प्रथमं पुरस्तादिति प्रतीकग्रहणात् सावित्रीः प्रथमा अभिष्टौतीति च श्रुतेः (कौ० ८.३)।

१२. अञ्जन्ति यं प्रथयन्तो न विप्रा इत्येतां महावीरमुखे ऽज्यमाने ऽभिष्टुयात्। स यद्येतां होतान्वाहाञ्जन्ति यं प्रथयन्तो न विप्रा इति तदेतं प्रचरणीयं महावीरमाज्येन समनक्तीति शतपथश्रुतेः (१४.१.२.१३)। अध्वर्युश्रुतिवशात्[३] पूर्वमभ्यञ्जनादारभ्यम्।

१३. सं सीदस्व महाँ[४] असीति खरस्थयोर्मुञ्जप्रज्वलयोरुपरि महावीरे साद्यमाने ऽभिष्टुयात्।

१४. भवा नो अग्ने सुमना उपेतौ तयो स्वग्ने अन्तरा[५]

१ A आहवनीयादीनामसमासात्, C (sec. h.) चम over चाम and भ over स।
२ C (in marg.) दर्शनात्। ३ C om. श्रुति। ४ C मह। ५ C अन्तर।

अमित्रान् यो नः मनुष्यो अभिदासदग्ने। एतास्तिस्रो उद्गारेषूयोद्यमानेष्वभिष्टुयात्।

१५. कृणुष्व पाजः प्रसितिं न पृथ्वीमित्येवमाद्याः पञ्चाभिष्टुयात्।

१६. परि त्वा गिर्वणो गिरः। अधि द्वयोरदधा उक्थं वचः। एते अभिष्टुयात्। ऐन्द्रावभिरूपे अभिष्टौतीति (८. ४) श्रुतेः।

१७. शुक्रं ते अन्यद्यजतं ते अन्यत्। अर्हन्बिभर्षि सायकानि धन्वेति। पौष्णीं च रौद्रीं चाभिरूपे अभिष्टौतीति श्रुतेः।

१८. पतङ्गमक्तमसुरस्य मायया ह्वं सूक्तम्। यके द्रप्सस्य धमतः समस्वरन्निति नवकं सूक्तम्। एते अभिष्टौति।

१९. पवित्रं ते विततं ब्रह्मणस्पते द्वे ऋचौ[१]।

२०. वि यत्पवित्रमित्यादिकां कल्पशामभिष्टौति। सा द्वादश पावमान्य इति (८. ५) श्रुतेः।

२१. अयं वेनश्चोदयत्पृश्निगर्भा इत्येतदष्टकं सूक्तमभिष्टौति[२]। नाके सुपर्णमुप यत्पतन्तमित्येतां वर्जयित्वा[३]।

२२. गणानां त्वा गणपतिं हवामह इत्येकोनविंशतिकं सूक्तम्।

२३. बृहद्वदेम विदथे सुवीरा इति एतदवसरमात्रं पठन् वीरकामार्थे पक्षे यथाभिलषितं वीरं पुत्रं ध्यायात्।

२४. का राधद्धोत्राश्विना वामिति एता नवाभिष्टुयात्।

२५. आ नो विश्वाभिरूतिभिरित्येताभिस्त्रो ऽभिष्टुयात्।

---

१ C adds सा द्वादश पावमान्य इति श्रुतेः। २ C om. अभिष्टौति। ३ C इत्येतामुद्धृत्याभिष्टुयात्।

२६. प्रातर्यावाणा प्रथमा यजध्वमिति पञ्चर्चं सूक्तं पौर्वाह्णिके प्रवर्ग्यप्रचारे ऽभिष्टुयात्।

२७. आ भात्यग्निरुषसामनीकमिति पञ्चर्चमेवापराह्णिके प्रवर्ग्यप्रचारे ऽभिष्टुयात्।

२८. ईले द्यावापृथिवी पूर्वचित्तय इत्येतत्पञ्चविंशतिकं सूक्तं सर्वमुत्तमेन स्वरेणाभिष्टुयात्। उत्सृज्य मध्यमां वाचम्[1]।

२९. अप्नस्वतीमित्येतां पठित्वा द्युभिरक्तुभिरित्येतां परिशिष्याध्वर्युणा रुचितो घर्म इत्युक्ते ऽरूरुचदुषसः पृश्निरग्रिय इत्येतामभिष्टुयात्। स्थानिर्देशः क्रमार्थः।

३०. ईलेद्यावीयस्योत्तमयानुवचनं परिसमाप्य। अत्रापि परिधायेति क्रमार्थो निर्देशः।

३१. अनुवचनान्ते मदन्तीरुपस्पृश्योत्थाय ततो ऽवकाशनाममुवाकेनाध्वर्युवोक्तेन महावीरमुपस्थाय मदन्तीरुपस्पृश्योपविशति[2]।

---

## १०.

१. त्रयस्त्रिंशदुत्तरा अभिरूपा दोहनीया अभिष्टौतीति श्रुतत्वात्। दोहनीयाद्यवसर इदानीम्। तत्र यदा गामाह्वयत्यध्वर्युर्दोहाय तदा उप ह्वये सुदुघां धेनुमेतामित्येतामभिष्टुयात्।

२. हिंकृण्वती वसुपत्नी वसूनामित्यागच्छन्त्यां गवि।

३. गवीत्यनुवर्तते। अभि त्वा देव सवितरित्येतामनुब्रूयात्। अभिधीयमानायां बध्यमानायामित्यर्थः।

---

1. A C om. उत्सृज्य मध्यमां वाचम्।
2. The Comm on 31 is om. in B.

४. समी वत्सं न मातृभिः सं वत्स इव मातृभिरिति द्वे। अथैते अभिष्टुयात् उपसृज्यमानायां गवि। सवत्सीक्रियमाणाया-मित्यर्थः।

५. यस्ते स्तनः शशयो यो मयोभूरित्येतामभिष्टुयात्। वत्से स्तनं गृह्णति सति।

६. गौरमीमेदनु वत्सं मिषन्तमित्येतामभिष्टुयात् स्तनादुन्मुच्य वत्से नीयमाने।

७. नमसेदुप सीदत संजानाना उप सीदन्नभिज्ञु इत्येते दोग्धर्युपसीदत्यभिष्टुयात्।

८. दोहेन गामुप शिक्षा सखायम्। दुहन्ति सप्तैकाम्। आ दशभिर्विवस्वतः। आत्मन्वन्नभो दुह्यते घृतं पयः। समिद्धो अग्नि-रश्विनेति कल्पजा। समिद्धो अग्निर्वृषणा रयिर्दिव इति कल्पजेव। तदु प्रयक्षतममस्य कर्म। एताः सप्ताभिष्टुयाद्दुह्यमानायां गवि।

९. अधुक्षत्पिप्युषीमिषम्। उत्तिष्ठ ब्रह्मणस्पते। एते अभिष्टु-यादुत्तिष्ठति सति दोग्धरि।

१०. उप द्रव पयसेत्यादिकां कल्पजामाह्रियमाणयोः पयसो-रभिष्टुयात्। ननु कतमे एते द्वे पयसी। उच्यते। येनैव क्रमेणा-ध्वर्युर्गां दोग्धि तेनैव क्रमेण प्रतिप्रस्थाता अजां मयूखे बद्धां दोग्धि। अतो गव्यं आज च द्वे पयसी।

११. केषां चिदध्वर्यूणामानीय पयसी शरस्य एव महावीरे आसेकक्रिया। तत्राभिच्यमानयोः पयसोर्यमासंयमा सुते मिश्रत श्रियमित्येकमिति नूनमश्विनोर्ऋषिरित्यपरमिति अभिष्टुयात्।

१२. उदु ष्य देवः सविता हिरण्ययेत्युद्यम्यमाने खरान्महावीरे।

१३. वाजसनेयके पयआहरणादनन्तरं खरान्महावीरमुद्यम्योपयमन्यामाधायासेकः। तत्रासेकोद्यमनकर्मणोर्विपर्यासे यथाकर्माभिष्टुयात्।

१४. अनन्तरं यागार्थमध्वर्य्वादय[1] आहवनीयं व्रजन्ति तेषु प्रवृत्तव्रजनेषु[2] प्रैतु ब्रह्मणस्पतिरित्येतामभिष्टुयात्।

१५. नाके सुपर्णमुप यत्पतन्तमित्येतामृचमनुसंयन्नभिष्टुयात्। कानानुसंयन्निति चेत्। येषु प्रव्रजत्सु पूर्वोक्ता।

१६. यत्र तस्य संभवः। क्व च तस्य संभवः। सौत्ये ऽहनि प्रवर्ग्ये क्रियमाणे सदसि होतृषदनमस्ति। तत्राग्नीध्रीयाद्यजतिदेशमनुगत्य प्रत्येत्योत्तरेणाग्नीध्रीयं गत्वा पूर्वया द्वारा सदः प्रपद्य होतृषदन उपविश्य वक्ष्यमाणं कर्म करोति। अन्यत्रासनमात्रम्। आसीनम्न्यायमिति परिभाषितत्वात्।

१७. अध्वर्युणा संप्रेषितः।

१८. उभा पिबतमश्विना गायत्री। तप्तो वां घर्म इत्यादिका कल्पजा त्रिष्टुप्। आभ्यामेकैकस्य मध्ये ऽनवानन् वषट्कुर्यात्। द्वाभ्यां यजेत् त्रिष्टुब्वतीभ्यां पूर्वाह्ण इति (८. ७) श्रुतेः।

१९. घर्मस्याग्ने वीहीत्यनेनानुवषट्करोतीति पूर्वाह्णे पौर्वाह्णिके प्रवर्ग्यचरण इत्यर्थः।

२०. यावदुक्तमेव। नाभ्यधिकं सामिधेन्याद्यपीत्यपशब्दस्यार्थः।

---

१ A यदाषिन्नपोः पयसोर्होमार्थम्, C (in marg) चामिच्यमानयो पयसोः।
२ A प्रव्रजत्सु।

२१ अस्य पिबतमश्विना गायत्री। यदुस्रियास्वाहुतमित्येवमादिका जगती कल्पजा। जगतीभ्यामपराह्ण इति श्रुतेः।

२२ यथा पूर्वाह्णे।

२३ स्वाहाकृत इत्येवमाद्युभयत्र असंयुज्यविधानात्।

२४ सखे सखायमभ्या ववृत्स्वेत्येतामागच्छति सत्यभिष्टुयात्। उत्तरपूर्वार्धं गत्वाध्वर्युरागच्छति। सो ऽस्याभिष्टवावधिः।

२५ साद्यमाने इति महावीरं खरे सादयत्यध्वर्युस्तस्मिन्नवधौ गन्धर्व इत्था पदमस्य रक्षतीत्येतामभिष्टुयात्।

२६ आवर्तनं महावीरपात्रस्य न्युब्जताकरणम्। तत्कुर्वति सत्यध्वर्यौ न घेमित्था नमस्विन इत्येतामभिष्टुयात्। प्रागाथमष्टमं मण्डलं तत्रभवा प्रागाथिका।

२७ नत्वाध्वर्यूणामग्निहोत्राहृता होमस्तं पुरा हविर्हविष्मो महि धाम दैव्यमित्येतामभिष्टुयात्।

२८ हुतमेवस्य प्राणभक्षो ऽप्राप्राणमात्रमित्यर्थः।

२९ प्राणान्तरादुभयोस्तानेव समुपहृयेति।

३० एवमेव द्रष्टव्यम्।

३१ हुतं हविरित्येवमादिको भक्षमन्त्रः। ययोरेव भक्षस्तयोरेवायं भक्षमन्त्रः। न केवलस्य यजमानस्यानन्तरत्वात्।

३२ आ यस्मिन् सप्त वासवा इत्येवमादिकां कल्पजामभिष्टुयात्। सम्साद्यमानेषु अध्वर्युणा महावीरपात्रेषु।

३३ सूयवसाद्भगवती हि भूया इत्याग्नीध्रं त्या परिदधातीति (८ ७) श्रुतेः।

२४. मदन्तीरुपस्पृश्य वाग्यमादुत्सृज्यते। शान्तिकरणं शुक्रियस्तुपं (वा० २६.१) वाचमित्यादिकमध्वर्युवशादाद्यन्तयोर्भवत्येव।

२५. सुत्ये प्रवर्ग्यो वा भवत्यहन्यहनि यावत्सुत्यम्। आग्नीध्रीये प्रवर्जनम्। होमस्त्वाहवनीय एव। स्तुते बहिष्पवमाने पौर्वाह्णिकः प्रचारः। माध्यन्दिने पवमाने आपराह्णिकः। एवमेव श्रुतत्वात्। पूर्वकारिवशात्तु क्रिया।

२६. आतिथ्यानन्तरं तानूनप्त्रमोमाप्यायनोरोभिमर्शनप्रस्तरेनिह्नवनं तत्कालोपसदा चरन्ति। प्रवर्ग्यरहिते यज्ञे। प्रवर्ग्यवति तु प्रवर्ग्यं संस्थाप्य।

---

## ११.

१. उपसत्स्वरूपमिदानीमुच्यते। उपसद्याय मीळ्हुष इत्येतास्तिस्रः सामिधेनीराह पूर्वाह्णे। पौर्वाह्णिकामुपसदीत्यर्थः। कथं पुनराह। अर्धर्चं संदधदनुच्छ्वसन्नेकैकां सप्रणवां मकारान्तप्रणवावसानां त्रिरुक्त्वा तृतीयेन वचनेनोत्तरां संधायावस्येत्।

२. सामिधेनीराहेति संबध्यते। इमां मे अग्ने समिधमित्येतास्तिस्रः आपराह्णिकामुपसदि।

३. अनवानमेकैकां सप्रणवां त्रिरुक्त्वा तृतीयेन पूर्वस्या वचनेन शुद्धप्रणवान्तेनोत्तरां संधायावस्यति द्वे अनुच्छ्वसन्पठतीत्यर्थः।

४. तृतीयायास्तृतीये वचने यः प्रणवस्तेनाग्निमावह सोममावह विष्णुमावहेति संदध्यात्। यथापठितमेवैतन्नाभ्यधिकं[१] परिसंख्या-

---

१ A नान्यदधिकं।

नात्। प्रणवेन संधानोपदेशात् अग्ने महाँ असीत्येवमादेरावह देवान्यजमानायेत्येवमन्तस्य धाभावः। तिस्र एव देवता व्यवस्थाप्यावाहयेत्।

५. सुगादापनेनाग्निर्होतेत्यादिना सकलेन सुचावादाय। आदाय्येति निर्देशः क्रमार्थः।

६. तस्माद् तत्रोपांश्व चरेयुरिति श्रुतेः (८.१)।

७. अग्निर्वृत्राणि जङ्घनत् अग्नेः पुरोनुवाक्या। य उग्र इव शर्यहेति याज्या।

८. त्वं सोम क्रतुभि' सुक्रतुर्भूः सोमस्य पुरोनुवाक्या। अषाल्हं युत्सु पृतनासु पप्रिमिति याज्या।

९. यः पूर्व्याय वेधसे नवीयसे विष्णोः पुरोनुवाक्या। तमु स्तोतारः पूर्व्यं यथा विदेति याज्या।

१०. यावदादिष्टं यावदुक्तमित्यर्थः। मारुतस्य स्विष्टकृदादेर्निवृत्त्यर्थं वचनम्।

११. अग्नेर्य उग्र इवेति पुरोनुवाक्या। अग्निर्वृत्राणीति याज्या। सोमस्याषाल्हं युत्स्विति पुरोनुवाक्या। त्वं सोम क्रतुभिरिति याज्या। विष्णोस्तमु स्तोतारः पूर्व्यमिति पुरोनुवाक्या। यः पूर्व्यायेति याज्या। एवमापराह्णिके उपसच्चरणे विपर्यासः। एवमियमिष्टिद्वयेनैकोपसद्गण्यते[1]। इतरे अथैवमेव द्रष्टव्ये।

१२. इमां मे अग्ने समिधमित्येताभिस्त्रिः सामिधेनीर्द्वितीये ऽहनि पौर्वाह्णिक उपसच्चरणे ऽनुब्रूयात्।

---

१ A मणा।

१३. द्वितीय एवाहन्यपराह्णे उपसद्याय मीढुष इत्येतास्तिस्रः सामिधेनीरनुब्रूयात्। शेषं स्वस्थानवत्।

१४. येनैव प्रकारेण प्रथमे ऽहन्युपसत्तेनैव तृतीये ऽप्यहनि कर्तव्या। एवमेतास्तिस्र उपसदः स्वश्रुतौ। श्रुत्यन्तरे तु ज्योतिष्टोम एव द्वादशाथाम्नातास्तत्र किमयमेव त्रिको दण्डकलितवत् चतुरावर्तेत उत[1] स्वस्थानवृद्ध्या द्वादशसंख्यापूरणमिति संशय आह।

१५. या प्रथमे ऽहनि सा चतुरहं क्रियते। या द्वितीये साप्येवमेव चतुरहम्। या तृतीये सा चतुरहमिति। एवमेताः स्वकालाः स्वस्थानस्था[2] एव विवर्धेरन्नेवं क्रमो न बाधितो भवति। तुशब्दः संशयव्युदासार्थः।

१६. प्रत्यहं वा विपर्यासं कुर्यात्। यद्युपसदो विवर्धेरन् एवमपि श्रुतत्वात्। केचित्तु श्रुतिमन्यार्थां मन्यमानाः पूर्वपक्षमेतदिच्छन्ति। सिद्धान्तसूत्रं[3] तु पूर्वम्।

१७. श्वोभाविन्यां सुत्यायां यदहस्तदुपवसथशब्दवाच्यम्। तस्मिन्प्रातरुभे पौर्वाह्णिकमुपसच्चरणमापराह्णिकं च समाप्य। ततो ऽन्यत्कर्म।

---

# १२.

१. अग्निप्रणयनं चातुर्मास्येषूक्तं तदिहोपवसथे ऽहनि भवति। प्रवर्ग्यरहिते यज्ञे।

---

1 Bom. स। 2 Com स्था। 3 Com तु।

२. [1]उपवसथे प्रातः सप्रवर्ग्ये यज्ञे प्रवर्ग्योपसदौ समस्य[2] महावीरपात्रोद्वासनं भवति।

३. तत्र महावीरपात्रोद्वासने प्रस्तोता सामगानं करोति। किं ततः।

४. तत्र तस्मिन्प्रस्तोतुः सामगाने होतुरपि निधनोपायः। सामनिधनोपगमनं पठनं होतुरपि भवति। होतृवचनं ब्रह्मादिनिवृत्त्यर्थम्। तत्र प्रस्तोता साम गायति तत्र होतुर्निधनोपाय इति सूत्रद्वयकरणं सौत्ये ऽहनि प्रवर्ग्यपक्षे तत्रैव प्रवर्ग्योत्सादनं तत्रापि होतुर्निधनोपाय इति ज्ञापनार्थम्।

५. ननु भ्रष्टावसरत्वादप्रवर्ग्ये[3] च विधानान्न प्राप्नोति। उच्यते। श्रुतावविशेषेण व्याख्यातम्। ब्रह्म वा अग्निस्तद्यदुपवसथे ऽग्निं प्रणयन्तीति। तत्प्रवर्ग्योत्सादनादूर्ध्वमुपवसथे यथा स्यादिति सूत्रारम्भः। येषामपि सौत्ये ऽहनि महावीरपात्रोद्वासनं तेषामप्युपवसथ एवाग्निप्रणयनम्। व्याख्यातवचनात्।

---

## १३.

१. श्रुतिक्रमेणाग्निप्रणयनादनन्तरं हविर्धानप्रवर्तनमाह[4]। हविर्धानप्रवर्तनमिति वक्ष्यमाणस्य कर्मणो नामधेयम्। तदर्थमामन्त्रितो आहूतो होता यत्करोति तदुच्यते।

२. हविः सोमाख्यं धीयते ऽस्मिन्नाधीयत इति। हविर्धाने शकटे

---

१ C (in marg) क्रमो न बाधितो भवति। २ A C (sec b) समाप्य। ३ C (in marg) चप्रवर्ग्ये। ४ C om श्रुति॰ माह।

उच्येते। ते प्राची शालामग्रेणाध्वर्युणावस्थापिते तयोर्दक्षिणस्योत्तरं वर्त्मोत्तरस्य च दक्षिणमन्तरेण तिष्ठन् होता हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीति संप्रेषितः। किं करोतीत्यत आह।

३. अपेतो जन्यमित्येवमादिना मन्त्रेण लोष्टं प्रक्षिपेत्। कथम्। दक्षिणपादाग्रतलेन प्रतीचीं दिशं प्रति।

४. प्रेतां यज्ञस्य शंभुवेति तिष्ठन्ननुब्रूयात्। आसीनन्यायप्रतिषेधार्थं पुनस्तिष्ठद्वचनम्।

५. द्यावा नः पृथिवी इमं तयोरिद्घृतवत्पयः। यमे इव यतमाने यदैतम्। एताभ्तिस्रो दक्षिणस्य हविर्धानस्योत्तरं वर्त्मोपमंलग्नो ऽनुसंयन् अनुब्रूयात्। स प्राच्यं दक्षिणस्य हविर्धानस्योत्तरं वर्त्मोपनिश्रयेतेति (८.४) श्रुतेः।

६. अधि द्वयोरदधा उक्थ्यं वच इत्येतामनुब्रूयात् छदिषि कीलादावुपरि दीयमाने[1]।

७. विश्वा रूपाणि प्रतिमुञ्चते कविरित्येनामनुब्रूयात्। परिश्रीयमाणयोः रज्जुभिर्वध्यमानयोर्हविर्धानयोः।

८. नाभिर्यस्मिन्फलके तन्नभ्यम्। तत्स्थयोर्हविर्धानयोरा वामुपस्थमद्रुहेत्येतामनुब्रूयात्। यदेने नभ्यस्थे कुर्युरथा वामुपस्थमद्रुहेति (८. ४) श्रुतेः।

९. केचिदध्वर्यवो नभ्यस्यकर्म पूर्वं कुर्वन्ति। ततो मध्यमस्य छदिष आरोपणम्। तत्र कर्मविपर्यासे ऽध्वर्युवशाद्यथाकर्म। आ वामुपस्थं पूर्वाधि द्वयोरित्युत्तरा।

---

१ C विवेविक्षु जादावुपरि दीयमाने।

१०. परि त्वा गिर्वणो गिर इत्येतया परिधाय परिसमाप्यानुवचनं ततो ऽन्यत्कर्म।

११. यत्र स्थितेनानुवचनस्य प्रथमोक्ता तत्र स्थित्वा उत्सृज्यते व्यवायवारयमनभ्रमणादिनियमात्। यत्र तिष्ठन्नन्वित्यनुवादपरेण स्थानविधानमतो नासीनन्यायः।

---

## १४.

१. श्रुतिक्रमेणाग्नीषोमप्रणयनं वक्तव्यम्। तस्य तावदवधिमाह। मितेषु निष्पादितेषु। यज्ञागारेषु सदोहविर्धानाग्नीध्रेषु अग्नीषोमौ प्रणयन्ति। तत्राग्निमाग्नीध्रीयं प्रणयन्ति। सोमं हविर्धानम्। ततः किमित्यत आह।

२. तत्प्रभृतीत्यग्नीषोमप्रणयनप्रभृतीत्यर्थः। आनूबन्ध्यायाः संस्थानात्। वक्ष्यति। मैत्रावरुणी वशानूबन्ध्येति। आ तदीयव्यापारपरिसमाप्तेः। अन्तरेण मध्ये चात्वालोत्करौ तीर्थं प्रवेश इत्यर्थः।

३. कर्म कुर्यादिति वाक्यशेषः।

४. उत्तरेणाग्नीध्रीयं धिष्ण्यं आग्नीध्रशरणस्थमग्निं सदसोत्तरेण गत्वा ततः।

५. अध्वर्युश्च प्रतिप्रस्थाता चाध्वर्यू। तावुत्तरेण यज्ञपात्राणि चान्तःपात्यदेशस्थानि[१] तानि चोत्तरेण गत्वा। पूर्वया द्वारा शालां प्रविश्य। अयं यज्ञसंचरः सूत्रान्तरे प्रसिद्धः। तत्प्रतिपाद्यर्थमयवायोदाहरणमपक्षार्थं चोक्तम्।

---

१ । चात्वालेषु।

६. शालामुखे भवः शालामुखीयो ऽग्निस्तस्य पश्चादुपविश्य संप्रैषमपेचत इति शेषः।

७. इति कार्यान्तरे। तेन[1] कदाचिदध्वर्युवशादग्नये प्रक्रियमाणायानुब्रूहि सोमाय प्रक्रियमाणायेति वेति।

८. एतामेवासीनः शेषमनुवचनस्य तिष्ठन्।

९. उत्तिष्ठ ब्रह्मणस्पत इति लिङ्गादुत्तिष्ठन्तु।

१०. प्रैतु ब्रह्मणस्पतिरित्येतां प्रव्रजत्सु लिङ्गादेव।

११. होता देवो अमर्त्य इत्ययं तृचः। उप त्वाग्ने दिवेदिव इति तृचः। एतौ तृचावनुसंयन्ननुब्रूयात् लिङ्गाद्यायाच।

१२. होता देवो अमर्त्य इत्यस्य तृचस्य तृतीयायामृचि भूतानां गर्भमा दध इति यः पादस्तं ब्रुवन् गर्भकामायै पत्न्यै गर्भमियं लभतामिति ध्यायादुत्तरेण सदो ऽनुसंयन्। उदरं वै सद इति सामान्यात्[2]।

१३. आग्नीध्रीयशरणे ऽध्वर्यवो ऽग्निं निदधति स्थापयन्तीत्यर्थः। अतःप्रभृत्याग्नीध्रीये प्रायश्चित्तमाध्वर्यवं यथा स्यादिति सूत्रारम्भः।

१४. अग्ने जुषस्व प्रति हर्य तद्वच इत्येतामाग्नीध्रीय आहुतौ हूयमानायामनुब्रूयात्। तां संप्रत्येतामनुब्रूयात्। अग्ने जुषस्व प्रति हर्य तद्वच इति तस्या एवैषा याज्येत्यर्थवादादाहुतिग्रहणाच तदावृत्तावावृत्तिः। (कौ० ब्रा० ९.५)

१५. उत्तरेणाग्नीध्रीयमग्निं अनुसंयन्। सोमो जिगाति गातुविदित्येतास्तिस्रो ऽनुब्रूयात्।

---

१ A इति प्रकारे। २ A सामान्यश्रुतेः।

१६. उप प्रियं पनिप्नतमित्याहवनीये हूयमानायामाहुतावनुब्रूयात्। अस्यामथाहुतिरेव[1] प्रयोजिका। अर्थवादात्।

१७. तमस्य राजा वरुणस्तमश्विनेति हविर्धानं प्रपाद्यमाने सोमे ऽनुब्रूयात्। अजं च विष्णुः सखिवाँ अपोर्णुत इत्येतद् ब्रुवन् गोचपदं गृह्णीयादिति वृद्धवार्त्ता।

१८. अन्तश्च प्रागा अदितिर्भवासीत्यनुब्रुवन्ननुप्रपद्य ततो ऽन्यत्कुर्यात्।

१९. दक्षिणे ऽनसि कृष्णाजिनमास्तीर्य तस्मिन् सोमं निदधातीत्याध्वर्यवे निवृत्ते श्येनो न योनिं सदनं धिया कृतम्। गणानां त्वा गणपतिं हवामहे। अस्तभ्नाद् द्यामसुरो विश्ववेदा इत्येता उत्तरतो दक्षिणस्यानसो दक्षिणामुखस्तिष्ठन्ननुब्रूयात्।

२०. एवा वन्दस्व वरुणं बृहन्तमित्यागीर्वत्या परिदधातीति (८.६) श्रुतेः।

२१. मध्याद्धविर्धानयोर्यदागारं तस्य पूर्वस्यां द्वारि। प्रवेशनिष्काशाविरोधेन बहिरुपविशतीति। विनापि कर्मणेहोपवेशनविधिरयम्।

२२. यद्यपरया द्वाराध्वर्युभिः सोमः प्रपाद्यते ततस्तेनैव होतानुसमियाद्ब्रह्मयजमानौ होतृवचनात्।

२३. प्रपाद्यमाने ऽनुप्रपद्येत्येवमाद्यपरयापि द्वारा प्रपाद्यमाने पूर्वेणैव तुल्यम्।

२४. दक्षिणेन बाहुना आवृतो दक्षिणावृत्। तादृशो ऽपरया

[1] C अस्या आहु०।

द्वारा निष्क्रम्य ततः सव्यात्त्वनुत्तरेण हविर्धाने हविर्धानशकटोपलक्षितमागारमुत्तरेण गत्वा तत्रैव पूर्वस्थामेव द्वार्युपविशति।

---

## १५.

१. अग्नीषोमदेवताकेन पशुना श्वोभाविनि सौत्ये यजते। य एवासौ सोमस्योपवसथे ऽग्नीषोमीयस्तमेव तेनाप्नोतीति लिङ्गात्। नन्वन्यत्रोपवसथशब्देन पौर्णमास्यमावास्ये उच्येते। सत्यम्। प्रधानयागात्पूर्वमहस्तत्राप्युपवसथशब्दवाच्यम्। अत्रापि तत्समानमेव। ननूपवसथशब्दो ऽतिरिच्यते। प्रकृतत्वात्। सत्यम्। अग्नीषोमीयस्यैवाय कालनियमो यथा स्यात्। नान्येषां तत्प्रकृतीनाम्। तथा च निरूढेनायनाद्यन्तयोर्यजत इतीज्यार्थस्यैवाग्नीषोमीयधर्मा नान्येषु।

२ यूपायाज्यमानायानुब्रूहीत्युक्त अञ्जन्ति त्वामध्वरे देवयन्त इत्यन्वाह।

३ उच्छ्रीयमाणायानुब्रूहीत्युक्त उच्छ्रयस्व वनस्पते। समिद्धस्य श्रयमाण पुरस्ताज्जातो जायते सुदिनत्वे अह्नाम्। ऊर्ध्व ऊ षु ण ऊतये। ऊर्ध्वो नः पाह्यंहसो नि केतुना। इत्येता अनुब्रूयात्।

४. परिवीयमाणायानुब्रूहीत्युक्त युवा सुवासाः परिवीत आगादिति परिधाय परिसमाप्यानुवचनम्। यूपायाज्यमानायेत्येवमादिसंप्रैषग्रहणं प्रयोजकार्थम्। अतस्तद्दशादुपशये ऽपि यूपधर्मप्राप्ति।

५ रशनाकायावभ्यो ऽग्निमन्थनीया अन्वाह। तिष्ठन्निति वचनाच्च पश्चादेदे। अन्वाहेति वचनात् सति मन्थने। मन्थनमन्वित्यर्थ।

६. यज्ञेन यज्ञमयजन्त देवा इत्येतया परिदध्यात्तं मर्जयन्नोति सकृदुक्ता। एतया त्वच च चातुर्मास्येषु चाथ यत्र पशुरालभ्यते तदेतां पराचीमनूच्य यज्ञेन यज्ञमयजन्त देवा इति त्रिष्टुभा परिदधातीति (८.२) श्रुतेः।

७. अत्रैव तिष्ठन्सामिधेनीरन्वाह[१]। मनोतासूक्तादनन्तरं श्रुतावुक्तत्वात्। स एव क्रमो मा भूदिति वचनम्। नन्वाज्ञतिचपणार्थत्वादिभ्यस्य श्रुतिक्रमाच्च तत्रैवेभ्माधानमनुवचनं च युक्तम्। उच्यते। नैभ्मस्य[२] हविःचपणार्थत्वेव[३] सङ्ख्यानियमात्। मनोताशाप्तदग्धार्थवादमंत्रन्मेनार्थवादार्थं[४]। तत्र श्रुतिः।

८. पशुशब्दः प्रधानावदानवचनम्। अतः प्रधानावदानदेवताभावाच्च अव्यवहितं वनस्पतिमावाहयेत्। एवमेव श्रुतत्वात्।

९. प्रकृतिवदध्वर्युमाग्नीध्रं च संमृश्य पणोर्वीरित्येवमादिकं मन्त्रं जपित्वा तिष्ठति।

१०. मित्रावरुणयोरित्येवमादिना मन्त्रेण यजमानो मैत्रावरुणाय दण्डं समर्पयति।

११. मित्रावरुणयोरित्येवमादिना मन्त्रेण यथार्थम्। यादृशःमतिग्रहणार्थस्तादृशं विपरिणम्य दक्षिणपूर्वार्धे होतुस्तिष्ठन् प्रतिगृह्णीयात्।

१२. दण्डं प्रतिगृह्य मैत्रावरुणो दक्षिणाद्दक्षिणेन होतारं गत्वायतः स्थितः पूर्वो होतुः प्रतिपद्यते।

१ C om अत्रैव ०न्व। २ A C (sec. h) चाज्ञति instead of हविः। ३ A एवं। ४ B ०वदनार्थे।

१५. उत्तरेण हविर्धाने इति हविर्धानागारमुत्तरेण दक्षिणेनाग्नीध्रीयं धिष्ण्यमदूरे गत्वा पूर्वया द्वारा सदः प्रपद्य स्वस्य धिष्ण्यस्य पश्चादुपविश्य मैत्रावरुणः होता तु[1] होतृषदने एवमनेन क्रमेण संचरप्रवेशनोपवेशनानि कृत्वा एकादश वक्ष्यमाणकान् प्रयाजान्यजति। कथमित्यत आह।

---

## १६.

१. प्रैषा होता यक्षदग्निमित्येवमादयः पाशुकाः। होता यक्षदिन्द्रं हरिवानित्येवमादयश्च सौमिकाः प्रसिद्धाः। ते सर्वे एव मैत्रावरुणस्य भवन्तीति लाघवार्थं परिभाषणम्।

२. सप्रैषे च प्रदाने पुरोनुवाक्या मैत्रावरुणस्य भवन्ति। चकारः पूर्वेण सह समुच्चयार्थः।

३. प्रयाजाधिकारादूर्ध्वम् उत्सृज्यते मैत्रावरुण इति यावत्। यथा प्रैषा मैत्रावरुणस्य तथानुवचनान्यपि। पर्यग्निकरणादीनि तस्यैव भवन्ति।

४. प्रैषानुवाक्यानुवचनानि प्रह्वाणः कुब्ज इव तिष्ठन्दण्डावष्टम्भस्थो मैत्रावरुणो ऽनुब्रूयात्।

५. समिधः प्रेष्येति विशिष्टेन संप्रैषेण संप्रेषितो होता यक्षदग्निं समिधा सुषमिधा समिद्धमित्येवमादिना प्रैषसूक्तेनोभयवता मनूनपान्नराशंसान्यतरप्रयोगेण प्रत्येकमुत्तरेषु[2] प्रेष्यप्रेष्येत्युक्तो मैत्रावरुणः प्रेष्यति। प्रैषानाहेत्यर्थः।

---

१ Com. होता तु। २ B ins प्रैषेषु।

६. दाशतयीषु द्वयीष्वाप्रीसूक्तानि। तेषां सामान्यविनियोगार्थमेतत्सूत्रम्। तेन एतं मिमिक्षे देव त्वष्टर्यद्ध चारु त्वमानलियेतयोर्विशेषविनियोगे सति प्रयाजत उद्धारः। एतयोः स्थाने ऽन्यार्षेये कर्तव्ये। यातयामत्वदोषपरिहारार्थेति वृद्धसंप्रदायः।

७. यदार्षेयो यजमानस्तदार्षेय्या आप्रियो भवन्ति। तद्यथा। वैश्वामित्रस्य यजमानस्य समित्समित्। वासिष्ठस्य जुषस्व न इति।

८. अथवा समिद्धो अद्य मनुष दुरोण इत्येताः सर्वेषां भवन्ति। येषामपि समानार्षेयमाप्रीसूक्तमस्ति। अब्राह्मणस्य तु समिद्धो अद्येत्येतदेव भवति। न पुरोहितार्षेयम्। प्रवरमात्रस्य तदीयस्य वचनात्।

९. यस्तु नाराशंसयाजी[1] संभवत्स्वार्षेयनाराशंसस्तस्य सैव कार्या समिद्धो अद्य मनुष इत्यत्रासंभवान्नाराशंस्याः। अत्रोदाहरणम्। आत्रेयस्य समिद्धो अद्येति वैकल्पिके प्रयोगे नराशंसः सुषूदतीति भवति। येषां सा न विद्यते तेषां वासिष्ठी। निरुक्ते तथा दृष्टत्वात्।

१०. दशभिः प्रयाजैश्चरित्वा पर्यग्नये ऽनुब्रूहीत्येवं[1] संप्रेषितो ऽग्निर्होता नो अध्वर इत्याद्यास्तिस्र ऋचो ऽन्वाह मैत्रावरुणः परिभाषितत्वात्।

११. उप प्रेष्य होतर्हव्या देवेभ्य इत्यध्वर्युणा संप्रेषितो मैत्रावरुणो ऽजैदग्निरसनद्वाजमित्येवमादिकमुपप्रैषसंज्ञकं प्रैषमाह।

१२. उक्ते मैत्रावरुणेनोपप्रैषे दैव्याः शमितार इत्यादिक-

---

१ A संभवस्त्वार्षेयेना॰, C ॰र्षेये॰। १ A ॰त्यध्वर्युणोक्तो।

मभिगुमंत्रं प्रैषं होतानुब्रूयात्। उक्तवचनादध्रिगोरावृत्तावुपप्रैषस्यावृत्तिः।

---

## १७.

१. मेधपतिशब्दस्योहविकारो वच्यत एव।

२. [1]अस्मा इति पुल्लिङ्गैकवचनम्। [1]आभ्यामिति द्विवचनम्। [1]एभ्य इति बहुवचनम्। तत एवं पशुद्वित्वे पशुबहुत्वे च वचनोहः। एकस्मिन्स्त्रीपशौ आस्या अग्निं भरत। द्वयोः आभ्यामग्निं भरत। बहुषु आभ्यो अग्निं भरत। पुल्लिङ्गपशुद्वित्वे अन्वेनौ माता मन्यतामिति। बहुत्वे अन्वेनान्माता मन्यतामिति। स्त्रियाम्। अन्वेनां माता। द्वित्वे अन्वेने माता। बहुत्वे अन्वेना माता। मन्यतामित्यस्यानूहो ज्ञातिनामभिः समानाधिकरणत्वात्।

३. पुरुषे एकस्मिन्नालभ्यमाने उदीचीनाँ अस्य पदो निधत्तात्। पुरुषपशुद्वित्वे[2] उदीचीनाँ एनयोः पदो निधत्तात्। पुरुषबहुत्वे उदीचीनाँ एषां पदो निधत्तात्। स्त्रिया एकत्वे उदीचीनाँ अस्याः पदो निधत्तात्। स्त्रीपशुद्वित्वे उदीचीनाँ एनयोः पदो निधत्तात्। बहुत्वे उदीचीनाँ आसां पदो निधत्तात्। ननु चास्येति प्रथमादेशस्येन द्विवचने अनयोरिति प्राप्नोति। नेत्युच्यते। अस्मा अग्निं भरतेति प्रथमकथनादन्वेनमिति च प्रकृतत्वात्। चरकाणां[3] चानुदात्तपाठादन्वादेशो ऽस्यशब्दः। पृथिवीं शरीरमिति पश्वेकत्वे। शरीरे शरीराणीति द्विबह्वोः।

---

१ C ins. य। २ C om पशु। ३ C च कारकाणां।

४. एकधैकधेति वक्ष्यत्येव। अस्येति पूर्ववदूहो विकारेषु। पुराशब्दो ऽव्ययम्। तस्य द्विवचनबहुवचनयोर्विशेषाभावात् वीप्सया द्वित्वबहुत्वप्रदर्शनमन्यथानभिधानात्। पिश अवयवे पिश च्छेदने वा धातुः। अतो निरवयवां वपामुत्खिदतादच्छिन्दन्त इति वेति। अपिशश इत्येकवचने प्राप्ते ऽपिशश इति बहुवचनं तेनायथार्थ-नियमादनूह्यम्[१]। वपामुत्खिदतात्। वपे उत्खिदतात्। वपा उत्खिदतात्। यथावचनं विकारेषु। अन्तरित्यव्ययम्। तस्य वीप्सयैव द्वित्वबहुत्वयोरभिधानम्[२]।

५. अस्येति प्रदर्शितम्। द्वित्वे वचसी बहुत्वे वचांसि। प्रशासेति प्रशस्तेन शासेनेति[३] केषां चिन्मतिः। अपरेषां प्रशस्तौ बाहू इति। ततश्चोदनासंदेहादनूहः। बाहूनिति बाहुबहुत्वे। दोषाणीति बहुवचनं तद्बहुत्वे। कश्यपेवांसानच्छिद्राः श्रोणीः कवषोरून्स्रेकपर्णाष्ठीवतः। पशुनैकत्वे बहुवचनान्येतानि। ननु च्छान्दस आकारः सर्वासां विभक्तीनामविशेषेण स्मर्यते। किं तच्चोदनेन। उच्यते। शलादिप्रतिषेधो ज्ञापकम्। अवत्येवरूपाणामूह इति।

६. षड्विंशतिशब्दस्योपरिष्टाद्विचारः करिष्यते। अस्येति कृतविचारम्। अनुष्ठ्येत्यव्ययं निश्चयेनेत्यर्थः। गात्रंगात्रमिति वीप्सयैवाभिहितत्वादविचारः। अस्येति पूर्ववत्। अनूनमित्यस्याविकारः। प्रकृतावनूहितत्वात्।

---

१ C (orig.) °नियमस्यानूह्यं alt. to नियमादनूह्य। २ A °भाम्, C °धानात्।
३ A शासनेनेति।

७. ऊवध्यगोहमिति वक्ष्यति। पार्थिवमित्यस्येहानूहः। ऊवध्यविशेषणत्वात्।

८. अस्नेति विकारेषु यथासमाम्नातमिति वक्ष्यति।

९. वनिष्ठु स्थूलान्त्रम्। पशुनेकत्वे तस्योहः। अस्नेति पूर्ववदूह्यम्। मा राविष्ट मा छिन्नीष्टेत्यर्थः। ततश्च पशुद्वित्वे वनिष्टू एनयोर्मा राविष्ट। बहुत्वे वनिष्टूनेषां मा राविष्ट। स्त्रियाम्। अस्या एनयोः आसामिति यथोक्तम्। वनिष्ठुसंनिधानादुरूकेण वपाभिधानमिति मीमांसकाः। तस्माद्वपाभिधानं। सर्वबहुत्वादुरु करोतीत्युरूकम्। हविरभिप्रायं नपुंसकम्। अत ऊहः। उरूके उरूकाणीति यथावचनम्। नेद्युष्माकमपि पुत्रे वा पौत्रे वा रविता छेत्तेत्यर्थः। रवच्छिद्यादित्यर्थः। हे शमितारो युष्माकमपि कल्याणमत्रेत्यभिप्रायः। न्यूने ऽध्रिगो नवैवोच्छ्वासाः। तदधिकारे सत्यध्रिगुवचनात्। नवकृत्वो ऽध्रिगाववानिति (१०.४) श्रुतेः। हृदयनाशे ऽन्यमालभेतेति वपानिवृत्तौ पुरा नाभ्या अपिशसो वपामुत्खिदतादुरूकं मन्यमाना इत्युद्धरेत्। माश्ना अग्निं भरतोवध्यगोहमस्मा रक्षः संसृजतादिति च छतत्वात्। तत्र षष्ठ उच्छ्वासे मध्ये ऽवसानम्। मृतेन संस्थापने सर्वमध्रिगुं ब्रूयात्। अनन्तरायम् तर्हि यजूंषि जपेदिति शतपथे (१.१.२.८) पात्र्यां हविर्ग्रहणे आनीयजुषां दर्शनात्।

१०. अध्रिगो शमीध्वमित्यादिना त्रिः परिधाय तत उभावपापस्येत्युपांशु जपेत्।

११. नेदस्य संज्ञप्यमानस्याध्यचा अधामेति शतपथे (३.८.१.१५) सर्वेषामविशेषात्संज्ञप्यमानस्येक्षणप्रतिषेधः।

१२. दृषदाज्यावेक्षणमेव न सर्वप्रायश्चित्तमपि । प्रायश्चित्त-वचनात् ।

१३. यां कांचिद्वैष्णवीमित्यविशेषात् । प्रथमं वा नियम्येति न्यायादिदं विष्णुर्वि चक्रम इति ।

---

## १८.

१. लोकेभ्यो ऽनुब्रूहीति संप्रेषितो मैत्रावरुणो जुषस्व सप्रथस्त-ममित्येकां इमं नो यज्ञममृतेषु धेहीति पञ्चकं सूक्तमन्वाह ।

२. स्वाहाकृतिभ्यः प्रेष्येति संप्रेषितो होता यद्दग्निं स्वाहाज्य-स्येति प्रेष्यति ।

३. आग्नीधां विनियुक्तानामविनियुक्तोत्तमा याज्या ।

४. समिद्ध उत्तमः प्रयाजः । तं वषां चान्तरेण होतृमैत्रावरु-णयोर्वाग्यमनं भवति । न स्वाहाकृतीश्च वषां चान्तरेण वाचं विसृजेतेति (१०.५) श्रुतेः ।

५. तौ न पशौ न सोमे करोतीति वचनात् । सवनीये[१] चावाहनश्रुतेरथावाहन आवह देवान्यजमानायाग्निमग्न आवह वन-स्पतिमावहेति दर्शनात् ।

६. यदि यजति ततो ऽग्निः प्रत्नेन सोम गीर्भिरिग्येवेति । श्रुत्यन्तरादयं विकल्पः ।

७. ये दार्शपौर्णमासिका निगमा आवाहनादयस्तेष्वाज्यभाग-देवते अग्नीषोमौ निगच्छत । यथायथं निगमान् लभेते इत्यर्थः ।

---

१ C (in marg.) चावावाहन । चा instead of चावाहन॰ ।

निर्वपति तेषां स्विष्टकृद्भूयस्त्वादिति युक्तं तत्। तैषां[1] तत्र प्राधान्यात् भूयस्त्वात् [2]न्यायस्य परिपुष्टत्वादिति[2] हेत्वर्थः।

४. प्रयोगः कर्तव्य इति वाक्यशेषः। अन्वायातानि हवींषि अतुल्यानि। अतस्तेषामतुल्यानामनूहेन प्रयोगः कार्यः। कस्मायमूहप्रतिषेधः। हविरभिधानस्येति ब्रूमः। यद्ययमूहप्रतिषेधो न स्यात् ततश्चरुपुरोलाशानामन्वायातने ऽग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचंश्चरुपुरोलाशानिति प्राप्नुयात्। न चेष्यते। तदर्थं प्रतिषेधः क्रियते।

५. नेति प्रतिषेधस्य सन्तीत्यनेन सह संबन्धः। निगमा निगदाः। आवृत्त्यपेक्षं बहुवचनम्। स्विष्टकृन्निगदस्य चायं प्रतिषेधः। केषाम्। पशुतन्त्रे चोद्यमानानाम्। यदि पुनः कथं चिदिष्व्यावृत्तिर्भवति हविषो नाशदोषापहारनिमित्ता ततः स्विष्टकृन्निगदो भवत्येव। कुतः। पशुतन्त्रे चोद्यमानानामिति विशेषणात्।

६. अग्नीषोमा यो अद्य वामिति [3]पशुपुरोलाशस्य पुरोनुवाक्या भवति।

७. होता यक्षदग्नीषोमौ पुरोलाशस्य इत्येवमादिकः प्रैषो भवति। पुरोलाशयोः पुरोलाशानां जुषतां जुषन्तामिति यथाप्राप्तो विकारेषूहः।

८. अग्नीषोमा पिप्रतमर्वतो न इति पशुपुरोलाशस्य याज्या।

---

1 A कात्यायनानां चातुर्मास्यदेवतानां तेषां। 2 C प्राधान्यभू॰ B C ॰त्वान्याय॰। 3 C ins तत्र। 4 C om पशु।

६. इलामग्ने पुरुदंसं सनिं गोरिति पशुपुरोलाशस्विष्टकृतः पुरोनुवाक्या भवति।

१०. होता यचदग्निं पुरोलाशस्येत्येवमादिकः पशुपुरोलाशस्य स्विष्टकृतः[1] प्रैषो भवति।

११. अग्निं सुदीतिं सदृशं गृणन्त इति याज्या।

१२. संमार्जनान्तामिलां निर्वर्त्य पशुना चरन्ति। क्रमार्थं सूत्रम्।

१३. मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीत्युक्तस्त्वं ह्यग्ने प्रथमो मनोतेत्येतन्मनोतासूक्तमन्वाह। मनोतेति संव्यवहारार्थं संज्ञाकरणम्।

१४. अग्नीषोमा य आहुतिमित्येषा पशोः पुरोनुवाक्या। प्रधानपश्ववदानानामित्यर्थः।

१५. होता यचदग्नीषोमौ छागस्येत्येवमादिकः प्रैषो भवति देवतान्यत्वे प्रातिपदिकोहः। एकत्वनऋत्वयोर्वचनोहः। छागस्येति द्वित्वबहुत्वयोर्वचनोह। स्त्रिया लिङ्गोहः। मेषादिषु प्रातिपदिकोहः। पुनश्चान्य ऊहविकारो वक्ष्यते।

१६. अग्नीषोमा हविष' प्रस्थितस्येत्यस्या याज्याया अर्धर्चे तावद्विरमेद्यावदमाहोम।

१७. कृते वमाहोमे अस्या एव याज्याया उत्तरार्धर्चान्ते वषट्करोति प्रधानचेपाय।

---

१ C om स्विष्टकृत।

१८ देवेभ्यो वनस्पते हवींषीत्येवमादिका वनस्पते पुरोनुवाक्या ।

१९ होता यक्षद्वनस्पतिमित्येवमादिक प्रैष । अत्र छागस्येति यथाविकारमूह्यम् । छागयोश्छागानामिति । तचैतौ पशुद्वित्वे तचैतान्पशुबहुत्वे। स्त्रिया तचैतामिति एकत्वे तचैते इति द्वित्वे तचैता इति बहुत्वे। एभीयाश्च वक्ष्यति ।

२०. वनस्पते रशनया नियूयेत्येवमादिका याज्या भवति ।

२१ पिप्रीहि देवाँ उशतो यविष्ठेति स्विष्टकृत पुरोनुवाक्या कार्या । प्रकृतिसिद्धस्याप्युपदेशो नियमार्थ । ततो बार्हस्पत्यमैत्रावरुणोर्विराजो ।

२२ छागस्येति विकारेषूक्त ऊह ।

२३ ये यजामहे ऽग्ने यद्येति याज्या । निगदप्रतिषेध शाखान्तरात् ।

२४. इडामुपह्वास्यमानस्येत्यत आरभ्य मार्जनपर्यन्त कर्म कृत्वा तत एकादशानुयाजान्यजति ।

---

२०.

१ देव बर्हि सुदेव देवै स्यादित्येवमादिभिरेकादशभिर्यजेत्यन्तैर्मध्ये ऽनवान[1] प्रेष्यति मैत्रावरुण परिभाषितत्वात् । वसु वार्याणि यजमानाभ्या वसु वार्याणि यजमानेभ्यो यथाविकारमूह ।

---

१ C •वमादिभिश्यजत्यन्तैर्मध्य ऽनवान।

२. प्रथमद्वितीयौ तु यलन्तरेणेत्येवं नवसु यथाक्रमेण प्राप्ते-ष्वाह[1]।

३. अष्टमनवमौ देवो नराशंसो देवो अग्निरित्येतावन्तरेणा-गन्तू वक्ष्यमाणौ भवतः। आगन्तुवचनातिरेकाद्दिष्टकापभ्रौ द्वाद्-शानुयाजके अत्रैवागन्तुप्रक्षेपः[2]।

४. देवो वनस्पतिरिति नवमः। देवं बर्हिर्वारितीनामिति दशमः।

५. सूक्ता प्रेष्येति संप्रेषितो ऽग्निमद्येत्यादिकं सूक्तवाकप्रैषमाह। द्वियजमानके। अग्निमद्य होतारमवृणीतामिमौ यजमानौ पचन्तौ पक्तीः पचन्तौ पुरोलाशं वध्नन्तावग्नीषोमाभ्यां छागम्। बहुयज-मानके। अग्निमद्य होतारमवृणतेमे यजमानाः पचन्तः पक्तीः पचन्तः पुरोलाशं वध्नन्तो ऽग्नीषोमाभ्यां छागम्। पुरोलाशद्वित्व-बहुत्वयोः। पुरोलाशौ पुरोलाशान्। देवतापदमूह्यं यथादेवतम्। छागद्वित्वबहुत्वयोः। छागौ छागान्। स्त्रियां छागां छागे छागाः। सूपस्था अद्य देवो वनस्पतिरभवदग्नीषोमाभ्यां छागेन। देवतापद-मूह्यं यथादेवतम्। छागद्वित्वबहुत्वयोः। छागाभ्यां छागैः। स्त्रियां छागया छागाभ्यां छागाभिः। अघत्तां तं मेदस्तः[3]। एकदेवत्ये। अघत्तं मेदस्तः। बहुदेवत्ये। अघंस्तं मेदस्तः[4]। पशुद्वित्वबहुत्वयोस्तौ मेदस्तः तान्मेदस्तः[5]। प्रति पचताघभीष्टामित्यत्र पचतेत्योकारान्तं[6]

---

१ C प्रोक्तेष्वाह। २ B ॰अथागन्तुक। ३ B ins प्रति पचताघभीष्टामयीवृधेतां पुरोलाशेन। ४ A ins अघत्तां मे अघधंस्तं म इति वा। ५ A ins ते मेदस्तः। ६ B ॰न्ताका॰।

वाजसनेयिनां। प्रत्यग्भीष्टां पचतो यजमानस्येत्यर्थः। अपि वा, मेदस्य पशोश्च सात्त्वं द्विवचनं स्यादिति चोदनामंदेशात्पचते-त्यनूह्यम्। अग्रभीष्टामित्युपरिष्टादध्यति[१]। अवीवृधेतामिति च। पशुपुरोलाशदिलवक्तलयोः। पुरोलाशाभ्यां पुरोलाशैः। त्वामद्य ऋषे आर्षेय ऋषीणां नपादित्यग्निप्रार्थनत्वादनूह्यानि[२]। अवृणीतायं यजमान इत्यूहेन। मदर्गित ऊहः पूर्वंच। ता या देवा देव दानान्यदुरित्ययथार्थत्वादनूह्यम्। तान्यस्मै। द्वियजमानके तान्याभ्यां। बहुयजमानके तान्येभ्यः।

६. प्रसङ्गेनोक्तं ग्रन्थलाघवाय। अग्निमद्य होतारमवृणीतायं सुन्वन्यजमान इत्येवमादिकं सौमिकाख्यं सवनीयपशौ ब्रूयात्। अत्रापि द्वियजमानके। अग्निमद्य होतारमवृणीतामिमौ सुन्वन्तौ यजमानौ पचन्तौ पक्तीः पचन्तौ पुरोलाशौ बध्नन्तौ। यथादेवतं। छागौ छागान्। इन्द्राय सोमं सुन्वन्तौ भृज्जन्तौ हरिभ्यां धानाः। बहुयजमानके। अग्निमद्य होतारमवृणतेमे सुन्वन्तो यजमानाः पचन्तः पक्तीः पचन्तः पुरोलाशान् बध्नन्तः। यथादेवतं। छागौ छागान्। इन्द्राय सोमं सुन्वन्तो भृज्जन्तो हरिभ्यां धानाः। अवीवृधेतामिति द्विवचनं सवनीयदेवतां पशुपुरोलाशदेवतां चाभिप्रेत्य। कुत एतत्। ऐतरेयश्रुतेः। सवनीयस्य चेत्पशुपुरोलाशं कुर्युरवीवृधेतां पुरोलाशैरित्येवं ब्रूयात्। सवनीयैरेवेन्द्रो वर्धते पशुपुरोलाशेन पशुदेवतेति।

७. होता प्रयोर्वाक्ये उक्ते यथाप्रपन्नं येनैव मार्गेण प्रविष्टस्ते-

१ C उपदेशाद् instead of उपरिष्टाद्। २ C प्रधान instead of प्रार्थन।

नैवोपनिष्क्रम्योत्सृज्यते। व्यवायभ्रमणवाग्यमादिभ्यः। उत्सृज्यते[1] मैत्रावरुणः। नात्र हृदयशूलोपस्थानापेक्षा।

८. शालामिति पत्नीशालोपलक्षणम्। तां होता गत्वा पत्नीसंयाजान्तमग्नीषोमीयमस्तमिते समापयति। शालाग्रहणं सदस्येवावस्थितस्य पत्नीसंयाजा मा भूवन्। होतृग्रहणमुत्सृज्यते मैत्रावरुणः शालां गत्वेति संदेहव्युदासार्थम्।

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति।

इति शाङ्खायनश्रौतसूत्रभाष्ये पञ्चमो-
ऽध्यायः समाप्तः।

---

१ C उत्सृज्ये।

# अथ षष्ठोऽध्यायः ।

१.

१. अग्नीषोमीयेणोपवसथे पशुना यजत इत्यत आरभ्य यः पश्वर्थतया कर्मकलाप उक्तः [1]स एवान्येषां पशूनां प्रकृतिर्द्रष्टव्यः। कुतः। प्रायस्याद्दृष्टाकल्याच्च। ऊहयोग्यं मन्त्रजातं प्रायेण दर्शपूर्णमासयोरग्नीषोमीये च पशावाम्नातं यतो ऽतो[2] विकृतिपूहचिन्ता प्रस्तूयते ।

२. ऋषीणामिदमार्षम्। किं पुनस्तत्। आम्नानमध्ययनं मन्त्राणाम्। [3]अभिधायकमनभिधायकं वा नोहितव्यं प्रकृतौ। कुतः। अपूर्वत्वात्प्रकृतेः। तेन घृतवतीमध्वर्यो स्रुचमित्येकवचनं द्वयोः स्रुचोरादापने ऽनभिधायकमपि[4] सत् यथाम्नातं भवति। आर्षमाम्नानं मन्त्राणां प्रकृताविति यत्नादवैदिक ऊहः। अतो ऽस्य विनाशे सर्वप्रायश्चित्तम् ।

३. यथार्थमिति योयो ऽर्थस्तं तमभिधातुम्। उत्तरस्यां तताविंत्युत्तरस्यामिज्यायां विकृतावित्यर्थः। अर्थस्य विकारो[5] ऽर्थविकारः। स च क्व चिद्द्रव्यान्यत्वेन क्व चिल्लिङ्गान्यत्वेन क्व चित्संख्यान्यत्वेन क्व चिद्वचनान्यत्वेन क्व चित् प्राकृतद्रव्याभावेन। तस्यार्थविकारस्योत्पत्तिरूपेणानभिधानात्[6]। उत्पत्तिः प्रकृतिः। तद्रूपेण वैकृतस्यार्थ-

---

१ C षषामन्ये॰। २ B इतो। ३ B C ॰धिकम्। ४ C om. म।
५ यथार्थमिति यो ऽर्थविकारः स च क्व॰। ६ C om म।

स्यानभिधानात्। शब्दविकारमनार्षं वैकृतार्थाभिधायकं क्रियमाण-मूहं ब्रुवते याज्ञिकाः। रूढा हि तस्येयं संज्ञेत्यर्थः। तदन्वाख्यानं शास्त्रसंव्यवहारार्थम्। ऊहेद्द्विदैवतबहुदैवतेषु। यथार्थमूह इत्येव-मादिषु द्रष्टव्यम्[१]।

४. अथाधत्तं यजमानाय शंयोरिति द्वियजमानकबहुयज-मानकेषु यजमानस्य विकारे प्राप्ते वचनादूह्यनभिधाने[२]ऽपि विकारो न विद्यते। यूयते[३] वा एतदृचो ऽक्षरं यदूहति। तस्मादृचं नोहे-दिति श्रुत्यन्तरे प्रतिषेधात्।

५. आवह देवान्यजमानायेति प्रकृतौ। द्वियजमानके विकारे यजमानाभ्याम्। बहुयजमानके यजमानेभ्य इति। ननु यथार्थमु-त्तरयो ततावितिलक्षणारम्भाद्बर्हिरादिभिः प्रतिषेधाच्च विनाप्यु-दाहरणेन सिद्धमेव। सत्यम्। प्रयोगनियमार्थस्तारम्भः। अतः अकर्त्रभिप्राये ऽप्यनुदेशे कृत्वा चिन्तया क्रियायां यजमानशब्द एव प्रयोक्तव्यो न प्रयोगान्तरमिति वक्ष्यमाणस्य शब्दविकारस्य संक्षेपतः प्रयोजनमुच्यते[४]। प्रयोगनियमार्थमाचार्येण सूत्रं कृतम्। अतो ऽयं यथापठितः कर्तव्यो ऽन्यच्च लाक्षणिकः।

६. आशासाना मेधपतिभ्यां मेधमिति प्रकृतावग्नीषोमाभिप्रायं द्विवचनम्। एकदेवत्ये पशौ मेधपतये। बहुदेवत्ये मेधपतिभ्यः। प्रयोगनियमार्थं वचनम्। एतेन स्त्रीपशौ मेधापतिरिति[५] न

---

१ B adds स्त्रू द्रष्टव्यम्। cf. Comm. on I, 15, 5  २ C ऽभिधाने। ३ A यूयति, B C ऊयते।  ४ A ins. श्रुत्यन्तर एवमेव यासत (ऽयापात्?)। ५ C मेधप०।

भवति। यज्ञाभिधाने तु मेधशब्दे विवक्षिते देवतायाश्च स्त्रीत्वे सति मेधपत्न्या इति प्रयोगसंदेहो मा भूदिति।.

७. मेधपतिभ्यां मेधमित्यत्र मेधमित्येतत्पशुपदम्। तत्पशुद्वित्वे मेधौ। बहुत्वे मेधानित्येवं प्रयोक्तव्यम्[1]। अनारम्भाद्यज्ञाभिधानमिति गम्येत प्रकरणात्। ततो ऽनूहः स्यात्तस्मात्सूत्रारम्भः। स्त्रीपशौ मेधाम्। द्वयोर्मेधे। बहुषु मेधाः। केचिन्मेधशब्दं जातिवचनं मन्यन्ते। तेषां स्त्रीपशौ मेधीं मेध्यौ मेधीरिति। एवं छागलेयिनां सूत्र एवोहे[2] ईदृशः पठितः।

८. आत्तामद्येत्यस्य विकारः। एकदेवत्ये आदद्य। बहुदेवत्ये आदन्नद्येति। प्रयोगनियमार्थं सूत्रम्। श्रुत्यन्तरात्। भूते अनद्यतने लङ् स्यात्। ततश्चाघसदघसन्निति प्राप्नुयात्। ननु आत्तामद्येति प्रकृतौ लुङः प्रयोगादादद्दादन्निति युक्तमेव। उच्यते। छान्दसः प्राकृतः प्रयोगः। ऊहेन तु लाक्षणिकेन भवितव्यम्। स मा भूदिति सूत्रारम्भः[3]।

९. घस्तां नूनमित्यस्य विकारः। एकदेवत्ये घस्तु नूनम्। बहुदेवत्ये घसन्तु नूनमिति। प्रयोगनियमः श्रुत्यन्तरात्। लाक्षणिकं अत्तु नूनमिति। तन्न कर्तव्यम्। छान्दसमपि सूत्रोक्तं कर्तव्यम्। सूत्रारम्भसामर्थ्यात्।

१०. अघस्तां तमित्यस्य विकारः। एकदेवत्ये अघसत्तं मेदस्तः। बहुदेवत्ये अघसंस्तं मेदस्तः। अघसतामिति न्याय्यं द्विवचनम्। अघस्तामिति छान्दसम्। मन्त्रे घसह्वरेति (पा० २.४.८०)

---

१ C प्रोक्तव्यं। २ C स्व चोहश्च। ३ Com. स० भा०।

लेलुकं कृत्वा अघत्तामिति तु मकारस्य तकारोत्पत्तिः। अदृष्टो वर्णव्यत्ययस्तस्याताच्चिकत्वात्। एकवचनबहुवचनयोः मकारस्य श्रवणं युक्तम्। अघसदघसन्निति।

११. अघत् एकदेवत्ये। अघन् बहुदेवत्ये। रूपद्वयमेतच्छान्दसं अघत्तामिति प्राकृतस्य वर्णव्यत्ययस्य छान्दसत्वसामान्यात्। श्रुत्यन्तराद्वा प्रयोगनियममङ्गीकृत्याचार्येणोपदिष्टम्[1]।

१२. उपाव स्वचद्रभीयांसमिति[2] पशुविशेषणम्। तस्य पशुद्वित्वे रभीयांसाविव कृत्वी। बहुत्वे रभीयस इव कृत्वी। उपमानस्य संप्रत्यर्थं वोपमार्थं वोभयथा दर्शनात्। यच पचेणाप्यार्थचोदनानुग्रहः स्यात्स पचो ज्यायानिति ऊह एव न स्यात्। दृश्यते च श्रुत्यन्तरपाठात्। तदर्थः सूत्रारम्भः। स्त्रीपशावपि केचिदिच्छन्ति। रभीयसीमिव रभीयस्याविव रभीयसीरिवेति।

१३. अग्रभीष्टामिति देवतावचनम्। अग्रभीदित्येकदेवत्ये। अग्रभीषुरिति बहुदेवत्ये। इकारप्रतिषेधार्थं सूत्रम्। ग्रहोर्भेश्छन्दसीति प्रकृतौ इकारस्य भत्वं छान्दसं विकृतावपि वचनात्तादृशमेव भवति।

१४. अवीवृधेतामिति देवताभिधायकम्। एकदेवत्ये अवीवृधत। बहुदेवत्ये अवीवृधन्त। हेतुकर्त्रसंभवाद्णिजन्तादेव सिचः स्थाने चङ् कृतो व्यत्ययेन। लाचणिकं तु अवर्धिष्ट अवर्धिषतेति। तस्मा भूदिति सूत्रारम्भः।

१५. तदश्यादिति सूक्तवाके यजमानस्याशीर्वचनम्। तद्बहु-

१ A om बहो। २ A ins. कृत्वीति रभीयांसमिव।

यजमानके अश्नास्युरिति भवति। प्रदर्शनार्थमेतत्। तेन द्वियजमानके अश्नास्तामिति सिद्धं भवति। आशिषां सूक्तवाके परिगणनादनाशीरर्थमेतत्पदमिति। व्यत्ययेन च शुग्रब्दस्य[1] लोप इति मन्यमानः कश्चिदश्नुयातामश्नुयुरिति द्विवचनबहुवचने कुर्यात्। तन्निवारणार्थं सूत्रम्।

१६. तदृध्यात्सूक्तवाक एव। तत्र पूर्वोक्त एव न्यायः। ऋध्यास्तामिति द्वियजमानके।

१७. यद्यदचीकमतेति यजमानाभिधायि। तत्र द्वियजमानके यद्यदचीकमेताम्। बहुयजमानके[2] यद्यदचीकमन्तेति। अचकमेतां द्विवचनमचकमन्तेति बहुवचनं लाक्षणिकम्। तत्सूत्रारम्भसामर्थ्यात् बाध्यते।

१८. इतीतिप्रकारे[3] अनेन प्रकारेण यजमानाभ्यां यजमानेभ्य इत्यादिकः शब्दविकारः कर्तव्यः। वक्ष्यति। सप्तदशाग्नीषोमीया इति। तत्र होता यथदग्नीषोमौ छागस्यछागस्येति वीप्सया चाभिधानं प्राप्नोति। प्रकृतानां सप्तदशानां। बहुवचनेन वा छागानामिति। तत्र बहुवचनेनैवाभिधानं कार्यम्। कुतः। यजमानाभ्यां यजमानेभ्य इति दर्शनात्। एवं च सति प्रातिपदिकोपग्रहौ परस्मैपदमात्मनेपदं च कालपुरुषा उत्पत्तिवद्भवन्ति। न विक्रियन्ते ऽर्थभेदात्। तेषु विक्रियमाणेष्वन्य एवार्थः संपद्यते। शब्दविकार इति। यः शब्दो विकर्तुं शक्यते स एव विकर्तव्यो नाव्ययम्।

---

१ O (orig.) वाकुम in marg. चश्री.॰, A यशुश॰। २ C om. बहुयजमानके। ३ C ॰प्रकरणे।

तद्दीप्यैवानेकार्थाभिधायकं भवति। तत्र पुरापुरा नाभ्या। अन्तरन्तरेवेत्यादि सिद्धं भवति।

१८ स्तृणीत बर्हिः। सूर्यं चक्षुर्गमयतात्। दिशः श्रोत्रम्। वातं प्राणम्। अन्तरिक्षमसुम्। एकधास्य त्वचं। पुरा नाभ्या। अन्तरेवोष्माणम्। माता मन्यतामित्येवमादीनि ज्ञातिनामानि। श्येनमस्य वक्ष। शला दोषणी। कश्यपेवांसा। कवषा स्रेकपर्णेति पदद्वयम्। ऊवध्यगोहं पार्थिवम्। अस्ना रक्षः संसृजतादित्येतानि सूत्रपठितानि विकारे ऽप्यनूह्यानि। यथासमाम्नातम्। प्रकृतिवद्विकारेषु भवन्ति। नेति वक्ष्यते यथासमाम्नातवचनमधिकारार्थम्।

२० चोदनाशब्देनाचाभिधेयमुच्यते। न तु क्रियाप्रवर्तकं वचनम्। तत्र प्रकाशस्य संदेहे यथाग्ने त्वं सूक्तवागसि तदस्मै देवा रामन्तामित्येवमादौ अग्निपदे आहवनीये होतृगुणविशिष्टे वा[1] विकृतिष्वपि यथासमाम्नातं कर्तव्यम्।

२१ शेषशब्द एकदेशवाची। भूतशब्द उपमायाम्। शेषभूतानि शेषतुल्यानि वाक्यानि मन्त्रस्य निराकाङ्क्षीकरणानि। अपूर्वाणि पूर्वमन्त्रमध्ये अपठितानि तानि यथासमाम्नातं भवन्ति। यत्र न समाम्नातानि तत्र न भवन्तीत्यर्थः। तत्र उपहूतौ वायुरिन्द्रवायू सह प्राणेन सह वर्चसा तयोरहमुपह्वत सह प्राणेन सह वर्चसेत्येवमन्तो मन्त्रो न भवयामीत्यध्याहारः।

२२ आय इत उत्तरो वक्ष्यमाणको ग्रन्थः। तत्र निगदा यजुर्विशेषाः। ते च यथासमाम्नातं भवन्ति। षशब्दाग्निविदय।

[1] B om अग्निपदे॰ विशिष्टे।

प्रैषास्तृह्यन्ते प्रतीकग्रहणात्। य एते प्रैषाश्च निगदासेति च व्यपदेशात्। आद्यग्रहणादग्ने महाँ असि ब्राह्मण भारतेत्येवमादीनामूहः।

२३. एकधास्य त्वचमाच्छ्यतादित्यत्रैकधाशब्दस्यानेकपशौ वीप्सा। अव्ययत्वादयत्नसिद्धे सूत्रारम्भः इति समासेन वेत्यस्यापि विकल्पो यथा स्यादिति। तेन द्विधा त्रिधेत्येवमाद्यपि सिद्धं भवति।

२४. षड्विंशतिरस्य वङ्क्रय इत्यत्र षड्विंशतिशब्दस्यानेकपशौ वीप्सा।

२५. अनन्तरसूत्रद्वयोक्तमितिकरणेन परामृश्यते। तद्वा भवति। समासेन वा प्रयोगः सङ्ख्यासंकलनेनेत्यर्थः[१]। तद्यथा। द्विपशौ द्वापञ्चाशदेनयोर्वङ्क्रयः। चत्वारिंशतं[२] इत्येकादशिन्याम्[३]।

२६. वङ्क्रीसङ्ख्यासंकल्पनस्य प्रयोगः। एष शोभनतरः पक्षो ऽभिप्रेत आचार्यस्य। तदर्थं न्यायवचनम्।

२७. एकदेवतद्विदेवतयोश्चाभिधेययोः शब्दान्तरयोः शब्दान्तरेण परामृश्यमानयोर्मन्त्रवद्वचनं कार्यम्। तद्यथा। निरूढपशुबन्धे व्यूहनमिन्द्राग्नी वनस्पतिसमपनुदन्त्विति। नन्वेतदुदाहरणं प्रकृतिवत्सिद्धम्। उच्यते। मन्त्रगते ऽभिधाने क्व चिदन्यथापि दर्शनात् संदेहः स्यादिति। तद्यथा। उपहूतौ वायुरिंद्रवायू इति प्रक्रम्य तयोरहमुपहूत इति द्विवचनेनैव[४] परामर्शस्तद्वत् संदेहो मा भूदिति सूत्रम्।

---

१ A B सङ्कल्पने॰। २ B ॰ने शते A ॰ति इ शते। ३ A ins कौमिनिमतम्। ४ B om द्वि।

२८. समानजातीययोः पुंस्त्रियोः सह वक्तव्ययोः[1] पुंवत्प्रयोगः कार्यः। तद्यथा। मेषश्च मेषी च मेषौ।

२९. अपिशब्दो विकल्पार्थः। तरशब्द ईषदर्थे। अन्यतरस्यां शब्दप्रवृत्तौ मिथुनेषु[2] पुंवद्भावैकशेषौ न भवतः। इन्द्रेन्द्राण्याविति यथा पितरावित्यत्र भिन्नाभ्यामपीति[3] समासविकल्पार्थं सूत्रम्।

३०. करत एवाग्नीषोमावित्यत्रायमेवशब्दो देवतानामधेयेन सहाकारान्तः संधीयमानो दृष्टः। वानस्पत्यमैत्रावरुणादिप्रैषेषु मकारान्तः। तस्य विकृतिषु व्यवस्था क्रियते। देवतानामधेयस्य स्वरादेर्द्विदेवत्यस्य यत्प्रधान एवंशब्देन करतशब्दपूर्वेण तत्पुंसमकारेण कार्यम्। ततः सामर्थ्यादकारेण सन्धिर्भवति। तद्यथा। करत एवाग्नीषोमौ। करत एवाश्विनौ। करत एवेन्द्राग्नी। करत एवेन्द्रवायू इति। स्वरादेरिति वचनादिह न भवति। करत एवं मित्रावरुणा। द्विदेवत्यस्येति वचनादिह न भवति। करदेवमग्निरिति।

३१. पशुबहुत्वे ऽपि सति यः सूक्तवाकप्रैषे वध्रुञ्छब्दो ऽसौ सकृदेव भवति। न प्रतिपशु आवर्तते।

३२. सूपस्था अद्य देवो वनस्पतिरभवदित्येतत्पशुभेदे ऽपि सकृद्भवति। व्याख्यातो ऽग्नीषोमीयः प्रकृतिः पशूनामिति सर्वविधानां पशूनां प्रकृतिमभिधाय तत्प्रसङ्गेनोभयविधानाच्च।

३३. रौक्ष्यादादित्योदगयनस्यादावन्ते च तयोरेवाक्षोरैन्द्राग्नो निरूढपशुबन्धः कार्यः। कुतः। श्रुत्यन्तरात्। निरूढो नित्य इत्यर्थः।

---

१ B om सह वक्तव्ययोः। २ A C (sec h) पि instead of षु। ३ A C (sec h) भिन्नयोरपीति।

३८. चोदकप्राप्तमपि[1] यदेतदेव उच्यते। दीर्घणीयाधर्मप्राप-णार्थम्। एवमेव शाखान्तरश्रवणात्। ततो ऽपराह्णे पौर्णमासी-विकारः पञ्चदशसामिधेनीकोपांशुहविर्विराजौ स्विष्टकृतो नित्ये वेत्येते विधयः सिद्धा भवन्ति। कृत्स्ना चेयमिष्टिश्शब्दात्।

३९. मङ्कतादग्नीषोमीयादन्यस्मिन्पशौ सूक्तवाके नामग्रहणं यजमानस्य कार्यम्। चशब्दान्निर्वचनं चाग्निपामिति। माङ्कतीय-सवनिक्या इत्येवमाद्युक्ते ऽपि अन्यच चाग्नीषोमीयादित्युच्यते। तेन विशेषवचनात्सामान्यस्य बाधो मा भूदिति।

४०. वक्ष्यमाणमनुवचनं प्रातरनुवाकः। तत्प्रभृति यान्यादि-प्रदिष्टानि आर्दिं (ऋच) गृहीत्वा विनियुक्तानि तानि शस्त्रानुवच-नयोः सूक्तानि सकलानि वेदितव्यानि। इह परिभाषा सूक्तवङ्-लप्रदेशप्रसङ्गात्[2]।

४१. शस्त्रानुवचनेभ्यो ऽन्यचादिप्रदेशे ऽप्येक

---

## २.

१. ऊर्ध्वमर्धरात्रान्महारात्रम्। तस्मिन् प्रातरनुवाकार्थं होता-मन्त्रितो ऽपेणाग्नीध्रीयं धिष्ण्यं तिष्ठन् प्रपदः अग्रपद्भ्यां स्थितः प्राग्दिगुपस्थानादेवमवस्थो जपति।

२. भूः प्रपद्य इत्येवमादिकं पितृभ्यः प्रतिनमस्कारेभ्यो वो ऽपि नम इत्येवमन्तं मन्त्रं प्रपदो जपति। नमः पितृभ्य इति प्राचीनोपवीती।

---

[1] C om. पि। [2] B चप्रसङ्गात्।

२. वक्ष्यमाणैर्मन्त्रैः यथारूपं च मन्त्रलिङ्गेभ्यो देवताः।

३.

१. अस्यां मे प्राच्यां दिशीत्येवमादिना मन्त्रेण प्राचीम्। तदभिमुखो ऽन्यदिक्स्थे ऽपि चन्द्रमस्युपतिष्ठते।

२. अस्यां मे दक्षिणस्यां दिशीत्येवमादिना मन्त्रेण दक्षिणां यथारूपमुपतिष्ठते। दक्षिणामिति नियमार्थम्। नैर्ऋत्यां मृत्युरिति संदेहः स्यात्।

३. अस्यां मे प्रतीच्यां दिशीत्येवमादिना मन्त्रेण प्रतीचीं यथारूपमुपतिष्ठते।

४. उदीच्यनुवादः मध्याहृद्विधानार्थः।

५. उपतिष्ठत इति सर्वत्रानुवर्तते। दिगनुवादः प्राङित्यस्य विधानार्थः।

६. अस्मिन्मे अन्तरिक्ष इत्येवमादिना अन्तरिक्षमुपतिष्ठते। प्राङेवाधिकारात्[1]।

७. उपतिष्ठत इति वाक्यशेषो ऽनुवर्तत एव।

८. बृहद्रथन्तरे म इयत आरभ्य सुत्रामाणं पृथिवीं द्यामनेह-समित्येतयर्चा सह जपित्वा। अनन्तरं किं करोति।

९. जपानन्तरं दक्षिणेन प्राङ्गनाहवनीयाग्नीध्रीये ऽग्नौ भूर्भुवः स्वरित्येवमादिकैर्मन्त्रैः स्वाहाकारान्तैः पलाहुतीः स्रुवेण हुत्वा ततः मध्याहृद्विधानयोः पूर्वस्यां द्वार्युपविशेत्।

१ C अभिधानात्।

१०. देवेभ्यः प्रातर्यावभ्यो ऽनुब्रूहीत्युक्तो हिंकारमपि मध्यमेन स्थानेन कृत्वा प्रातरनुवाकाख्यमनुवचनमाह।

११. प्रातरनुवाके याः पङ्क्तयस्तासामयं धर्मः। त्रीन्पादान्संधायावस्येत् द्वाभ्यां पादाभ्यां प्रणुयात्।

१२. अनूच्येत्येतदित ऊर्ध्वमनुवर्तते। यावत्प्रतिप्रियतममिति। आपो रेवतीः क्षयथा हि वस्व इत्येतामापोरेवतीमंजितां[1] चिरनूच्य तत आग्नेयं क्रतुमन्वाह। अथोपस्थमिति प्रागत आग्नेयः क्रतुरुच्यते। अथानुष्टुभमिति प्रागतो गायत्रमुच्यते। अनयोः संज्ञाकरणं वाक्यार्थं शास्त्रसंव्यवहारार्थं च।

---

४.

१. नवर्चं सूक्तम्।

२. नवर्चं सूक्तम्।

३. द्वादशर्चं सूक्तम्।

४. अयं न त्वा वारवन्तमित्येता ऋचो दश।

५. पञ्चकं सूक्तम्।

६. पञ्चर्चं सूक्तम्।

७. नवर्चं सूक्तम्।

८. दूतं वो विश्ववेदसम्। अष्टक सूक्तम्।

९. अग्ने मृल महाँ असि। अष्टकं सूक्तम्।

१०. अर्चन्तस्त्वा हवामहे। षट्कं सूक्तम्।

---

१ A रेवतीरित्येताप्रभिता, C (in marg) ॰वती रित्येताम्।

११. अग्निं स्तोमेन बोधय। षड्कं सूक्तम्।

१२. उपसद्याय मीळ्हुषे। पञ्चदशर्चं सूक्तम्।

१३. इमे विप्रस्य वेधसः। त्रयस्त्रिंशदृचं सूक्तम्।

१४. समिधाग्निं दुवस्यतेति। त्रिंशदृचं सूक्तम्।

१५. अग्निं हिन्वन्तु नो धियः। पञ्चकं सूक्तम्।

१६. प्राग्नये वाचमीरय। पञ्चकं सूक्तम्।

१७. त्वमग्ने यज्ञानामित्यत आरभ्य षड्विंशतिर्ऋचः।

१८. अथशब्दः क्रमनियमार्थः। संज्ञाकरणं लाघवार्थम्। संव्यवहारार्थं च।

१९. ते ते अग्ने लोता: शाखान्तरे सूक्तादिस्ततः[1] सूक्तप्रतिषेधार्थमेकेत्युक्तम्।

२०. होताजनिष्ट चेतनः। अष्टकं सूक्तम्।

२१. त्वं ह्यि चैतवद्यश इत्येता ऋचो नव।

२२. अग्ने कदा त आनुषगित्येवमाद्याः पञ्च।

२३. क्रमार्थो ऽथशब्दः। संव्यवहारार्थं संज्ञा। लाघवार्थं छन्दोवचनम्।

२४. सखाय यद्दियुता सखिस्तुधस्वित्येता ऋचः पञ्च।

२५. यो मर्त्येष्वमृत ऋतावा। चीण्येतानि सूक्तानि। एकपञ्चाशदृचः।

२६. प्र वो देवं चित्सहसानमग्निमित्यादीनि पञ्च सूक्तानि। त्रिंशदृचः।

---

[1] C om. सूक्तप्रतिषेधार्थम्।

२७. अग्ने बृहन्नुषसामूर्ध्वो अस्थात्। एवमादीनि सप्त सूक्तानि। एकोनपञ्चाशदृचः।

२८. अगन्म महा नमसा यविष्ठं त्रिकं सूक्तम्।

२९. उक्तार्थम्।

३०. एना वो अग्निं नमसा द्वादशर्चं सूक्तम्।

३१. प्र वो यज्ञं पुरूणां विंशत्यृचं सूक्तम्।

३२. अग्ने विवस्वदुषस एता ऋचो द्वादश।

३३. सखायस्त्वा वावृमहे। एता ऋचो ऽष्टौ।

३४. अदर्शि गातुवित्तमः। एता ऋचश्चतस्रः।

३५. समिद्धश्चित्समिध्यसे। एतास्तिस्र ऋचः।

३६. अयमग्निः सुवीर्यस्येति षड्‌ृचं सूक्तम्।

३७. उक्तो ऽर्थः पूर्वंच।

३८. सूक्तं नवकम्।

३९. ईळिष्वा हि प्रतीव्यं सूक्तं त्रिंशदृचम्।

४०. पुरु त्वा दाश्वान्वोचे। सूक्तं त्र्यृचम्।

४१. पूर्ववदुक्तो ऽर्थः।

४२. वेदिषदे प्रियधामाय सुद्युते। एताः सप्त ऋचः।

४३. एति प्र होता व्रतमस्य माययेति सूक्तं सप्तर्चम्।

४४. यज्ञेन वर्धत जातवेदसं चयोदशर्चं सूक्तम्।

४५. जनस्य गोपा अजनिष्ट जागृविः। षड्‌ृचं सूक्तम्।

४६. व्याख्यातमेतत्।

४७. अग्निं तं मन्ये यो वसुः सूक्तं दशकम्।

## ५.

१. क्रतुं वच्यामीति शेषः। अनुवचनैकदेशस्य वच्यमाणस्य संज्ञा प्रागाश्विनात्।

२. अथशब्दः क्रमार्थो ऽनुवर्तते। गायत्रमिति संज्ञा चान्वर्था।

३. कस्त उषः कधप्रिय इति तिस्र ऋच एताः।

४. प्रति या सूनरी जनी सप्तकं सूक्तम्।

५. क्रमार्थो ऽथशब्दः। संज्ञार्थं चानुष्टुभमिति।

६. उषो भद्रेभिरा गहि सूक्तं चतुष्कम्।

७. उषस्यमिति वर्तते।

८. उपो रुरुचे युवतिर्न योषेत्यादीनि चत्वारि सूक्तानि। ऊनविंशतिरेताः।

९. उक्तार्थः।

१०. प्रत्यु अदर्शीति सूक्तं षट्कम्।

११. सह वामेन न उषः। षोलशर्चं सूक्तम्।

१२. कृतव्याख्यानम्।

१३. उषस्तच्चित्रमा भरेति तिस्र ऋचः।

१४. उक्तार्थम्।

१५. एता उ त्या उषसः केतुमक्रतेति चतस्र ऋचः।

१६. कृतव्याख्यानम्।

१७. मह्रे नो अद्य बोधयेति दशर्चं सूक्तम्।

---

६.

१. क्रतुमन्वाहेति वाक्यशेषः।

२. वक्ष्यमाणम्।

३. अश्विना यज्वरीरिष इत्येवमाद्यास्तिस्र ऋचः।

४. प्रातर्युजा वि बोधयेत्येताश्चतस्र ऋचः।

५. अश्विनावश्वावत्या एतास्तिस्र ऋचः।

६. एषो उषा अपूर्व्या पञ्चदशकं सूक्तम्।

७. गोमदू षु नासत्या एते द्वे ऋचौ।

८. दूरादिहेव यत्सती एता ऋचः षट्त्रिंशत्

९. उदीराथामृतायते अष्टादशर्चं सूक्तम्।

१०. आ मे हवं नासत्या नवकं सूक्तम्।

११. कृतव्याख्यानम्।

१२. त्रयोविंशत्यृचं सूक्तम्।

१३. यदद्य स्थः परावतीत्येते सूक्ते दशके। अनूच्येत्येतदनुवर्तत एव।

१४. कृतव्याख्यानम्।

१५. आ भात्यग्निरुषसामनीकमिति द्वे सूक्ते पञ्चके।

१६. नासत्याभ्यां बर्हिरिव प्र वृञ्जे एतानि त्रीणि सूक्तानि। एकषष्टिरेताः।

१७. वसू रुद्रा पुरुमन्तू वृधन्ता तिस्र ऋचः।

१८. युवो रजांसि सुयमासो अश्वा इति द्वे सूक्ते। ऊनविंशतिश्चैषः।

१८. तं युञ्जाथां मनसो यो जवीयानिति द्वे सूक्ते। द्वादश स्त्रचः[1]।

१०. द्यावाणेव तदिदर्थं जरेथे अष्टकं सूक्तम्।

११. धेनुः प्रत्नस्य काममदुह्राना नवकं सूक्तम्।

१२. क उ श्रवत्कतमो यज्ञियानां द्वे सूक्ते सप्तके।

१३. स्तुषे नरा दिवो अस्य प्रसन्तेति द्वे सूक्ते। अनूच्येति वर्तते। परिहाप्य परित्यज्येत्यर्थः। सं वां शतेत्येतां[2] प्रकरीमुक्त्वा अन्यां विंशतिमाह।

१४. आ वामित्येवमादीनि पञ्च सूक्तान्यनूच्य एकविंशदेता स्त्रचः।

१५. उक्तार्थमेतत्।

१६. इमा उ वां दिविष्टय इति षड्‌कं सूक्तम्।

१७. अयं वां मधुमत्तम इत्यस्य सूक्तस्य प्रथमानुवक्तव्या। ततस्तृतीया। ततः पञ्चमीत्येवं तिस्रः।

१८. उक्तार्थम्।

१९. युवोरु षू रथं हुवे एताः पञ्च।

३०. व्याख्यातम्।

३१. चित्रिन्नो अद्या भवतं नवेदसा द्वादशर्चं सूक्तम्।

३२. ईळे द्यावापृथिवी पूर्वचित्तये पञ्चविंशकं सूक्तम्।

३३. यो वां परिज्मा सुवृदश्विना रथ इति द्वे सूक्ते चतुर्दशके। घोषा। समानमु त्यत्पुरुहूतमुक्थ्यमिति तृचं[3] तत्पुचः। एवं सपुत्रायां घोषायामेकत्रिंशत्।

---

१ A om. द्वा॰स्त्र॰। २ A ins पच्चपदा। ३ B तृच सूक्त C (in marg) सूक्तं।

३४. उक्तार्थम् ।

३५. प्रति प्रियतमं रथं नवकं सूक्तम् । सह त्रिर्वचनेनैकादश । इति एतदेव प्रातरनुवाकानुवचनम् । आद्यन्तयोस्त्रिर्वचनेन वृद्धिः[१] ।

३६. उत्सृज्य वाचं मध्यमाम् । उत्तमेन स्थानेन[२] प्रति प्रियतममित्यस्योत्तमया परिदध्यात् । अभूदुषा रुशत्पशुरित्याशीर्वत्या परिदधातीति (११.६) श्रुतेः । तस्यां वाचमुत्सृजतीति च ।

३७. परिधानानन्तरमया वाजं देवहितं सनेमेत्येतां द्विपदां जपति ।

३८. इति प्राग्द्विपदायाः सहस्रपरिमाणः[३] प्रातरनुवाकः । संज्ञाकरणं संव्यवहारार्थम् ।

३९. वाशब्दः पक्षान्तरपरिग्रहार्थः । विनापि कामसंयोगम् । एतस्य साहस्रस्य सूक्तोक्तस्य यानि छन्दांसि तेषामपरित्यागेन प्रतिच्छन्दस्य । प्रतिपत्समारोहणीयानां चाद्यन्तानामित्यर्थः । षष्ट्यधिकानि त्रीणि[४] शतान्यनुब्रूयात् । तानि च वृद्धेः कल्पितान्युच्यन्ते । तत्र के चिद्द्वौ श्लोकौ पठन्ति । ताविमौ ।

आद्यन्तयोः प्रतिच्छन्दः सूक्तम्हत्त्वापि वोभयम् ।
पञ्च सप्तेति[५] यत्तस्माद्द्वादशानुष्टुभान्तसु ॥१॥
अग्निमीळेय ईळिष्व नासत्याभ्यां पुरस्य यत् ।
अश्विना द्वादशोषस्य एवं षष्टिशतत्रयम् ॥

---

१. C om आद्य॰ वृद्धि । २. C om स्थानेन । ३. C ॰प्रमाण । ४. C षष्टिशतानि ।
५. A तस्मात् C मस्माद् or तस्माद् B सत्स्माद् ।

अन्ये तु दण्डकं पठन्ति। सो ऽप्युच्यते। आपो रेवतीस्तिर्वं-चनमुपप्रयन्तो नवाग्निमीळे नव तमु त्वा पाथ्यो वृषेति चयोदश होताजनिष्टेत्यष्टौ अग्ने कदा त आनुषगिति दश यो मर्त्येष्विति विंशतिरगन्म महेति तिस्रः एना वो अग्निं द्वादशायमग्निः सुवीर्य-स्येति षट् त्वामग्ने मनीषिण इति नवेळिष्वेति चिंशत्पुरु त्वेति तृचं वेदिषद् इति सप्त जनस्य गोपा इति षलग्निं तं मन्य इति दश कस्त उष इति तिस्रः प्रति ष्या सूनरीति भद्रेभिश्चतुष्कमुपो रुरुच इत्येकोनविंशतिः प्रत्यु अदर्श्यायतीति षट् सह वामेन योलशोपस्त-श्चित्रमिति तिस्रः एता उ त्या इति चतस्रो महे नो अद्येति दशाश्विना यज्वरीरिष इति तिस्रः प्रातर्युजेति चतस्रः आश्विना-वश्वावत्येति तिस्रः आ मे हवं नवा नो विश्वाभिरिति चयोविंशतिः कूष्ठो देवाविति दश भातीति दश नासत्याभ्यामिति पञ्चविंश-तिरतारिष्मेत्येकादश याभिः कण्वमित्येका युवोरु षू रथमिति पञ्च चित्रिन्नो अद्येति द्वादश समानमु त्यं तृचं प्रति प्रियतममिति नवोत्तमा त्रिरेवं षष्टिश्च चीणि च शतानि।

४०. वाशब्दो विकल्पार्थः। ऊर्ध्वं शताच्च शतमेवेत्यभिप्रायः। यायाकामी यजमानः श्रुत्युक्तानां सङ्ख्यानामन्यतमामङ्गीकुर्यात्।

४१. सर्वेषु पक्षेषु पाङ्क्तानि सूक्तानि[1] नोद्धरेत्। विंशोत्तर-शतः प्रातरनुवाक उच्यते। आपो रेवतीः क्षयथा हि वस्व इति तिस्रः उपप्रयन्तो अध्वरमिति नवाग्निमीळे पुरोहितमिति तिस्रः स हि यो मानुषा युगेति चतस्रः तेते अग्ने त्वोता इत्येका

---

[1] C om सूक्तानि।

ह्येतावानं विचेतसमिति चतस्रः ससस्य यद्वियुता सस्मिन्नूधन्नित्येका स मह्ना विश्वा दुरितानि साह्वानिति द्वे एना वो अग्निं नमसेति तिस्रः स त्वं नो रायः शिशीहीति चतस्रस्त्वामग्ने मनीषिण इति तिस्रः स चन्द्रो विप्र मर्त्य इत्येका वेदिषदे प्रियधामाय सुद्युत इति तिस्रस्त्वामग्ने अङ्गिरसो गुहा हितमित्येका अग्निं तं मन्ये यो वसुरिति दश कस्त उप इति द्वे आ द्यां तनोषि रश्मिभिरित्येका उषो भद्रेभिरा गहीत्येका व्युच्छन्ती हि रश्मिभिरित्येका उषो ह्रद्ये युवतिर्न योषेत्येका अश्वावतीर्गोमतीर्न उषास इत्येका प्रत्यु अदर्श्यायतीत्येका सं नो राया बृहता विश्वपेशसेत्येका उपस्तच्चि-त्रमा भरेति तिस्रः एता उ त्या उषसः केतुमक्रतेत्येका अधि पेशांसि वपते नृतूरिवेत्येका महे नो अद्य बोधयेति दशाश्विना यज्वरीरिष इत्येका युञ्जाथां रासभं रथ इति तिस्रः आ नो विश्वाभिरूतिभि-रित्येका कं याथः कं ह गच्छथ इत्यष्टौ आ भात्यग्निरुषसामनीक-मिति नव अहेम यज्ञं पथामुराणा इति तिस्रः इमा उ वां दिविष्टय इति द्वे याभिः कण्वमभिष्टिभिरित्येका युवोरु षू रथं हुव इत्येका जुजुराणा चिदश्विनेत्येका चिचिन्नो अद्या भवतं न वेदसेति द्वे अध्वर्यु वा मधुपाणिं सुहस्त्यमित्येका प्रति प्रियतमं रथमित्येकादश एतद्विंशतिशतम्।

त्यजेदनुष्टुभः सप्तशताद्विंशकाद्बुधः।
त्रिष्टुभौ[१] द्वे जगत्येका एवं दशशतं भवेत्॥

---

१ बृहत्यौ A C (in marg.)

सप्तविंशतिशतान्यनुब्रूयादित्यत्रापि वृद्धसंप्रदायो लिख्यते। अर्चन्तस्त्वेत्यतः प्रभृति शतमग्ने वृद्धनूनपञ्चाशत् प्र वो यज्ञमिति विंशतिरेति प्र होतेति सप्ता नो यातं दिवस्परीति विंशतिर्ग्रावाणेवेत्यूनपष्टिरीळे द्यावापृथिवी पूर्वचित्तय इति पञ्चविंशतिरेतस्मिन् सहस्रादुद्धृते सप्तविंशतिशतानि भवन्ति।

४२. पुरोदयादध्वर्यव उपांशुनाम्नो ग्रहस्य होमकालं संभावयिष्यन्तीति मन्यमानः सद्यादिनियमसुत्सृज्यापि परिदध्यात्।

४३. उदिते ऽन्तर्यामग्रहहोम आध्वर्यवः। आ तस्य परिसमाप्तेर्वाग्यमनं होतुः।

---

७.

१. अप इष्य होतरित्येवमुक्तो ऽध्वर्युणा होता प्र देवत्रेत्येतत्सूक्तं पञ्चदशकं द्वादशीं परिहाप्य वक्ष्यमाणेन क्रमेणानुब्रूयात्।

२. प्र देवत्रेत्यतस्त्रिर्वचनमगणयित्वा[1] नवानूच्य ततो ऽध्वर्युणा[2] आहूतास्वप्सु ह्रयमानायामेकादशीमनुब्रूयात्।

३. आनीयमानास्वप्सु दशमीमनुब्रूयात्। अप इष्य होतरित्युक्त इति संप्रैषवचनादवक्षितिति गम्यते।

४. प्रति यदापो अदृश्रमायतीरिति दृश्यमानासु अप्सु तदाधारेषु सामर्थ्यात्।

५. मैत्रावरुणचमसस्य वसतीवरीणां च संपर्के क्रियमाणे समन्या यन्त्युप यन्त्यन्या इत्येतामनुब्रूयात्।

---

१ Com प्रदेवत्रेत्यतश्च। २ Com ऽध्वर्युणा।

१७. अध्वर्यू संस्तूय पयसोर्वीरिति जपित्वा प्रचारानुपूर्व्येण[1] वक्ष्यमाणके प्रहृताहुत्याख्ये आहुती जुहोति[2]।

१८. जुष्टो वाच इत्यादिना सरस्वत्या इत्येवमन्तेन मन्त्रेण पूर्वाहुतिं जुहोति। यदा मुख्यः कुर्यात्परार्थानीति मुख्यो द्वियजमानके जुहोति। बहुयजमानके वा। तदा यथार्थमूहः। स उच्यते। जुष्टौ वाचो भूयास्व जुष्टौ वाचस्पतेरिति द्वियजमानके। जुष्टा वाचो भूयास्म जुष्टा वाचस्पतेरिति बहुयजमानके। मान्ते स्वाहाकारः कृतत्वात् पुरस्तात्स्वाहाकारेणेति च श्रुतौ मन्त्रविशेषणात्।

१९. उत्तरामाहुतिममन्त्रिकां जुहुयात्।

---

१०.

१. अग्ने नय सुपथा राये अस्मानित्याग्नेयस्य पशोर्वपायाः पुरोनुवाक्या। अग्ने त्वं पारया नव्यो अस्मानिति पशुपुरोलाशस्य पुरोनुवाक्या। अग्ने त्वमस्मद्युयोध्यमीवा इति पशोः पुरोनुवाक्या। एवमेतास्तिस्रः। वक्ष्यति। तिस्रस्तिस्रः पूर्वा पुरोनुवाक्या वपायाः पुरोलाशस्य पशोरिति। तत्र तावत्पुरोनुवाक्या उक्ताः। भुवो यज्ञस्य रजसश्च नेतेति वपाया याज्या। प्र व. शुक्राय भानवे भरध्वमिति पशुपुरोलाशस्य याज्या। प्र कारवो मनना वच्यमाना इति पशोर्याज्या। वक्ष्यति। तिस्रस्तिस्र उत्तरा याज्या इति। एवं सर्वेषु षट्केषु योज्यम्।

---

[1] C om अध्वर्यू॰ पूर्व्येण। [2] A C (see b, and also in the text of the Sûtra जुहोति।

२. आ नो दिवो बृहतः पर्वतादा। सरस्वतीं देवयन्तो हवन्ते। सरस्वत्यभि नो नेषि वस्यः। पावीरवी कन्या चित्रायुः। प्र क्षोदसा धायसा सस्र एषा। इमा जुह्वाना युष्मदा नमोभिः। इत्ययं षट्कः सारस्वतस्य।

३. त्वं सोम प्र चिकितो मनीषा। त्वमिमा ओषधीः सोम विश्वाः। सोमो धेनुं सोमो अर्वन्तमाशुम्। या ते धामानि दिवि या पृथिव्याम्। अषाळ्हं युत्सु पृतनासु पप्रिम्। या ते धामानि हविषा यजन्ति। एता षट् सौम्यस्य।

४. पूषेमा आशा अनु वेद सर्वाः। प्रपथे पथामजनिष्ट पूषा। पथस्पथः परिपतिं वचस्या। शुक्रं ते अन्यद्यजतं ते अन्यत्। यास्ते पूषन्नावो अन्तः समुद्रे। पूषा सुबन्धुर्दिव आ पृथिव्याः। इति षट्कं पौष्णस्य।

५. आ दैव्या वृणीमहे ऽवांसि। आ वेधसं नीलपृष्ठं बृहन्तम्। बृहस्पतिः सममजयद्वसूनि। स हि शुचिः शतपत्रः स शुन्ध्युः। स सुष्टुभा स ऋक्वता गणेन। स आ नो योनिं सदतु प्रेष्ठः। इत्येताः षड् बार्हस्पत्यस्य।

६. विश्वे अद्य मरुतो विश्व ऊती। यं देवासो ऽवथ वाजसातौ यं त्रायध्वे यं पिपृथात्यंहः विश्वे देवाः शृणुतेमं हवं मे। ये के च ज्मा महिनो अहिमायाः। ते हि यज्ञेषु यज्ञियास ऊमाः सधस्थं विश्वे। स्तीर्णे बर्हिषि समिधाने अग्नौ सूक्तेन महा। एताः षड् वैश्वदेवस्य।

७. इन्द्रं नरो नेमधिता हवन्ते। इन्द्रो राजा जगतश्चर्षणीनाम्।

इन्द्र चत्रमभि वाममोजः। उरुं नो लोकमनु नेषि विद्वान्। आ नो विश्वाभिरूतिभिः सजोषाः। आ ते शुष्मो वृषभ एतु पश्चादिति षडैन्द्रस्य।

८. गोमदश्वावद्रथवत्सुवीरम्। इये नरो मरुतो मृळता नः। शुची वो हव्या मरुतः शुचीनाम्। अरा इवेदचरमा अहेव। या वः शर्म शशमानाय सन्ति। यूयमस्मान्नयत वस्यो अच्छ। एता षण्मारुतस्य।

९. उभा वामिन्द्राग्नी आहुवध्यै। आ वृत्रहणा वृत्रहभिः शुष्मैः। ता योधिष्टमभि गा इन्द्र नूनम्। शुचिं नु स्तोमं नवजातमद्य। गीर्भिर्विप्रः प्रमतिमिच्छमानः। प्र चर्षणिभ्यः पृतनाहवेषु। एता षडैन्द्राग्नस्य।

१०. आ नो देवः सविता त्रायमाणः। आ देवो यातु सविता सुरत्नः। सविता यन्त्रैः पृथिवीमरम्णात्। वाममद्य सवितर्वाममु श्वः। ये ते पन्थाः सवितः पूर्व्यासः। असम्यं तद्दिवो अद्भ्यः पृथिव्याः। एता षट् सावित्रस्य।

११. अस्तभ्नाद् द्यामसुरो विश्ववेदाः। तत्त्वा यामि ब्रह्मणा वन्दमानः। अव ते हेळो वरुण नमोभिः। एवा वन्दस्व वरुणं बृहन्तम्। इमां धियं शिक्षमाणस्य देव। उदुत्तमं वरुण पाशमस्मत्। एताः षड्वारुणस्य।

१२. एता ऋचो याज्यानुवाक्या ऐकादशिनानां भवन्ति।

१३. न केवलमैकादशिनानामेवैते यज्ञाः किं तर्हि अन्येषामप्येवंदेवतानां पशूनाम्। नेष्टिष्वेवदेवतास्वपि। पशव इति वचनात्।

## ११.

१. इन्द्रा नु पूषणा वयमित्याद्या ऐन्द्रापौष्णस्य पशोः षड् भवन्ति।

२. सोमा पूषणा जनना रयीणामित्येताः षट् सोमापौष्णस्य पशोः।

३. सं वां कर्मणा समिषा हिनोमीत्येताः षळैन्द्रावैष्णवस्य पशोः।

४. नासत्याभ्यां बर्हिरिव प्र वृञ्जे। षळेता आश्विनस्य पशोर्भवन्ति।

५. विष्णोर्नु कं वीर्याणि प्र वोचम्। एताः षड्वैष्णवस्य पशोः।

६. रात्री व्यख्यदायती। एताः षड्रात्र्या भवन्ति। रात्रिदेवत्यस्य पशोः।

७. भूरिं द्वे अचरन्ती चरन्तम्। एताः षड् द्यावापृथिवीयस्य पशोः।

८. जनीयन्तो न्वग्रव इत्येतास्तिस्रः। स वावृधे नर्यो योषणासु। दिव्यं सुपर्णं वायसं बृहन्तं। यस्य व्रतमिति च षष्ठी खिलिका। एताः षट् सरस्वतः। सरस्वान्नाम देवताविशेषस्तस्य।

९. य इमा विश्वा भुवनानि जुह्वदित्येताः षट् चतुर्थीं परिहाप्य वैश्वकर्मणस्य पशोर्भवन्ति।

१०. आ ते पितर्मरुतां सुम्नमेतु। एताः षड् रौद्रस्य पशोः।

११. अहं रुद्रेभिर्वसुभिश्चरामीति वाग्देवत्यस्य पशोरेताः षड् भवन्ति।

१२. उक्तानां षळानामयं विनियोगः। सूत्रोक्तेन क्रमेण प्रति-

पद्धं तिस्रस्तिस्रः पूर्वाः पुरोनुवाक्याः कर्तव्याः। एका वपायाः। एका पशुपुरोलाशस्य। एका पशोः। एवमेव तिस्रस्तिस्र उत्तरा याज्याः।

१३. सवनीयस्य पशोः केचित्पशुपुरोलाशं न कुर्वन्ति तुल्यत्वादुपालम्भस्यापि।

१४. करणं पशुपुरोलाशस्येत्येष एव न्यायः। कुतः। सोमार्थैः सवनीयहविर्भिः पश्वर्थस्य निवृत्तिरन्याय्येति।

१५. सावित्रस्य वाग्देवत्यस्योपांशु भवतः। न केवलं प्रदेशान्तरोक्तौ सौर्यप्राजापत्यौ।

१६. पशुगणे प्रतिपशु मनोतासूक्तमावर्तते कालभेदात्।

१७. प्रातरनुवाकादि प्रातःसवनम्। तस्मिन्प्रातःसवने परिव्ययणीयादि वपान्तं पाशुकं कर्म कृत्वा[1] यथाप्रपन्नमुपनिष्क्रम्याग्नीषोमीयवदुपस्पृश्य चात्वाले[2]। प्राप्तस्यानुवादः क्रमार्थः।

---

## १२.

१. वक्ष्यमाणेन विधिना धिष्ण्यान्वक्ष्यमाणानुपस्थाय सदः प्रविशन्ति। होता मैत्रावरुणो ऽच्छावाको ग्रावस्तुत् ब्रह्मा ब्राह्मणाच्छंसी पोताग्नीध्रः सदस्यो यजमानश्च। युगपच्छाखान्तराद्वहुवचनाच्च। स्वशाखायां तु ते नमसित्वा होतारमतिसृजन्त इति होतैवोपस्थाता।

२. अग्रेण हविर्धाने तिष्ठन्तो नोपस्थेयसमीपं गत्वा तंतमीक्षमाणा अन्यदिङ्मुखा अपि। न केवलं प्राङ्मुखा उदङ्मुखा वा।

---

१ C om कृत्वा। २ C ins मार्जनम्।

३. सम्राडसीत्येवमादिना मन्त्रेणाहवनीयमुपतिष्ठन्ते।

४. उदर्को ऽनुषङ्ग इत्येको ऽर्थः। रौद्रादिर्मन्त्रशेष उत्तरेष्वप्यनुषक्तव्यः। तास्मदः प्रत्यगन्नमत्ति नमो नम इति (१३.१) श्रुतेः।

५. अननुषङ्गो वा शाखान्तरात्।

६. अपिशो ऽसि दुवस्वानित्यनेन मन्त्रेणोपतिष्ठन्ते। यो[1] ऽग्निराहवनीये मथितानुप्रहृतः।

७. परिषद्यो ऽसि पवमान इत्यनेन मन्त्रेणास्तवमुपतिष्ठन्ते। आस्तव उच्यते यत्र बहिष्पवमानेन च्छन्दोगाः स्तुवते।

८. प्रतक्वासि नभस्वानित्यनेन मन्त्रेण चात्वालमुपतिष्ठन्ते।

९. कव्यो ऽसि हव्यसूदन इत्यनेन मन्त्रेण पशुश्रपणमुपतिष्ठन्ते।

१०. समुद्रो ऽसि विश्वभरा इत्यनेन मन्त्रेण उत्करमुपतिष्ठन्ते।

११. दक्षिणावृतो भूत्वा विभूरसि प्रवाहण इत्यनेन मन्त्रेणाग्नीध्रमुपतिष्ठन्ते।

१२. सदश्चाग्नीध्रं च प्रविशन्तो यथाकालं तयोरेवोपरि द्वारस्थूणाविशाखस्थं वलीकाद्यभिमृशन्ति दिवस्पृष्ठमसीत्येवमादिना मन्त्रेण।

१३. ऋतस्य द्वारावित्येवमादिना मन्त्रेणोभाभ्यां हस्ताभ्यां द्वार्यौ संमृश्य प्रविशेयुः।

१४. आग्नीध्रीयं प्रविश्योत्तरेणाग्निं गच्छन्ति। ये सदः[2] प्रविष्टाः सन्तः प्रत्यञ्चो धिष्ण्यानतिक्रामन्ति। के पुनस्ते। यजमानग्रावस्तुत्सदस्यवर्जिताः। येषां संचरं वक्ष्यति अग्रेणोत्तरेण सर्वान् धिष्ण्यान्गच्छन्तीत्येवमादिना ग्रन्थेन।

---

१ B •तिष्ठन्तो ऽग्निरा•। २ B सद।

१५. मलिम्लुचो ऽसीत्येवमादिना मन्त्रेणासादमच्छावाकस्योपतिष्ठन्ते। तं च वक्ष्यति। अच्छावाकः सीदेत्युक्तो ऽपरेण सद उत्तरेण स्रुतिमुपविशेति।

१६. वह्निरसीत्यादिना मन्त्रेण होतृधिष्ण्यमुपतिष्ठन्ते। धिष्ण्यग्रहणं सदोऽधिकारनिवृत्त्यर्थम्[1]।

१७. धिष्ण्याधिकारो ऽनुवर्तते। श्वात्रो ऽसि इत्यादिना मन्त्रेण मैत्रावरुणधिष्ण्यमुपतिष्ठन्ते।

१८. तुथो ऽसीत्यादिना मन्त्रेण ब्राह्मणाच्छंसिनो धिष्ण्यमुपतिष्ठन्ते।

१९. उशिगसीत्यादिना मन्त्रेण पोतृधिष्ण्यमुपतिष्ठन्ते।

२०. अवस्युरसीत्यादिना मन्त्रेण नेष्टृधिष्ण्यमुपतिष्ठन्ते।

२१. अंहारिरसि बम्भारिरित्येवमादिना मन्त्रेणाच्छावाकधिष्ण्यमुपतिष्ठन्ते।

२२. शुन्ध्युरसि मार्जालीय इत्यनेन मन्त्रेण मार्जालीयमुपतिष्ठन्ते। तत्रैव स्थिता अवेक्ष्येत्यारभात्।

२३. शुन्ध्युरसुपसद्य इत्यनेन मन्त्रेण ब्रह्मसदनमुपतिष्ठन्ते। अवेक्ष्यैव। तत्रैव स्थिताः।

२४. ऋतधामासि स्वर्ज्योतिरित्यनेन मन्त्रेणौदुम्बरीम्। अवेक्ष्योपतिष्ठन्ते। तत्रैव स्थिताः।

२५. समुद्रो ऽसि विश्वव्यचा इत्यनेन मन्त्रेण सद उपतिष्ठन्ते। तत्रैव स्थिताः। अन्तर्वेदिस्थास्तुवीक्ष्य।

---

१ C °ग्रहणमासादोधिकार°। alt to °ग्रहण सदो A °मासाधिकार°।

२६. अजो ऽस्येकपादित्यनेन मन्त्रेण[1] शालामुखीयमुपतिष्ठन्ते। पत्नीशालासंनिधिस्थः।

२७. अहिरसि बुध्न्य इत्यनेन मन्त्रेण प्राजहितमुपतिष्ठन्ते। प्राजहितश्चिरंतनो गार्हपत्यः।

२८. अम्नदाश्चपतिरित्यनेन मन्त्रेण मतश्रपणमुपतिष्ठन्ते। मतश्रपणो दक्षिणाग्निः। सत्रेषु केषां चिन्नानागार्हपत्यमतश्रपणाः। तेषां यथास्वमुपस्थानमूहो वा। अहयः स्थ बुध्न्याः। अन्नदाः स्थाग्नपतय इति।

---

१३.

१. अग्नयः सगरा इत्येवमादिना मन्त्रेण सर्वान् धिष्ण्यानुपतिष्ठन्ते। सदसः पुरस्तात्तिष्ठन्तः। तत्र हि बहवो दृश्यन्ते। भूयसां साधर्म्यात्।

२. अध्वन इत्यादिना पथि स्थादित्येवमन्तेन मन्त्रेणादित्यमुपस्थायानन्तरम्।

३. मैत्रावरुणपूर्वा उदञ्च इति येषामग्रेणोत्तरेण सर्वान्धिष्ण्यान्गच्छन्तीति संचर उक्तस्ते निर्दिश्यन्ते। अतश्च मैत्रावरुणप्रभृतयो धिष्ण्यवन्त इत्युक्तं भवति। अच्छावाकं परिहाप्येति वदता[2] यावस्तुतः प्रवेशः साधितो भवति। पूर्वया द्वारा सद इति वचनाद्वा प्रीभः स्वमागारं दक्षिणया द्वारा संसृज्य पूर्ववत्सदः[3] प्रविशेत्[3]।

---

[1] B मन्त्रेण शाला तन्निधिस्थः। [2] B पूर्वपातिवदता C (in marg) वचनात्।
[3] B om सदः।

४. सदः प्रसर्पन्तीति वर्तते। विश्वे देवा अनु मा प्रसर्पत इति मन्त्रः। प्रतीकग्रहीताश्च तिस्र ऋचो जपन्तः सदः प्रसर्पन्ति।

५. अच्छावाकधिष्ण्यं यावदग्रेण ततस्तान्सर्वानुत्तरेण। एवं गच्छतां दक्षिणधिष्ण्योदक्षिणधिष्ण्यः पूर्वो गच्छेत्।

६. गत्वा स्वधिष्ण्यप्रदेशं दक्षिणधिष्ण्योदक्षिणधिष्ण्यः स्वस्यस्वस्य धिष्ण्यस्य पश्चादुपविशेत्।

७. द्वितीयं सदोग्रहणं सदःप्रवेशधर्मप्रापणार्थम्। शिष्टं निगदव्याख्यातम्।

८. एते ये प्रविष्टास्ते नाममात्रे सवने पश्चिमेन द्वारेण निःसरन्ति[1] श्रुत्यन्तरवचनात्।

९. अविद्यमानधिष्ण्यानामन्तरेण होतृधिष्ण्यं मैत्रावरुणधिष्ण्यं चाममात्रे सवने संचरो भवति। प्राग्गतिषु ब्रह्मणो ऽपरया द्वारा प्रविष्टत्वात्। प्रत्यग्गतिष्वितरेषां पूर्वया द्वारा प्रविष्टत्वात्।

१०. सदस्यन्यत्र वा ये धिष्ण्यवन्तस्तेषां स्वंस्वं धिष्ण्यमुत्तरेणाग्नीध्रस्य प्राग्गतिषूत्तरेण स्वं धिष्ण्यं प्रत्यग्गतिष्वपरेण।

११. यद्यधिकृताः स्वकार्येणोदञ्चो गच्छेयुः पश्चार्धेनाग्नीध्रीयस्य गच्छेयुः। स्वरूपोदग्गच्छतामेष विशंस्थितसंचरः।

१२. [2]दक्षिणा चेद् व्रजेयुर्मार्जालीयस्य पश्चार्धेन वा व्रजेयुः।

१३. येनैव मार्गेण गतास्तेनैवाव्यावर्तमानाः प्रत्यायन्ति। यथाच्छादविलम्बितम्।

---

१ A C (orig) नि.संचरन्ति। २ B om दक्षिणा C (sec h) del चे।

१४. ऊर्ध्वं प्रातःसवनाद्यत्प्रसर्पणमुच्यते तत्र समस्तोपस्थानप्रभृतिनाप्ययः सगरा इत्यादिना यथोक्तेन मन्त्रकर्मकलापेन[1] प्रसर्पन्ति।

१५. यदाध्वर्युराह प्रशास्तः प्रसुहीत्यो सर्पतेति प्रशास्त आहेति संप्रैषवशात्संसन्नेषु च्छन्दो (०) गेषु सूक्षा योलग्निनमुपयन्तीति च श्रुतिदर्शनात् प्राप्तस्य समस्तोपस्थानप्रभृतेरादित्योपस्थानं रात्रिपर्यायाश्विनयोः प्रतिषिध्यते। अन्यत्र दैवान्मानुषाद्वा प्रतिबलात्। कालोत्कर्षे सत्यस्तमिते ऽप्यादित्योपस्थानं प्राप्त्यर्थम्। तत्र हि प्राण उपस्थेयो यदयं[2] प्राणो ऽध्यात्ममित्यर्थवादात्।

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति।

## इति शाङ्खायनश्रौतसूत्रभाष्ये षष्ठो ऽध्यायः समाप्तः।

---

शाङ्खायनकसूत्रस्य समं शिष्यहितेच्छया।
वरदत्तसुतो भाष्यमानर्तीयो ऽकरोन्नवम्[3]॥

---

१ A om कर्म। २ B प्राणाध्या॰ A इत्याद्य॰। ३ Om in A C

## अथ सप्तमोऽध्यायः।



१.

१. ऋतिक्रमेण सदःप्रसर्पणादनन्तरं सवनीयपुरोडाशप्रचारमाह। प्रसृप्येति प्रसर्पणानुवादः परिभाषासूत्रैर्व्यवहितत्वात्। प्रातःसवनसवनीयाङ्गार्थः प्रसर्पणस्यानुवाद इति वृद्धसंप्रदायः। अथ हविष्पङ्क्त्या चरन्ति पशवो वै हविष्पङ्क्तिः पशूनामेवाप्त्यै तानि वै पञ्च हवींषि भवन्ति दधि धानाः सक्तवः पुरोडाशः पयस्येति (१३.१) श्रुतेः। एवंरूपेष्वपि हविःषु पुरोडाशैरित्युक्तं पौर्णमासीविकारार्थम्। सवनीयसंज्ञाकरणं शास्त्रसंव्यवहारार्थम्।

२. धानावन्तं करम्भिणमिति पुरोनुवाक्या भवति। वैश्वामित्रीरनुसवनमित्यादिश्रुतेः (१८.२)।

३. होता यक्षदिन्द्रं हरिवां इत्यादिकोऽनुसवनं सवनीयपुरोडाशानां प्रैषः। अनुसवनमिति प्रसङ्गमुपजीवता लाघवार्थमिहैवोक्तं। तैत्तिरीयाणामितरयोरपि सवनयोः पयस्यास्ति। तदुपलक्षणप्रतिषेधार्थं यथासमाम्नातवचनम्।

४. सवनीयहविःप्रैषस्य यथासवनमभिदधत्प्रयोगं करोति। वक्ष्यत्युत्सर्गिणामयने (१२.१०) यद्देवतो वा सवनीयः स्यात् तत्र पशुतन्त्रे हवींष्यन्वायातयन्तीति। तत्र सवनपदानां सविशेषणानामुत्सर्गः कथं नाम स्यात्। सवनाभावादित्येवमर्थं सूत्रम्।

५. तादृशेनैवानुसवनं यथासवमाभिधायिना प्रैषेण यजति । किमविशेषेण । नेत्युच्यते । उद्धृत्य होतायक्षदित्येवंशब्दमुद्धृत्य होतर्यजशब्दं च । इन्द्रमित्यस्य देवतादेशनस्योद्धारः । संप्रैषे तु न विद्यत इति परिभाषितत्वात् (१. २. २०)। उद्धृत्यादेशपदमिति (५. ४. ४) चाश्वलायनस्यासंदिग्धमादेशपदमेतत् ।

६. सवनीयहविःस्विष्टकृतो वैश्वामित्रीरसुसवमित्याद्यविशेषश्रुतेः ।

७. होता यक्षदग्निं पुरोलाशानामित्येवमादिकः सर्वेषु सवनेषु हविष्पङ्क्त्यां स्विष्टकृत्प्रैषो भवति ।

८. अनुसवनमेव चशब्दात् । समानमन्यत्प्रातःसवनेनेति सिद्धे ऽनुसवनवचनं[1] नियमार्थम् । ततो यथापि पशुपुरोलाशस्य सवनीयानां च समानः स्विष्टकृत्तथाप्येष एव प्रैषो याज्या च[2] । अवचने तु न स्यात् । पुरोलाशस्विष्टकृत्समवाये ऽपि इति (५. १८. २) वचनात् ।

---

## २.

१. ऐन्द्रवायवश्च मैत्रावरुणश्च द्वौ पयस्यागौ[3] आश्विनश्च तृतीय इत्येते द्विदेवत्यसंज्ञा अनेनैव क्रमेण सवनीयपुरोलाशानन्तरं भवन्ति।

२. माधुच्छन्दसावभिरूपे द्विदेवत्यानां प्रथमस्य पुरोनुवाक्ये अश्वाहेति (२८. २) श्रुतेः ।

३. होता यक्षद्वायुमग्रेगाः। होता यक्षदिन्द्रवायू अर्हन्तेत्येवमादिकौ प्रैषौ ।

---

१ C om सवन । २ C स्व । प्रैषो याज्यावचने हि स्यात् । पुरोला॰ । ३ C द्वौ यद्वौ दानाश्वि॰ ।

४. अयं पिबा मधूनाम्। प्रतेना नो अभिष्टिभिः। एते याज्ये भवतः। श्रुत्यन्तरात्।

५. गार्त्समदौ च मैधातिथौ चोत्तरयोरभिरूपे अन्वाहेति श्रुतेः (२८. २)।

६. होता यक्षन्मित्रावरुणेत्येवमादिकः प्रैषो (०) भवति।

७. श्रुत्यन्तरात्।

८. प्रातर्युजा वि बोधयेत्याश्विनस्य पुरोनुवाक्या। मैधातिथौ चेति श्रुतेः।

९. होता यक्षदश्विना नासत्येत्येवमादिकः प्रैषो भवति।

१०. वाद्धधाना शुभस्पती इति याज्या। श्रुत्यन्तरात्।

११. द्विदेवत्यानामयं वैशेषिको धर्मः।

१२. तस्मादनवानं यजतीति (१३. ५) श्रुतेः।

१३. इतरयोरसंभवात् ऐन्द्रवायवग्रहणं नियमार्थम्। तेनोक्तयोः षष्ठे ऽप्यहनि न द्वौद्वौ प्रणवौ। ऐन्द्रवायवस्य च द्वावेव न चत्वारः।

१४. ऐन्द्रवायवस्यैव नानावषट्कारे एव। अतश्च षष्ठे ऽह्न्यप्यैन्द्रवायवस्य द्वौ वषट्कारौ पारुच्छेप्योस्तद्यदाभिस्तदहर्न वषट्कुर्वन्तीति श्रुतिज्ञापकम्। इतरयोरप्येकैको वषट्कारः। एतदेव ज्ञापकम्।

१५. वषट्कारद्वित्वे ऽपि सति पुरस्ताज्जपो येयजामहौजःसहः सकृदेव।

## ३.

१. ऐतु वसुः पुरूवसुरित्यनेन मन्त्रेण ऐन्द्रवायवमध्वर्युहस्ताद्गृहीत्वापोर्णुत्य[१] दक्षिणमूरुं तस्मिन्निदध्यात्। निहितानां चाच्छादनमवेक्षणं च न कुर्याद्वा प्रतिभक्षितस्य शेषस्य निनयनात्[२]।

२. ऐतु वसुर्विदद्वसुरित्यनेन मन्त्रेण मैत्रावरुणं प्रतिगृह्य तं दक्षिणेनैन्द्रवायवं नीत्वा तस्य दक्षिणतःपश्चान्निदधाति[३]।

३. ऐतु वसुः संयद्वसुरित्यनेन मन्त्रेणाश्विनं प्रतिगृह्य तं दक्षिणेन पूर्वावैन्द्रवायवमैत्रावरुणौ नीत्वा तयोरेवोत्तरतःपश्चान्निदधाति। संलग्नान्निदध्यात्। अभिधानत[४] इवाभित इति (१२.५) श्रुतेः। तानवगृह्यास्ते नेत्प्रवर्तन्ता इति श्रुतेः। स्वयं धारयेत्। अप्रवर्तनपरत्वादन्यो ऽपि वा धारयेत्।

४. याः सोमद्रव्यसंबन्धेन याज्या विधीयन्ते तासु सर्वासु सोमस्याग्ने वीहीत्यनुवषट्कारसंज्ञको मन्त्रो याज्यात्वेन भवति। अन्वर्थसंज्ञा चेयं वषट्कारमनुभवतीति। न संप्रैषमपेक्षत इत्यर्थः। यत्राप्युक्थ्या यज सोमानामिति संप्रैषस्तत्रापि सोमस्याग्ने वीहीत्येकवचनमेव। सर्वग्रहणात्। द्विदेवत्यादीन्परिहाप्य। नानुवषट्करोतीति श्रुतेः[५]।

५. अग्नीत्पात्नीवतस्योपांशु यज। माचा[६] द्व याचीरिति तैत्तिरीयाणां संप्रैषः। तत्र प्रतिषेधो ऽन्यत्र विकल्पः।

---

१ A C प्रोर्णुत्य। २ B प्रतिभक्षितस्यावनयात्। ३ B has स्वदोक्षा स्वयेव दक्षिणापरे प्रदेश करावये निदधाति instead C has ऐतु ॰दधाति in marg. in the text: स्पष्टमेतत्। ४ B C अभिधानतर। ५ A C तवतव तुवे। ६ B C माचा मू A माच तु।

४.

१. उन्नीयमानेभ्यश्चमसेभ्य इत्युक्त उन्नीयमानसूक्तमा त्वा वहन्तु हरय इत्येतत्। ता वै नवान्वाह नव ह्या ऋच चमसानुन्नयन्तीति (२८. २) श्रुतेः। खलु हैके प्रातःसवन उन्नीयमानेभ्यो ऽन्वाहुरित्ययं पक्षो नेष्टः सूक्तवचनात्। संप्रैषपाठः क्रमार्थः।

२. होता यक्षदिन्द्रं प्रातः प्रातःसावस्येत्येवमादिकं प्रैषं मैत्रावरुणो ऽन्वाह। पूर्वं चानुवचनम्[1]। परिभाषितत्वात्।

३. इदं ते सोम्यं मध्विति प्रस्थितानां याज्येति (१२. ६) श्रुतेः।

४. नृचक्षसमित्येवमादिना मन्त्रेण होतृचमससंज्ञकं चमसं होता प्रतीक्षते।

५. वयोधसमित्येवमादिना मन्त्रेण प्रकृतं होतृचमसं प्रतिगृह्णीयात्।

६. प्रकृतं होतृचमसमसुरः संस्पर्शयेद्द्विदेवत्यांश्चोरस्यान्।

७. पूर्वमुन्नीयमानसूक्तेनानूच्यमानेन ये चमसा उन्नीतास्ते सर्व एव वषट्कारेण हुताः। ततश्चत्वारः सदः प्रवेशिताः। होतृब्रह्मोद्गातृयजमानचमसाः। शिष्टानां पुनरुन्नीतानां वक्ष्यमाणा होत्रकसंज्ञका यजन्ति।

८. मित्रं वयं हवामह इत्येतया मैत्रावरुणो यजति।

९. इन्द्र त्वा वृषभमित्येतया ब्रह्मापुरुषो ब्राह्मणाच्छंसी होत्रको यजति।

---

१ B °वचनम्।

१०. ब्रह्मपुरुष एव होत्रकः पोता मरुतो यस्य हि क्षय इत्येतया यजति।

११. नेष्टाध्वर्युपुरुषो होत्रकः। ग्नो ऽग्ने पत्नीरित्येतया यजति।

१२. उत्तानाय वयान्वाग्नेत्येतयाग्नीध्रो ब्रह्मपुरुषो होत्रको यजति।

१३. अयालग्नीदित्येतस्मिन्नध्वर्युणोक्ते ऽयाळित्याग्नीध्रो ब्रूयात्। ननु कथमेतज्ज्ञायते ऽध्वर्युणोक्त इति। उच्यते। उत्तरसूत्रे होतृवचनात्।

१४. स भद्रमित्यादिकं सवनधर्मेणाह होता।

१५. सोमभक्षपरिभाषेयम्। अनारभ्य किंचिदुच्यते। उत्क्षिप्य सोमपात्रं प्राग्भक्षणात्। भक्षयिष्यन्त इति भविष्यत्प्रयोगात्। याज्ञिकै-र्नामधेयैर्न लौकिकैः। असावित्यामन्त्रितकर्तृनामधेयप्रयोगेणोपह्वय-स्वेत्यनेन सह सामर्थ्यात्। कर्तारः ऋत्विजो यजमानश्चान्योऽन्यस्मिन् कर्मव्यतिहारेणोपहवमनुज्ञामिच्छन्ते। प्रार्थयन्त इत्यर्थः। साधारणेषु सोमेष्वयं न्यायो युज्यते। कदा चिदहमुत्तरं पास्यामीति। असाधा-रणेषु च। नानुपहूतेन सोमः पातव्य इति श्रुतेः।

१६. होमाभिषवकारिणः पूर्वा वषट्कर्ता भक्षयेदिति वचनात्। तस्मिंश्च सति तद्विपरीतस्य न्यायस्यानवतारात्।

१७. द्विदेवत्या ऐन्द्रवायवमैत्रावरुणाश्विनाः नाराशंसवन्तश्च यज्ञाः। आज्यप्रउगमरुत्वतीयनिष्केवल्यवैश्वदेवेषु। एतेषां प्रतिभक्षि-तमध्वर्युणैकदेशशेषं होतृचमसे ऽवनयेत्। कृते त्वा भक्षितमित्येव-मादिना मन्त्रेण।

१८. अत्र श्रुत्यन्तरोक्तं द्विरैन्द्रवायवग्रेपस्यावनयनम्। मन्त्रश्च द्विरुच्यते।

१९. अवसर्जनं विमोकः। स न कर्तव्यो द्विदेवत्यानाम्। यावत्सर्वस्य ग्रेपस्यावनयनं न कृतमिति। उक्ता सोमभक्षपरिभाषा। इदानीमवसरप्राप्तो द्विदेवत्यभक्ष उच्यते।

---

## ५.

१. इह वसुरित्यादिना मन्त्रेणैन्द्रवायवग्रहमध्वर्यवे दत्त्वानन्तरमुपहूतो वायुरित्यादिना भक्षयित्वा तमेवैन्द्रवायवं प्रग्रहणमन्त्रेण पुनः प्रगृह्य भक्षमन्त्रेण पुनर्भक्षयति। ऊरौ न निदधाति। नाध्वर्युर्मुञ्चति[1] न[2] होता परिशुष्यानात्।

२. अध्वर्यव इति वर्तते। इह वसुरित्यादिना मन्त्रेण। मैत्रावरुणं ग्रहमध्वर्यवे प्रगृह्यानन्तरम्।

३. उपहूतौ मित्रावरुणावित्यनेन मन्त्रेण मैत्रावरुणं ग्रहं भक्षयति।

४. आश्विनं ग्रहं तमूरोरादाय शिरः प्रदक्षिणं पर्याणीय अवेक्ष्य तेनैव मार्गेण प्रत्यानीयावेक्षते। सर्वतः परिहारमाश्विनस्य भक्षयतीति (१३. ६) श्रुतेः। अवेक्षणं तु शाखान्तरात्।

५. इहाध्वर्यवे प्रयच्छति। न पूर्वम्। आश्विनवचनात्।

६. उपहूतौ देवावित्येवमादिना मन्त्रेणाश्विनं भक्षयित्वानन्तर-

---

१ C ०मुर्यु मु०। २ A B C न; C (sec.h.) del.

मुपस्पृश्य[1]। द्विदेवत्यभक्षपद्धतिरत्रोच्यते। अध्वर्य उपह्वयस्वेत्युपह्वमिष्ट्वा तेनोपहूत उपहूतो वायुरित्यादिना भक्षयेत्। तत उरोऽभिमर्शनमपामुपस्पर्शनं च[2]। एवं यथोक्तमैन्द्रवायवं मैत्रावरुणमाश्विनं च। अध्वर्य उपह्वस्तस्य होमाभिषवकारित्वात्[3]। वषट्कारनिमित्तो हि भक्षो द्विर्हि तस्य वषट्करोतीत्यैन्द्रवायवे हेत्वारम्भात्[4]।

७. उपस्पृश्योष्ठनिलिम्पनादिना इलामुपह्वयते। इलाङ्गमुपस्पर्शनम्। तेनेतरयोरपि सवनयोर्भवति। द्विदेवत्यानां प्रथमो भक्षो ऽथेलाथ होतृचमस इति (१२.६) श्रुतेः। [5]उपस्पर्शनं शाखान्तरात्।

८. चमसाध्वर्यवश्चमसानिलासमीपमुत्क्षिपन्ति।

९. होता सव्येन होतृचमसं पाणीं च संयच्छतीति (७) श्रुतेः।

१०. सर्वत्राज्यलेपेन सोमसंसर्गो वर्जनीयो न केवलमत्र।

११. इलामुपह्वयत इति सकृतम्। तामुपहूय अभक्षयित्वेत्यर्थः। इलायाश्चायं नियमः। तत उत्तरेलां प्राश्नात्येव प्रकृतिवत्। उपह्वयेलामवघ्रायावस्यति प्राश्नात्युत्तरेलामथाप आचम्य होतृचमसं भक्षयतीति श्रुतेः। एवमुत्तरेलाभक्षाचमनानन्तरं प्रस्थितसंज्ञकान्सवनमुखीयान्होत्रादिभिर्वषट्कृतान्भक्षयन्ति[6] होत्रादयः। प्रातःसवने प्रस्थितभक्षे वृद्धसंप्रदाय उच्यते। होता[7] तावदध्वर्य उपह्वयस्व प्रतिप्रस्थातरुपह्वयस्वेत्युपह्वमिष्ट्वा ताभ्यामुपहूतस्तेजसे त्वा ब्रह्मवर्चसाय भक्षयामीति भक्षयत्ययं शुक्रनिमित्तो भक्षः। भक्षयित्वा शं नो भवे–

---

१ A ins अथ A B om अत्रोच्यते B om भक्ष। २ A ins. सर्वत्र। ३ C °कारित्वात्। ४ A ऐन्द्रवायवे हेत्वारम्भात् B °वायववद्योव हे°। ५ C अनुप° alt to अनप°। ६ A C (orig) °सवनीयान्होता°। ७ C होता वषनाद्ध्वर्य।

त्यनयोरो ऽभिमृश्य तत उपस्पृशेत्। ततो ऽध्वर्युणा भक्षिते होता प्रतिप्रस्थातरुपह्वयस्वेत्युपहवमिष्ट्वा तेनोपहूत पूर्ववद्भक्षोरोऽभिमर्शनोपस्पर्शनानि कुर्यात्। अयं मन्थिनिमित्तो भक्षः। ततः प्रतिप्रस्थात्रा भक्षिते होता पुनरध्वर्यूं पृष्ट्वा ताभ्यामुपहूत उन्नीयमानवषट्कारनिमित्तं भक्षयत्युरोऽभिमर्शनादि च करोति। ततः[1] पुनर्होतृचमसे समाख्यानिमित्तभक्षार्थमध्वर्य उपह्वयस्व प्रतिप्रस्थातरुपह्वयस्वेत्युपहवमिष्ट्वा ताभ्यामुपहूतो भक्षादि पूर्ववत् कुर्यात्। तत आप्यायनं यथोक्तम्। अथ ब्रह्मचमसम्। ब्रह्मन्नुपह्वयस्वेति तेनोपहूतः पूर्ववद्भक्षणादि सर्वं कुर्यादाप्यायनवर्जम्। तत उद्गातृचमसम्। उद्गातार उपह्वयध्वमिति उपहवमिष्ट्वा तैरुपहूतः पूर्ववद्भक्षणादि कुर्यात्। सर्वमाप्यायनवर्जम्[१]। न त्वत्रोद्गातृवर्जं भक्षणप्रसिद्धिः। अथ यजमानचमसम्। यजमानोपह्वयस्व सुन्वन्नुपह्वयस्वेति वोपहवमिष्ट्वा तेनोपहूतः पूर्ववद्भक्षणादि कुर्यात्। अथ मैत्रावरुणचमसम्। प्रशास्तरुपह्वयस्वाध्वर्य उपह्वयस्वेत्युपहवमिष्ट्वा ताभ्यामुपहूतः पूर्ववद्भक्षणादि कुर्यात्। ततो ब्राह्मणाच्छंसिनश्चमसम्। ब्रह्मन्नुपह्वयस्वाध्वर्य उपह्वयस्वेत्युपहवमिष्ट्वा ताभ्यामुपहूत. पूर्ववद्भक्षणादि कुर्यात्। ततः पोतृचमसम्। पोतरुपह्वयस्वाध्वर्य उपह्वयस्वेत्युपहवमिष्ट्वा ताभ्यामुपहूतः पूर्ववद्भक्षणादि कुर्यात्। ततो नेष्टृचमसम्। नेष्टरुपह्वयस्वाध्वर्य उपह्वयस्वेत्युपहवमिष्ट्वा ताभ्यामुपहूतः पूर्ववद्भक्षणादि कुर्यात्। तत आग्नीध्रचमसम्। अग्नी-

---

१ A होतृचमसे B C om the passage beginning with होता पुनरध्वर्यूं ending with तत पुनः C होतृचमसे वषट्कारसमाख्या॰ (वषट्कार in marg)।
C in marg यथोक्तम्।

दुपह्वयस्वाध्वर्य उपह्वयस्वेत्युपहवमिष्ट्वा ताभ्यामुपहूतः पूर्ववद्भक्षणादि कुर्यात्। एवं होतुर्भक्षः। अथ ब्रह्मोद्गाता यजमानश्च होतरुपह्वयस्वेत्युपहवमिष्ट्वा तेनोपहूता यथाचमसं होतृवद्भक्षणादि कुर्युराप्याययेयुश्च। अथ मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टाग्नीध्रश्च होतरुपह्वयस्वाध्वर्य [1]उपह्वयस्वेत्युपहवमिष्ट्वा ताभ्यामुपहूताः[2] स्वं स्वं चमसं होतृवद्भक्षयेयुः। पुनश्च समाख्यानिमित्तं[3] होतरुपह्वयस्वाध्वर्य उपह्वयस्वेत्युपहवमिष्ट्वा ताभ्यामुपहूताः स्वं स्वं चमसं होतृवत्[4] भक्षितं भक्षयेयुराप्याययेयुश्च। इति प्रस्थितभक्ष उक्तः। अथ प्रकृतमुच्यते।

१२. तेजसे त्वेत्यादिर्भक्षमन्त्रः प्रातःसवने[5] औत्सर्गिकः।

१३. ओजसे त्वेत्यादिमन्त्रो माध्यन्दिने सवने[6] औत्सर्गिक एव।

१४. व्यवस्थितः प्रतिसवनमुत्सर्गः। वचनात्प्रकरणं भित्त्वा।

१५. शं नो भव हृद आ पीत इन्दो इत्यनयोरो ऽभिमृशेत् सोमं भक्षयित्वा। भक्षयित्वेत्यतिरेकात्सर्वत्र द्विदेवत्यादिष्वपि।

१६. एतावदाप्यायनं न सोमासेक इति ज्ञापनार्थं [7]यथाप्राप्तस्योपदेशसूत्रम्।

१७. आ प्यायस्वेत्यादिका स्वगाप्यायनी। ततो न द्रव्यान्तरम्। अनया मध्यहस्तस्थितस्य चमसस्य दक्षिणेन स्पर्शनम्। प्रातःसवनवचनात्प्रातःसवन एवानया। नोत्तरयोः सवनयोः। अन्यथा विकल्पसमुच्चयौ[8] स्याताम्।

---

१ होतरुपह्वयस्व C in marg। २ B तेन। ३ B C (orig) om होतरुपह्वयस्व। ४ According to C (marg), A has इष्ट्वा तेनाभ्यनुज्ञा भ०। ५ C om तेजसे० सवने। ६ C om ओजसे० सवने। ७ C in marg यथा instead of यदा। ८ C (sec h) ins. वा।

१८. सं ते पयांसि समु यन्तु वाजा इतीयमाप्यायनी उत्तरयोः सवनयोः।

१९. होतृग्रावोद्गातृयजमानमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्रचमसाः सवनमुखीयाः प्रस्थिताः। तान्भक्षितप्रतिभक्षितान्नाराशंसार्थमाप्याययन्ति[१]।

२०. आप्यायनप्रसङ्गमुपजीवन्नन्यच्चाप्याह। आज्यशस्त्रे यद्भक्षानन्तरं ये चमसास्ते नाराशंसाख्या वक्ष्यन्ते। तान्भक्षितप्रतिभक्षितानाप्याययन्ति मरुत्वतीये च[२]।

२१. आज्यादिषु यथोद्दिष्टेषु ये वषट्कारेण चमसा हविर्धानस्था एव कम्प्यन्ते यदुक्तं कात्यायनेन नाराशंसानां च कम्पनमिति ते नाराशंससंज्ञाः। संव्यवहारार्थं[३] संज्ञाकरणं। नाराशंसानां सन्नानामुपवाते नाराशंस इति च।

२२. देवो ऽसीत्येवमादिना नाराशंसानां प्रातःसवने भक्षमन्त्रः। प्रातःसवनवचनमुत्तरयोरविकल्पार्थम्। नाराशंसवचनं सहापि यद्ग्रेषेणायमेव नाराशंसानां भक्षमन्त्र इति नियमार्थम्।

२३. तस्य त ऊर्वे. पितृभिरित्यर्थसंबन्धादेव प्राप्नोति। विकारवचनमग्निष्टुति विकारान्तरप्रतिषेधार्थम्।

२४. तस्य ते काव्ये. पितृभिरिति तृतीयसवने प्रयोगः।

---

१ A C नाराशंसासादनार्थं। २ A om. the Comm on this Sūtra.
३ C वे नाराशंसा। संज्ञाकरणं नाराशंसानां।

## ६.

१. अकारान्तत्वायच्छावाकशब्दस्य सौदेतिशब्देन सह संबन्धे मकारस्य द्वित्वं छान्दसम्। शाखान्तर एवमेव प्रैषपाठात्। अथ वा। अच्छावाकः एतावत्सूत्रमधिकारार्थम्। अनन्तरं कर्म कुर्वन्नप्रसृप्तो ऽयच्छावाक[1] उच्यते यदि सौदेत्यविशेषेण शाखान्तरे प्रैषः। वाजसनेयिनां प्रैषो नास्ति। तत्राप्यासनमासीनन्यायं वाक्यमिति परिभाषितत्वात्।

२. अग्रेण सदसो वहिः उत्तरेण[2] अदूरेण स्रुतिं शालामुखीयादारभ्य उत्तरवेद्देर्द्वारपरंपरया यो मार्गः स्रुतिशब्देन स उच्यते तमुत्तरेणोपविश्य। किमनन्तरमित्यत आह।

३. पुरोलाशखण्डमध्वर्युणा दत्तं गृहीत्वा ततः।

४. क्रमार्थं संप्रैषवचनम्। केषां चिदभ्यधिको ऽपि संप्रैषः।

५. अच्छा वो अग्निमवस इत्येवमाद्या ऋचो ऽच्छावाकस्तिस्रो ऽन्वाह।

६. तिसृणां यो ऽन्त्यो प्रणवस्तृतीये वचने तेन संततं वक्ष्यमाणं निगदमाह।

७. अयं निगदः। एतस्मिन्नच्छावाकेनोक्ते।

८. सर्वार्थो ऽयं[3] मध्ये ऽध्वर्युवचनात् द्वितीय उपहवमयमित्यादिस्तं होतरुपह्वयस्वेति होत्रर्थः।

---

१ A C (sec b.) कुर्वंप्रप्र॰ B C (orig) कुर्वन् प्र॰। २ A उत्तरेण मुत्तरे अदूरेण B उत्तरेण स्रुतिं C उत्तरेण। उत्तरे अदू॰ (orig अधरेण)। ३ A एत-स्मानेत्यादि मध्ये ऽध्व॰।

९. अयं तावत्प्रथमः कल्पः। यदा होता नोपह्वयते तदेतर उपह्वयेरन्नुत्तरस्माद्यज्ञात्।

१०. नायं निगदः। पूर्वस्य निगदवचनात्। ततो नैकस्वर्यं नोच्चैस्त्वं। अयं सुन्वन्यजमानो अग्रभीदित्यस्य विकारेयूहः। य उपह्वास्यमानो भवति स प्रत्येतेत्येवमादिकं मन्त्रं गाव उपहृता इत्येवमन्तं जपित्वा तत उतोपह्वत इत्यैकस्वर्येण ब्रूयात्।

११. यः पुनरनुपह्वास्यमानो भवति स उत नो गाव उपहृता इत्यातो जपेत्। अभिविधौ चायमाङ् द्रष्टव्यः। उतोपह्वत इति न[1] ब्रूयादित्यर्थः। उपह्वास्यमान उच्यते। उपहवं दातुमिच्छन्। तद्विपरीतो ऽनुपह्वास्यमानः। न चायमुपहवः प्रायश्चित्तार्थो यथा कात्यायनेनोक्तः। शालासनास्वग्नौ सन्धिवेलयोर्वेद्यां सुत्यास्व- प्रायश्चित्तमपराध इतरेतरस्मिन्नोपहवमिच्छेरन्नन्यामेकदीक्षीति (७.५.१२)। न च क्रियाविशेषणार्थो यथा नानुपहूतेन सोमः पातव्यः। तत्रोपहूतः। इत्युपहवश्छन्दोगानां। अतो ऽयं यथोक्तमेवं क्रियमाणमभ्युदयकारि भवतीति कृत्वा कर्तव्यः।

१२. उतोपह्वत इति नोक्तो ऽच्छावाको यजमानत्वेनापि सत्रेषु स्थितो ऽच्छावाकवचनात्[2]। निवर्तध्वं मानु गातेत्येतस्य सूक्तस्य। सूक्तवचनात्तत आरभ्य वेदशेषस्य यावच्छकुयात् प्राक् संप्रैषात्तावदनुद्रवेत्। यावतीरिति (१२.८) श्रुतेः। प्रक्रान्ताया ऋचः समापनम्। अनुद्रवेदिति वचनाच्च गणधर्मो नैकस्वर्यम्।

---

१ C (orig) om न। २ B अच्छावाक इति।

१३. होता वान्यतमो वा यजमानादीनां अरोचमानमच्छावाकं प्रत्युपह्वय निवर्तध्वमिति यथोक्तं कुर्यात् ।

---

७.

१. उन्नीयमानायानुब्रूहीत्येवमध्वर्युणा संप्रेषितः प्रत्यसौ पिपीषत इत्येतत्सूक्तमन्वाह चतुर्ऋचम् । स्वयमच्छावाकः मन्त्रमीमिति पक्षान्तरश्रुतेः । सूक्तवचनं स्वाभिप्रेतसिध्यर्थम् । अच्छावाकवचनं मैत्रावरुणनिवृत्त्यर्थम् ।

२. प्रातर्यावभिरा गतमित्यैन्द्राग्न्या यजतीति (२८.७) श्रुतेः।

३. पूर्वमप्रसूतस्याच्छावाकीयां कुर्वतः समाख्याभचो न प्राप्नोति। तदर्थं भक्षितवचनम्। अप्रक्षितत्वादाप्यायनं न प्राप्नोति। तदर्थमाप्यायितवचनम्। अध्वर्यवे प्रदायेति नाराशंससादनार्थम्। तथा च कात्यायनः। होतृचमसवत्सर्वमित्याह। दक्षिणादुदित्यादि नियमार्थम्। सदोवचनं दिवस्पृष्ठमित्यादिक्रियार्थम्। स्वस्य धिष्ण्यस्य पश्चादुपविश्य निर्गत्य पुरोलाशं प्राप्नोति। उच्छिष्टदोषपरिहारार्थं निर्गमनम्।

४. पूर्वप्रसूता मैत्रावरुणादयः। तेषामन्यतमो यदि अत्यन्तरीयाद्धोत्रासमासवचनादच्छावाकीयां कुर्यात् ततः स्वेन विप्रस्थितसंचरेण सदसो निष्क्रम्याच्छावाकस्य बहिष्कर्माच्छावाकस्त्रीदेत्युक्तोऽपेण सह इत्यादिकं कृत्वा स्वकर्म कुरुते। पुरोलाशप्राशनं कुरुत इत्ययं क्रमः। केचित्पूर्वग्रहणाद्यो ऽच्छावाकात्पूर्वः [1]प्रसूतः करोति।

---

[1] B अ प्रसू०।

९. अयं तावत्प्रथमः कल्पः। यदा होता नोपह्वयते तदेतर उपह्वयेरनुत्तरस्माद्वचनात्।

१०. नायं निगदः। पूर्वस्य निगदवचनात्। ततो नैकस्वर्यं नोच्चैस्त्वं। अयं सुत्यन्यजमानो अग्रभीदित्यस्य विकारेऽप्यूहः। य उपह्वास्यमानो भवति स प्रत्येतेत्येवमादिकं मन्त्रं गाव उपह्वता इत्येवमन्तं जपित्वा तत उतोपह्वत इत्यैकस्वर्येण ब्रूयात्।

११. यः पुनरनुपह्वास्यमानो भवति स उत नो गाव उपह्वता इत्यातो जपेत्। अभिविधौ चायमाङ् द्रष्टव्यः। उतोपह्वत इति न[1] ब्रूयादित्यर्थः। उपह्वास्यमान उच्यते। उपह्वं दातुमिच्छन्। तद्विपरीतो ऽनुपह्वास्यमानः। न चायमुपह्वः प्रायश्चित्तार्थो यथा कात्यायनेनोक्तः। शालासनाखग्नी सन्निवेलयोर्वेधां सुत्याख- प्रायश्चित्तमपराध इतरेतरस्मिन्नोपह्वमिच्छेरन्नन्यथामेकदीचौति (७. ५. १२)। न च क्रियाविशेषणार्थो यथा नानुपह्वतेन सोमः पातव्यः। तच्चोपह्वतः। इत्युपह्वच्छन्दोगानां। अतो ऽयं यथोक्तमेवं क्रियमाणमभ्युदयकारि भवतीति कृत्वा कर्तव्यः।

१२. उतोपह्वत इति नोक्तो ऽच्छावाको यजमानत्वेनापि सत्त्रेषु स्थितो ऽच्छावाकवचनात्[2]। निवर्तध्वं मानु गातेत्येतस्य सूक्तस्य। सूक्तवचनात्तत आरभ्य वेदशेषस्य यावच्छक्नुयात् प्राक् संप्रैषात्तावदनुद्रवेत्। यावतीरिति (१२. ८) श्रुतेः। प्रक्रान्ताया ऋचः समापनम्। अनुद्रवेदिति वचनाच्च गणधर्मो नैकस्वर्यम्।

---

१ C (orig.) om न। २ B चाच्छावाक इति।

१२. होता वान्यतमो वा यजमानादीनां अरोचमानमच्छा-वाकं प्रत्युपह्वय निवर्तध्वमिति यथोक्तं कुर्यात् ।

---

७.

१. उन्नीयमानायानुब्रूहीत्येवमध्वर्युणा संप्रेषितः प्रत्यस्मै पिपी-षत इत्येतत्सूक्तमन्वाह चतुर्ऋचम् । स्वयमच्छावाकः सप्तमीमिति पक्षान्तरश्रुतेः । सूक्तवचनं स्वाभिप्रेतसिध्यर्थम् । अच्छावाकवचनं मैत्रावरुणनिवृत्त्यर्थम् ।

२. प्रातर्यावभिरा गतमित्यैन्द्राग्न्या यजतीति (१८.७) श्रुतेः।

३. पूर्वमस्तृप्तस्याच्छावाकीयां कुर्वतः समाख्याभक्षो न प्राप्नोति। तदर्थं भक्षितवचनम्। अप्रस्थितत्वादाप्यायनं न प्राप्नोति। तदर्थ-माप्यायितवचनम्। अध्वर्यवे प्रदायेति नाराशंससादनार्थम्। तथा च कात्यायनः। होतृचमसवत्सर्वमित्याह। दक्षिणावृदित्यादि नि-यमार्थम्। सदोवचनं दिवस्पृष्ठमित्यादिक्रियार्थम्। स्वस्य धिष्ण्यस्य पश्चादुपविश्य निर्गत्य पुरोलाशं प्राप्नोति। उच्छिष्टदोषपरिहारार्थं निर्गमनम्।

४. पूर्वमस्तृप्ता मैत्रावरुणादयः। तेषामन्यतमो यदि अत्यन्त-रीयाद्धोत्रासमाख्यवचनादच्छावाकीयां कुर्यात् ततः स्वेन विष्ठित-संचरेण सदसो निष्क्रम्याच्छावाकस्य बहिष्कर्माच्छावाकस्यौदेत्युक्तो-ऽयेण सद इत्यादिकं कृत्वा स्वकर्म कुरुते। पुरोलाशप्राशनं कुरुत इत्ययं क्रमः। के चित्पूर्वंयद्दणाद्यो ऽच्छावाकात्पूर्वं [1]प्रस्तृप्तः करोति।

[1] B अप्र॰।

इतरस्तु ग्रावस्तुदप्रसृप्तः। अपूर्वत्वात्। सो ऽच्छावाकसंचरेणैव प्रतिपद्यते। अच्छावाकीयावचनात्मकत्वाम्। न बहिष्कर्ममात्रम्। पूर्वप्रसृप्तो ऽपि न यजमानो न सदस्यो विसंस्थितसंचरेणेत्यारम्भात्। प्रत्यग्गमने हि स[1] विसंस्थितसंचरो न तु प्रागगमने। सहद्धिष्ण्योपस्थानम्। अच्छावाकस्य बहिःकर्मेति नियमात्। प्रसङ्गेनान्यत्रापि होत्रासमासे ये विशेषास्त उच्यन्ते। होत्रासमासशब्दस्य तन्त्रान्तरे प्रसिद्धः। एकस्य कर्तुरनेकार्त्विज्यक्रियायोगे। तत्र संचराणां सकृत्क्रिया। गन्तव्यस्य प्रधानत्वात्। इडाभक्षणमाग्नीध्रे। दधिभक्षणं दशरात्रे। शाखान्तरोक्तं मध्वशनं घृतस्य वा। तथा षडृत्विग्भ्यस्तं कारयेदिति पशुभक्षणम्। महर्त्विग्भ्यो निर्वपतीत्योदनभक्षणम्। एतानि भक्षणानि सकृत्तल्लक्षणात्। [2]सकृन्मधुपर्को गुणभूतत्वात्। सकृद्ध्रियमाणप्रश्नः। तथा तानूनप्त्रम्। सकृदुपस्पर्शनानि। सकृत्संज्ञप्यमानपश्वीक्षणप्रायश्चित्तम्। सकृद्धिष्ण्योपस्थानाद्युपवेशनान्तं। भेदेनान्यान्युपस्थानानि। अया विष्ठेति च गच्छन् जपो भेदेन। स्वाश्रयत्वात्। धिष्ण्योपस्थानादि तु पराश्रयं सर्पणगुणभूतत्वात्। तान्सदः प्रसर्पन्नमस्यतीति श्रुतेः। सर्पणं सकृत्प्रवेशगुणभूतत्वात्[2]। प्रत्युपह्वनस्याभेदस्तथा[3] श्रुतेः। धानाद्यादानं भेदेन। धिष्ण्येक्षणं सकृत्त्रिःसर्पणाङ्गत्वात्। निधनोपायः सकृत्कालासंभवात्। सकृदप्सु पादावधानम्। पृच्छामि त्वेत्यादिको ऽश्वमेधे यजमानप्रश्नो भेदेनापूर्वार्थत्वात्। सर्वौषधहोमे होत्रासमास एव नास्ति। परिकर्म्या-

---

१ A B स॰ सर्वोवि॰। २ C (in marg) तृ स्थ॰। ३ A C भावात् instead of भूतत्वात्। ४ B भेद॰।

रोहणन्यायात्[1]। प्रायश एतदेव न्यायप्रदर्शनार्थं वा प्रपञ्चः। प्रकृतमिदानीमुच्यते। स्वकर्म कुरुते इति वचनं नापरया द्वारा प्रविश्य स्वस्य[2] धिष्ण्यस्य पश्चादास्त इत्यर्थः। ततश्चमसमध्वर्यवे प्रदाय पुरोडाशं प्राश्य पूर्वया द्वारा प्रविश्य स्वकर्म कुर्यात्।

५. होता स एव धिष्ण्ये स्थितो ऽच्छावाकीयां करोति। नाच्छावाकीये। तुशब्देनान्यस्यापि होत्रकस्य होतृधिष्ण्य एव प्राप्तिर्दृढीकृता।

६. होतृविकाराणां च मैत्रावरुणप्रभृतीनां। होत्रकाणां या याज्यास्ताः स्वधिष्ण्य एव स्थितो होता कुर्यात्। गत्वा वा तदीयं धिष्ण्यम्। अयेषु वा होत्रकेषु प्राप्तिः शाखान्तरीयाद्वचनात्। प्रैषानुवचनशस्त्रादीनि स्वधिष्ण्य एव। याज्यावचनात्।

७. अधिकारो ऽयम्।

८. अत्र प्रातःसवने प्रस्थितयागे होत्रका होता चानवानन्तो अनुच्छ्वसन्तो ऽर्धर्चेषु यजन्ति। तथा च श्रुतेः। क्षिप्रं देवेभ्यो हविः प्रदास्याम इति होत्रर्थवादात्[3]। अर्धर्चशो वेत्यर्धर्चशः प्राप्तौ। न तु षष्ठे ऽहनि विकल्पो ऽनवानवचनात्तच।

९. कर्तार इत्यनुवर्तते। अत्रेति च। यज्ञकर्तारो ऽत्र व्रतयन्ति। व्रतं कुर्वन्ति भुञ्जन्त इत्यर्थः। व्रतयन्तीति क्रियाभिधानात्सार्वकामिकमिति गम्यते।

---

१ B परिक्रमो C (in marg) प्र instead of परि।　२ C om स्वस्य।
३ A C (in marg) ins अर्धर्चशो वा। एतद्वै छन्दसां पर्वं यदर्धर्चश इति होत्रर्थवादात्।

यजतीन्द्र सोममित्याम्नायक्रमेण। प्रशास्तर्यजेति मैत्रावरुणो ब्रह्मन् यजेति ब्राह्मणाच्छंसी।

७. अध्वर्यू यजतमिति प्रैषान्ते होतरेतद्यजेत्यध्वर्युराह। एवमुक्तो होता क्रमप्राप्तां तदीयां याज्यामाह।

८. गृहपते यजेत्येतत्प्रैषान्ते यजमान आह होतरेतद्यजेति। ततो होता यजति।

९. तयोः संबन्धिन्यौ क्रमप्राप्ताविर्त्यर्थः।

१०. येषामध्वर्यूणामसर्वज्ञतास्तैः सह क्रियायामेवं भवति। तत्र यो यस्य होमकारी स तस्मिन्नुपहवमिष्ट्वा सावनेन भक्षमन्त्रेणावजिघ्रत्योष्ठौ वा निलिम्पति।

११. अन्ते[1] ऽध्वर्यौ प्रतिप्रस्थातरि वोपहवमिष्ट्वा सावनेन मन्त्रेण यथोक्तं भक्षणम्। पुनः[2] प्रतिप्रस्थातर्यवोपहवमिष्ट्वा। एवं द्विरन्ततो होता। अध्वर्युगृहपत्योर्भक्षो मा भूदिति सूत्रारम्भः। वाजिभिः सह क्रियायां पूर्वेषां द्वयानामभक्षणमेव। सर्वज्ञत्वात्।

१२. एवो नियोगे[3]। इवशब्दः संप्रत्यर्थे ऽनर्थः। अत्र ऋतुयाजेषु भक्षयितृभिरोष्ठलेपनं[4] वा कर्तव्यमवघ्राणं वा। न पातव्यः सोमः। द्विदेवत्येष्वप्येवमेव। तत्रोक्ते होतुरेव केवलस्य स्यात्। अथर्तुयाजैश्चरन्तीत्ययशब्दस्यास्य चेतिकरणस्यैतत्प्रयोजनम्। कथं नामेतरयोः सवनयोः सर्वमेतत्प्रतिषिध्यतेहोतृसंबन्धस्य केवलस्य प्रतिषेधो मा भूदिति।

१ C om अन्ते। २ A ins अध्वर्युं इष्ट्वा। ३ A C एवानि॰ B इवे। ४ B लिम्पनं।

८.

१. आज्यमिति वक्ष्यमाणस्य शस्त्रस्य नामधेयम्। तच्छंसिष्यन्पिता मातरिश्वेत्येवमादिकं मन्त्रं जपित्वा ततः शोंसावो३ इत्याह्वावसंज्ञकः प्लुतान्तः। आयनिगदश्चायं प्रतिसवनं यथा पठितस्तेन प्रतिप्रस्थाचादिष्वपि प्रतिग्रहणस्तु न विक्रियते। शस्त्रादाविति वचनात्सर्वत्र शस्त्रादावयमौत्सर्गिकः। प्रातःसवनवचनं प्रातःसवनिको ऽयमित्यस्य प्रतिपादनार्थम्। तेनाह्वय तेनतेन यो यत्राह्वावाख्यस्तेनतेन प्रतिगरितारमाहूय तत उपांशु तूष्णीं शंसाख्यमग्निर्ज्योतिरित्यादिकं शंसेत्।

२. नियमतो ऽवसानार्थमिह सर्वत्रावसानवचनं। नायमायनिगदः[1]। प्रउगे पुरोरुचामृग्वचनात्। ततश्च विकृतिषु यथार्थमूहः। एवमेतं तूष्णींशंसं शस्त्वा ततः पुरोरुचमनन्तरां पच्छो ऽवस्यन् शंसेत्।

३. अग्निर्देवेद्ध इत्यादिकां पुरोरुचं प्रणवान्तां[2] यथापठितां शंसेत्। विकारेष्वनायनिगदत्वादियमूहितव्या।

४. प्रणवेन प्र वो देवायेत्याज्यसूक्तं संदध्यात्। सूक्तविरुद्धावपि प्रथमस्य सूक्तस्यायं धर्मस्तस्येत्यतिरेकात्।

५. मरुत्वतीयं नाम माध्यन्दिने सवने प्रथमं शस्त्रम्। तथा वैश्वदेवं तृतीयसवने। तयोश्च शस्त्रयोः। न केवलमाज्यस्य प्रथमस्य सूक्तस्य प्रथममर्धर्चं पच्छो ऽनवानं शंसेत्।

६. एतावा यस्य रोदसीत्येवमादिकमुत्तमावर्जं सूक्तशेषं शस्त्वा तत आहूय आह्वावमुक्तेत्यर्थः। उत्तमया परिधाय शस्त्रं परिसमा-

[1] C नियमाय नि०। [2] C om प्रणवान्तां and has रतां instead।

येत्यर्थः। उक्थवीर्यसंज्ञकं तदङ्गं मन्त्रौ जपति भा विभा इत्येवमादिकम्। ननु सूक्तशेषं शस्त्वेत्यतिरिच्यते। सत्यम्। आवापेषु सति समावे सकलसूक्तस्य प्रक्षेप इत्येतत् ज्ञापयितुं सूक्तशेषं शस्त्वेति वचनम्। तथा च श्रुतिरेवैवमर्थवादः कश्चित्। तदु ह स्माह कौषीतकिः शंसेदेव सूक्तस्याव्यवच्छेदायेति।

७. शस्त्रयाज्यासम्प्रैषनिमित्तमुक्थशा इत्यध्वर्युराह सर्वासु शस्त्रयाज्यासु। न केवलमत्रैव।

८. अग्न इन्द्रश्च दाशुषो दुरोण इति यजति। तथा श्रवणात्।

---

१०.

१. यदाज्ये शस्त्रे समाप्ते स्तुवते छन्दोगास्तस्यैवानुशंसनमेतदित्येतदर्थः सूत्रारम्भः। ननु सर्वत्र वाचनिकमाज्यम्। को ऽस्य विषयः। उच्यते। वाचःस्तोमे कश्चित्काल्पनिकेषु शस्त्रेषु[१]। अन्येषां शस्त्राणां पूर्वं स्तोत्रमनन्तरं[२] शस्त्रमस्य तूत्तरं स्तोत्रम्[३]। पवमानस्तोत्राणि[४] प्रउगमरुत्वतीयवैश्वदेवानामेव[५] श्रुतत्वात्।

२. परिभाषासूत्रमेतदिह क्रियते। प्रउगस्य व्यवहितस्तोत्रस्याप्याज्यस्तोत्रेण सामसन्ततिर्यथा[७] स्यात्। स्तोत्रवतां शस्त्राणाम्। न तु सौत्रामणीशस्त्रप्रभृतीनां शाखान्तरदृष्टानां अस्तोत्रवतामयं धर्मः। एषेति प्राह स्तोत्रकारी। तस्यायमर्थः। एषोत्तमा ऋक् शंसतु

---

१ C (in marg) शिवद instead of तदङ्गं। २ C om. शस्त्रेषु। ३ C (orig.) पूर्वमनन्तरं स्तोत्रम्; in marg स्तोत्र and शस्त्र। ४ C om. स्तोत्रम्। ५ B ins. तु। ६ B एवमेव। ७ C om. साम।

भवानिति। उत्तमात्प्रतीहारादूर्ध्वमिति। प्रतीहारः सामभक्तिविशेषः। स उत्तमत्वेन विशेष्यते। तस्मादूर्ध्वमाहूय प्रतिगरितारं ततः शंसन्ति। आहूयेति वचनादाहावो न प्रस्तम्। तेन तन्मोहे न प्रायश्चित्तम्।

३. प्रउगे वक्ष्यमाणे या अन्तरेण माधुच्छन्दसांस्तृचान्नायवा याहि दर्शतेति वक्ष्यमाणकानृचो व्यवयन्ति व्यवदधतीत्यर्थः। ताः पुरोरुच इत्याचक्षते। प्रसिद्धा हि तासामियं संज्ञेत्यर्थः। प्रउगग्रहणं संज्ञार्थम्। ततश्च शास्त्रे संव्यवहारसिद्धिज्ञानाच्च धर्मः। माधुच्छन्दसानिति प्रउगस्य संज्ञार्थं पूर्ववत्प्रयोजनम्। ऋचो व्यवयन्तीति पुरोरुचाम्नवचनं विकारेष्वनूहार्थम्। पुरोरुग्वचनमष्टकसञ्ज्ञायां नामग्रहणार्थं[1] न केवलं संज्ञार्थमेव। श्रुतिप्रसिद्धत्वात्तस्याः।

४. तासां पुरोरुचां पुरस्तात्प्रत्येकमाहावः। संशस्य पुरोरुचा सूक्तं पुरोरुचे पुरोरुच एवाक्रयत इति (१४. ४) श्रुतेः।

५. परिधानीयायाश्च पुरस्तादाहावः कार्यः।

६. विश्वान्देवान्हवामह इत्येषा वैश्वदेवी पुरोरुक्। षट्पदा एव शासते सर्वेऽपि। सा षट्पदा भवतीति नियमश्रुतेः।

७. तस्यां षट्पदायां द्वाभ्यां पादाभ्यामवसाय ततोऽनन्तराभ्यां पुनरवसाय पुनश्च द्वाभ्यां प्रणौति। नात्र गायत्रीशंसनमवसानोपदेशात्। विनाशे चावसानादावृत्तिः। तस्य द्वे द्वे पदे अवग्राहं शंसतीति (५) श्रुतेः।

८. सारस्वत्यां पुरोरुचि वाचःस्तोमे ऽपि विकल्पः। शंसेन्न वा शंसेत्। अशंसनमेवाभीष्टं तेन गुरुसूत्रं कृतम्। तथा च श्रुतिः।

---

[1] A प्रघच instead of नामग्र।

अथ हैके सारस्वतीं पुरोरुचं शंसति न तथा कुर्यात्। आहावस्तु नित्यः। तदङ्गत्वादिकल्पे प्राप्ते वचनम्। एवं च सति नितरां परिधानीयां शंसेदिति (७. १०. १०) निष्केवल्ये। तत्राहावस्यापि तादङ्ग्यात्तद्धर्मता। अङ्गप्रधानयोः संस्कारन्यायता युक्ता। ननु प्रतिवचनमाहावः प्राप्नोति। नेत्युच्यते। तन्त्रं भवत्यभिन्नकालत्वात्। एवं च सद्भोपपत्तिः। षोलशाहावं वैश्वदेवं शंसत्येकविंशत्याहावमाग्निमारुतं शंसतीति।

९. आहूय वायुरग्रेगा इत्यादिकां वायव्यां पुरोरुचं शस्त्वा ततो वायवा याहि दर्शतेत्येतासां तिसृणां चिः प्रथमां शंसेत्। वायवा याहि दर्शतेत्येतास्तिस्रः शंसेत्तासां च प्रथमां त्रिरिति वाक्यभेदे ऽपि सूत्रेषु न दोषः।

१०. आहूय हिरण्यवर्तनी इत्येवमादिकामैन्द्रवायवीं पुरोरुचं शस्त्वा तत इन्द्रवायू इमे सुता इत्येतास्तिस्रः शंसेत्।

११. आहूय काव्ययो राजानेत्येवमादिकां पुरोरुचं शस्त्वा ततो मित्रं हुवे पूतदक्षमित्येतास्तिस्रः शंसेत्।

१२. आहूय दैव्यावध्वर्यू इत्येवमादिकां पुरोरुचं शस्त्वा ततो ऽश्विना यज्वरीरिष इत्येतास्तिस्रः शंसेत्।

१३. आहूयेन्द्र उक्थेभिरित्यादिकां पुरोरुचं शस्त्वा तत इन्द्रा याहि चित्रभानो इति तिस्रः शंसेत्।

१४. आहूय विश्वान्देवानित्येवमादिकां पुरोरुचं षट्पदां शस्त्वा तत ओमासश्चर्षणीधृत इत्येतास्तिस्रः शंसेत्[1]।

---

[1] B adds शायाभरात्।

१५. आहूय वाचामहमित्येवमादिकां पुरोरुचं पद्ये शस्त्वा ततः पावका नः सरस्वतीति तिसृणामुत्तमया परिधायानन्तरमुक्थवीर्यं वाचं मे जिन्वेत्येवमादिकं जपति। वाचं मे जिन्वेत्येतैः सप्तभिर्वाक्यैः सप्तैव वायव्यादिद्वृचदेवता आशिषः प्रार्थ्यन्ते। तत्र सारस्वततृचाभावेऽपि दृशममहाद्रौ[1] सप्तैवाशीर्वाक्यानि कथं नाम स्युरित्येवमर्थमुक्थवीर्यग्रहणम्। अन्वर्थसंज्ञाविज्ञानात्समुदायाङ्गमित्यर्थः।

१६. विश्वेभिः सोम्यं मध्वित्युक्थ्यं शस्त्वा यजतीति (५) श्रुतेः।

---

## ११.

१. परिभाषेयम्। स्तोत्रियानुरूपा उच्यमानास्तृचाः प्रत्येतव्याः। किमविशेषेण। नेत्याह। प्रगाथान्परिहाप्य प्रगाथान्वर्जयित्वेत्यर्थः।

२. आ नो मित्रावरुणेति स्तोत्रियः। आ नो गन्तं रिशादसेत्यनुरूपः। वैश्वामित्रौ मैत्रावरुणस्य ब्राह्मणाच्छंसिनश्च स्तोत्रियौ भवत इति श्रुतेः।

३. प्र वो मित्राय गायतेति पञ्चर्चमुक्थमुखम्। उक्थमुखवचनादाद्यःस्तोमे ऽप्योर्ध्वमावापः। अहर्गणे तु नैवम्। होत्रकाणां प्रातःसवने कर्मेति कर्मवचनातिरेकात्[2] श्रुतेश्च।

४. प्र मित्रयोर्वरुणयोरित्येतासां नवानामनुवादेन विधिः। उत्तमया परिधाय समाप्य शस्त्रम् उप नः सुतमा गतमिति एतया यजति।

---

१ all Mss दृशममहाद्रौ। २ C om कर्म।

## १२.

१. आ याहि सुषुमा हि त इति स्तोत्रियः। आ नो याहि परावत इत्यनुरूपः। ब्राह्मणाच्छंसिन स्तोत्रियानुरूपौ शस्त्रादौ। एवमुत्तरत्रापि क्रमेण गोपस्य।

२. वास्तोष्पते ध्रुवेत्येव प्रगाथो बार्हतो तृच इति तं परिहाप्य शेषः सूक्तस्य अयमु त्वा विचर्षण इत्यादिकं सप्तकमुक्थमुखं भवति।

३. इन्द्र त्वा वृषभं वयमिति नवर्चमेतत्सूक्तं शंसेत्।

४. उद्वेदभि श्रुतामघमिति तिसृणामनुवादरूपो विधिः। तासामुत्तमया परिधाय समाप्य शस्त्रम्। तत उक्थशा यज सोमानामिति संप्रेषित इन्द्र क्रतुविदं सुतमिति यजति।

---

## १३.

१. क्रमेण पूर्वः स्तोत्रिय उत्तरो ऽनुरूपः। आवन्तः स्तोत्रियानुरूपास्त्रयाणामपि होत्रकाणाम्। तथैव श्रुतत्वात्। वैश्वामित्रौ मैत्रावरुणाच्छावाकयोः। एवमेव श्रुतत्वात्।

२. तृच एवोक्थमुखं नवर्चत्वात् सूक्तस्य।

३. अनन्तरमेताः शस्तव्याः।

४. वासिष्ठौ नवर्चौ पर्यासाविति श्रुतेः। इयं वामस्य मन्मन इत्येतासां नवानामुत्तमया परिधायेन्द्राग्नी आ गतं सुतमिति यजति। पूर्ववदुक्थशा यज सोमानामिति संप्रेषितः।

---

१४.

१. वक्ष्यति। रथन्तरं पृष्ठं निष्केवल्यस्य बृहद्वेति। तत्र रथन्तरे क्रियमाणे रथन्तरपृष्ठो यज्ञः। बृहति क्रियमाणे बृहत्पृष्ठता स्यात्। अतश्च रथन्तरपृष्ठपक्षे पूर्वोक्त एव शस्त्रन्यासः[1]। बृहत्पृष्ठपक्षे त्वय-मुच्यते। मैत्रावरुणादीनां त्रयाणां प्रकृतत्वाद्यथासङ्ख्येन सम्बन्धः। मित्रं वयं हवामह इति मैत्रावरुणस्य स्तोत्रियः। इन्द्रमिद्गाथिनो बृहदिति ब्राह्मणाच्छंसिनः। इन्द्रे अग्ना नमो बृहदित्यच्छावाकस्य। बृहत्पृष्ठस्येति यज्ञविशेषणम्। अर्थः प्रकृतिं निवर्तयतीति पूर्वेषां निवृत्तिः।

२. रायन्तरमिति तद्धितसंबन्धात् पूर्वां रथन्तरपृष्ठपक्षे शस्त्र-रचनेति सिद्धम्।

३. अनुरूपं रायन्तरमच्छावाक उक्थमुखं कुरुते। रायन्तर-मुत्सृजेत्[2]। स वा एषो ऽग्निष्टोम आज्यप्रउगत्याग्निमारुतान्तो यच्छस्त्रं त्रीणि षष्टिशतान्यृचां सम्पद्यन्त इति (१६.८) श्रुतेः। इन्द्रे अग्नेति च पर्यासमध्ये पुनःशंसनं विनियुक्तस्यापि स्तोत्रियत्वे। वासिष्ठी नवर्चौ पर्यासाविति श्रुतेः।

४. होत्रका मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकाः स्वशस्त्रेषु सर्वत्र चतुराहावा भवन्तीत्ययमुत्सर्गः।

५. वक्ष्यति। आश्विनादूर्ध्वमतिरिक्तोक्थानि। ऊर्ध्वं षोडशिनो ऽतिरिक्तोक्थमित्यादौ। तेष्वतिरिक्तोक्थेषु होता चतुराहावो भवति। चतुराहावग्रन्दस्याकारेणानुकृष्यते।

---

१ A न्यायन्यासः C न्यासः शस्त्रः। २ A adds उक्थमुखम्।

६. अन्यपदार्थगतो ऽप्याह्वावशब्दो ऽधिक्रियते दृष्टो ऽधिकारप्रवृत्तेः[1]। स्तोत्रियानुरूपाभ्यां प्रत्येकमाह्वावः। चतुराह्वावा होत्रका इति वचनात्। आह्वावस्थाननियमार्थं सूत्रम्।

७. अनुरूपादनन्तरो यः प्रगाथः प्रकृतो तस्मादूर्ध्वं पञ्चममाह्वावस्थानं[2] होत्रकाणां माध्यन्दिने सवने भवति।

८. उक्थमुखादूर्ध्वं पञ्चममाह्वावस्थानं सर्वेषां होतुश्च होत्रकाणां च रात्रौ। रात्रिपर्यायेष्वित्यर्थः।

९. अन्यत्रापि[3] सवनान्ते ऽन्यत्र वा यदाध्वर्युरेवमाह प्रशास्तः प्रसुहीति तदा मैत्रावरुण ओं सर्पतेति ब्रूयात्।

१०. प्रसृताः सन्तो दक्षिणावृतो दक्षिणेन शरीरभागेन परिवृता इत्यर्थः। अपरया सदोद्वारा निःसर्पन्ति। नानियमेन। कथं तर्हि। उत्तरेणौदुम्बरीसंज्ञां स्थूणाम्। तामेव दक्षिणेन ब्रह्मा निःसर्पेत्। ननु स्वंस्वं धिष्ण्यमुत्तरेण संचरतामुत्तरेणौदुम्बरीं सर्पणं कृतं भवति। किं वचनेन। उच्यते। यजमानसदस्यमैत्रावरुणग्रावस्तुदर्थम्। यथा न शून्यं सदो भवति तथा सदस्यः प्रसर्पेत्। सर्पंस्तु न शून्यं सदः कुर्यादिति तस्य छान्दोग्ये वचनात्। आग्नीध्रस्तु[4] स्वस्मादगाराद्दक्षिणया द्वारा। तथा संभवात्।

११. यथार्थमृत्विजो मूत्रपुरीषादिकरणाय सर्पन्ति।

१२. माध्यन्दिनाय सवनायेति तादर्थ्ये चतुर्थी। ततश्च समस्तोपस्थानप्रभृतिना प्रसर्पणमूर्ध्वं प्रातःसवनादित्येतत्सिद्धं भवति।

---

१ B ध्वचो ऽधिकार॰ ॰क्रियत इति C प्रदक्षि A ॰प्रवृत्तेः। २ A. ins. सर्वेषाम्। ३ C (by alt) ध्वचापि। ४ B C तस्मा॰।

अपरयैव द्वारा प्रसर्पेयुः। यथानिःसृप्तमिति वचनात्। यथासन-मुपविशन्तीत्ययमनुवादो दक्षिणधिष्ण्यो इत्यस्य निषेधार्थः।

---

## १५.

१. आदौ माध्यन्दिनस्य सवनस्य राजानमभिषुण्वन्त्यध्वर्यवः। यावत्तत्कर्मावध्यर्थमेतत्सूत्रम्। ननु राजानमभिषुण्वन्तीत्येतावदाद्यम् अन्यत्क्रमप्रकरणाभ्यां सिद्धम्। उच्यते। माध्यन्दिनस्य सवनस्याय-मादिरित्येतदपि[१] प्रतिपादयितव्यमेव। कथं नाम। यानि माध्य-न्दिनादावुपदिश्यन्ते प्रेङ्खावटखननादीनि तानि प्रागभिषवात्क्रिये-रन्निति[२]।

२. यावन्तुदृलिग्विशेषः। स पूर्वया द्वारा हविर्धानगरणं प्रवि-श्योत्तरस्य हविर्धानशकटस्य दक्षिणं पादमपेण दक्षिणाभिमुख-स्तिष्ठन्सोमोपनहनेन वाससा मुखमुत्तमाङ्गं परिवेष्ट्य ग्राव्णां सोम-मभिषुण्वतां शब्दं श्रुत्वा संप्रैषनिरपेक्षः प्रणवेनासंदधत्[३] प्रत्यर्धर्च-मुच्छ्रसन्नवानं[४] वा वक्ष्यमाणमनुवचनं पठति।

३. प्रतीकोक्ताः पञ्चैता ऋचो ऽभिष्टौति। शाखान्तरश्रुतेः।

४. आ प्यायस्व समेतु ते। आ प्यायस्व मदिन्तम। सं ते पयांसि समु यन्तु वाजा इत्याप्यायितवत्यः। एतासां तिसृणां प्रथमामभि-ष्टुत्य ततः प्रैते वदन्तु प्र वयं वदामेत्यर्बुदार्षस्य सूक्तस्य द्वे अभिष्टौति। देवा वा अर्बुदेन च पावमानीभिश्च ग्राव्णो ऽभिष्टुत्याप्नुवन्नमृतत्वमिति श्रुतेः[५]। अर्बुदग्रहणं व्यवहारार्थम्।

---

१ C (in marg) स्थ (instead of स्या) in सवनस्याय॰। २ C न क्रियेरन्। ३ C प्रणवेन नार्धर्चशस्त (sec. h.) न्। ४ C om वानं। ५ C ऽभिष्टुत्येति श्रुतेः।

५. द्वितीयामाप्यायितवतीनामा प्यायस्व मदिन्तमेत्येतामाप्यायितवतीमभिष्टुत्यार्बुदस्य द्वे। एते वदन्त्यविद्न्नना मच्छ्रिवेत्येतामभिष्टुत्य ततः सुपर्णा वाचमक्रतोप द्यवीत्येतामभिष्टुयात्।

६. तृतीयामाप्यायितवतीनां सं ते पयांसीत्येतामभिष्टुत्य ततोऽर्बुदस्यैकां उग्रा इव प्रवहन्तः समायमुरित्येतामभिष्टुयात्।

७. तुल्यप्रतीकत्वे प्राथम्येन व्यवस्था। स्तुष्टवतीरिति संज्ञा। कथं नामाधवनक्रियाकाले स्युः।

८. अत्रापि पूर्ववत्संज्ञाकरणप्रयोजनम्।

९. आ प्यायस्व समेतु त इत्येतत्प्रभृति कलशवत्यन्त एवं विहृतः पूर्ववदाप्यायितवत्यर्बुदयस्तो द्वितीयो ऽपि सवः। अपिशब्दात् प्रथमो ऽपि कलशवत्यन्तः सवसंज्ञ एव। इयांस्तु विशेषः। षष्ठीप्रभृतयः पञ्चार्बुदस्य पूर्ववद्विहर्तव्याः।

१०. [1]आप्यायितवतीप्रभृत्येकादशीप्रभृतयस्तिस्रो ऽर्बुदस्य विहर्तव्याः। तत्र यथासंभवमेकैकां विहरेदयमपि तृतीयः सवः। संज्ञाकरणं शास्त्रसंव्यवहारार्थम्।

११. यस्मिन्सवे ऽभिषोतारो दृहच्छन्दं कुर्युर्दृहद्दन्ति मदिरेण मन्दिनेति तत्रोत्कर्षेत्। अथ यत्र दृहदृहदिति दृहद्दन्ति मदिरेण मन्दिनेति तत्रेति (२९. १) श्रुतेः।

१२. प्रथमे सवे षष्ठीमपकर्षेत्।

१३. पवित्रमूर्णामयं सोमगलनार्थमुद्गातारो वितन्वन्ति। तस्मिन्वितते सति पवित्रं ते विततं ब्रह्मणस्पत इति द्वे अभिष्टुयात्।

---

[1] C in marg. तिस्रो।

१४. वितत एव पवित्रे वि यत्पवित्रं धिषणा अतन्वतेत्येका पठितव्या।

१५. प्रास्य धारा अक्षरन्प्र धारा अस्य शुष्मिणः। प्र ते धारा असश्चत इति प्राथम्यात्। एतास्तिस्रः प्र चरन्तीषु धारासु पठेत्। धारास्विति बहुवचनमविवक्षितम्। कालोपलक्षणत्वात्।

१६. पावमानीनां मध्ये याः कामयेत ता अभिष्टुयात्। धाराग्रहेषु गृह्यमाणेष्वध्वर्युभिः। अवचने प्रथमा एव स्युः। प्रथमं वा नियम्येति न्यायदर्शनात्। तुल्ये ऽपि पावमानीत्वे सौम्य एव स्युः प्रकरणात्। न तु स्तृष्टवत्याद्याः। विनियुक्तत्वात्। सूत्रकारानुप्रश्नादनुष्टुभो[१] युक्ताः। तथा हि दशमे ऽहनि सृजानो वारे पवमानो अव्यय इति यावन्तो याथाकाम्यमित्येतदुपपन्नं भवति। तथा च तत्सवाभि नो वाजसातममित्येता अनुष्टुभः प्राथम्यात्प्रकृतौ प्रसिद्धाः।

१७. याथाकाम्यनिवृत्त्यर्थं यसेर्वन्यनार्थस्य प्रयोगः।

१८. उत्तमे ग्रहे गृहीत इति कालविधिः। अर्बुदस्योत्तमया परिधायेति नियमः। आदायोष्णीषमुन्मृज्यत इत्युष्णीषादानविधिः। वाग्यमादिनियमकर्मण्योत्सर्गः[२]।

१९. प्रत्यक्षमुष्णीषादानापवादः। अन्य एवाक्षन्युष्णीषमादद्यात्तुशब्दात्[३]।

---

१ C (in marg) सूत्रकारानुप्रश्नाद्। २ A ॰नियमात्। ३ I beg to state that the words from उत्तमे॰ to इति constitute one Sutra and the words from अर्बुद another. I have in the edition of the text erroneously taken them together

१०. प्रैते वदन्तु प्र वयं वदामेत्यर्बुदः। तथैवार्षानुक्रमणीदर्शनात्काद्रवेयो ऽर्बुदः प्रैत इति। तमर्बुदं शुद्धमविहृतं वाभिष्टुयात्। पूर्वोक्तेन विहारेण सह विकल्पः। स च यदाध्वर्यवो निग्राभ्यासेचनं पूर्वं कुर्वन्ति त्रिष्वपि सवनेषु तदाप्यायितवत्यः पूर्वं ततो ऽर्बुदः सकलस्ततो मृष्टवत्यः कलशवत्य इति। देवा वा अर्बुदेन च पावमानीभिश्चेत्यविशेषश्रवणात्।

---

## १६.

१. माध्यन्दिनः पवमानः छन्दोगानां प्रसिद्धः। तेन स्तवने कृते दधिघर्माख्येन हविषा चरन्ति अध्वर्यवः यदि प्रवर्ग्यवान्यज्ञः।

२. होतर्वदस्व यत्ते वाद्यमित्यध्वर्युणा संप्रेषित उत्तिष्ठताव-पश्यतेत्येतामभिष्टौति।

३. श्रातं हविरित्येवमध्वर्युणोक्ते द्वितीयां सूक्तस्य श्रातं हवि-रो ष्विन्द्र पाहीत्येताम्। अभिष्टौतीत्यनुषज्यते। प्रथमामभिष्टौति द्वितीयां सूक्तस्येति सूक्तग्रहणातिरेकात्प्रथमाग्रहणातिरेकाच्च सर्व-स्वारादिष्वप्येता एव नियमतो भवन्ति।

४. दधिघर्मस्य यजेत्येवमध्वर्युणोक्तस्तृतीयया श्रातं मन्य ऊध-नीत्येतया यजति।

५. अनवानमर्धर्चान्ते ऽनुच्छ्वसन्नेकैकां समणवामिति प्रत्यृचं प्रणवेनावस्यन्नभिष्टौति।

६. मध्ये ऽनवस्यन्नेव[1]।

---

[1] C (in marg.) सामनेव instead of ॰वस्यन्नेव।

७. तथा यजतीत्यस्यानन्तरमनुवषट्कारस्य वचनमायनिगद-प्रतिषेधार्थम्।

८. वषट्कारानुवषट्काराभ्यां कृतस्य दधिघर्मद्रव्यशेषस्य मयि त्यदिन्द्रियं बृहदित्यादिको भक्षमन्त्रः।

९. सवनीयपशोर्वपान्तं प्रातःसवने कृतम्। अथेदानीं पशुपुरो-डाशेन स्विष्टकृदिलेन[1] चरित्वा अनन्तरं पुरोडाशैः सवनीयैर्दधि-धानादिभिश्चरन्ति।

---

## १७.

१. माध्यन्दिनस्य सवनस्य धाना इति सवनीयपुरोडाशानां पुरोनुवाक्या। प्रैष उक्तो याज्या च[2]।

२. माध्यन्दिने सवने जातवेद इत्येषा सवनीयहविःस्विष्टकृतः पुरोनुवाक्या भवति। उक्ता याज्या प्रातःसवने प्रैषश्च।

३. असावि देवं गोऋजीकमन्ध इत्येवमादिकमुन्नीयमानसूक्तं भवति। नामधेयं प्राकृतनिवृत्त्यर्थम्। वासिष्ठीर्मध्यन्दिन उन्नीय-मानेभ्यो ऽन्वाह ता वै दग्मान्याहेति (२९. २) श्रुतेः।

४. होता यक्षदिन्द्रं माध्यन्दिनस्य सवनस्येत्येवमादिकः प्रैषो भवति। सुन्वतो यजमानस्येत्यनयोः पदयोर्विकृतौ यथार्थमूहः। द्वियजमानके सुन्वतोर्यजमानयोः। बहुयजमानके सुन्वतां यज-मानानामिति।

---

१ A C (orig) चरित्व॰। २ C (in marg) प्रातःसवने।

५. पिबा सोममभि यमुग्र तर्द इति होता यजति।

६. पिबा सोममित्यस्यैव सूक्तस्य द्वितीया मैत्रावरुणस्य याज्या भवति।

७. अस्यैव सूक्तस्य।

८. अर्वाङेहि सोमकामं लाहुरिति पोता यजति।

९. तवायं सोमस्त्वमेह्यर्वाङिति नेष्टुः प्रस्थितयाज्या भवति।

१०. इन्द्राय सोमा इत्येवमादिकाच्छावाकस्य प्रस्थितयाज्या।

११. आपूर्णो अस्य कलशः स्वाहेत्याग्नीध्रस्य प्रस्थितयाज्या।

१२. प्रातःसवनापेक्षमुत्तरत्वम्।

१३. उत्तरयोः सवनयोरित्येतत्प्रकृतमेव।

१४. होतृचमसप्रतीक्षणं स भद्रमकर्यो नः सोमं पाययिष्यतीत्येवमादिकं यदिह नोक्तं तत्समानं तुल्यं प्रातःसवनेन द्रष्टव्यम्।

१५. क्रमार्थो ऽनुवादः।

१६. अस्मिन्काले प्रस्थितभक्षानन्तरं दक्षिणा दातव्या। सूत्रारम्भप्रयोजनं वृहस्पतिसवे त्रिष्वपि सवनेष्वेव दक्षिणाकालः।

१७. द्वादश अधिका यस्मिञ्छते तत् द्वादशं शतम्। गवामिति न्यायप्राप्तस्य षष्ठ्येयस्य स्रवणं सुखप्रतिपत्त्यर्थम्।

१८. वसन्तेवसन्ते ज्योतिषा यजेतेति नित्यत्वात् आवश्यकर्तव्यतायामसम्भवे च द्वादशशतस्य यथोपपादं यथासम्भवमेकविंशतिप्रभृति वेति विकल्पः।

---

१८.

१. अग्नये त्वेत्येवमादिना मन्त्रेण हिरण्यं प्रतिगृह्णाति। ननु गोदानाधिकारे हिरण्यं प्रतिगृह्णातीति किमर्थमुच्यते। अप्रयुज्य विधीयमानं साधारणमिति कथं नाम स्यात्। इहैव मा भूदिति ननु दाताच नोपात्तो[1] नापि प्रतिग्रहीतारः। आह। न्यायादन्यापरेभ्यश्च वचनेभ्य एव सिद्धम्। यजमानो दाता प्रतिग्रहीतारश्चर्त्विज इति। प्रतिविभज्य दानम्। पत्नी च ददाति विशिष्टेन क्रमेणेत्येतच्छाखान्तरात्।

२. रुद्राय त्वेत्येवमादिना मन्त्रेण गाः प्रतिगृह्णाति। होता च कुर्यादनादिष्टमित्येतदत्र नाश्रीयते। गवाधिकारे हिरण्यप्रतिग्रहमन्त्रपाठात्।

३. बृहस्पतय इत्येवमादिना मन्त्रेण वासः प्रतिगृह्णाति।

४. यमाय त्वेत्येवमादिना मन्त्रेणैकशफं प्रतिगृह्णाति। एकशफमित्यश्वो ऽश्वतरो गर्दभ इति प्रसिद्धः।

५. अन्यमन्यौदनतिलमाषादिकं प्रजापतय इत्येवमादिना मन्त्रेण प्रतिगृह्णाति।

६. ओमित्यनेन वा मन्त्रेण सर्वं प्रतिगृह्णाति। वा पूर्वैरग्नये त्वेत्येवमादिकैर्मन्त्रैः[2]।

७. को ऽदादित्येवमादिकेन मन्त्रेणानुमन्त्रयते यजमानम्[3]।

८. को ऽदादित्येवमादिना मन्त्रेणोपस्पृशेदितरद्माणि।

---

१ C (in marg) प्राप्तो। २ C in marg विकल्पार्थम्। ३ C (in marg) द्रव्यम्।

९. अस्मद्राता इत्येवमादिकं मन्त्रं यजमानो जपति। पत्नी चाविशेषाद्दक्षिणां दत्त्वा। दातारमित्यस्य विकारे ऽप्यनूहः स्वात्मनिर्देशात्।

---

## १९.

१. इन्द्राय मरुत्वते ऽनुब्रूहीत्यध्वर्युणा संप्रेषितो मरुत्वतीययज्यायागार्थम्[1]। तस्य कथं प्रदानं भवतीत्यत आह।

२. इन्द्र मरुत्व इह पाहि सोममिति पुरोनुवाक्या भवति।

३. होता यक्षदिन्द्रं मरुत्वन्तमित्यादिकः प्रैषो भवति।

४. सजोषा इन्द्र सगणो मरुद्भिरित्यनया यजति। एवमयं संप्रैषप्रदानः।

५. केषांचिदध्वर्यूणामत्र ग्रहान्तरस्यानुहोमो ऽस्ति। तच्छेषभक्षनिवृत्त्यर्थं तमिति निर्देशः। भक्षयित्वेति क्त्वाप्रत्ययः क्रमार्थः। मरुत्वतीयमिति संज्ञानिर्देशः[2] शास्त्रसंव्यवहारार्थः।

६. अध्वर्यो शोंसावो३ इत्येवमाह्वावः शस्त्रमारम्भे सर्वत्र[3]प्रायश्चित्तार्थेष्वपि शस्त्रेषु माध्यन्दिने सवने।

७. प्रातःसवने भवः प्रातःसवनिकः[4]शोंसावो३ इति य उक्तः स माध्यन्दिने सवने शस्त्रमध्ये भवति।

८. आ त्वा रथं यथोतय इत्येवमादिकं तृचं शस्त्राद्यम्। पातिपदमिति शस्त्रमारम्भणमित्यर्थः। संज्ञाकरणं शास्त्रसंव्यवहारार्थम्।

---

1 B °यजार्थं। 2 C °तीयमिति संज्ञार्थं निर्दे°। 3 B सर्वप्रा°। 4 C om. प्रात सवनीक°।

८. अनुचरमिति संज्ञाकरणं शास्त्रसंव्यवहारार्थम्।

१०. इन्द्रनिहवं प्रगाथमिति संज्ञानिर्देशः स्वशास्त्रोपयोगी।

११. ब्राह्मणस्पत्यमिति संज्ञाकरणमुक्तार्थम्।

१२. अग्निर्नेता भग इव क्षितीनामित्येकां शस्त्वाह्वय। एकवचनं तृचनिवृत्त्यर्थं एकपातिनीसंज्ञार्थं चोत्तरयोरपि।

१३. त्वं सोम क्रतुभिः सुक्रतुर्भूरित्येताम्।

१४. पिन्वन्त्यपो मरुतः सुदानव इति।

१५. जनिष्ठा उग्रः सहसे तुरायेत्यस्य सूक्तस्य पञ्चर्चं शस्त्वाह्वय निविदं शंसेत्। पट् शस्त्वेत्यनुवाद आह्वावविधानार्थः। निविदं वक्ष्यति। प्रथमा निविन्मरुत्वतीयस्येति।

१६. अस्मिन्सूक्ते मदामदा मोदैवेति प्रथमः प्रतिगरो भवति। तस्य प्रथमायामध्वर्युः मरुत्मदमत्याग्रणातीति (१६. २) श्रुतेः। होतृप्रत्ययः प्रतिगर इति कथितः।

१७. विषमर्चानां सूक्तानामेकयाभ्यधिका[१] अर्धां शस्त्वा निविदं दध्यात्।

१८. समसङ्ख्याका ऋचो येषां सूक्तानां तानि समर्चानि। तेषां मध्ये निविदं दध्यात्।

१९. तृचानां निविद्धानानामेकां शस्त्वा निविदं दध्यात्।

२०. यदा सूक्तविद्धिः पञ्च सूक्तानि मरुत्वतीये शस्यन्त इत्येवमादिका भवति तदान्त्ये सूक्ते निविदं दध्यात् यथोक्तेन प्रकारेण।

२१. तुशब्दः सूक्तविद्धावित्यस्यानुकर्षणार्थः।

---

१ C ॰भ्यधिकामी; in marg. विषमसंख्याका ऋचो येषां तेषां।

२२. तृतीयसवने यानि सूक्तानि निविद्धानानि तेषामुत्तमाः परिशिष्य निविदो दध्यात्। एकैकां[1] सूक्तस्यसूक्तस्योत्तमामित्यर्थः।

२३. वियतं विलम्बितं पच्छः पदंपदमवखण्ड्यानेन[2] धर्मेण निविदः शंसति।

२४. उत्तमे निवित्पदे प्रणवः कार्यः।

२५. अष्टौ सूत्राणि परिभाषारूपाण्युक्तानि। अथेदानीं क्रमप्राप्तमुच्यते। जनिष्ठाउग्रीयस्य पर्यां यः शेषस्तमुत्तमावर्जं शस्त्वा तत आह्वयोत्तमया परिधाय परिसमाप्य शस्त्रम्।

२६. उक्थवीर्यं रूपमनुरूपमित्येवमादिकं जपित्वा ये त्वाहिहत्ये मघवन्नवर्धन्निति जपति।

---

## २०.

१. रथन्तरमिति साम्नो नामधेयम्। तन्निष्केवल्यस्य शस्त्रस्य स्तोत्रं भवति। आरम्भप्रयोजनं योन्यनुशंसनम्।

२. इदंदा पृष्ठं निष्केवल्यस्य स्तोत्रं भवति।

३. अभि त्वा शूर नोनुमः। अभि त्वा पूर्वपीतय इति स्तोत्रियानुरूपौ यथासङ्ख्येन। प्रथमः स्तोत्रियो द्वितीयो ऽनुरूप इति। रथन्तरस्येत्यनुशंसनसंबन्धेन षष्ठी।

४. स्तोत्रियानुरूपौ प्रगाथाविति वर्तते। प्रगाथग्रहणं सर्वत्र धर्मविशेषप्रतिपादनार्थम्।

---

१ A एकैक। २ C (in marg.) पच पादेन instead of पदपदम्।

५. यद्वावान पुरुतमं पुराषालिति धाय्या। अप्रयोगविहितत्वादुभयत्र। धाय्येति संज्ञा शास्त्रसंव्यवहारार्था।

६. इह प्रगाथग्रहणं इत्यर्थम्।

७. उभयं शृणवच्च न इति बृहत्यचे बृहत्साम्नः प्रगाथो भवति।

८. इन्द्रस्य नु वीर्याणि प्र वोचमित्येतत्सूक्तं रथन्तरपृष्ठे सति भवति।

९. तमु ष्टुहि यो अभिभूत्योजा इति बृहत्पृष्ठे सति सूक्तं भवति।

१०. नीचैस्तरामित्यर्थः।

११. सूक्तस्याष्टादशः प्रस्त्वेन्द्रो देवः सोमं पिबत्वित्यादिका निविद्भवति। द्वितीया निष्केवल्यस्येति वचनात्। तस्याश्च निविदो ऽनन्तरमाम्नायपाठे समासमीत्येवमादिकं तदिह जपत्वेन चोदितम्[1]।

१२. पिबा सोममिन्द्र मन्दतु त्वेत्यादिकया विराजा यजति।

---

## २१.

१. उभे बृहद्रथन्तरे सामनी यस्य स उभयसामा सोमः। स एव केनचिन्मत्यचादिना विशेषेण रथन्तरपृष्ठो बृहत्पृष्ठो वाभिधीयते। तत्र तावद्रथन्तरपृष्ठे यो विशेषः स उच्यते।

२. यः सूक्तात्पूर्वः प्रगाथ उक्तः पिबा सुतस्य रसिन इत्येतमादिकमपनीय तस्मिन्नेव स्थाने बृहतो योनिं शंसति। त्वामिद्धि हवामह इति यदध्यूढं साम गीयते[2] सा तस्य साम्नो योनिरित्युच्यते।

---

[1] B C कपिलेन चोदि॰ C (in marg.) कपिञ्जलेन॰। [2] C (in marg.) वदिदं instead of यदध्यूढं and गीयते यत instead of गीयते।

३. कश्चिन्मन्देशविशेषे बृहति गीयमाने बृहत्पृष्ठः सोम इत्युच्यते। तत्र बृहत्पृष्ठे यः सूक्तात्पूर्वः प्रगाथ उभयं शृणवच्च न इत्येवमादिकस्तमुद्धृत्याभि त्वा शूर नोनुम इत्येवमादिकां रथन्तरस्य योनिं शंसति।

४. यदेतद्योन्यनुशंसनमुक्तमेतदुत्तरासु संस्थासु। प्राकृतामग्निष्टोमसंस्थां मुक्त्वा। अन्यासु सामप्रगाथादूर्ध्वं भवति। सामप्रगाथो नोत्सृज्यत इत्यर्थः।

५. यदेतदुक्तं सामप्रगाथमुद्धृत्यानुद्धृत्य वा रथन्तरादेः शंसनमेतद्योन्यनुशंसनमित्याचक्षते याज्ञिकाः।

६. बृहद्रथन्तरयोरेव योनिमनुशंसेन्नान्यत्रेत्येवमाह कौषीतकिः। कौषीतकिग्रहणं विकल्पार्थम्। इति ह स्माहेत्यतिरिक्तवचनादयमेवाभीष्टः पक्षः सूत्रकारस्य इति ज्ञायते। तथा च श्रुतिः यत्र तु क्व चैते सामनी इत्यारभ्याम्नातैव।

७. परिमितं शस्त्रमस्मिन्प्राकृते ऽग्निष्टोमे। सो ऽयमेवंरूपः। प्रगाथे शस्यमाने योन्यां चातिरिच्यते। तस्मात्प्रगाथमुद्धरति। परिमितशस्त्रता श्रौता। स वा एषो ऽग्निष्टोम आज्यप्रभृत्याग्निमारुतान्तो यच्छस्त्रं त्रीणि षष्टिशतान्यृचां संपद्यत इति (कौ० ब्रा० १६. ९)। सा न शक्यते बाधितुम्। तस्मात्प्रगाथमुद्धरति।

८. तादर्थ्ये चतुर्थी निर्देशादाहावेन सहावृत्तिर्नाशे सिद्धा भवति।

९. प्रकरणान्निष्केवल्यनिविदि शस्तायां होत्रे वरो देयः। स चाश्वः श्रेष्ठः। वरो वा। गौरित्यर्थः।

## २२.

१. वामदेव्याख्यं साम मैत्रावरुणप्रस्तस्य स्तोत्रं भवति।

२. कया नश्चित्र आ भुवदिति स्तोत्रियः। कया त्वं न ऊत्येत्यनुरूपः।

३. कस्तमिन्द्र त्वावसुमिति साम्नः प्रगाथो भवति।

४. सद्यो ह जातो वृषभः कनीन इत्येतत्सूक्तं सामप्रगाथादनन्तरमाहूय शंसेत्।

५. द्वितीयमेतत्सूक्तं मैत्रावरुणस्य।

६. उग्रन्नु पु णः सुमना उपाके याज्यामेतां करोति।

---

## २३.

१. नौधसमिति साम। तद्ब्राह्मणाच्छंसिनः प्रस्तस्य रथन्तरपृष्ठे सोमे सति स्तोत्रं भवति।

२. बृहत्पृष्ठे सोमे श्यैतं साम ब्राह्मणाच्छंसिनः स्तोत्रं भवति। तत्संबन्धेन प्रस्तव्यवहारार्थं छान्दोग्यमप्युक्तम्।

३. तं वो दस्ममृतीषहम्। तत्त्वा यामि सुवीर्यमित्येतौ प्रगाथौ स्तोत्रियानुरूपौ प्रग्रथनधर्मविशिष्टौ नौधसस्य साम्नो भवतः।

४. अभि प्र वः सुराधसम्। प्र सु श्रुतं सुराधसमित्येतौ स्तोत्रियानुरूपौ प्रग्रथनधर्मविशिष्टौ श्यैतस्य साम्नो भवतः।

५. उभयोः श्यैतनौधसयोरसंयोगविधानात्।

६. इन्द्रः पूर्भिदातिरद्दासमर्कैरित्येतत्सूक्तं नौधसे साम्नि सति भवति।

७. असावि सोमः पुरुहूत तुभ्यमित्येतत्सूक्तं शंसेत् सामि भवति भवति।

८. उदु ब्रह्माण्यैरत श्रवस्येत्येतत्सूक्तं समानम्। सामान्तरेष्वपि वचनादृते नोद्धर्तव्यमित्यभिप्रायः[1]।

९. ऋजीषी वज्री वृषभस्तुराषालित्येतया यजति।

---

## २४.

१. कालेयाख्यं सामाच्छावाकशस्त्रस्य स्तोत्रं भवति। तस्मिन्सति शस्त्रमुच्यते।

२. तरोभिर्वो विदद्वसुम्। तरणिरित्सिषासतीति स्तोत्रिया-नुरूपौ प्रग्रथनधर्मविशिष्टौ।

३. उदिन्न्वस्येत्येवमादिको तृचः सामप्रगाथः कार्यः।

४. भूय इद्वावृधे वीर्यायेत्येतत्सूक्तं शंसेत्।

५. इमामू षु प्रभृतिं सातये धा इत्येतत् द्वितीयं सूक्तं शंसेत्।

६. पिबा वर्धस्व तव घा सुतास इत्येतया यजति।

---

## २५.

१. इत उत्तरं यदच्छामस्तच्छस्त्रेषु भवतीति वेदितव्यम्।

२. प्रायेण बाहुल्येन अग्रयासमाम्नातं यदृग्जातं भवति तदुच्यते।

---

१ B नोद्धर्तव्य॰।

३. बृहती षट्त्रिंशदक्षरा सा पूर्वाम्नायक्रमेण। ककुब्वाम्नायक्रमेण पूर्वस्या मध्यमेन द्वादशाक्षरेणाष्टाविंशत्यक्षरा। सतोबृहत्युत्तरा। सतोबृहती चत्वारिंशदक्षरा। यस्याः प्रथमतृतीयौ द्वादशाक्षरौ द्वितीयचतुर्थावष्टाक्षरौ सा चेद्बृहत्याः ककुभो वाम्नायक्रमेणोत्तरा तमेवंरूपं तृचं प्रगाथ इत्याचक्षते याज्ञिका नान्यम्।

४. बार्हतः प्रगाथ इत्युच्यते। बृहत्यां पूर्वस्यां सत्याम्। पुरस्ताद्बृहत्यादिविकाररूपायामपि सतोबृहत्यामुत्तरस्यामिति स्थितम्।

५. काकुभः प्रगाथो भवति ककुभि पूर्वस्यां सतोबृहत्यां त्वुत्तरस्यां विपरीतादिविकृतायामपि।

६. बृहती सकृच्छस्ता तस्या एवोत्तमं पादं प्रत्यादाय पुनः शस्तेत्यर्थः।

७. उत्तरस्या ऋचः प्रथमेन पादेन सह संधानं कृत्वावसाय।

८. उत्तरस्या इति वर्तते। उत्तरस्या द्वितीयेन पादेन प्रणवं कृत्वा।

९. तं द्वितीयं पादं प्रत्यादाय तृतीयेनावसाय।

१०. द्वितीयस्या उत्तमेन प्रणौति।

११. द्वे तिस्रः करोतीति[1] याज्ञिक उक्तास्ता एवं भवन्ति। बृहती पूर्वा भवति। सोपपदा निरुपपदा वा[2]। उत्तरे ककुभौ भवतः। एवं तिस्रो भवन्ति।

१२. उक्तः प्रग्रथनधर्मः। एष बृहद्रथन्तरयोः प्रगाथस्थयोरनुशंसने भवति।

---

१ I abc II cde III efg   २ C च instead of वा।

षट्पदानां पादद्वयेनावसानं कृत्वा पुनस्तथैव ततो द्वाभ्यां प्रणौति उभे यदिन्द्र रोदसी इत्यादि[1]।

८. अपुनःपदानां षट्पदानामयं शस्त्रधर्मः। द्वाभ्यामवसानमेकेन प्रणवः। पुनरप्येवमेव। अचोदाहरणम्। अवितासि सुन्वतो वृक्तबर्हिष इति।

१०. यासु षट्पदासु द्वितीयचरौ तृतीयषष्ठौ भवतस्तत्रायं शस्त्रधर्मः। ततस्त्व स्वादिष्ठा तच्छम्योरा वृणीमह इत्यर्धर्चशः।

११. सप्तपदानामयं शस्त्रधर्मः। एकेनावसानं ततो द्वाभ्या प्रणवः पुनर्द्वाभ्यामवसानं ततो द्वाभ्यां प्रणवः। अष्टपदानामर्धर्चशः शस्त्रम्। विशेषानुपदेशात्।

१२. रात्रिपर्यायान्वक्ष्यति। प्रथममध्यमोत्तमभेदेन। तत्र गायत्राणां स्तोत्रियानुरूपाणां शंसितारः प्रथमान्यादानभ्यस्यन्ति।

१३. मध्यमेषु रात्रिपर्यायेषु गायत्राणां स्तोत्रियानुरूपाणां मध्यमान्यादानभ्यस्येयुः।

१४. गायत्राणां स्तोत्रियानुरूपाणामुत्तमान्यादानभ्यस्येयुः। अथ यत्प्रथमेषु पर्यायेष्वित्येवमुपक्रम्य श्रुतौ (१७. ८) सर्वमभिहितम्।

१५. वाशब्द उक्तेन सह विकल्पार्थः। अर्धर्चशो वा प्रातःसवनं शंसेत्। विहृतच्छन्दस्कमपि।

१६. इतरयोरपि सवनयोः प्रगाथवर्जितान्स्तोत्रियानुरूपान्वाऽर्धर्चशः शंसेत्।

---

१ C om. उभे ॰त्यादि।

मेव षष्ठे ऽहनि याज्याप्रतिषेधो लक्षणविधानात्। प्रायिकं च लक्षण-मन्यत्र श्रुतिवचनात्।

१४. आग्नायमिन्द्रलादस्या अष्टपदावचनमन्यासामष्टपदानां संभवे सति सप्तपदावच्छस्त्रम्। अन्त्यैस्त्रिभिः प्रणवः।

१५. स्तोत्रियानुरूपत्वे ऽपि पच्छःशस्यार्थं वचनम्। द्विर्द्विपदा ऋचः समामनन्तीति च्छन्दोधर्मे ऽपि स्तोत्रियानुरूपयोर्ऋचः पादद्वय-रूपमनुशंसनमन्यत्रापि[१]।

१६. त्रिपदा गायत्रीत्येवमादिषु द्वौ द्विपदाया इत्येवमन्तेषु च्छन्दःसु ये पादास्ते ऽष्टाक्षराः प्रायेण भवन्तीत्ययमुत्सर्गः। प्रायेणेतिवच-नाद्यच्छन्दस्काः पादा बहवो भवन्ति तदीयमेव शस्यं व्यवतिष्ठत इति।

१७. जगत्याः प्रायेण द्वादशाक्षराः पादा भवन्ति। द्वादशाक्षर-बाहुल्ये[२] जगतीवत्पच्छःशस्यं यथा स्यादिति सूत्रारम्भः।

१८. उष्णिग्बृहत्योस्तृतीयौ द्वौ पादौ द्वादशाक्षरौ भवतः। शेषा अष्टाक्षरा उत्सर्गात्।

१९. द्वादशाक्षराधिकारो ऽनुवर्तते। चतुष्पदा सतोबृहतीत्यु-क्तम्। तस्याः प्रथमतृतीयौ द्वादशाक्षरौ भवतः। शेषावष्टाक्षरावुत्सर्गात्।

२०. ककुब्त्रिपदोक्ता। तस्या मध्यमः पादो द्वादशाक्षरः। इत-रावष्टाक्षरावुत्सर्गात्।

२१. पुरउष्णिगपि त्रिपदोक्ता। तस्याः प्रथमः पादो द्वादशाक्षरः।

२२. त्रिष्टुब्विराजोरेकादशाक्षराः प्रायेण पादा भवन्ति। पूर्वा विराळेवोपादीयते[३]।

---

१ C चत्रापि। २ A ॰पादबाहुल्ये। ३ C om. पूर्वा ॰दीयते।

२३. चतुष्पदोत्तरा विराळित्युक्तम्। तस्या[1] उत्तरस्या विराजो दशाक्षराः पादा भवन्ति।

२४. तामुत्तरां विराजं याज्ञिका अक्षरपङ्क्तिरित्यधाचक्षते। अथाक्षरविराजम्।

२५. पदपङ्क्तिर्नाम गायत्रीविकारः। या पञ्चभिः पादैः पञ्चाक्षरैर्भवति[2]। इन्द्र शुष्म म वक्षेत्यस्य स्तोत्रियस्य प्रत्यूचं नवनवाक्षराणि वाचःस्तोमे ऽपि परिहार्याणीत्येवमर्थः किल सूत्रारम्भः। त्रिष्टुब्विराजोरिदं तौ[3] ताः पञ्चविंशत्यक्षरा इति।

२६. न केवलं द्वादशाक्षरा जगत्याः पादाश्चत्वारः[4]। क्वचित् पलप्ष्टाक्षरा भवन्ति। सर्वस्यास्य च्छन्दोविचित्यामुपदिष्टस्योपदेशः शंसितुरसंमोहार्थः संक्षेपेणोपदिष्टः।

२७. गायत्र्यादौ छन्दस्येकेन द्वाभ्यां वोनके तच्छन्दस्कैव निचृदाख्या च्छन्भवति।

२८. एकेन द्वाभ्यां वाक्षराभ्यामतिरिक्ते तच्छन्दस्कैव भुरिक्संज्ञा भवति। शस्याविकारार्थं[5] वचनम्।

२९. संपाद्यं यच्छन्दः श्रुतिवचनात्। यथा। तस्मानाछन्दस्यानां सहस्रंसहस्रं ह्येतयः संपद्यन्त इति। यथा सहस्रं च पञ्चदश चानुष्टुभः स्युस्तथैतदहः संपादयेदित्येवमादि। संपाद्यस्य च्छन्दसश्चतुर्थभागेनाहार्यस्य संपाद्यादितरस्य ऋचः संमिताः समानसङ्ख्यया मिताः। तस्माहार्यस्य चतुर्थभागेन संपन्ना भवन्ति। तद्यथा।

१ C om. चतुष्प ०तस्या। २ A ins. before इन्द्र पङ्क्तिंचमात्। ३ This passage seems doubtful. C reads ०विराजादिद। ४ B om. चत्वार। ५ B ०विकार०।

वनस्पतिः स्विष्टकृदिलामार्जनं चेत्येतत्पशुकर्म[1] कृत्वातः पुरोलाशैः सवनीयैश्चरन्ति। इत्ययं पदार्थक्रमः। अथ स्तुते पवमाने पशुना चरन्तीत्येवमादि प्रदर्शितं श्रुतौ।

---

## २.

१. तृतीये धानाः सवने पुरुष्टुतेति सवनीयपुरोलाशानां पुरोनुवाक्या भवति। होता यक्षदिन्द्रं हरिवानित्येवमादि यथासमाम्नातं यथासवनं वितारयति। तेनैव यजतीत्युक्तम्।

२. अग्ने तृतीये सवने हि कानिष इति स्विष्टकृतः पुरोनुवाक्या भवति। प्रैषो याज्या च पूर्वोक्ता।

३. इहोप यात शवसो नपात इत्युन्नीयमानसूक्तं भवति। वामदेव्यात्तृतीयसवन उन्नीयमानेभ्यो ऽन्वाहेति श्रुतेः।

४. होता यक्षदिन्द्रं तृतीयस्य सवनस्य ऋभुमतो विभुमतो वाजवत इत्येवमादिकः प्रैषो भवति।

५. इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमित्येतया होता यजति।

६. इन्द्रावरुणा सुतपाविमं सुतमित्येतया मैत्रावरुणो यजति।

७. इन्द्रश्च सोमं पिबतं बृहस्पत इत्येतया ब्राह्मणाच्छंसी यजति।

८. आ वो वहन्तु सप्तयो रघुष्यद इत्येतया पोता यजति।

९. अमेव नः सुहवा आ हि गन्तनेत्येतया नेष्टा यजति।

१०. इन्द्राविष्णू पिबतं मध्वो अस्येत्येतयाच्छावाको यजति।

---

१ Com इलामार्जनं च।

११. इमं स्तोममर्हते जातवेदस इत्येतयाग्नीध्रो यजति। अन्धस्वत्यो मद्वत्यः पीतवत्यो जगत्यो याज्या इत्येतासु श्रुत्युक्तं यथासंभवं लिङ्गम् ।

१२. अथाग्नीध्रीदित्येवमादि यदिह नोक्तं तत्प्रातःसवनेन समानं द्रष्टव्यम् ।

१३. वक्ष्यमाणस्यावश्यर्थानुवादः ।

१४. पुरोळाशस्य परिवापमिश्रस्येति । परिवापः सारस्वतं[1] दधि । तेन मिश्रस्य पुरोळाशस्य धौंस्त्रीन्पिण्डानच पितर इत्येवमादिना मन्त्रेण । प्रतिपिण्डं मन्त्रमावर्तयन्ते । नाराशंसानां सधानां चमसानां यथाचमसं चमसिनो दक्षिणत उपासन्ति । श्रौपासनां-स्तृतीयसवन उपासन्ति पितृनेव तत्प्रीणन्तीति (१६.१) श्रुतेः ।

---

## ३.

१. देवाय सवित्रे ऽनुब्रूहीत्यध्वर्युणोक्तः ।

२. यदर्थं प्रेषितस्तस्याभृद्देवः सविता वन्द्यो नु न इति पुरो-नुवाक्या भवति ।

३. होता यक्षद्देवं सवितारं परामिवां साविषदित्येवमादिकः प्रैषो भवति । अस्मै सुन्वते यजमानाय तस्य विकारेषु यथार्थमूहः ।

४. दमूना देव इत्येवमादिकया यजति । त्रिष्टुभं साविषद्वन्त्य पुरोनुवाक्यामनूच्य जगत्या यजतीति (१६.२) श्रुतत्वात् ।

---

[1] B सारस्वतं।

५. सावित्रग्रहानन्तरं वैश्वदेवं शस्त्रं वक्तव्यम्। तत्प्रसङ्गेनाहाव-माह। अध्वर्यो शोंशोंसावोइ इत्ययमाहावः शस्त्रादौ तृतीयसवने। वैश्वदेवाग्निमारुतयोरित्यभिप्रायो ऽग्निष्टोमे शस्त्रान्तरस्याभावात्। सन्ति च संस्थान्तरेषु उक्थ्यादीनि शस्त्राणि तृतीयसवन एव। तेषामप्याहावो ऽयमिष्यते तदर्थं सोवच इत्याह।

६. तृतीयसवने ऽन्तःशस्त्रं प्रातःसवनिक आहावः। पूर्वसूत्रोक्तेषु शस्त्रेषु शोंसावो इत्ययं भवति।

७. तृतीयसवने प्रातःसवनिकः शस्त्राधिकारस्यानुवर्तते। न चान्तःशस्त्रमिति[1]। षोडशिप्रभृतौ च तृतीयसवने [2]शस्त्रादावन्तर-विशेषेण प्रातःसवनिक आहावो भवति।

८. तत्सवितुर्वृणीमहे ऽद्या नो देव सवितरित्येतौ तृचौ प्रति-पदनुचराख्यौ वैश्वदेवाख्यस्य शस्त्रस्य भवतः। वैश्वदेवाधिकारो इतश्च यजेत्युक्त इति यावत्।

९. अभूद्देवः सविता वन्द्यो नु न इति सावित्रं सूक्तं सनिविल्कं शंसेत्। सावित्र शंसतीति (१६.२) श्रुतत्वात्।

१०. एकया चेत्येवमादिकां शंसति। वायव्यां शंसतीति श्रुतत्वात्। श्रुत्युक्ता चास्याः शास्त्रसंव्यवहारार्था वायव्येति संज्ञा द्रष्टव्या।

११. प्र द्यावा यज्ञैः पृथिवी ऋतावृधेत्येतद्द्यावापृथिवीयाख्यं सूक्तं सनिविल्कं शंसेत्। द्यावापृथिवीयं शंसतीति श्रुतत्वात्।

१२. अस्मिन्सूक्ते मदशब्दवानध्वर्युणा प्रतिगरः कार्यः। तस्मिन्नध्वर्युर्मदवत्प्रत्यागृणातीति श्रुतेः। श्रुत्यनुकरणार्थं च सूत्रमस्मोहाय।

---

१ C (orig.) नचान्त। २ B शस्त्रेषु instead of शस्त्रादावन्तर।

१३. सुरूपक्रत्नुमूतय इत्येतां शंसेत्। एकापदणं सूक्तनिदर्शनार्थम्। एकेति प्रथमानिर्देशः संज्ञाभिप्रायेण। सुरूपकृत्नुमित्येषेवाख्याः शास्त्रसंव्यवहारार्था संज्ञा भवति।

१४. तच्चत्वं सुद्दतं विद्मनापस इत्येतत्सूक्तमार्भवाख्यं मनिविल्कं शंसेत्। आर्भवं शंसतीति श्रुतत्वात्।

१५. अयं वेनश्चोदयत्पृश्निगर्भा इत्येका। येभ्यो माता मधुमत्पिन्वते पय इत्येका। एवा पित्रे विश्वदेवाय वृष्ण इत्येका। एता एकपातिन्यो नाम शंसेत्। अथ वै नामादित्यां बार्हस्पत्यामिति शंसतीति (१६.२) श्रुतत्वात्।

१६. आ नो भद्राः क्रतवो यन्तु विश्वत इत्यस्य वैश्वदेवाख्यस्य सूक्तस्योत्तमे द्वे ऋचौ शिष्ट्वा निविदं दध्यात्। आनोभद्रीयस्य धर्मविधानसंबन्धानुवादेन शंसनविधिः। वैश्वदेवं शंसतीति श्रुतत्वात्। अवध्यर्चा निविदनुवाद उत्तमाः परिशिष्य तृतीयसवन इति प्राप्ते[1]।

१७. आ नो भद्रा इत्येतस्य सूक्तस्योत्तमा वैश्वदेवस्य शस्त्रस्य परिधानीया भवति। तस्या धर्मविशेष उच्यते।

१८. पच्छो द्विःशंसनमर्धर्चशःप्रातीयं कार्यम्। तस्य द्विः पच्छः परिधानीयां शंसत्यर्धर्चशःप्रातीयमिति श्रुतत्वात्।

१९. [2]उक्थवीर्यं भूतमसीत्येवमादिकं जपित्वा विश्वे देवाः शृणुतेमं हवं म इत्येतया यजति। पौलगाहावं वैश्वदेवं शंस-

---

१ C शार्थे। २ C (in marg.) वषतीन।

तीति प्रक्रम्य तत्सप्तदशविधं भवत्येकादश देवतास्तस्रो निविद उक्थवीर्यं याज्येति (१६.४) श्रुतत्वात् ।

---

## ४.

१. एतस्य यजेत्यध्वर्युणोक्तः घृतं मिमिक्षे घृतमस्य योनिरित्येतयोपांशु यजति ।

२. सौम्यस्य यजेत्यध्वर्युणोक्तस्त्वं सोम पितृभिः संविदान इत्येतया यजति ।

३. परीज्यार्थम् ।

४. उरु विष्णवित्यादिकयोपांशु यजति । यागत्रये यथासंख्यमग्निः सोमो विष्णुरिति देवताः श्रुतिमन्त्रलिङ्गाभ्याम् ।

५. परीज्या सौम्यस्योभयत उपांशुविशिष्टो घृतयागाख्य आज्यद्रव्यको यागः । एषो ऽन्यतरतो[१] वा कर्तव्य उभयतो वेति ।

६. सौम्यं चरुं [२]यागावशेषमाज्यमिश्रं सदो नयन्त्यध्वर्यवस्तं होतावेक्ष्य तत्र यत्सर्पिस्तदङ्गुलिभ्यामुपस्पृशेत् । शाखान्तरात् । स्वशाखायां तु हरन्त्येतं सौम्यं सदस्तं होता प्रतिगृह्योपनिधत्ते ऽथास्य सर्पिष्यात्मानं पर्यवेक्ष्याङ्गुलिभ्यां सर्पिरुपस्पृशतीति (१६.५) श्रुतिदृष्टेः प्रतिग्रहोपनिधानात्मावेक्षणैः सह विकल्पः ।

७. यत्तदङ्गुलिभ्यां सर्पिरुपस्पृष्टं तेन चक्षुषी विमार्ष्टि ।

---

१ A ष श्रुत्यन्तरत एकतो वा कर्तव्या, C यागः स श्रुत्यन्तरत एकतो in marg.
२ B यागविशेषं ।

चक्षुष्पा इत्येवमादिना मन्त्रेण संस्कारो ऽपि सन् वचनाद्धोतुर्भवति न यजमानस्य। तमुद्गातृभ्यः प्रयच्छतीति वैकल्पिकत्वात्र सूचितम्। तथा च कात्यायनः। आज्यमाविच्योद्गातृभ्ये सौम्यं प्रयच्छतीत्याह।

## ५.

१. अग्नीत्पात्नीवतस्य यजेत्यध्वर्युणा संप्रेषित आग्नीध्र ऐभिरग्ने सरथं याह्यर्वाङिव्येतयोपांशु यजति। अथ पात्नीवतग्रहेण चरन्तीत्युपक्रम्य पात्नीवतस्य श्रुतौ (१६.२) सर्वमाम्नातम्।

२. वषट्कृते आग्नीध्रो हुतशेषमभक्षयित्वा ग्रहपात्रमादाय पूर्वया द्वारा सदः प्रपद्य वक्ष्यमाणकं करोतीति वाक्यशेषः।

३. नेष्टा ध्वलिङ्गस्य समीपे उत्तरत उपविश्य।

४. उपस्थे वा नेष्टुरुपविशेत्। अग्नीन्नेष्टुरुपस्थमासीदेति संप्रेषितत्वात्।

५. नेष्टुरुपक्रयस्व इत्युपहूय नेष्टारं ततः।

६. तं पात्नीवतं ग्रहं भक्षयित्वोपस्पृश्य तत उरोऽभिमर्शनादि कुर्यात्।

७. यथेतमिति यथागतं प्रत्येत्य प्रत्यागच्छेत्पूर्वयैव द्वारा।

## ६.

१. स्तोत्रवदेतच्छस्त्रमाग्निमारुताख्यमित्यस्यार्थस्य ज्ञापनार्थमेतत्सूत्रम्।

२. वैश्वानराय पृथुपाजसे विप इत्येतत्सूक्तं वैश्वानरीयाख्यं

सनिविल्कमाग्निमारुतस्य शस्त्रस्य प्रथमं भवति। वैश्वानरीयं शंसतीति (१६.७) श्रुतेः।

३. आ ते पितर्मरुतां सुम्नमेत्वित्येका। रौद्रीं शंसतीति श्रुतत्वात्।

४. प्रत्वक्षसः प्रतवसो विरप्शिन इति मारुताख्यं सनिविल्कं सूक्तं शंसेत्। मारुतं शंसतीति श्रुतत्वात्।

५. यज्ञा यज्ञा वो अग्नय इति स्तोत्रियः। देवो वो द्रविणोदा इत्यनुरूपः। एतौ स्तोत्रियानुरूपौ प्रगाथौ यज्ञायज्ञीयस्य भवतः। अथ यज्ञायज्ञीयस्य स्तोत्रियानुरूपौ तौ वै मध्ये भिथा एव शंसतीति श्रुतेः।

६. प्र तव्यसीं नव्यसीं धीतिमग्नय इति जातवेदसीयाख्यं सनिविल्कं सूक्तं भवति। जातवेदसीयं शंसतीति श्रुतत्वात्।

७. आपो हि ष्ठा मयोभुव इत्येतास्तिस्रः शंसति।

८. तिस्र इति मन्त्रतं पूर्वसूत्रे तत्संदेहनिवृत्त्यर्थमेकाग्रहणम्।

९. देवानां पत्नीरुशतीरवन्तु न इत्येते द्वे भवतः।

१०. राकामहं सुहवां सुष्टुती हुव इत्येते द्वे भवतः।

११. अविदद्दक्षं मित्रो नवीयानित्येतास्तिस्रो ऽक्षरपङ्क्तिसंज्ञाः शंसेत्।

१२. उदीरतामवर उत्परास इत्येताः पैत्रीसंज्ञिकास्तिस्र शंसेत्।

१३. इमं यम प्रस्तरमा हि सीदेत्येका। मातली कव्यैर्यमो अङ्गिरोभिरित्येका। अङ्गिरोभिरा गहि यज्ञियेभिरित्येका। एतास्तिस्रः शंसेत्। संज्ञाकरणं शास्त्रसंव्यवहारार्थम्।

१४. स्वादुष्किलायं मधुमाँ उतायमित्येतास्तिस्रः स्वादुष्किलीयाः शंसेत्। संज्ञाकरणमापोहिष्ठीयानां देवानां पत्नीनां राकायाश्चाचरपङ्क्तीनां पैत्रीणां यामीनां स्वादुष्किलीयानां चेत्येवमाद्यर्थम्।

१५. शाखान्तरात्[१]।

१६. ययोरोजसा स्कभिता रजांसीत्येवमादिकां शंसेत्। वैष्णुवारुणीं शंसतीति श्रुतत्वात्। विष्णोर्नु कं वीर्याणि प्र वोचमित्येका। तन्तुं तन्वन्नजसो भानुमन्विहीत्येका। वैष्णवीं चाग्नेयीं च शंसतीति (१६.८) श्रुतत्वात्। एकपातिन्य इति शास्त्रसंव्यवहारार्थं संज्ञाकरणम्।

१७. एवा न इन्द्रो मघवा विरप्शीत्येतया परिदध्यात्। ऐन्द्र्या परिदधातीति श्रुतेः। विशेषस्तु शाखान्तरात्।

१८. उक्थवीर्याख्यं तेजो ऽसि दृष्टिरसीत्येवमादिकमग्निर्गीतवेदा इत्यस्मा निविदो ऽनन्तरमाम्नातं तत्कपिला पाठक्रमात्।

१९. अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिरित्येतया यजति। उक्तानि मरुत्वतीयनिष्केवल्यवैश्वदेवाग्निमारुताख्यानि शस्त्राणि तेष्वन्यदपि किं चिद्वक्तव्यं। तदर्थमाह।

---

१ A समाचात्, B C शाखान्तरात्। C (in marg.) गाः स्वयंप्रैषदन्यत्या- भवतीति श्रुतत्वात्।

## ७.

१. आयनिगदप्रतिषेधार्था निविदां पाठ उत्तरच कृतस्तत्र या प्रथमा निवित्सा मरुत्वतीयस्य भवतीन्द्रो मरुत्वान्सोमस्य पिबत्वित्येवमादिका ।

२. द्वितीया निष्केवल्यस्य भवतीन्द्रो देव इत्येवमादिका ।

३. तृतीयाप्रभृतयो निविदो वैश्वदेवाग्निमारुतयोः सप्त। तत्र चतस्रो वैश्वदेवे तिस्र आग्निमारुते ।

४. उत्तमा निवित्षोळशिनो भवत्यस्य मदे जरितरिन्द्र इत्येवमादिका ।

५. यावन्ति यस्मिञ्छस्त्रे सूक्तानि तावत्य एव तत्र निविदः। एकादश देवतास्तस्रो निविद इति वैश्वदेवे दर्शनात् सूक्तदेवतासंयोगाच्च ।

६. वैश्वदेवाग्निमारुतयोरिति वर्तते । वैश्वदेवाग्निमारुतयोः प्रतिसूक्तं पुरस्तादाहावः ।

७. निविदोनिविदश्च पुरस्तादाहावः।

८. पुरस्तात्पुरस्तादाहावः। अभ्यधिकाया अपि विकृतिष्वेकैकस्या इति यत्नात् ।

९. सकृच्चतुर्थी निर्देशात् ।

१०. प्रत्येकमाहावः। षोळशाहावं वैश्वदेवं शंसतीति (१६.४) श्रुतेः।

११. प्रत्येकमाहावः । संख्यानियमात् ।

१२. आग्निमारुत एवाधिकारात्। ततो न शस्त्रान्तरे वाचःस्तोमे ऽपि।

१३. आग्निमारुताधिकारात्। ततो न वैश्वदेवे इयो न विद्वानिति शंसनप्रसङ्गेन।

१४. पुरस्तादाहावः। आग्निमारुत एवाधिकारात्।

१५. पूर्ववद्व्याख्या।

१६. तस्मादेना अन्त्ये शस्त्रे शंसतीति (१६.७) श्रुतिदर्शनात्। वाच.स्तोमे ऽपि। नान्यत्र शंसनमासाम्। तस्मादाग्निमारुत एव शंसनमाहावश्च।

१७. पूर्ववद्व्याख्या।

१८. अग्निमारुत एव पुरस्तादाहावः प्रकृतत्वात्। अन्यत्र शंसने सत्यप्याहावो न भवति।

१९. वियतं विलम्बितं शंसनं वैश्वदेवस्य भवति। तस्मादेनदारतं शंसेद्रमन्ते हास्मिन्पशव इति श्रुतेः।

२०. अभ्ययं द्रुतमाग्निमारुतस्य शस्त्रं भवति आपोहिष्ठीयावर्जम्। एवमेव श्रुतेः। तस्मादेनदभ्ययं शंसेदित्याग्निमारुतं प्रकृत्य (कौ० ब्र० १६.७) तस्मादेनदारतं शंसेदित्यापोहिष्ठीयाः प्रकृत्य।

२१. अप्सु सोमाग्मादयितेत्यवध्ययंमुच्यते। अनुयाजादि शंय्वन्तं पशुकर्म इत्यत्याप्सु सोममादनेन सह संबन्धो ऽस्तीति ज्ञापनार्थम्। ततो वाजपेये शस्त्रेभ्य ऊर्ध्वं हारियोजनप्राजापत्यप्रचारवनस्पतिस्विष्टकृदिडाप्सुसोममादनं ततो ऽनुयाजादि।

---

## ८.

१. हारियोजनेन चरन्तीत्युक्तम्। तस्य हारियोजनस्य तिष्ठा सु कं मघवन्मा परा गा इति पुरोनुवाक्या भवति।

२. धानाः सोमानामिन्द्राद्धि च पिब चेत्येवमादिकः प्रैषो भवति। अस्मिन्सुन्वति यजमान इत्यत्र द्वियजमानके बहुयजमानके च विकारे यथार्थमूहो भवति। अनयोः सुन्वतोर्यजमानयोः। एषु सुन्वत्सु यजमानेषु। तस्मै किमराध्याः[1] ताभ्यां किमराध्यास्तेभ्यः किमराध्याः। यद्यदचीकमेतां यद्यदचीकमन्त।

३. युनज्मि ते ब्रह्मणा केशिना हरी इति याज्या भवति। त्रिष्टुभं हारियोजनस्य पुरोनुवाक्यामनूच्य जगत्या यजतीति श्रुतत्वात्।

४. धानाः सोमानामित्येवमादिको ऽनुवषट्कारो भवति।

५. ननु धानाः सोमानामग्ने वीहीति वानुवषट्कार इति वक्तव्यम्। ततः पचे सामान्यप्राप्तो भवति[2]। सत्यम्। सोपपदेषु[3] सोमेषु सर्वत्रैवं भवतीति प्रदर्शनार्थम्। ततश्च सुराग्रहेषु सुरासोमानामग्ने वीहीत्यनुवषट्कारः। सोमस्याग्न इति वेति सिद्धं भवति।

६. अप्सु धूतस्येत्येवमादिना मन्त्रेण प्राणभक्षान्भक्षयित्वा। सर्व एवर्त्विजः शाखान्तरात्। होतृधिष्ण्यस्यादेव द्रोणकलशादुद्धृत्य

---

१ Om in A. C in marg  २ B भविष्यति। उभयत्र। C प्राप्तो। सत्य in marg  ३ C (by marg. alt) सोमपदेषु।

प्राणभचः। तान्[१] सवपङ्क्त्वे हरतीत्यन्यत्र स्वासनस्थस्यैव वषट्कर्तुर्भच-हरणम्[२]। इह तु भचं हरेदिच्छन्निति कात्यायनवचनादिकल्पः। प्राणभचादनन्तरं सर्व एव धाना व्याददते[३]।

७. तासां भूयिष्ठा धानानामाददीतेति श्रुतेः।

८. येन द्वारेण सदः प्रातःसवने प्रसर्पन्ति तेनेह निःसर्पन्ति। पूर्वेणेति नोक्तम्। पश्चिमेन प्रातःसवने ब्रह्मणः प्रवेशात्।

९. यथा ह त्यदसवो गौर्यं चिदित्येवमादिकयर्चा सर्व एवर्त्विजो धिष्ण्यान्समीच्याग्नीध्रीयं धिष्ण्यमुत्तरेणाहवनीयमागच्छन्ति।

१०. भूर्भुवः स्वः स्वाहा स त्वं नो अग्ने ऽवमो भवोती। त्वं नो अग्ने वरुणस्य विद्वान्। तदस्तु मित्रावरुणा तदग्ने। इत्येतैर्मन्त्रै-राग्नीध्रीये चतस्र आहुतीश्चतुर्गृहीतवतीः सर्व ऋत्विजो जुह्वति। अनिमित्त एव। प्रायश्चित्ताहुतीरिति वचनाच्चतुर्गृहीत-सिद्धिः।

११. आयुरस्मा गोत्येवमादिकेन मन्त्रेणाहवनीयस्य भस्मान्त-प्रदेशे भस्मन्येव। स वह्निः। योनिर्वै[४] पशूनामाहवनीय इति दर्शनात्। धाना न्युप्य मस्मान्तेन भस्मान्ते धानाः प्रक्षिप्य ततः पशुपशु यूपशकलामाहवनीय एवादधते। वषट्प्रमाणैर्मन्त्रैः।

---

१ A ॰भचः। तानुप स॰, C प्राणभच-तान्, B ॰भचिताम् सव॰। २ B ॰हरणम्, A C ॰भचहरण। ३ आददते all mss. ४ B योनिर्वै, A C योनिर्वै।

## ६.

१. एतैरस्यन्तैर्मन्त्रैस्तिष्ठन्तः शकलाञ्जुह्वति ।

२. शकलाधानादनन्तरं सव्यं बाह्वमन्वावृत्योत्तरेणाहवनीयमप्सु सोमान्सन्नान्यथाखं चमसान् पश्चादुपोपविश्य दर्भपवित्रैर्वक्ष्यमाणेन मन्त्रेण चेष्टयन्ते चालयन्तीत्यर्थः ।

३. समाप इत्येवमादिना मन्त्रेण दर्भपिञ्जूलैश्चमसस्थद्रव्यचेष्टनं कुर्वन्ति ।

४. चेष्टयितार उच्चैर्मन्त्रमाङ्करकर्मकरणत्वात् ।

५. अप्सु धूतस्येत्येवमादिना मन्त्रेण प्रतिचमसं प्राणभक्षान् भक्षयन्ति ।

६. अच्छायं वो मरुतः श्लोक एतु । ययोरोजसा स्कभिता रजांसीत्याभ्यां मन्त्राभ्यां प्रतिचमसमापो यास्ताः प्राचीर्निनयेयुः । उदीचीर्वा ।

७. समुद्रं वः प्र हिणोमीत्येवमादिना मन्त्रेण ता एवाभिमन्त्रयेयुः ।

८. शं नो देवीरभिष्टय इत्येवमाद्याभिश्चतसृभिरपोऽभिमृश्य ।

९. उक्तार्थमेतदर्धकर्मणि । ननु निनयनप्रभृति मुखविमार्जनान्तं पूर्ववदिति लाघवार्थं वक्तव्यम् । उच्यते । यजमानस्यैव केवलस्य मा भूदिति पुनरुक्तम् ।

१०. दक्षिणावृत ऋत्विज आग्नीध्रीयसमीपमागत्य दधिभक्षणं

कुर्युः। यथा दधिभक्षमित्यनेन दधिक्राव्णो अकारिषमिति मन्त्रसिद्धिः।

११. सौत्ये ऽहनि सावनस्य पशोः शाखान्तरे प्रविभागेन कर्म चोदितम्। वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यन्दिने ऽङ्गैस्तृतीयसवन इति। तत्राप्येकत्र मनोतादीडान्तम्। अपरत्रा-नुयाजादि शंय्वन्तम्। इह तृतीयसवने पत्नीसंयाजान्संस्थाप्य कृतेषु नवसु समिष्टयजुःष्वस्मिन्नवसरे ऽवभृथाख्यं कर्म कर्तुमपो ऽभ्यवैति।

---

## १०.

१. पुनर्मामैत्विन्द्रियमित्येवमादिना मन्त्रेण यजमानो धिष्ण्यां-स्तत्समीक्षते तस्याचावसरः।

२. ऋत्विजो वागुपध्यायां संस्थितायां यजमानः समीक्षेतोभा कवी युवाना सत्येत्येवमादिना मन्त्रेण। वाग्यब्दो धिष्ण्यसमीक्षणेन सह विकल्पार्थः।

३. उरुं हि राजा वरुणश्चकारेत्येवमादिकं मन्त्रमनुसंयन्त्रपति।

४. सर्वे कर्तारो ऽवभृथमाप्नो निधनमुपासारयेयुः।

५. नमो वरुणायेत्येवमादिना मन्त्रेणाप्सु यजमानः पादमव-दध्यात्।

---

११.

१. अप्सवभृथेन चरन्तीति श्रुतेरर्थवादादप्सु वारुणीष्टिर्भवति।

२. वार्त्रघ्नावाज्यभागौ भवत इति श्रुतत्वात्।

३. अप्स्वग्ने सधिष्टवेत्याग्नेयः। अप्सु मे सोमो अब्रवीदिति सौम्यः। अप्सुमन्तौ हैके कुर्वन्तीति (१८.१०) श्रुतत्वात्। अप्सु मे सोमो अब्रवीदिति परापि सती गायत्री परिगृह्यते प्रायोवचनात्।

४. सर्वमवभृथकर्म तिष्ठन्करोति। शाखान्तरात्।

५. उदुत्तमं वरुण पाशमस्मात्। अव ते हेलो वरुण नमोभिरिति प्रधानस्य याज्यानुवाक्ये।

६. स त्वं नो अग्ने ऽवमो भवोती। त्वं नो अग्ने वरुणस्य विद्वानिति स्विष्टकृतो याज्यानुवाक्ये स्थानान्तरे कुर्यात्। अग्नीवरुणावादिशतीति वचनात्। प्राकृतस्याग्निं स्विष्टकृतमित्यस्य निवृत्तिः।

७. स्विष्टकृन्निगदम्। प्रकरणात्।

८. स्विष्टकृन्निगदमेव वेति विकल्पार्थः।

९. बर्हिःसंज्ञकवर्जितान् प्रयाजानुयाजान्यजति।

१०. वारुणीष्टिरेतावती भवति।

११. स्विष्टकृदन्ता वेयमिष्टिर्भवति शाखान्तरात्।

१२. षडाकृतिपचे[1] प्रयाजचतुष्टयं। वरुणः[2] अग्नीवरुणौ वैता-

१ C षडाकृति। २ B C (orig) वरुणम्, A च। रुणा०।

वद्भवति। अथ याः षड्वा अष्टौ वा वषट्कृतय इति (१८.१०) श्रुतत्वात्। पञ्चत्वं सूचितम्।

१३. येन स्त्रियावित्येवमादिना मन्त्रेण होतात्मानमभ्युक्ष्यते। होतृवचनं यजमाननिवृत्त्यर्थम्।

१४. उपेच्छिवेत्येवमादिकं मन्त्रं यजमान आगच्छन्जपति।

१५. इदो सहस्रदक्षिण इत्येवमादिना मन्त्रेण यजमानः स्वासन उपविशति।

१६. आहवनीये यजमानः स्वासनोपवेशनात् ऊर्ध्वं समिधावादधाति। देवानां समिदसीत्यनेन मन्त्रेण पूर्वाममन्त्रिकामुत्तराम्।

१७. द्विरेवादधाति[1]। पूर्वामुत्तरामिति प्रकृतत्वात्।

---

## १२.

१. प्रायणीयया उदयनीया तुल्येत्यर्थः।

२. याः प्रायणीयायां पुरोनुवाक्यास्ता उदयनीयायां याज्याः करोति या याज्यास्ताः पुरोनुवाक्या इति (७-८) श्रुतेः।

३. अयं चोदयनीयायां विशेषः।

४. अग्निं प्रथममुदयनीये यजत्यथ सोममथ सवितारमथ पथ्यां स्वस्तिमथादितिमिति श्रुतौ यागक्रमनियमात्।

---

१ C इ रवा०।

५. उदयनीयायां अनन्तरं मित्रावरुणदेवताका वशा वन्ध्या[1] गौरनूबन्ध्याख्या कर्तव्या ।

६. पयस्या वा मैत्रावरुणी भवति । न गौरेवानूबन्ध्येति । एवं नु यदि पशुरनूबन्ध्या भवति यद्यु वै पयस्येति (१८. १२) श्रुतत्वात् ।

७. आ वां मित्रावरुणा हव्यजुष्टिमिति वपायाः। तत्सु वां मित्रावरुणा महित्वमिति पुरोडाशस्य । आ नो मित्रावरुणा हव्यजुष्टिमिति हविषः । अप्रथमापि त्रिष्टुप्प्रायात् ।

८. युवं वस्त्राणि पीवसा वसाथे इति वपायै याज्येति श्रुतेः। यद्बंहिष्ठं नातिविधे सुदानू इति पुरोडाशस्येति श्रुतेः । प्र बाहवा सिसृतं जीवसे न इति हविष इति (१८.१२) श्रुतेः ।

९. दीक्षणीयात आरभ्य यावदनूबन्ध्यासमाप्तिः तावद्दर्शपूर्णमासविकारेषु कर्मसु न वेदे पत्नीं वाचयति न च वेदं स्तृणाति ।

१०. स्मरणप्रदेशविशेषार्थः सूत्रारम्भः ।

११. मापो मौषधीरित्येवमादिना मन्त्रेण हृदयशूलोपस्थानं कुर्यात् । द्विंषिष्टं शुचौ स्थ इति द्वयोः सतोः । द्विंषिष्ट शुचः स्थ इति बहुषु । तं वां शुचाऽऽच्छताम् । तं वः शुच आच्छन्तु । एवं यथार्थमूहः ।

१२. सुमित्रिया न इत्येवमादिना मन्त्रेणाप उपस्पृश्य ततः ।

१३. दुर्मित्रिया इत्येवमादिना मन्त्रेण ता अपो दक्षिणा क्षिपन्ति पशुकर्तारः ।

---

[1] A om वन्ध्या, गौर् C अनूबन्ध्या instead of वन्ध्या ।

१४. नाशब्दात्सकलाङ्गकलापा वा।

१५. दधन्वन्तावाज्यभागावित्यर्थः।

१६. स्विष्टकृन्निगदरहितैतावन्ता कर्तव्या।

---

## १३.

१. देवयजनप्रदेशादुदङ्गवसानं कृत्वा तस्मिन्प्रदेशे वैष्णव्यर्चा न तूष्णीं यद्येतिकर्तव्यतया पूर्णाहुतिं केवलां हुत्वोदवसानीयाख्ययेष्ट्या यजति।

२. उदवसानीयाख्या आग्नेयीष्टिः सद्यःकाला भवति।

३. वार्त्रघ्नावाज्यभागावित्यर्थः।

४. याः पुनराधेये प्रधानहविषः स्विष्टकृतश्च याज्यानुवाक्या उक्ता अग्ने तमद्येति व्यतिषक्ता इहापि तास्तथैव भवन्ति।

५. पञ्चकपाले क्रियमाणे पौनराधेयिकीष्टिर्भवति।

६. समाप्तायामुदवसानीयायां सायंतनहोमविधिना यजमानोऽग्निहोत्रं जुहोति। सस्थितायामिति वचनादनन्तरमेव। अथ यदैवैषोदवसानीयेष्टिः संतिष्ठते ऽथ सायमाहुतिं जुहोति काल एव प्रातराहुतिमिति शतपथे श्रुतत्वात्।

---

## १४.

१. उक्तानि सवनानि। धर्मविशेषाः केचिदतोऽनन्त उच्यन्ते। मन्द्रया वाचा मन्द्रेण स्वरेण प्रातःसवनं प्रयुञ्जीत।

२. आज्यादुत्तरां सवनं प्रयुञ्जीत।

३. मध्यमया वाचा कण्ठस्थेन मारुतेन माध्यन्दिनं सवनं प्रयुञ्जीत।

४. ईषदर्थे तरप्शब्दः। स्वस्थानादप्रच्यवन्नुच्चैस्तरां मरुत्वतीयान्निष्केवल्यं प्रयुञ्जीत।

५. तारस्थानप्रयोगेण।

६. उच्चैस्तरामाग्निमारुतमित्यर्थः।

७. कल्पान्तरमेतत्। नात्रोच्चैस्तरां निष्केवल्यमिति विशेषः।

८. सर्वमेवाविशेषात्।

९. तृतीयसवनमेवानन्तर्यात्।

---

## १५.

१. यस्मै प्रयोजनाय कश्चिन्मेष्यति स तस्यापवर्गाद्वाग्यमनं करोति।

२. वाचं यच्छतीति वर्तते। शस्त्रादौ य आहावस्तत्प्रभृत्यानुवषट्काराच्छंसितुर्वाग्यमनम्।

३. प्रातरनुवाके ऽनूच्यमाने ब्रह्मा वाग्यतो भवति।

४. चमसभक्षादनन्तरमा स्तोत्रप्रसवाद्वाग्यमनम्।

५. प्रसवप्रभृति च यावदनुवषट्कारस्तावद्वाग्यमनम्।

६. इह मद एव मघवन्नित्येवमादिको ऽतिप्रैषस्तदन्तं श्रुत्वा ब्रह्मणो वाग्यमः। आग्नीध्रेणाप्युक्ते आ वसतीवरीणां परिहरणात्। प्रायणीये वा यथासमाम्नातमिति तद्वदतिप्रैषः स्यात्तत आ पत्नीसंयाजेभ्यो वाग्यमनं वसतीवरीणां परिहृतत्वात्।

७. यस्ते द्रप्सः स्कन्दति यस्ते अंशुः द्रप्सश्चस्कन्द प्रथमाँ अनु द्यूनित्याभ्यामृग्भ्यामृचमृचं विप्रुषां संबन्धी होमः। या एवास्यात्र विप्रुषः स्कन्दन्ति ता एवैतदाहवनीये स्वाहाकरोतीति श्रुतेः। न चैतत् सोमस्कन्दनप्रायश्चित्तं[1] नित्यत्वादस्य पुरस्तात्पवमानानामिति प्रतिपवमानम्।

८. समन्वारब्धान्सर्पतस्तथैव ब्रह्मानुसर्पति।

९. अन्वारब्धो ऽनुसर्पति। न च होमं करोति। पृथग्योग-करणात्।

१०. चानुक्रष्टमुत्तरत्र नानुवर्तत इति न्यायाद् ब्रह्मेत्येतदनु-वर्तते। अग्निचित्यायामिष्टकाम्काले यदग्निप्रणयनं तस्मिन्नग्नौ प्रणी-यमाने ब्रह्मा जपत्यप्रतिरथाख्यमाशुः शिशान इति सूक्तम्।

११. होमार्थं नीयमानं महावीरमनुरुंयन् ब्रह्मा जपति विश्वा आशा इत्येवमादिकं मन्त्रम्।

१२. अश्विना घर्मं पातं हार्दानमहर्दिवा इत्येवमादिकं मन्त्रं वषट्कृते महावीरद्रव्ये हूयमाने ब्रह्मा जपति।

१३. अपातामित्येवमादिकं मन्त्रं ब्रह्मानुवषट्कृते जपति। प्रधानशेषो ऽयं जपो ऽनुवषट्कृते कालः।

१४. दक्षिणतोन्यायं ब्रह्मकर्मेत्येवमादि यदिहानिर्दिष्टं सम्ब-मानं तुल्यमिहापि द्रष्टव्य ब्रह्मकर्म। ऋत्विक्साधारणं यत्कर्म धिष्ण्योपस्थानरचनाधारणादिकं तदपि ब्रह्मणो भवत्येवाविशेषात्।

---

१ C in marg. स्कन्दने च श्री।

चतुर्थे ऽध्याये ब्रह्मत्वं विधाय सोमे चेति नोक्तम्। यजमानप्रकरणे ऽवान्तरप्रकरणेन ब्रह्मत्वविधानात्। सोमे चेत्युच्यमाने याजमानमपि चतुर्थविहितं सोमे स्यात्। तन्निवृत्त्यर्थं तत्र सोमे चेति नोक्तम्। प्राप्ते ऽपि को दोषः स्यात्। सोमानां प्राग्घोमाद्ध्रुवा असदन्नित्यभिमर्शनमग्ने वायो विद्युदित्येवमादिकमभिध्यानमनुपदस्येत्यादिनाकाशादिध्यानं[1] निष्केवल्यग्रहहोमान्ते च स्यात्[2]। तत्प्रधानत्वात्सोमस्य।

१५. निर्दिष्टानिर्दिष्टमेतत्सोमे ब्रह्मकर्म। नान्यत्। ततस्तयोदशाध्यायविहितमनष्टमे[3] निर्दिष्टं महावीरभिन्नानुमन्त्रणादि ब्रह्मणो न भवतीति। सोमे ब्रह्मकर्मेति परिसङ्ख्यानात्।

निविदामनन्तरं पाठः [4]पदच्छेदविज्ञानार्थ ऐतरेयिपाठव्युदासार्थश्च। उक्थवीर्याणां च न स्वस्थाने पाठः।

अनुष्टुप्स्तु यः कश्चित्कल्पे ऽथ ब्राह्मणे ऽपि वा।

मन्त्रः पद्यो ऽथ गद्यो वा वामदेवं निबोधत॥ इति।

वामदेवार्षता मा भूत्। निविदां तु मध्ये पाठादुक्थवीर्याणामपि विश्वामित्र ऋषिर्भवति। तन्मध्यपठितत्वात्। निवित्पुरोरुचः प्रैषा विश्वामित्रस्य सर्वश इति। प्रयोगकाले च ऋषेरभिध्यानं श्रुत्यन्तरदर्शनात्।

---

१ B •दिकमाकाशा•। २ B C om च स्यात्। ३ B •चसप्तमे।
४ B पाद•।

१६.

अवद्ध्माणावसा गमदित्येवमन्ता मरुत्वतीये निविद्विंशत्य-वसाना। प्रेमं सुन्वन्तं यजमानमवत्वित्यस्य यथार्थमूहो यजमान-द्वित्वबहुत्वयोः।

---

१७.

निष्केवल्यस्येयं निवित्सह पूर्वैः पञ्चभिः प्रेमां देवो देवहूति-मवतु देव्या धियेत्याद्यैरूनविंशत्यवसाना।

---

१८.

साविची निविदियं सह पूर्वैः पञ्चभिः विंशत्यवसाना।

---

१९.

द्यावापृथिवीयेयं निवित्त्रयोदशावसाना। ऊहः प्रेमं सुन्वन्तं यजमानमिति यजमानद्वित्वबहुलयोः।

---

२०.

आर्भवीयेयं निवित्सप्तदशावसाना। अस्यां प्रेमं सुन्वन्तं यज-मानमिति यथार्थमूहो विकारेषु।

---

२१.

वैश्वदेवीयं निवित्सह पूर्वैः पञ्चभिरूनत्रिंशदवसाना।

---

## २२.

वैश्वानरीया इयं निवित्सह पूर्वैः पञ्चभिः पञ्चदशावसाना।

## २३.

मरुत्वतीयं निवित्पूर्वैः पञ्चभिः सह चतुर्दशावसाना।

## २४.

जातवेदसीयं निवित्पूर्वैः पञ्चभिः सह षोलशावसाना अस्यां निविदि समेद्धारमित्येतत्पदं यजमानाभिधायि तस्य विकृतिषु यथार्थमूहः।

## २५.

१. षोलशिन इयं निवित्पूर्वैः पञ्चभिः सह षोलशावसाना सर्वासु निवित्स्ववसाने प्रणवः शुद्धः।

२. नाक इत्येकारान्तं शाखान्तरदृष्टत्वात्।

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति।

शाङ्खायनकल्पस्य सम्यं शिष्यहितेच्छया।
वरदत्तसुतो भाष्यमानर्तीयो ऽकरोन्नवम्॥

इति शाङ्खायनसूत्रभाष्ये ऽष्टमो ऽध्यायः समाप्तः।

THE

# ŚĀṈKHĀYANA ŚRAUTA SŪTRA

TOGETHER

## WITH THE COMMENTARY

OF

## VARADATTASUTA ĀNARTĪYA

EDITED BY

ALFRED HILLEBRANDT, PH. D

PROFESSOR OF SANSKRIT IN THE UNIVERSITY OF BRESLAU

## VOL. III
Adh IX–XVI

THF COMMENTARY OF VARADATTASUTA ĀNARTĪYA

New Series Nos 827, 835 853, 892.

---

*PUBLISHED FOR THE BIBLIOTHECA INDICA*

---

CALCUTTA

PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL,

57, PARK STREET

1897

# PREFACE, VOLUME III

It is with a certain degree of hesitation that I lay this volume before the public on account of its many deficiencies owing partly to the unsatisfactory state of my manuscripts Besides the materials described in page 241 of the first volume, I had, through the kindness of the late Dr Rost, access to the manuscript belonging to the India Office (Eggeling Catalogue No 261, marked in the present edition with the letter D), but it proved to be of little value and not worthy of careful collation For it generally agrees with C, and is apparently derived from the same archetype, as will be seen from the selection of various readings, mostly intended to show the close relation of the two manuscripts Much more trustworthy and even better than C is the manuscript belonging to His Highness the Maharaja of Alwar, most kindly transmitted to me through His Excellency the Under Secretary of State for India (A) It consists altogether of 506 leaves and contains all eighteen Adhyayas Though quite modern it is a very good copy and has, in many cases, rendered me valuable service I only regret, that I have not been able once more to revise the various readings taken from it, after the original

Notwithstanding all the labour this work has cost me, I feel that I have fallen short of my own intention to present the text in a most satisfactory condition Though many difficult passages have been made the object of repeated and careful reflection I have found it impossible without further materials to offer it in a more satisfactory form On the other hand, I think that a Commentary like that of Anartiya is not edited for its own sake, but for the aid which it affords to a proper understanding of the main work In this respect, I trust my edition will meet all reasonable demands.

A H

BRESLAU,

MONHAUPT STRASSE, 14

# ADDITIONS AND CORRECTIONS

| | | | |
|---|---|---|---|
| Page 9 | line 12 | read १० १११ १ instead of ० ९ ११ | |
| 29 | 11 | ९ | ५ |
| 33 | 19 | ०ज्ञ० | ०ज्ञ० |
| 34 | 1 | अथ मिशेष इति चारि० | |
| 38 | 11 | प्राह्मतम् | |
| 45 | 21 | ०मर्यादार | |
| 49 note | 1 | over the l i e instead of in marg | |
| 54 line | 13 | ०याज्ञवल्का | |
| 56 | 14 | श्रुतत्वात् | |
| | 18 | श्रुते | |
| | note 1 | ०दृश | |
| 57 | | वैश्वानरीय | |
| 71 | 4 | C (orig) | |
| 74 | 1 | C वैसर० | |
| 75 | 1 | insert the Visarga | |
| 95 line | 17 | read ९० ९ | |
| 107 | 7 | उद्व० | |
| 142 | 12 | चतुर्विंशा | |
| 145 note | 1 | C ब्रवाथ (?) | |
| 149 | 4 | परी० | |
| 150 | 2 | ०म्यून्यमाने | |
| 151 | 1 | ११ ९। instead of ९ C | |
| 165 | 2 | कुर्मोघ (?) | |
| 172 | 4 | ०चया० | |
| 175 line | 6 | ०विना रथ० | |
| 190 note | 1 | insert C ०शा० | |
| 192 | 6 | read ०भयात्तत्र | |
| 199 | 1 | ०तिह० instead of ०धि० | |

Page 204 line 6 read पशुः instead of पशः

„ 208 note 4 „ C चमरूपकुप्र॰

„ 210 „ 1 „ CD परिसंख्यापरिग॰

„ 214 line 7 „ ॰षाय्यमित्ये॰

„ 220 note 5 „ मभा॰

„ 223 „ 2 „ ॰पुरोलाग्ग

„ 234 „ 1 „ ॰द्रयंतरं

„ 236 „ 2 dele (?)

„ 248 „ 2 read युक्तं instead of यक्तं

„ 253 „ 1 insert after कथं instead of उपगतवन्तः किमर्थं-

„ 254 „ 1 after A the sign , , '

„ 273 „ 3 read om in CD

„ 274 „ 1 „ स्रजिं॰

„ 282 line 18 „ २

„ 283 note 1 „ C गन्धावि॰

„ 288 „ 3 „ ॰ह्नितवेत॰

„ 289 „ 3 „ धनुष्य॰

„ 301 line 16 „ संज्ञके

„ 309 „ 6 dele १

„ 310 „ 13 read चैत्रपत्या and cancel note 1

„ 325 note 1 „ पित्र्यामो

„ 328 line 9 „ रोचितो ऽरण्याद् ग्राम॰

„ „ note 3 „ ॰ह्वरो

„ 335 line 9 „ अश्वद्॰

„ 358 line 3 „ एतद्वेदुन

„ 360 „ 11 „ उराय

* On pages 26, 131, 156, 314, 319, note 1, should be cancelled on page 113, notes 1 and 2, and on page 161, note 6 In note page 68, omit the first three words, also the remark with regard to C in note 3, page 202, and note 1, in page 205

# अथ नवमोऽध्यायः ।

१.

व्यकारगिरां यत्र विनष्टं लेखनादिना ।
रं तद्दाशर्मा सुञ्जसूनुरकल्पयत् ॥

१. यो ऽयं व्याख्यात चत्विग्वरणप्रभृत्युदवसानीयापर्यन्त एषो ऽग्निष्टोमसंज्ञः । स वा एषो ऽग्निष्टोम इत्येवमादिश्रुतेः । प्रथमसोमस्थायम् । यो ह वा एतेनानिष्ट्वेत्येवमाद्यर्थवाददर्शनात् । प्रकृतिः । चतुःसंस्थो ऽपि । द्वादशाहस्येति द्वादशसुत्यः क्रतुर्द्वादशाहवाच्यः । तस्य चायं प्रकृतिः । एकसुत्या एकाहाः । विषुवदादयः । एतेषां चायं प्रकृतिः । प्रकृतावगतायां विकृतिषु सुखमवगमो भवतीति प्रकृतिकथनम् ।

२. तस्येत्यग्निष्टोमः परामृश्यते । तस्याग्निष्टोमस्य प्रकृतिरूपेण व्यवस्थितस्य[1] यो विकार उक्थ्यादिसंस्थाविशेषस्तं व्याख्यास्याम इति प्रतिज्ञाचार्यस्य शिष्यहितार्था । प्रकृतिसंबन्धेनेदं तावत्सर्वप्रकृतिविकृत्यर्थमाह ।

३. प्रकृतौ भवं प्राकृतम् । किं पुनस्तत् । पदार्थविशेषाभिधायकं नाम । तद्यथा । पञ्च प्रयाजान्यजति समिधः समिधो अग्न आज्यस्य व्यन्त्विति प्रथम इत्येवमादि तदेतत्पञ्चवाराभ्यस्तस्य विशिष्ट-

१ D om प्रकृतिरूपेण व्यवस्थितस्य ।

1

याज्यासंयुक्तस्य यजेर्नामधेयम्। एतद्दिष्टमन्यस्मिन्नर्थे श्रूयमाणमन्यसङ्ख्याविशिष्टे चैष्टिककर्तृकालभिन्नमपि पशावेकादश प्रयाजान्यजतीति श्रूयमाणं निवर्तयति। न प्राकृतेन सह विकल्पते नापि समुच्चीयत इत्यभिप्रायः।

४. प्रकृतिं निवर्तयतीति वर्तते। प्राकृतस्य वस्तुनो विकृतौ प्रतिषेधः श्रूयमाणः प्रकृतिं निवर्तयति। अत्रापि विकल्पशङ्कानिवृत्त्यर्थमिदमुक्तम्। उदाहरणम्। उत्सर्गी जपानां न निगदमात्रेत्येवमादि।

५. प्रकृतिं निवर्तयतीति वर्तते। प्राकृतो ऽर्थो विकृतौ श्रूयमाणो विकृतौ भवादर्थान्निवर्तते। तद्यथा। चतुस्त्रिंशदिति पुरस्तादक्षीणामित्यनेन (१६.२.२४) वङ्क्रीणां सङ्ख्यार्थकृतत्वात् षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्यावयतादित्येवं निवर्तते।

६. प्रकृतिं निवर्तयतीत्यनुवर्तते। प्राप्तस्य पुनर्वचनं परिसङ्ख्या। तद्यथा। वास्तोष्पते प्रतिजानीहीत्यनूच्य वास्तोष्पते शग्मयेति यजतीत्येतावदेव भवति। शिष्टं प्रकृतं धर्मजातं निवर्तयति।

७. उपजनः प्राकृतस्याभ्यधिकता। सा च प्रकृतिं निवर्तयतीति। वाशब्दश्चशब्दस्यार्थे। तस्योदाहरणम्। पञ्चपञ्च सूक्तानि निष्केवल्यमरुत्वतीययोः शस्यन्त इति। पञ्चसूत्री इयं विकल्पसमुच्चयसंदेहव्युदासार्थात्मिका। इदानीं तस्य विकारं व्याख्यास्याम इत्येतस्यानन्तरं यद्वक्तव्यं तदुच्यते।

८. अग्निमारुतादूर्ध्वं शस्त्रचयस्यागमादुक्थ्याख्यः क्रतुर्भवति।

९. एकस्य शस्त्रस्यागमादुक्थ्याख्यशस्त्रेभ्य ऊर्ध्वं षोडशी भवति।

१०. त्रयोदशानां शस्त्राणां षोडशिनः ऊर्ध्वमागमादतिरात्राख्यः क्रतुर्भवति।

११. यान्येतान्युक्थ्यशस्त्रादीन्युक्तानि एतेषामन्तरेणाग्निमारुतमनुयाजांश्च स्थानं भवति। ननु उक्तमेवैतदाग्निमारुतादूर्ध्वमित्येवमादिभिः सूत्रैः। सत्यम्। एतत्क्रमनियमो मा भूदित्येवमर्थमेतत्सूत्रम्। तेनात्यग्निष्टोमे आग्निमारुतादूर्ध्वं षोलशिग्रहे स्तुते शस्त्रं शाखान्तरात्। उक्थ्यशस्त्रेभ्यो ऽप्यूर्ध्वं नावश्यं षोलशिचरणम्। अत्रत्रापि षोलशिनं त्रयोदशागमादतिरात्रो भवत्येव।

---

२.

१. उक्थ्यशस्त्राण्युच्यन्ते। तत्र साकमश्वाख्यं स्तोत्रं मैत्रावरुणस्य। तस्मिन्स्तुते यच्छस्त्रं भवति तदाह।

२. एन्द्रू षु ब्रवाणि ते। अयं तृचः स्तोत्रियो भवति। अनन्तरो ऽनुरूपः।

३. चर्षणीधृतं मघवानमुक्थ्यमिति तृचः। अस्तभाद्द्यामसुरो विश्ववेदा इत्ययं च तृचः।

४. सूक्तमेतत्।

५. आ वां राजानावध्वरे ववृत्यामिति सूक्तम्।

६. ऐन्द्रावरुणी मैत्रावरुणस्येति श्रुतत्वात्।

---

३.

१. सौभरं स्तोत्रं ब्राह्मणाच्छंसिनो भवति। तस्मिन्सति।

२. वयमु त्वामिति स्तोत्रियः। यो न इदमिदं पुरेत्यनुरूपः। एतौ[1] प्रगाथौ। उत्तमं ककुभः प्रत्यादत्ते सतोबृहत्या (७.१५.१५) द्वितीयमिति।

३. प्र मंहिष्ठाय बृहते बृहद्रय इति तृचः। यो अद्रिभित्प्रथमजा ऋतावेति च तृचः।

४. अस्तेव सु प्रतरं लायमस्यन्निति सूक्तमुद्धृत्य उत्तमां शंसेत्।

५. उदप्रुतो न वयो रक्षमाणा इत्येतत्सूक्तं शस्त्वा ततः।

६. या पूर्वस्य सूक्तस्योद्धृता तया परिदध्यात्। बृहस्पतिर्न इति परिधायेति वक्तव्ये गुरुसूत्रकरणं पर्यासानामुत्तमांस्तृचान्होत्रकाः शंसन्तीत्युक्ते (११.३.१) अन्यास्विह उत्तमाः इयं तु पृथग्भूता परिधानीयैव इत्येतदर्थम्।

---

४.

१. नार्मेधाख्यं स्तोत्रमच्छावाकशस्त्रस्य भवति।

२. अधा हीन्द्र गिर्वण इति स्तोत्रियः। परिशिष्टो ऽनुरूपः।

३. ऋतुर्जनित्री तस्या अपस्परीति सूक्तम्।

४. विष्णोर्नु कं वीर्याणि प्र वोचमिति सूक्तम्।

५. प्र वः पान्तमन्धसो धियायत इति सूक्तम्।

---

[1] C D om एतौ।

६. सं वां कर्मणा समिषा हिनोमीति सूक्तम्।

७. ऐन्द्रावैष्णवमच्छावाकस्येति (१६.११) श्रुतेः। ऐन्द्राग्नान्युक्थ्योक्थानि भवन्तीत्युक्थ्यशस्त्रेषु शंसनं सामान्येनोक्तम्। विशेषः शाखान्तरात्।

---

## ५.

१. यजमानः षोलशिग्रहमुपतिष्ठेतेति सूत्रच्छेदः। षोलशिग्रहाय स्तोत्रं स्तोष्यमाणेषु छन्दोगेषु।

२. यस्माज्जात इत्येवमादिना मन्त्रेण षोलशिग्रहमुपतिष्ठेत।

३. इन्द्र जुषस्वेत्येवमादिकं स्तोत्रियं शस्त्वा। इन्द्र जुषस्व प्र वहा याहि शूर हरिहेत्ययमस्तुतस्य ब्राह्मण आम्नातस्य स्तोत्रियस्य दीर्घपाठः शाखान्तरीयत्वात्।

४. अन्यस्मिन्नपि स्तोत्रिये सति शस्त्वा विभक्त्यन्तरनिर्देशात्।

५. आ त्वा वहन्तु हरयः स्वादोरित्था विषूवतः। इत्येतौ तृचौ विहरेत्। गायत्रं पाङ्क्तं चेति वचनं यथासमाम्नातपक्षे क्रमार्थम्।

६. प्रथमेन गायत्रेण पादेन आ त्वा वहन्तु हरय इत्यनेन प्रथमं पाङ्क्तं पादं स्वादोरित्था विषूवत इत्येतं संधाय अवस्यति। पादेन पादमिति वचनं वालखिल्यासु[१] तथाक्रमधर्मार्थम्।

७. वृषणं सोमपीतये मध्वः पिबन्ति गौर्यः।

८. तृतीयेन गायत्रेण पादेन इन्द्र त्वा सूरचक्षस इत्यनेन या इन्द्रेण सयावरीरित्येतं संधायावस्यति।

---

१ C in marg. दिव।

९. तृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यमित्येताभ्यां प्रणौति। एवमुत्तरास्वपि द्रष्टव्यम्। गायत्रीश्च पङ्क्तीश्च विहरतीति श्रुतेः।

१०. इन्द्राय साम गायतेत्येतमौष्णिहं तृचं आ मन्द्रैरिन्द्र हरिभिरिति बार्हतं च विहरति। उष्णिहश्च बृहतीश्च विहरतीति श्रुतेः।

११. प्रथमेनौष्णिहेन पादेन इन्द्राय साम गायतेत्यनेन प्रथमं बार्हतं पादं आ मन्द्रैरिन्द्रं हरिभिरित्येतं संधायावस्यति।

१२. द्वितीयेनौष्णिहेन विप्राय बृहते बृहदित्यनेन द्वितीयं बार्हतं पादं याहि मयूररोमभिरित्येतं संधाय प्रणौति।

१३. अष्टाक्षरमौष्णिहस्य पादस्य धर्मकृते विपश्चित इति। अष्टाक्षरं बार्हतस्य मा त्वा केचिन्नि यमन्निमिति। एताभ्यामौष्णिहबार्हताभ्यामष्टाक्षराभ्यां संदधत् ताभ्यामन्ते ऽवस्यति।

१४. चतुरक्षरे उभयोरौष्णिहबार्हतयोर्ये अवशिष्टे। पनस्यवे न पाशिन इत्येते। ते उभे चतुरक्षरे समस्य एकत्र पादरूपे कृत्वा उत्तममन्यं बार्हतं पादं अति धन्वेव ताँ इहीत्येतं संधाय प्रणौति। पनस्यवे न पाशिनो ऽति धन्वेव ताँ इहो३ इति। एवमुत्तरास्वपि द्रष्टव्यम्।

---

## ६.

१. आ धूर्ष्वस्मै दधाताश्वानिति द्विपदां विंशत्यक्षरामुरुं नो लोकमनु नेषि विद्वानिति त्रिष्टुभं च विहरति। द्विपदां च विंशत्यक्षरां त्रिष्टुभं च विहरतीति (कौ० १७.२) श्रुतेः।

२. प्रथमेन द्वैपदेन पञ्चाचरेण आ धूर्ष्वस्मा इति सविकर्षेण प्रथमं[1] त्रैष्टुभं पादं उरुं नो लोकमनु नेषि विद्वानित्येतं संधायावस्यति।

३. द्वितीयेन पञ्चाचरेण दधानाश्वानित्यनेन द्वितीयं त्रैष्टुभं पादं स्वर्वज्ज्योतिरभयं स्वस्तीत्येतं संधाय प्रणौति।

४. तृतीयेन पञ्चाचरेण इन्द्रो न वज्रीत्यनेन तृतीयं त्रैष्टुभं पादं ऋष्वा त इन्द्र स्थविरस्य बाहू इत्येतं संधायावस्यति।

५. चतुर्थेन पञ्चाचरेण हिरण्यबाहुरित्यनेन चतुर्थं त्रैष्टुभं पादं उप स्थेयाम शरणा बृहन्तेत्येतं संधाय प्रणौति। छन्दोग्रहणं अचरग्रहणं च सर्वत्रापूर्यमाणे विकर्षार्थम्।

६. एष ब्रह्मेत्येवमादिको द्वैपदस्तृचस्तं च प्र ते महे विदथे शंसिषं हरी इत्येवमादिकं च जागतं विहरति। द्विपदाश्च षोलशाक्षरा जगतीश्च विहरतीति (कौ० १७.२) श्रुतेः।

७. प्रथमेन द्वैपदेन चतुरचरेणैष ब्रह्मेत्यनेन प्रथमं जागतं पादं प्र ते महे विदथे शंसिषं हरी इत्येतं संधायावस्यति।

८. द्वितीयेन चतुरचरेण य ऋत्विय इत्यनेन द्वितीयं जागतं पादं प्र ते वन्वे वनुषो हर्यतं मदमित्येतं संधाय प्रणौति।

९. तृतीयेन द्वैपदेन चतुरचरेणेन्द्रो नामेत्यनेन तृतीयं जागतं पादं घृतं न यो हरिभिश्चारु सेचत इत्येतं संधाय अवस्यति।

१०. चतुर्थेन द्वैपदेन चतुरचरेण श्रुतो गृण इत्यनेन चतुर्थं जागतं पादमा त्वा विशन्तु हरिवर्पसं गिर इत्येतं संधाय प्रणौति।

---

१ C D om प्रथमं।

एवमुत्तरास्वपि द्रष्टव्यं। इन्द्र त्वयन्ना यं पृणन्ति हरिभिर्न धेनव (१०.८६.२) इत्यवसाय तिरातय इति शब्देन तिकारेण प्रारम्भः। त्वामिच्छ सो अस्य वज्रो हरितो य आयस इत्यवसानम्। विकर्पेण द्वैपदं चतुरक्षरं वसस्ते (८.६.२१) हरिर्निकामो हरिरा गभस्त्योरिति वकारेण आरम्भः।

११. इन्द्रो दधीच अस्थभिरित्येतासां तिसृणां गायत्रीणां शस्त्रधर्म उच्यते। द्वाभ्यामवसाय पादाभ्यां। इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुत इत्येताभ्यां। ततो द्वाभ्यां प्रणौति। जघान नवतीर्नवेच्छन्नश्वस्य यच्छिर इति। द्वाभ्यामवसाय। पर्वतेष्वपश्रितं तदिदच्छर्यणावतीत्येताभ्याम्। ततः। द्वाभ्यां प्रणौति। अत्राह गोरमन्वत नाम त्वष्टुरपीच्योम् इति।

१२. उत्तमेन गायत्रेण पादेन इत्था चन्द्रमसो गृह इत्यनेन प्रो ष्वस्मै पुरोरथमित्येतस्याः पादं संधायावस्यति।

१३. द्वितीयतृतीयाभ्याम्।

१४. चतुर्थपञ्चमाभ्याम्।

१५. प्रणौतीति वाक्यशेषः। गायत्रीः शंसति सप्तपदां शंसतीति श्रुतेः।

१६. प्र प्र व इत्येवमादिकं तृचं शंसति। अथ नित्या अनुष्टुभः शंसतीति (१७.२) श्रुतेः। नित्या इति वचनात् पूर्वास्वितरस्रो ऽनुष्टुभः कृत्रिमा इति ज्ञायते।

१७. एकग्रहणं तृचाधिकारनिवृत्त्यर्थम्।

१८. यो व्यतीँरफाणयदित्येतासां तिसृणामुत्तमां परिशिष्य

अर्भको न कुमारक इत्येतां। ततो ऽस्य मदे जरितरिन्द्र इति[१] निविदं दध्यात्।

१८. स्तोत्रिये चाह्नावः। चशब्दादनुरूपे च क्रियमाणे। न तु स्वशुत्या[२]। निविदि च परिधानीयायै च।

२०. ततो ऽर्भको नेति परिशिष्टां शस्त्वा उदुद्भ्रूखेत्यनया परिदध्यात्[३]। उदुद्भ्रस्य विष्टपमिति परिदधातीति (१०.३) श्रुतेः।

२१. रोहोभ्यामित्यादिकम्।

२२. अपाः पूर्वेषां हरिवः सुतानामिति यजति।

२३. इन्द्र जुषस्वेत्येतस्मिन् स्तोत्रिये क्रियमाणे, शाखान्तरीये ऽनुरूपे सत्यपि, चत्वारिंशत्संपदानुष्टुभो भवन्ति। तत्र तावतः पुरूवसो (८.४६.१) अत्राह गोरमन्वत (१.८४.१५) प्रो ष्वस्मै पुरोरथ (७.६.१२) मित्येतास्विह उद्धरेदनुरूपाचरपरिमाणसाम्यात्। एतत्प्रतिरूपसु हैके ऽनुरूपं कुर्वन्तीत्याश्वलायनके पठित एवानुरूपः। स्वशाखायां तु तस्मादत्रानुरूपं नाद्रियेतेत्यकरणमेवानुरूपस्य युक्ततरम्[४]।

२४. विक्रियमाणे स्तोत्रिये शाखान्तरादन्यस्मिन् क्रियमाणे यथासमाम्नातमविहृतं शस्त्रं भवति। तेनेदं चेत्षोलशिषाम कुर्युरविहृतः षोलशी शस्तव्य इत्याश्वलायनकम्। अत्र प्रत्यस्मै पिपी-

१ C D om the beginning of the nivid

२ A adds एतत् प्रतिरूपसु हैके ऽनुरूप कुर्वन्तीत्युपक्रम्य तस्मादत्रानुरूपं नाद्रियेतेति श्रुते।

३ C D om from ततो up to परिदध्यात्।

४ C in marg सुषौ च मे इत्यादि।

यत इति स्तोत्रिय इममिन्द्र सुतं पिबेत्यनुरूपः। स्वरसाम्नि दृष्टत्वात्। यद्यनुरूपः क्रियते सर्वमन्यत्तुल्यम्।

२५. इन्द्रस्य मसाङ्क्त्येवमादिना मन्त्रेण यहं भक्षयति। शाखान्तरे क्वचिद्यजमानाय भक्षाहरणं सोमस्यांशान्यजमानस्थानेन[1] मन्त्रेण भक्षयति।

---

७.

१. पान्तमा वो अन्धस इत्येवमादिकौ[2] तृचौ। प्रथमः स्तोत्रिय उत्तरो ऽनुरूपः। होतृग्रहणं होत्रकाणामपि स्तोत्रियानुरूपग्रहणनिवृत्त्यर्थम्[3]। प्रथमेषु रात्रिपर्यायेष्विति विशेषणं रात्रिपर्यायेषु त्रिष्वेव[4] भेदप्रदर्शनार्थम्। ततश्च सर्पणादयः प्रथममध्यमोत्तमाः पर्यायाः।

२. उक्तमेतत् प्रथमेषु रात्रिपर्यायेषु गायत्राणां स्तोत्रियानुरूपाणां प्रथमान्पादानभ्यस्यन्तीत्येवमादि। तदपवादो ऽयमुच्यते। प्रथमस्य रात्रिपर्यायस्य प्रथमं पादं नाम्रेडयति। नाभ्यस्यतीत्यर्थः।

३. स्तोत्रियानुरूपावशिष्टो यः सूक्तशेषस्तदुक्थमुखं भवति। उक्थमुखमिति संज्ञाकरणं शास्त्रसंव्यवहारार्थम्।

४. अभि त्वं मेषं पुरुहूतमृग्मियमिति सूक्तं शंसति। जागतमिति संज्ञायाः शास्त्रे संव्यवहारः प्रयोजनम्। उक्थमुखानां जगतीनां च द्वेद्वे शंसेयुरिति।

५. अध्वर्यवो भरतेन्द्राय सोममित्येतया यजति।

---

१ C in marg यजमानाय instead of यं सोमस्यांशान्य। २ C in marg. द्वौ।
३ A ॰ग्रहणा॰ C ॰ग्रहणाद्वि॰ D ॰ग्रहणानि॰। ४ A त्रिष्वपि।

## ८.

१. स्तोत्रियानुरूपौ होतुरित्येतस्मात् स्तोत्रियानुरूपाविति वर्तते। प्र व इन्द्राय मादनमिति स्तोत्रियः। प्र कृतान्यृजीषिण इत्यनुरूपो मैत्रावरुणस्य।

२. सुरूपकृत्नुमूतय इत्येतत्सूक्तमुक्थमुखाख्यं मैत्रावरुणः शंसति।

३. त्य सु मेषं महया स्वर्विदमित्येतस्य सूक्तस्य जागतास्यस्य नवमीं चोत्तमां चोद्धृत्य शंसनत्वेन परिहाय चतुर्दशीं पूर्वां शस्त्वा त्रयोदश्या परिधाय पाता सुतमिन्द्रो अस्तु सोमं हन्ता वृत्रमित्येतया यजति। ननु चतुर्दशीं पूर्वां शस्त्वा त्रयोदश्या परिधायेत्युक्ते सिद्ध एवोत्तमाया उद्धारः। किं वचनेन। उच्यते। अनुरूपादनन्तराण्यैन्द्राणि जागतान्यन्यानीति (१२.१०.२) वचनात्तत्रायस्य विनियुज्यमानस्य समान[1] उद्धारः कथं नाम स्यादिति वचनम्। इहैव व्युत्क्रमशंसनं। त्रिष्टुब्भिः परिदधतीति वचनात्। नवमीं चोत्तमां चेति द्विशब्दात् नवम्युत्तमे मरुत्वत्यौ इन्द्रप्रसादादेवास्य लाभात्। मरुत्वतीये पुनरनुद्धारः[2]।

---

## ९.

१. पूर्वः स्तोत्रिय उत्तरो ऽनुरूपः।

२. इन्द्र त्वा वृषभं वयमित्येतत् सूक्तमुक्थमुखाख्यं शंसति।

---

१ A समानस्योत्तमाया उद्धार। C (orig) D •युज्यमानस्येति मत्वा।

२ C •शब्दात् मरुत्वतीये पुनरनुद्धारो नवम्युत्तमे मरुत्वत्यौ इन्द्र ततप्रसादादेवास्य (orig इन्द्रप्र•) लाभात् D इन्द्रप्रसादाद्• M इन्द्रततप्रसादादेवास्य All MSS with the exception of A have मरुत्वतीये पुनरनुद्धार immediately after •शब्दात्।

३. पूर्वेण सह विकल्पः। उत्तमाया उद्धारो गायत्राण्युक्थमुखानि शंसतीति वचनात्।

४. न्यू षु वाचं प्र महे भरामह इत्येतत्सूक्तं जागताख्यं शंसति।

५. तृपा मद इन्द्रे श्लोक उक्थेत्येतया यजति।

---

## १०.

१. इन्द्राय मद्वने सुतमिति स्तोत्रियः। इन्द्रमिद्गाथिनो बृहदित्यनुरूपः।

२. इन्द्रमिद्गाथिनो बृहदित्येतस्य सूक्तस्य यो ऽनुरूपशेषस्त-दुक्थमुखं भवति।

३. मा नो अस्मिन् मघवन् पृत्स्वंहसीति जागताख्यं सूक्तं शंसेत्।

४. इदं त्यत्पात्रमिन्द्रपानमित्येतया यजति।

---

## ११.

१. होत्रवचनमसंदेहार्थम्। मध्यमेषु रात्रिपर्यायेष्विति संज्ञा-करणं शास्त्रसंव्यवहारप्रयोजनाय। मध्यमान्मध्यमेषु। मैत्रावरुणाय ब्राह्मणाच्छंसिने च मध्यमानामिति।

२. उद्वेदभि श्रुतामघमित्येतत्सूक्तमुक्थमुखाख्यं शंसेत्। उत्त-मामुद्धृत्य गायत्रीसंदेहात्। उत्तमामृचमैन्द्रार्भवीं इन्द्र इषे ददातु न इत्येतां सूक्तादुद्धृत्य बहिःकृत्वा।

३. अहं भुवं वसुनः पूर्व्यस्पतिरित्येतज्जागतं सूक्तं शंसेत्।

४. अपाय्यस्यान्धसो मदायेत्येतया यजति।

---

## १२.

१. एतौ स्तोत्रियानुरूपौ मैत्रावरुणस्य यथाक्रमेण।

२. एन्द्र सानसिं रयिमित्येतत्सूक्तमुक्थमुखाख्यं शंसेत्।

३. प्र वः सतां ज्येष्ठतमाय सुष्टुतिमित्येतत्सूक्तं जागताख्यं शंसेत्।

४. अस्य मदे पुरु वर्पांसि विद्वानित्येतया यजति।

---

## १३.

१. अभि त्वा वृषभा सुत इति स्तोत्रियो ब्राह्मणाच्छंसिनः। अभि प्र गोपतिं गिरेत्यनुरूपः।

२. आ तू न इन्द्र मद्र्यगिति एतत्सूक्तमुक्थमुखाख्यं शंसेत्।

३. तदस्मै नव्यमङ्गिरस्वदर्चतेति जागताख्यं सूक्तं शंसेत्।

४. यस्ते रथो मनसो जवीयानित्येतया यजति।

---

## १४.

१. इदं वसो सुतमन्ध इति स्तोत्रियः। इन्द्रेहि मत्स्यन्धस इत्यनुरूपो ऽच्छावाकस्य।

२. इन्द्रेहि मत्स्यन्धस इत्यस्य सूक्तस्य अनुरूपगोपमुक्थमुखाख्यं शंसेत्।

२. अजातशत्रुमजरा स्वर्वतीत्येतस्य सूक्तस्योत्तमामुद्धृत्याग्निलिङ्गात् त्रिष्टुभं चेति कृत्वा उद्यत्सहः सहस आजनिष्टेति परिधाय ऐन्द्रेषु जागतेष्वजातशत्रुमिति प्रयुज्यमानमेवं भवति परिधायेति वचनात्। इदं ते पात्रं सनवित्तमिन्द्रेत्येतया यजति।

## १५.

१. एतौ स्तोत्रियानुरूपौ होतुर्भवत उत्तमेषु रात्रिपर्यायेषु सत्सु। उत्तमेषु रात्रिपर्यायेष्विति संज्ञा शास्त्रसंव्यवहारार्था। त्रिष्वपि पर्यायेषु प्रायशो होतुः स्तोत्रियानुरूपौ न व्यभिचरत इति स्तोत्रियानुरूपवचनमधिकारार्थम्।

२. महाँ इन्द्रो य ओजसेत्यस्य सूक्तस्यानुरूपशेषमुक्थमुखाख्यं शंसेत्। उत्तमास्त्रिस्रो दानसंस्तवादुद्धियन्ते।

३. विश्वजिते धनजिते स्वर्जित इत्येतज्जागताख्यं सूक्तं शंसेत्।

४. तिष्ठा हरी रथ आ युज्यमानेत्येतया यजति।

## १६.

१. आ त्वेता नि षीदतेति स्तोत्रियः। आ त्वशत्रवा गहीत्यनुरूपः।

२. यस्य संस्थे न वृण्वत इत्युक्थमुखाख्यं सप्तर्चं शंसेत्।

३. अहं दां गृणते पूर्व्यं वस्विति जागताख्यं सूक्तं शंसेत्।

४. प्र घा न्वस्य महतो महानीत्येतया यजति।

## १७.

१. योगेयोगे तवस्तरमिति स्तोत्रियो ब्राह्मणाच्छंसिनः। युञ्जन्ति ब्रध्नमरुषमित्यनुरूपः।

२. युञ्जन्ति ब्रध्नमित्येतस्य सूक्तस्यानुरूपावशेषमुक्थमुखाख्यं शंसेत्।

३. इमां ते धियं प्र भरे महो महीमिति जागताख्यस्य सूक्तस्योत्तमामुद्धृत्य शेषमन्यचापि जागतत्वविनियोगे शंसेत्। उत्तमा त्रिष्टुप्[1] मित्रादिभ्यो वाच्य[2] पञ्चः क्रता इत्येवानैन्द्रीत्युद्ध्रियते।

४. तद्स्येदं पश्यता भूरि पुष्टमिति त्रिष्टुभा परिधाय।

५. प्रो द्रोणे हरयः कर्माग्मन्नित्येतया यजति।

---

## १८.

१. इन्द्रः सुतेषु सोमेष्वित्ययं स्तोत्रियोऽच्छावाकस्य इन्द्रं वर्धन्तु नो गिर इत्यनुरूपः।

२. उष्णिहावेतौ स्तोत्रियानुरूपौ। तयोरुत्तमानि चतुरचराण्यभ्यस्यन्ति। तथा ह्यानुष्टुभौ रात्रिरिति च्छन्दसोऽन्यस्यानूहः[3] कृतो भवति।

३. उप नः सुतमा गहि सोममिन्द्र गवाशिरमित्येवमादिकमुक्थमुखाख्यं सूक्तं[4] शंसेत्।

---

१ C D M उत्तमां त्रिष्टुभं।    २ ? A वा D वा वषडभ्य छताभ्य।
३ C D छन्दा चान्यस्या॰ M च्छन्दान्यस्य।    ४ C D om सूक्तं।

तानि नित्यानि। अभिव्योयाश्विने[1] ऽपि नोद्धर्तव्यानि नित्यत्वात्। तथा युवो रजांसीति सूक्ते तं युञ्जाथामिति सूक्ते। एतानि चला-र्थागस्त्यानि त्रिष्वपि षष्टिशतेषु नोद्धर्तव्यानि।

१३. प्रथमं काक्षीवतं नासत्याभ्यामिति सूक्तं शस्त्वा ततः का राधद्धोत्राश्विना वामिति नव शंसेत्।

१४. सुपर्णमादित आरभ्य अधिकं शतं शंसेत् आगस्त्येभ्यः सूक्तेभ्य ऊर्ध्वं। इमानि वां भागधेयानि सिस्रत इत्येताः सप्त जगत्यो वरुणेन्द्रदेवत्याश्च। ततश्च न शस्तव्या आश्विने।

१५. वाशब्दो विकल्पार्थः। अन्यासां वाश्विनीनां सौपर्णव्यति-रिक्तानां वा तावन्मात्रं शंसेत् अधिकं शतं यावत्परिमाणं सुपर्णं। आश्विनीनामिति वचनात्[2] उद्धृतानामपि प्रक्षेपः। आश्विनीत्वात्। त्रिशतप्रक्षेपं वक्ष्यामः। ग्रावाणेवाष्टौ (२.३९.१-८)। नासत्या मे पितरा बन्धुपृच्छेत्येका (३.५४.१६)। धेनुः प्रत्नस्य काम्यं दुहा-नेति नव (३.५८.१-९)। क उ श्रवदिति चतुर्दश (४.४३.१-१४)। प्र वामन्धांसि मद्यान्यस्थुरित्येका (४.४५.७)। अत्रिर्यद्वाम-वरोहन्नृबीसमित्येका (५.७८.४)। स मे वपुश्छदयदश्विनोर्य इत्येका (६.४९.५)। उत त्या मे हवमा जग्म्यातमित्येका (६.५०.१०)। सुषे नरा दिवो अस्य प्रसन्तेति विंशतिः (६.६२.१-७.१०-२२। यद्रोदसी प्र दिवो अस्ति भूमेति (६.६२.८.९) द्वे उद्धरेत्। प्रति वां रथं नृपती जरध्या इति दश (७.६७.१-१०)। इकाय चिज्जसमानाय शक्तमित्यष्टा-

१ C अभिव्योया alt to अभिया०। २ C D वचनं।

विंशतिः (७. ६८. ८-७२. ५)। उभा उ नूनमित्येकादश (१०. १०६. १-११)। एतच्छस्त्वा ततः समारोहणीयं सूक्तं शंसेत्।

१६. समिद्धश्चित्समिध्यस इत्येतास्तिस्र उद्धरति। आश्विनप्रकृतेः प्रातरनुवाकात्।

१७. अयं वां मधुमत्तम इति प्रथमा तृतीया पञ्चमी चेत्युक्तं। तस्यापवादः। एता अष्टौ यथाक्रमं शंसेत्।

१८. औष्णिहाच्छन्दस एकादश ऋच उद्धरेत्। पञ्चमीनिर्देशात्।

१९. यथा एकादशौष्णिहादुद्धर्तव्यास्तथाग्नेयात् क्रतोर्जागताच्छन्दसः।

२०. *आश्विनप्रकृतेः प्रातरनुवाकस्योक्तमेन पाङ्क्तेन पादेनाग्नेस्ते*नादित्योदयं प्रतीक्षते।

२१. उदित आदित्ये सौर्याणि वक्ष्यमाणानि सूक्तानि शंसेत्।

२२. उदु त्यं जातवेदसमित्याद्या नवर्चः।

२३. चित्रं देवानामुदगादनीकमित्येतत्सूक्तम्।

२४. नमो मित्रस्य वरुणस्य चक्षस इत्येतत्सूक्तम्।

२५. इन्द्र क्रतुं न आ भरेत्ययं प्रगाथः शस्तव्यः। प्रगाथवचनं सर्वानैन्द्रान्प्रगाथान्प्रगाथस्यायतन इति (१८.३) चोदनार्थम्। तेन चतुःशतमैन्द्राः प्रगाथा ऋग्वेदप्रसिद्धाः।

२६. मही द्यौः पृथिवी च न इत्येतास्तिस्रः शंसेत्।

२७. विश्वस्य देवीमित्येवमादिका द्विपदा शस्तव्या विंशत्यक्षरा। प्रथमः पादो द्वादशाक्षरो ऽथाद्वितीयो ऽष्टाक्षरः।

२८. बृहस्पते अति यदर्यो अर्हादित्येतया परिदध्यात्। बार्हस्पत्यया परिदधातीति श्रुतेः।

२९. द्विरेवाश्विनावाह्वयते प्रतिपदे चैव परिधानीयायै चेति (१८ ४) श्रुतेः।

३०. तया शंसेद्यया तच्छस्त्रमाश्विनं नानाछन्दस्कमपि संपदा बृहतीनां सहस्रं संपद्यते। यद्यप्यन्यच्छन्दस्काः स्तोत्रियाश्छन्दोगानां तथापि ककुप्कार एव कर्तव्यः सूत्रारम्भसामर्थ्यात्। अत्र कैश्चिदाश्विनपद्धत्यर्थाः सप्त श्लोका उपदिष्टास्ते लिख्यन्ते।

ज्ञातं तथाश्विनं प्राज्ञैर्यथा सूत्रकृतोदितम्।
व्यक्तमारभ्यते वक्तुं मन्दधीप्रतिपत्तये ॥१॥
त्वमग्ने ऽग्ने कदागन्म पुरु त्वेति जनस्य च।
युवोरित्यन्तरैस्त्र्यकैराभ्यो याः प्रागनन्तराः ॥२॥
दशाधिकाश्चतुर्भिर्द्वे त्रिंशदभ्यधिका त्रिभिः।
एकादश दशैकाग्न्यास्तिस्रो द्वे च पृथक्पृथक् ॥३॥
आश्विनप्रकृतेरेता यथासङ्ख्यं सुमेधसा।
ऋचः प्रातरनुवाकादुद्धर्तव्या यथाक्रमम् ॥४॥
धेनुः स्तुषे नरेत्या वामतारिष्मेत्यतः परा।
यथासङ्ख्यं प्रयोक्तव्या नासत्या मे प्र वामिति ॥५॥
अत्रिर्यद्वां स मे वपुरुत त्या प्रति वां रथम्।
तृचो वृकाय भूतांश आसामेका यथाक्रमम् ॥६॥
चतस्रो द्वादश ताभ्य एकादश ततः पराः।
अग्निं समिद्धः कार्यं वामिति कार्यं यथोदितम् ॥७॥

२१. इमे सोमासस्तिरोअह्न्यास इत्येवमादिका प्रैषान्त.[1] पठिता पुरोनुवाक्या कार्या।

२२. होता यक्षदश्विना सोमानामित्येवमादिकः प्रैषो भवति। आप्तोर्यामे ऽप्ययमेव प्रैषो ऽतिरिक्तोक्थ्येष्वचाहितः[2]।

२३. उभा पिबतमश्विनेत्येतया प्र वामन्धांसीत्येतामर्धर्चशः संधायोत्तरेणार्धर्चेन वषट्करोति।

२४. विराजैव यजेदिति ह स्माह कौषीतकिरिति श्रुतेः।

२५. अश्विना वायुना युवं सुदक्षेति लिङ्ग स्थिताश्विनी त्रिष्टुप् तिरोअह्न्यवतीति (१८.५) श्रुतौ विशेषप्रशंसनादियमेव युक्ततरा।

---

## २१.

१. त्रिवृत्सङ्ख्याको बहिष्पवमानो भवति। सत्यपि छन्दोगानां स्तोत्रे[3] नानारूपे स्वमतप्रकाशनार्था यट्सूत्री।

२. सन्धिषाम आश्विनं स्तोत्रं तदपि त्रिवृदेव भवति।

३. आदौ बहिष्पवमानस्तोत्राणि[4] चत्वार्याज्यानि माध्यन्दिनस्य पवमान इत्येतानि पञ्चदशानि भवन्ति।

४. रात्रिपर्यायस्तोत्राणि पञ्चदशान्येव। सङ्ख्यासामान्यात् क्रमेण वचनं सन्धिषामवत्।

---

१ C D प्रैषस्त।

२ C च्च हितः in marg नू instead of च D •च हित।

३ C D स्तोमे स्तोत्रे।

४ C आदौ बहिष्पवमानस्तोत्रम्। ततो ऽनन्तराणि पञ्च स्तोत्राणि। चत्वार्या-ज्यानि etc

५. चत्वारि पृष्ठान्याभँवश्च पवमानः।

६. अग्निष्टोमसाम चौण्युक्थानि षोलशी च।

७. एष ज्योतिष्टोमो नाम चतुःसंस्थो ऽपि भवतीत्यर्थः। ज्योतिष्टोमचोदनायामेतस्य ग्रहणं द्रष्टव्यं। सोमयागस्य प्रधानं। इतराणि दीक्षणीयादीनि तदङ्गानि। सोमयागस्य ज्योतिष्टोमशब्दवाच्यत्वात्। एतानि ज्योतींषि त्रिवृदादयः स्तोमाः यस्मिन्नेते भवन्ति स ज्योतिष्टोमः। सोमपवणाच्चैते भवन्ति। तत्संनिधौ श्रवणात्। ग्रहं गृहीत्वा चमसं चोन्नीय स्तोत्रमुपाकरोतीति।

८. एत एव स्तोमा ये त्रिवृदादयस्ते ऽभिप्लवस्यापि षलहस्य भवन्ति। एत एवेति वचनान्नायमेव क्रमः। प्रथमोत्तमे अहनी ये एवंक्रमेण।

---

## २२.

१. अग्निरिष्टकाचयः सोमयागाङ्गं द्वितीयादिषु सोमयागेषु। तत्संबन्धेन धर्मविशेषा वक्तव्यास्तदर्थस्तुशब्दः। चेदग्निं चेष्यमाणस्य यदृच्छया यजमानस्य अदीक्षितस्य प्राग्दीक्षणीयाया इत्यर्थः। इष्टिर्वक्ष्यमाणिका भवति।

२. एतानि त्रीणि हवींषि भवन्ति।

३. गुणाशङ्कया सदेहो मा भूदिति सूत्रम्।

४. ब्रह्म प्रजावदा भरेति पुरोनुवाक्या। ब्रह्म च ते जातवेदो नमसेति याज्या। [1] किमर्थमग्नये ब्रह्मण्वत इत्युच्यते। द्विप्र-

[1] A ins मनु।

भृतिषु चोदनानुपूर्व्येणेति सिद्धत्वात्। उच्यते। शाखान्तरेण प्रकृतगुणमिष्टिचयं समाम्नातं कचित्कचिदिष्टिद्वयं। तस्यार्थस्य प्रतिपादनार्थमेवमुक्तम्।

५. अर्चन्तस्त्वा हवामहे अग्निः शुचिव्रततमः पुरोनुवाक्या। अस्माकमग्ने अध्वरं जुषस्वेति याज्या। अग्ने शुक्रेन जाग्टवे इत्यग्नेः शुचिव्रततः पुरोनुवाक्या। स्वदस्व हव्या समिषो दिदीहीति याज्या। उत्तरयोरिति शुचिव्रतशुचिव्रततोः पृथगपीष्टिर्भ्राजस्वत एवमिष्टिद्वयमपि शाखान्तरेऽस्तीति ज्ञायते। स्वशाखायां तु चिह्नविष्फा एकैवेष्टिः।

६. इयमिष्टिः संनिवपनप्रयोजना बहूनां चेष्यमाणानां भवति। ते वै दीक्षिष्यमाणा अग्नीन्संनिवपन्त इत्येवमुपक्रम्य सर्वमाम्नातं। बहूनामिति सत्त्रिणोऽभिप्रेत्योक्तम्।

७. एकस्य चिन्वतः संनिवपनाभावात् उखासंभरणप्रयोजना इयमेवेष्टिर्भवति। उखा विशिष्टाग्निप्रधारणार्था स्थालीविशिष्टप्रमाणा आध्वर्यवधर्मसमुदायवती। तस्या इध्यनन्तरं उपकरणानि संनिवपतीत्यत्र ब्राह्मणः साध्यर्थं वचनम्।

---

## २३.

१. अग्निचित्यायामयं चापरो धर्मविशेषः। आध्वर्यवाधीतेन क्रमेण प्राजापत्यः पशुबन्धो भवति। अथैतेन प्राजापत्येन पशुना यजन्त इति श्रुतेः।

२. वायव्यो वा पशुबन्धो भवति शाखान्तरात्।

३. पशुवन्तो भवतीत्यनुवर्तते। वाशब्दो विकल्पार्थः। पूर्वसूत्रादनुवर्तमान एवोच्यते। कथं नाम अग्निभ्यः कामायेत्येतच्छाखान्तरोक्तमुपसंगृह्येत।

४. पुरुषो वैश्यो राजन्यो वा। अजः छागः। अविर्मेषः। गौरश्वश्च। पशुशब्दः[1] पुरुषे ऽपि द्रष्टव्यः। इति पञ्च पशवः। इति प्रकारप्रदर्शनार्थः। एवंप्रकारा अध्वर्युशाखासु बहवो विकल्पाः।

५. अजो वा एक एव पशुर्भवति। तूपरो विषाणरहितः।

६. प्राजापत्ये पशौ केचिद्वायव्यं पशुपुरोलाशं कुर्वन्ति। यद्देवत्यः पशुर्भवति तद्देवत्यं पशुपुरोलाशमनुनिर्वपतीति प्राप्ते।

७. वायव्ये पशौ एके प्राजापत्यं पशुपुरोलाशं कुर्वन्ति।

८. अग्नये वा कामायेति यो ऽयमुक्तस्तस्मिन्नेके वैश्वानरीयं पशुपुरोलाशं कुर्वन्ति।

९. प्राजापत्यश्चेति वचनान्न सर्वत्र।

१०. प्राजापत्यश्चेति वर्तते।

११. एकया च दशभिश्च स्वभूते। राये नु यं जज्ञतू रोदसीमे। कुविदङ्ग नमसा ये वृधासः। इत्येताः पुरोनुवाक्या वायव्यस्य वपापुरोलाशपशूनां। पीवोअन्नान् रयिवृधः सुमेधाः। प्र याभिर्यासि दाश्वांसमच्छ। प्र वायुमच्छा बृहती मनीषेत्येताः पूर्ववत् याज्या वायव्यस्य। नियुत्वतो ऽप्येता एव।

१२. आ ते वत्सो मनो यमत् तुभ्यं ता अङ्गिरस्तमाग्निः परेषु

[1] C D शोमब्दो ऽथ पशुशब्दो वापि द्रष्टव्य इति। पञ्च पशव इति।

धामच्छिदित्येता आग्नेयस्य[1] वपापुरोलाशपशूनां पुरोनुवाक्याः। वयं ते अद्य ररिमा हि कामं अग्नाम तं काममग्ने तवोती ईळे च त्वा यजमानो हविर्भिरित्येता याज्याः। अग्नेः शुद्धस्यापेता एवान्यासंभवात्। आग्नेयस्येति शुद्धस्यैवं निर्देशात्।

१३. बहुवत् बहुवचनेनेति यावत्। पशुनिगमाः मेधमित्येवमादयः पञ्चसु पशुषु क्रियमाणेषु पृथिवीं शरीराणीति यावत्। प्राप्तमेवैतदुच्यते संदेहव्युदासार्थम्।

१४. एकवचनान्तेन पशुनिगमा अत ऊर्ध्वं। चतुर्णामपि कायप्रासनं ततो न्यदिष्टकार्थापत्त्वेति (का० १६.१.१८) शरीराणां विनियोगात्[2]। अतेन [3]यज्ञसमाप्तिलक्षादेकवदत ऊर्ध्वम्।

---

## २४.

१. अयं चापरो धर्मविशेषः साग्निचित्ये।

२. एतानि त्रीणि हवींषि दीक्षणीयायां भवन्ति।

३. त्यान्नु क्षत्रियां अव इति पुरोनुवाक्यादित्येभ्यः। धारयन्त आदित्यासो जगत्स्था इति याज्या। इतरयोः पूर्वोपदिष्टाः।

४. पञ्चहविषं दीक्षणीयामिष्टिमेके तन्वत इति (१९.४) श्रुतेः।

५. क्रमार्थं वचनं चतुर्थः पञ्चम इति।

६. एकहविः पञ्चहविर्वातिथ्या कार्या। अथैतामातिथ्यां पञ्चहविषमवेष्टिमेके तन्वत इति श्रुतेः।

---

१ C D om आग्नेयस्य। २ D नियोगात्। ३ A यज्ञसमाप्ति॰।

७. आग्नेयैन्द्रौ पुरोलाशौ वैश्वदेवबार्हस्पत्यौ चरू वैष्णवश्च नवकपालः।

८. शुचिमर्कैर्बृहस्पतिमिति बार्हस्पत्यस्य पुरोनुवाक्या। तं शग्मासो अरुषासो अश्वा इति याज्या। शेषाणां पूर्वोपदिष्टाः।

९. चितिभ्यः प्रणीयमानाभ्य इत्येवमादिना निगदेन संप्रेषितो वक्ष्यमाणमनुवचनमाह।

१०. पुरीष्यासो अग्नयः प्रो त्ये अग्नयो ऽग्निषु विश्वेभिरग्ने अग्निभिः अग्ने विश्वेभिरग्निभिरित्येता ऋचो ऽनुब्रुवन् इष्टकाः प्रणीयमानाः पश्चादनुसमेति। अथैता बह्वग्नीरन्वाह बहून् ह्यग्नीन् प्रणयन्ति ता वै चतस्रो भवन्तीति (१९. ४) श्रुतेः।

## २५.

१. संचिते ऽग्निस्थले परिश्रुते सामभिर्वक्ष्यमाणं कर्म।

२. प्रजापतिहृदयसामपरिष्टवादनन्तरं आग्नेयमनुशंस इति[1] संप्रेषितो ऽग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः सूर्यो ज्योतिर्ज्योतिः सूर्य इत्याज्येयस्तूष्णींशंस उक्तः। यश्च तूष्णींजपः पिता मातरिश्वेत्यादिस्तेन जपेन महोक्थं शंसति। आहावस्तच य उक्तस्तं न करोति। यत्तत्ग्रहणात्स एव क्रमः परिगृह्यते।

३. वैश्वानरायानुब्रूहीति संप्रेषितः पुरोनुवाक्यामनूच्य याज्यया[2]

---

[1] C D om the Praisha

[2] A in marg. चरताषां and नाभिं यज्ञानां।

यजति। प्राप्तस्य पुनर्वचनं परिसङ्ख्यार्थं। परिसङ्ख्या च प्रकृतिं निवर्तयति।

४. प्रयाजानुयाजान्वा मुक्ता शिष्टान्यङ्गानि भवन्ति।

---

## २६.

१. अयं चापरः साग्निचित्ये विशेषः। अग्नीषोमीयस्य पशोः पुरोळाशमनुगतानि देवसूभ्यो वक्ष्यमाणाभ्यो देवताभ्यो देवसूसंज्ञिकाभ्यो हवींषि भवन्ति। काभ्यः पुनस्ताभ्य इत्यत आह।

२. अग्नये गृहपतय इत्येवमादिभ्यो ऽष्टभ्यः सगुणेभ्यो ऽष्टौ हवींषि भवन्ति। ता वा अष्टौ भवन्तीति (१८. ५) श्रुतेः।

३. अग्निर्होता गृहपतिः स राजेत्यग्नेर्गृहपतेः पुरोनुवाक्या। हव्यवाळग्निरजरः पिता न इति याज्या। त्वं च सोम नो वश इति सोमस्य वनस्पते' पुरोनुवाक्या। ब्रह्मा देवानां पदवीः कवीनामिति याज्या। आ विश्वदेवं न प्रमिय इति सवितुः सत्यप्रसवस्य क्रमेण याज्यापुरोनुवाक्ये। यथा नो अदितिः करदिति रुद्रस्य पशुपतेः पुरोनुवाक्या। उप ते स्तोमान् पशुपा इवाकरमिति याज्या। बृहस्पते प्रथमं वाचो अग्रमिति बृहस्पतेर्वाचस्पतेः पुरोनुवाक्या। हंसैरिव सखिभिर्वावदद्भिरिति याज्या। इन्द्रं वयं महाधन इतीन्द्रस्य ज्येष्ठस्य पुरोनुवाक्या। उरुं नो लोकमनु नेषि विद्वानिति याज्या। मित्रस्य चर्षणीधृतो मर्हो आदित्य इति मित्रस्य सत्यस्य। अनधिगच्छंस्तल्लिङ्गे दैवतेन तुर्येदिति वचनात् (१. १७. ५)।

इमं मे वरुण श्रुधीति वरुणस्य धर्मपतेः पुरोनुवाक्या। यत्किं चेदं वरुण दैव्ये जन इति याज्या।

४. देवसूहविर्भ्यो ऽनन्तराणि सर्वपृष्ठानि हवींषि वक्ष्यमाणानि भवन्ति।

---

## २७.

१. अग्नये वामन्तिकाय गायत्राय त्रिवृते राथन्तरायेत्येवमादिभ्यः सगुणेभ्यो[1] दश सर्वपृष्ठानि हवींषि। तानि वै दश हवींषि भवन्तीति श्रुतेः।

२. अर्चन्तस्त्वा हवामहे अग्नेर्वामन्तिकादिगुणयुक्तस्य पुरोनुवाक्या अस्माकमग्ने अध्वरं जुषस्वेति याज्या। इन्द्रस्य पूर्वोपदिष्टे। इन्द्रं वो विश्वतो मादयस्व हरिभिरिति गुणविशिष्टलिङ्गानधिगमात्। विश्वे देवासः स्तीर्णे बर्हिषीति वैश्वदेवस्य पूर्वोपदिष्टे। घृतेन द्यावापृथिवी मित्रावरुणयोः शारदादिगुणयुक्तयोः[2] पुरोनुवाक्या प्र बाहवा सिसृतं जीवसे न इति याज्या। बृहस्पतेर्जुषस्व न इति बृहस्पतेर्हैमन्तिकादिगुणयुक्तस्य पुरोनुवाक्या। एवा पित्रे विश्वदेवाय वृष्ण इति याज्या। अनागसो ऽदितये इति सवितुः शैशिरादिगुणविशिष्टस्य[3] पुरोनुवाक्या वाममद्य सवितर्वाममु श्व इति याज्या। अन्वद्य नो अनुमतिरित्येवमादिकानुमतेः पुरोनुवाक्या अन्विदनुमते त्वमित्येवमादिका याज्या। वैश्वानरो न ऊतय इत्यग्नेर्वैश्वानरस्य पुरोनुवाक्या पृष्टो दिवीति याज्या। एते

---

१ C D सगुणाभ्यो। २ C D गुणयो.।
३ C गुणयुक्तविशिष्टस्य। D गुणयुक्त वि॰।

पूर्वोपदिष्टे एव। हिरण्यगर्भः समवर्तताग्र इति कस्य पुरोनुवाक्या यः प्राणत इति याज्या। एते अपि पूर्वोपदिष्टे एव। उत त्वामदिते महीत्यदितेर्विष्णुपत्न्याः पुरोनुवाक्या महीमू षु मातरमिति याज्या। तल्लिङ्गानधिगमात्।

३. यच्च[1] तन्त्रे पशुप्रयुक्तमन्त्रजातं तस्मिन्द्वयोरपि चोद्यमानानि प्रधानदेवतासंबन्धेन परतन्त्रोपनिपातीनि निगमानावाहनादीन्न लभन्ते।

४. वपान्तमनूबन्ध्यायाः कर्म परिसमाप्य त्वष्टृदेवताकेन पशुनोपांशु पत्नीशाले प्रचरन्ति। नाग्निः प्रणीयते। अथ सुन्वन्ति यावदहं कामयन्ते। अथानूबन्ध्यस्य वपायां संस्थितायां त्वाष्ट्रेण पशुनेत्येवमाद्युपक्रम्य (१९.४) सर्वमाम्नातम्।

५. तं त्वाष्ट्रं पशुं त्वाष्ट्रपशुकर्म पर्यग्निकरणान्तं कृत्वा उत्सृजन्ति न संस्थापयन्ति। पर्यग्निकृतमुत्सृजन्ति न संस्थापयन्तीति श्रुतेः। न संस्थापयन्ति वपायाः पूर्वं सकलं कुर्वन्तीत्यर्थः। तत्र आवाहनं भवति। तथा च श्रुतिः। तदाहुर्यदेते देवते आवाहयति त्वष्टारं च वनस्पतिं च क्वास्यैते इष्टे भवत इति प्रयाजेषु वा एते देवते यजति तत्रैवास्यैते इष्टे भवत इति (१९.६)।

६. वाशब्दो विकल्पार्थः। पशुधर्मेण आज्येन। न प्रतिनिधिविधिविकारः शब्दानां। न च पशुद्रव्यसंबन्धिनो धर्माः कर्तव्याः।

७. शिवस्त्वष्टरिहा गहीति पुरोनुवाक्या प्रथमभाजं यशसं वयोधामिति याज्या। त्वष्टुस्य पशोराज्यपक्षे[2] भवेत्।

---

[1] A यद्द्च। [2] CD om चाज्यपक्षे।

२८.

१. साग्निचित्य एव प्रकरणात्। अथानूबन्ध्यस्य पशुपुरोळाश-मन्वञ्चि देविकाभ्यो हवींषि निर्वपन्तीति (१८.७) श्रुतेः।

२. अनुमत्यादीनि पञ्च हवींषि भवन्ति। तानि वै पञ्च हवींषि भवन्तीति श्रुतेः।

३. अनुमत्याः पूर्वोपदिष्टे। विभक्तिकृतस्तु विशेषः। [1]राका-सिनीवालीभ्यां पूर्वोपदिष्टाः।

४. देविकाहविर्भ्यो ऽनन्तराणि देवीभ्यो हवींषि भवन्ति। चकारः पूर्वैः सह समुच्चयार्थः। अत्र हैके देवीभ्यो हवींषि निर्व-पन्ति। तथा[2] तानि वै दश हवींषि भवन्तीति श्रुतेः।

५. अद्य इत्येवमादिभ्यो दशभ्यो दश देवीहवींष्युच्यन्ते। तेषां वक्ष्यमाणिका याज्यानुवाक्याः।

६. आपो हि ष्ठा मयोभुव इत्यपां पुरोनुवाक्या। यो वो वृताभ्यो अकृणोदु लोकमिति याज्या।

७. या ओषधीः पूर्वा जाता इत्योषधीनां पुरोनुवाक्या। अति विश्वाः परि ष्ठा इति याज्या।

८. यूयं गावो मेदयथा कृशं चिदिति गवां पुरोनुवाक्या। न ता अर्वा रेणुककाटो अश्नुत इति याज्या।

९. प्रति त्या सूनरी जनीत्युषसः पुरोनुवाक्या। सत्या सत्ये-भिर्महती महद्भिरिति याज्या।

---

१ O D insert कुहू। २ C (orig) D om तथा।

१०. रात्री व्यख्यदायतीति रात्रेः पुरोनुवाक्या। ये ते रात्रि नृचक्षस इत्येवमादिका याज्या।

११. द्वे ते चक्रे सूर्ये इति सूर्यायाः पुरोनुवाक्या। सुकिं-शुकं शल्मलिं विश्वरूपमिति याज्या।

१२. एन्द्र याहि हरिभिरिति दिवः पुरोनुवाक्या। सखे विष्णो वितरं वि क्रमस्वेति याज्या।

१३. स्योना पृथिवि भवेति पृथिव्याः पुरोनुवाक्या। बलित्था पर्वतानामिति याज्या।

१४. देवीं वाचमजनयन्त देवा इति वाचः पुरोनुवाक्या। यद्वाग्वदन्त्यविचेतनानीति याज्या।

१५. माता रुद्राणां दुहिता वसूनामिति गोः पुरोनुवाक्या। वचोविदं वाचमुदीरयन्तीमिति याज्या।

१६. देवीभ्यो ऽनन्तरं दिशामवेष्टीर्भवन्ति। चकारः पूर्वैः सह समुच्चयार्थः। अत्र चैके दिशामवेष्टीः कुर्वन्तीति श्रुतेः तथा तानि वै षड्वींपि भवन्तीति च।

१७. अग्नय इत्येवमादिभ्यो देवताभ्यः षड्भ्यः षड्वींपि। तेभ्यः पूर्वोपदिष्टा याज्यापुरोनुवाक्याः।

१८. अयं चापरः साग्निचित्ये विशेषः। संस्थितायामुदवसा-नीयायामिष्टौ अग्निहोत्रहोमान्ते मैत्रावरुण्या पयस्यया यागो भवति। तया चानिष्ट्वाग्निचिन्मैथुनं न चरेत्। प्राजापत्यपशुयागा-दारभ्यायं प्रतिषेधः। तथैव शतपथश्रुतेः। तत्र हि प्राजापत्यपशु-प्रकरणोक्तं। तदाङ्गनैतेन पशुनेष्ट्वोपरि शयीत न मांसमश्नीयान्न

मिथुनमुपेयात्[1] पूर्वदीक्षा वा एव पशुः श्मनस्कृप्तं वै तद्दीक्षित उपरि शयीत यन्मांसमश्नीयाद्यन्मिथुनमुपेयादिति। न त्वेवैषा दीक्षा नैव हि मेखलास्ति न कृष्णाजिनमिष्टकां वा एतां कुरुते तस्माद् काममेवोपरि शयीतैतद् सर्वमन्नं यदेते पशवस्तदस्याचासमार्ध्यं भवति तद्यानि कानि चामधुनो ऽशनानि तेषामस्य सर्वेषां कामाशनं यदि लभेत। मिथुनं तु नोपेयात्पुरा मैत्रावरुण्ये पयस्याया इति। द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति।

## इति शाङ्खायनसूत्रभाष्ये नवमो ऽध्यायः समाप्तः।

---

१ श्मप० १ १ १ २९।

## अथ दशमो ऽध्यायः ।



१.

भाष्यकारगिरां यत्र विनष्टं लेखनादिना ।
अक्षरं तद्दासशर्मा सुब्रह्मसुरकल्पयत् ॥

उक्तो ज्योतिष्टोमः साग्निचित्यः । इदानीं श्रुतिक्रमेण गवामयनप्रकरणाम्नातानि चतुर्विंशतिरहान्यनभ्यासृत्तिरूपाणि, वक्तव्यानि। तेषां तावदुपदेशलाघवार्थं सत्त्राहीनोभयप्रकृतिरूपं द्वादशाहमाह।

१. शुक्लपक्षविशिष्टायामष्टम्यां द्वादशाहाय दीक्षन्ते । तिथिनियमः शाखान्तरात् । प्रक्रमप्रसवोत्थानान्येवमेव हि शुक्ले संभाव्यन्ते। प्रकृतिवत् ।

२. दीक्षापरिमाणं शाखान्तरात् ।

३. नियमार्थं वचनम् ।

४. सुत्यान्यहानीति सावनमानपरिच्छिन्नान्यहानि द्वादश भवन्ति ।

५. अतिरात्रसंज्ञं सुत्यानां प्रथममहरुत्तमं च भवतः ।

६. प्रथमोत्तमयोरह्नोर्मध्ये दशको ऽहर्गणो दशरात्रसंज्ञको भवति । तस्याप्यवयवशो नामान्युच्यन्ते शास्त्रसंव्यवहाराय ।

७. तस्य दशरात्रस्य यः प्रथमः षडहः स पृष्ठ्यसंज्ञो भवति ।

८. षडहानन्तरं त्रयो ऽहर्विशेषाश्छन्दोमसंज्ञा भवन्ति ।

९. छन्दोमेभ्यो ऽनन्तरं दशममहर्भवति । संज्ञा शास्त्रसंव्यवहारार्था ।

१०. अयं यज्ञो देवया अयंमिधेध इति हारियोजनस्य याज्या भवति।

११. अननुवषट्कृत एव हारियोजने ऽसंप्रेषितो मैत्रावरुणः परा याहि मघवन्ना च याहीत्येतां पुरोनुवाक्यामुक्त्वा जायेदस्तं मघवन् सेदु योनिरित्येतां वा। इह मद एव मघवन्निन्द्र तेभ्य इत्येवमादिकमतिप्रैषमाह द्वितीयप्रभृतिष्वहःसु।

१२. प्रायणीयाख्यं प्रथममहरतिरात्रसंस्थं तस्मिन्पत्नीसंयाजान्ते तदहरेवाग्निष्टोमसंस्थमहः प्रारभ्यते। अतः प्रायणीयहारियोजने ऽननुवषट्कृते पुरोनुवाक्यामनूच्यातिप्रैषो विकल्पेन भवति। यदा च प्रयुज्यते तदा यथासमाम्नातं भवति। श्वःशब्दस्य सुत्याभिप्रायात्।

१३. आग्नीध्रो ऽतिप्रेषिते स्वस्य धिष्ण्यस्य पश्चादुपविश्याह श्वः सुत्या वामित्येवमादिकं मन्त्रम्।

१४. अयं यज्ञ इत्यादि यदनुक्रान्तं तदेतत् प्रागुत्तमादह्नो नित्यं भवति।

१५. प्रागुत्तमादह्नः पत्नीसंयाजान्तान्यहानि भवन्ति।

१६. प्रागुत्तमादह्न इति वर्तते। इलासूक्तवाकयोः प्रागुत्तमादह्न आशिषो न निर्वक्तव्याः।

१७. यजमाननामधेयस्य सूक्तवाके प्रागुत्तमादह्नो ऽग्रहणम्। अहादशाहविकारेष्वप्यहर्गणेषु नित्यमेतत् प्रागुत्तमादह्न इत्यादि यदनुक्रान्तं तद् भवतीत्यस्यार्थस्य प्रकाशनार्थश्चकारः।

१८. प्रायणीयोदयनीययोरतिरात्रयोः प्रउगे सारस्वतस्तृचो नित्यः। नित्यमेतदित्यधिकारात्। माधुच्छन्दसे वेति विकल्पो मा

भृदिति सूचारम्भः। अन्येष्वहःसु वचनप्रामाण्यात् यथोक्तः सारस्वतः।

१९. माधुच्छन्दसः प्रउग इत्येवमुच्यमाने अह्नादग्राहविकारेष्वहःसु वा सारस्वततृचो भवति।

२०. अहःसंघातेष्विति द्विरात्रग्रहणात्सिद्धे संघातग्रहणं सन्निकर्षार्थं। तेनायमर्थो भवति। द्विरात्रप्रभृतिषु अतिरात्रगणेषु यस्मिन् काले होता आश्विनं शंसेत्तस्मिन्नकालमेव मैत्रावरुणः प्रातरनुवाकमनुब्रूयादहर्गणेषु अग्नीषोमीयान्तं तन्त्रमह्नशातं ऊर्ध्वं चावभृथाद्विभावात्।

---

## २.

१. त्रिवृत्स्तोमं सर्वमेवाहः। रथन्तरपृष्ठं नियमतः। अग्निष्टोमसंस्थं। प्रथममिति शास्त्रसंव्यवहारार्थं नाम दाशरात्रिकं तस्येदमिति। त्रिवृत्स्तोमं रथन्तरपृष्ठमग्निष्टोम इति पूर्वकारिवशादन्यथापीति चेत्। सत्यं। तथापि स्वश्रुत्यनुकारेण[1] वचनम्।

२. व्यूल्ह इति दशरात्रस्य विशेषाख्या। समूल्ह इति च। तत्र व्यूल्हपक्षे उपप्रयन्तो अध्वरमित्येतदाज्यसूक्तं भवति। प्राकृतस्याज्यसूक्तस्यैव निवृत्तिर्नामधेयात्। प्र वो देवायाग्नय इति समूल्हपक्ष आज्यं भवति। तथैव श्रुतत्वात्।

३. उभयोरपि व्यूल्हसमूल्हयोः सह सारस्वतेन। प्रउगवचनात्।

४. आ यात्विन्द्रो ऽवस उप न इति मरुत्वतीयमेतत्सूक्तं भवति। प्राकृतस्य सूक्तमात्रस्यैव निवृत्तिः। तथा श्रुत्युपचारात्।

---

[1] A ०कारेण।

५. आ न इन्द्रो दूरादा न आसादित्येतत्सूक्तं निष्केवल्यं भवति।

६. अध्वर्यो उपह्वमिष्टामे वर्चस्विमित्येवमादिना मन्त्रेणातिग्राह्यं माहेन्द्रमनुकृतं[1] भक्षयति। यजमानो मन्त्रलिङ्गात्। भक्षणं यजमानैरिति च कात्यायनस्य।

७. युञ्जते मन उत युञ्जते धिय इति सावित्रमिति वचनात्प्राकृतनिवृत्तिः। इहेह वो मनसा बन्धुता न इत्यार्भवं। ह्वयो न विद्वाँ अयुजि स्वयं धुरीति वैश्वदेवं। देवानां पत्नीरिति द्वे वा परिहाप्य। एवमेव श्रुतत्वात्। *इति वैश्वदेवे विकार इति वचनात्* क्षेपं प्राकृतम्।

८. अदितिर्द्यौरदितिरन्तरिक्षमित्येषा पञ्चजनीया परिधानीया। सर्वत्र द्वादशाहविकारेष्वपि[2] कार्या।

९. विकार इत्यनुवर्तते। प्र शर्धाय मारुताय स्वभानव इत्येतन्मारुतं प्राकृतस्य निवृत्तिं करोति।

१०. एतावतो ऽग्निष्टोमसंस्थादूर्ध्वं सप्ताहान्युक्थ्यसंस्थानि भवन्ति।

११. द्वाशरात्रिकं चतुर्थमहः षोलश्यन्तं कार्यम्। अथोक्थ्यान्युपेत्य स्त्रुष्ट्वा षोलशिनमुपयन्तीति चतुर्थ एव श्रुतेः।

---

## २.

१. पञ्चदशस्तोमं स्तोत्रम्। एवमेवाहर्बृहत्पृष्ठविशिष्टं द्वितीयमित्येवमाख्यं भवति।

२. अग्निं दूतं वृणीमह इत्येतदाज्यसूक्तं व्यूल्हपक्षे भवति।

---

[1] D अनुकृतं।  [2] C द्वादशाहेषि।

३. त्वं हि चैतवद्यश इत्येतदाज्यसूक्तं समूल्हे भवति । किंतु यचैतत्सूक्तं प्रयुज्यते तत्र सर्वचोत्तमां मुक्त्वा प्रयुज्यते ।

४. वक्ष्यमाणः प्रउगो गार्त्समद इत्येवंनामा । शास्त्रसंव्यवहारार्थं नामकरणम् ।

५. अयं तृचो वायव्यः ।

६. शुक्रस्याद्य गवाशिर इत्येका । उभा देवेति द्वे । इत्ययमैन्द्रवायवस्तृचः ।

७. अयं वां मित्रावरुणेत्येवमादीनि चत्वारि तृचानि मैत्रावरुणमाश्विनमैन्द्रं वैश्वदेवमिति ।

८. उत स्या नः सरस्वती घोरा हिरण्यवर्तनिरित्येवमादिकः सारस्वतस्तृचः । इत्येतानि सप्त प्रउगतृचानि प्राकृतानां निवृत्तिं कुर्वन्ति नान्यस्य । प्रउगतृचानीति वचनात् ।

९. विश्वानरस्य वस्पतिमिति मरुत्वतीयस्य प्रतिपत् । इन्द्र इत्सोमपा एक इत्यनुचरो मरुत्वतीयस्य शस्त्रस्य । तथैव श्रुतेः ।

१०. प्राकृतस्य प्राग्प्रणस्वत्यस्य निवृत्तिः । तन्नामधेयस्य द्रव्यान्तरे श्रुतत्वात् ।

११. इन्द्रसोमं सोमपते पिबेममित्येतत्सूक्तं मरुत्वतीयं भवति । अर्थात्प्राकृतनिवृत्तिः ।

१२. या त ऊतिरवमा या परमेत्येतत्सूक्तं निष्केवल्यं भवति । तथैव श्रुतेः ।

१३. इन्द्रौजस्विन्नित्येवमादिना मन्त्रेण यजमानो प्रतिपाद्यं भक्षयति । प्रत्यगाशीर्यागात् ।

१४. विश्वो देवस्य नेतुरित्येषा वैश्वदेवस्य प्रतिपद्भवति।

१५. विश्वो देवस्येत्येतस्या उत्तरे। अस्य हि स्वयशस्तरमित्येते भवतः।

१६. आ विश्वदेवं सत्पतिमित्ययं तृचो ऽनुचरः।

१७. तद्देवस्य सवितुर्वार्यं महदिति सावित्रं। ते हि द्यावापृथिवी विश्वशंभुवेति द्यावापृथिवीयं। यज्ञस्य वो रथ्यं विश्पतिं विशामिति वैश्वदेवम्। इति वैश्वदेवे विकारः। विकारवचनादन्यत्प्राकृतम्।

१८. वृषस्य वृष्णो अरुषस्य नू सह इति वैश्वानरीयं। वृष्णे शर्धाय सुमखाय वेधस इति मारुतं। नू चित्सहोजा अमृतो नि तुन्दत इति जातवेदसीयमित्याग्निमारुते विकारो ऽन्यत् प्राकृतम्।

---

## ४.

१. सप्तदश स्तोमाः सर्वेषु स्तोत्रेष्वस्मिन्नहनि तदिदं सप्तदशस्तोममहः। वैरूपपृष्ठमिति वैरूपं नाम निष्केवल्यस्तोत्रस्य साम। तृतीयमिति शास्त्रसंव्यवहारार्थं नाम। स्तोमातिशंसनार्थं स्तोमसङ्ख्यावचनम्।

२. त्रिष्वप्यहस्सु गायत्र्याद्यानि व्यूळ्हपक्षे। गायत्रप्रातःसवनो ह्येष त्र्यह इति (२२. २) श्रुतेः।

३. त्वमग्ने वसूंरिहेति समूळ्हपक्षे आज्यं भवति। अन्यत्रापि यत्रास्य प्रयोगस्तत्र[1] सर्वत्रोत्तमां परिहाप्य शंसेत्।

---

[1] C D om. तत्र।

४. औष्णिह आत्रेय इत्येवंसंज्ञको ऽश्विनहनि प्रउगो वायव्यादितृचसप्तको भवति ।

५. वायव्यस्य तृचस्यैका भवति ।

६. वायो याहि शिवा दिव इत्येते द्वे पूर्वा चैका एवमसौ वायव्यस्तृचः ।

७. एवमेष ऐन्द्रवायवस्तृचः ।

८. आ मित्रे वरुणे वयमिति मैत्रावरुणस्तृचः ।

९. औष्णिह आश्विनस्तृचः समाख्यानात् ।

१०. आ याह्यद्रिभिः सुतमित्यैन्द्रस्तृचः ।

११. सजूर्विश्वेभिर्देवेभिरित्येवमादिको वैश्वदेवस्तृचः ।

१२. उत न प्रिया प्रियास्विति सारस्वतस्तृचः । इति प्रउगतृचानीति वचनात् प्रउगतृचानामेव निवृत्तिरन्यत्प्राकृतम् ।

१३. तंतमिद्राधसे मह इति मरुत्वतीयस्य प्रतिपदिति श्रुतेः । त्रय इन्द्रस्य सोमा इत्यनुचर इति च ।

१४. प्रैतु ब्रह्मणस्पतिरित्ययं ब्राह्मणस्पत्यः स्वधर्मेण प्रगाथः ।

१५. अर्यमा मनुषो देवतातेति सूक्तं मरुत्वतीयं भवति ।

१६. यद् द्याव इन्द्रेति वैरूपस्य स्तोत्रियः प्रागाथेन धर्मेण । यदिन्द्र यावतस्त्वमित्यनुरूपः प्रागाथेन[1] धर्मेणैव । वैरूपस्यैतावन्यचा-ण्युच्यमानौ प्रत्येतव्यौ ।

१७. इन्द्र त्रिधातु शरणमिति त्रिवाप्सामप्रगाथ इति श्रुतेः ।

१८. अहं भुवं वसुनः पूर्व्यस्पतिरितीन्द्रसूक्तमिति श्रुतेः । यो

१ A प्रागाथेनैव धर्मेण ।

जात एव प्रथमो मनस्वानित्येतस्मिंस्त्रैष्टुभे निविदं दधातीति च श्रुतत्वात्। द्विसूक्तं निष्केवल्यं। उपजनस्य प्रकृतिं निवर्तयति। सूक्तविद्धावन्त्ये निविन्मध्यमे त्वाद्याव इत्येतद्यथोक्तं कार्यम्।

१८. सूर्य भ्राजस्विन्नित्येवमादिना मन्त्रेणातिग्राह्यभक्षो यजमानकर्तृकः। तत्सवितुर्वृणीमह इति प्रतिपदग्निष्टोमस्य।

२०. अभि त्वा देव सवितरित्यभिवानत्नुचर इति श्रुतेः।

२१. उदु त्य देवः सविता हिरण्ययेति सावित्रस्तृचः। एतवती भुवनानामभिश्रियेति द्यावापृथिवीयस्तृचः। अनश्वो जातो अनभीशुरुक्थ्य इत्यार्भवम्। परावतो ये दिधिषन्त आप्यमिति[1] वैश्वदेवे विकारः। अन्यत्प्राकृतम्।

२२. वैश्वानराय धिषणामृतावृध इति वैश्वानरीयं। धारावरा मरुतो धृष्णोजस इति मारुतम्। त्वमग्ने प्रथमो अङ्गिरा ऋषिरिति जातवेदसीयं। तथैव श्रुतत्वात्। इत्याग्निमारुते विकार इति वाक्यशेषः। प्राकृतमन्यद्विकारवचनात्।

---

## ५.

१. एकविंशस्तोममिति समासो ऽद्धर्वचनः। स्तोमसञ्ज्ञा सर्वत्र स्तोमनिर्गमने स्तोत्रकाणामुपपद्यते। वैराजपृष्ठमिति वैराजशब्दो

३. अग्निं नरो दीधितिभिररण्योरिति समूल्हे वैराजमाज्यमिति (१२. ५) श्रुतेः।

४. तथैव श्रुतेः। स उच्यते।

५. वायव्यस्य प्रथमा।

६. विहि होत्रा अवीता इत्येते द्वे। एवं वायव्यस्तृचः।

७. इन्द्रश्च वायवित्येवमादिको वायव्यात्परस्तृच ऐन्द्रवायवो भवति।

८. यश्चिकेत स सुक्रतुरिति मैत्रावरुणस्तृचः।

९. आ नो विश्वाभिरित्येवमादिसध्वंस आश्विनस्तृचः।

१०. आ त्वा गिरो रथीरिवेत्यैन्द्रस्तृचः।

११. अप त्यं वृजिनं रिपुमित्येषा वैश्वदेवतृचस्यैका भवति। अप त्यं परिपन्थिनमित्येषा न भवति। यूयं हि ष्ठेति साहचर्यात्।

१२. यूयं हि ष्ठा सुदानव इत्येते वैश्वदेवस्य द्वे पूर्वोक्ता चैका। एवं वैश्वदेवस्तृचः। एकयानुष्टुभा क्वचिन्न्यायेनान्या अनुष्टुभः।

१३. इयमददाद्रभसमृणच्युतमिति सारस्वतस्तृचो जागतः। जगत्प्रातःसवनो ह्येष त्र्यह इति (२२. ७) श्रुतेः।

१४. सामूल्हिके प्रउगे प्र णो देवीति सारस्वतस्तृचो भवति।

१५. तं त्वा यज्ञेभिरीमह इति यज्ञवत्या मरुत्वतीयं प्रतिपद्यत इति श्रुतेः।

१६. पार्ष्ठिकस्य प्रथमस्य त्र्यहस्यानुचराः। इदं वसो सुतमन्धः। इन्द्र इत्सोमपा एकः। चय इन्द्रस्य सोमा इति। ये च ब्राह्मणस्पत्याः प्र नूनं ब्रह्मणस्पतिरुत्तिष्ठ ब्रह्मणस्पते प्रैतु ब्रह्मणस्पतिरिति उत्तरस्यापि त्र्यहस्य यथासङ्ख्येनैत एव।

१७. अधी हवमिन्द्र मा रिषण्य इति मरुत्वतीयमिति (२२.७) श्रुतेः।

१८. इन्द्र मरुत्व इह पाहि सोममिति तृचः। इमं नु मायिनं हुव इति च। एतौ तृचौ पूर्वं च सूक्तम्।

१९. सूक्तविहृद्वावन्त्ये निविन्मध्यमे ताहाव इति यथोक्तम्।

२०. वैराजस्य पृष्ठस्य पिबा सोममिन्द्र मन्दतु त्वेत्येतौ स्तोत्रियानुरूपौ सन्यूङ्खौ भवतः। न्यूङ्ख इत्योकारो ऽभ्यस्त उच्यते। तद्धर्मयुक्तं स्तोत्रियानुरूपयोः शंसनम्।

२१. त्रिपादा एता विराजः। तत्र मध्यमस्य पादस्य द्वितीये ऽक्षरे यः स्वरस्तस्य द्विरोकारः सप्तमे ऽक्षरे यस्तस्यापि स्थाने द्विरोकारइत्येवंरूप आनुष्टुभाख्यो न्यूङ्खः। तस्योदाहरणम्।

२२. न्यूङ्खनीयश्चेत्पाद इत्यादि (१२. १.७) तत्रैव वक्ष्यामः।

२३. वैराजाख्यं न्यूङ्खस्वरूपमुच्यते। इह तावन्मध्यमाख्यस्यैव पादस्य द्वितीये ऽक्षरे द्वादशकृत्व ओकारो ऽभ्यस्यः। तत्र श्रुतत्वात्। त्रिष्कृत्व ओ उच्चार्य तत एकं दीर्घं स्वधर्मेण पुनरप्येवं द्विः इति वैराजो न्यूङ्खः। अस्योदाहरणम्।

२४. यं तो ओ ओ ओ३ ओ ओ ओ ओ३ ओ ओ ओ ओ३ सुपाव हर्यश्वाद्रिः।

२५. ओथा मोदैवेति प्रतिगरस्य[1] पञ्चचरस्य द्वितीयचतुर्थयो-

१ A om ओथा मोदैवेति प्रतिगरस्य।

रचरयोर्द्विःपूर्वं द्विरुत्तरमित्यानुष्टुभः प्रतिगरः । अस्योदाहरणम् । ओथो३ ओ३ मोदो३ ओ३ एवेति[१] ।

२६. ओथा मोदैवेत्यस्य वैराजन्यूङ्खपत्र द्वितीये ऽक्षरे वैराजः[२] प्रतिन्यूङ्खः प्रतिगरो[३] भवति[४] । आनुष्टुभप्रतिगरोदाहरणम्[५] ।

२७. वैराजप्रतिगरोदाहरणम्[६] ।

२८. ओथो ओ ओ ओ३ ओ ओ ओ ओ३ ओ ओ ओ ओ३ मोदैव इति ।

२९. इन्द्रमिद्देवतातय इत्यष्टेन्द्रः साम्नः प्रगाथः इति श्रुतेः ।

३०. तुभ्येदिमा सवना शूरविश्वेत्येतासां तिसृणां पूर्वयोर्न्यूङ्खः कर्तव्य । स्तोत्रियानुरूपयोरेव न्यूङ्खा उक्थमुखीययोरेति श्रुतेः ।

३१. कुह श्रुत इन्द्रः कस्मिन्नद्येति सूक्तं । युध्मस्य ते वृषभस्य स्वराज इति सूक्तं । त्यमु वः सत्रासाहमिति तिस्रः । इत्येतत्सूक्तद्वयं तृचं च निष्केवल्यम् ।

३२. विश्वो देवस्य नेतुरिति । एषा प्रतिपद् द्वितीयादह्नः प्रतिपत्तव्या[७] ।

३३. हिरण्यपाणिमूतय इत्यूतिमाननुचर इति (२१.८) श्रुतेः ।

३४. आ देवो सविता सुरत्न इति सावित्रं । प्र द्यावा यज्ञैः पृथिवी नमोभिरिति द्यावापृथिवीयं । प्र ऋभुभ्यो दूतमिव वाचमिष्य

---

१ A om from अस्योदाहरण up to २६ ०त्यस्य । D om ओथो मोदैवेति ।
२ ^ वैराजन्यूङ्खपत्रे तु ओथा मोदैवेत्येतस्य । ३ C om प्रतिगरो । ४ D om 26 27.
५ C अस्य instead of आनुष्टुभप्रतिगर । ६ C D om Sutra and Text
७ D om C in marg

इत्यार्भवं। त्रैष्टुभान्येतानि। त्रिष्टुप् तृतीयसवन इति श्रुतेः। प्र ऋभुकेतु देवी मनीषेति वैश्वदेवे विकारौ ऽन्यत्प्राकृतम्।

२५. प्र सम्राजो असुरस्य प्रशस्तिमिति वैश्वानरीयम्। क ईं व्यक्ता नरः सनीळा इति मारुतं। हुवे वः सुद्योत्मानं सुवृक्तिमिति जातवेदसीयं। त्रैष्टुभान्येतानि। त्रिष्टुप् तृतीयसवन इति श्रुतेः। इत्याग्निमारुते विकार इति शेषः।

---

## ६.

१. पञ्चमसंज्ञकं दाशरात्रिकं पञ्चममहः। त्रिणवस्तोमं। स्तोमसङ्ख्या होत्रकाणां स्तोमातिशंसनप्रयोजनार्था। शक्वर्यो महानाम्न्यः। तद्योनिकं पृष्ठं सामेत्याहुः।

२. इममू षु वो अतिथिमुषर्बुधमिति व्यूह्लपक्षे नवर्चमाज्यं भवति। जगत्प्रातःसवनो ह्येष त्र्यह इति श्रुतेः।

३. अग्निं तं मन्ये यो वसुरिति समूह्लपक्षे आज्यं कार्यम्।

४. तस्याग्निं तं मन्य इत्येतस्य प्रथमायै शंसनार्थं प्रकृतिवत्पदं अवगृह्य पदमवगृह्य[१] अवस्य द्वे अवगृह्य अवस्य[१] एकेन प्रणौति। एवमेतां सविवेषणां शस्त्वा ततः।

५. अर्धर्चशो वा प्रातःसवनमित्यस्य निवृत्त्यर्थं वचनम्।

६. श्रुत्यनुकरणार्थं वचनमष्टर्चीनां चोद्धारः पक्षे।

७. आ नो यज्ञमिति द्वे। आ नो वायो महे तन इत्येका। इत्ययं वायव्यस्तृचः।

---

~ ~ om अवस्य and ins सवे। १ C D om अवस्य।

८. आ वां सहस्रं हरय इत्यैन्द्रवायवस्तृचः। तिस्रो ऽपि गायत्र्यः बार्हताख्यस्तु छन्दिन्यायेन।

९. स्वधगित्या स मर्त्य इत्येते द्वे। प्र मित्राय प्रार्यम्ण इत्येका मैत्रावरुणो ऽयं तृचः।

१०. आश्विनो ऽयं तृच.।

११. तृचो ऽयमैन्द्रः।

१२. देवंदेवं वो ऽवसे देवंदेवमभिष्टय इत्येवमादिको वैश्वदेवस्तृचः। यस्तु प्राथम्यादाशङ्क्यते देवंदेवं वो ऽवस इन्द्रमिन्द्रं गृणीषणीत्ययं न बार्हतो नापि वैश्वदेवः। तत्र केचिदाक्षरन्यो ऽप्येवमादिको बार्हतश्च वैश्वदेवस्य शाखान्तरे ऽस्ति। तन्निवृत्त्यर्थं विशेषणम्।

१३. इयमददाद्रभसमृणच्युतमिति सारस्वतस्तृचः। एतान्युक्तानि प्रउगतृचानि। पुरोरुचस्तु नित्याः।

१४. उत स्या नः सरस्वती घोरा हिरण्यवर्तनिरिति सामूह्लिके प्रउगे सारस्वतस्तृचः।

१५. यत्पाञ्चजन्यया विशेति मरुत्वतीयस्य प्रतिपदिति श्रुतेः।

१६. इत्था हि सोम इन्मद इति मदत्यांक्तमिति (९.१) श्रुतेः सूक्तं। अविताभि सुन्वतो वृक्तबर्हिष इति पट्पदा इति श्रुतेः। मरुत्वाँ इन्द्र वृषभो रणायेति विज्ञातत्रैष्टुभमिति श्रुतेः। अयं ह येन वा इदमिति तिस्रः। एवमेकस्तृचः त्रीणि च पूर्वाणि सूक्तानीति मरुत्वतीयं। सूक्तविहृद्भावन्ये निविन्प्रथमे त्वाहाव इति यथोक्तम्।

१७. शक्वर्यो महानाम्न्य इत्यनर्थन्तरं। ता अरण्ये अनूच्याः। अतो न प्रतीकग्रहणम्।

१८. नवानां महानाम्नीनां शस्त्रविधिरुच्यते। यथा तिस्रो ऽनुष्टुभः शस्यन्ते अर्धर्चश एवमेकैका शस्यते। त्रिभिस्त्रिभिरेकैका भवतीत्यर्थः। ततस्तिस्रस्तिस्र उच्यन्ते। पदगादौ तिस्र आवर्तन्ते। यथातथेति निर्देशात्। महानाम्नीनां योन्यनुशंसने ऽपि विनियुज्यमानानामयं[१] धर्मः। न[२] निवृत्तिः वैराजन्यूङ्खनिवृत्तिवत्।

१९. अयमुत्तमाशब्दस्तृतीये तृचे वर्तते। तस्या एवंरूपाया उत्तमाया आम्नायप्रसिद्धाया उत्तमा सा पङ्क्तिरिति। पङ्क्तिधर्मेण शस्यत इत्यर्थः।

२०. या सा पङ्क्तिरुत्तमा तस्या उत्तमे पादे पञ्च पदानि पुरीषाख्यानि निविच्छंसं शंसेत्। न प्रणवमन्तरा कुर्यादित्यर्थः। तानि चारण्ये ऽनूच्यानि।

२१. मत्यस्मा इत्येवमादिका यथोपदिष्टास्त्र्यृचा अस्माअस्मा इति दशमी। एवा ह्यसि वीरयुरिति वा दशमी। स एषो ऽनुरूपः। स इत्यतिरेकात्परोवष्टे ऽस्य स्तोत्रियत्वेन विनियुज्यमानस्य महानाम्नीस्तोत्रियवत् प्रथमस्तृचस्त्रिरुच्यते। स इति सादृश्यार्थे शब्दनिर्देशात्।

२२. यदिन्द्र नाहुषीष्वेति साम्नः प्रगाथ इति (२३.२)श्रुतेः।

२३. इन्द्रो मदाय वावृध इति मद्वत्यांक प्रेदं ब्रह्म वृत्रतूर्येष्वाविथेति षट्पदाः। अभूरेको रयिपते रयीणामिति विज्ञातत्रैष्टुभं सवनधरणं[३] तमिन्द्रं वाजयामसीति तिस्रः[४]। गायत्रमध्य-

---

१ C (orig) D ०नामधेयधर्मः। २ C (orig) D om न।
३ Om in A ४ C D om तिस्रः।

न्द्रिनो ह्येष त्र्यह इति श्रुतिवचनादिति (२१. २) निर्व्वेत्तव्यं। सूक्तविहृद्द्वावन्त्ये निविद्धथमे लाहाव इति यथोक्तम्।

२४. तत्सवितुर्वरेण्यमिति वैश्वामित्रो ऽनुचर इति श्रुतेः।

२५. उदु ष्य देवः सविता दमूना इति तृचं सावित्रं। मही द्यावापृथिवी इह ज्येष्ठे इति द्यावापृथिवीयं चतुर्ऋचम्। ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेत्यार्भवं। को नु वां मित्रावरुणावृतायन्निति वैश्वदेवं प्र शंतमेति वा श्रुत्यन्तरात्। इति वैश्वदेवे विकारो न्व्या-ख्यातम्।

२६. हविष्पान्तमजरं स्वर्विदीति वैश्वानरीयं। अग्निसूक्ते एक एवाग्निर्बहुधा समिद्ध इति खैलिकापि सती नोद्धर्तव्या। प्रश्नव्याकरणयोः साहचर्यात्। वपुर्नु तच्चिकितुषे चिदस्त्विति मारु-तम्। अग्निर्होता गृहपतिः स राजेति जातवेदसीयं। अग्निसूक्ते अग्ने यदद्य विशो अध्वरस्य होतरिति यथोदमादरपादः।

अनुदात्तं तु पादादौ नोवर्गं विद्यते पदम्।

इति। होतरित्यनुदात्तं। इत्याग्निमारुते। विकार इति वाक्य-शेषः।

२७. सामूह्निके पचे मूर्धानमित्येवमादीनि सूक्तानि वैश्वा-नरीयमारुतजातवेदसीयानि भवन्ति। तथा च श्रुतावश्व समन्ध इत्यारभ्य सर्वमाम्नातम्।

---

७.

१. षष्ठमहर्व्याख्यातव्यं। तस्य तावत्सामान्यमेतत् स्वरूपं। स्तोमसङ्ख्या होत्रकाणां स्तोमातिशंसनार्था। रैवतपृष्ठमिति स्वमतप्रकाशनं। षष्ठमिति संव्यवहारार्थम्।

२. नित्याभिः प्राकृतीभिर्याज्याभिः पारुच्छेपीर्वक्ष्यमाणिकाः संधाय यजन्ति। होत्रादयः। नित्याः पूर्वा याज्याः कृत्वा पारुच्छेपीभिर्यजन्तीति श्रुतेः। पारुच्छेपीभिरिति समानेषु प्रतीकेषु नियमार्थम्।

३. आ त्वा जुवो रारहाणा अभि प्रय आ वां धियो ववृत्युरध्वराँ उपेत्यैन्द्रवायवस्य पुरोनुवाक्ये भवतः। श्रुत्यन्तरात् नित्याभ्यां सह संधाय। नेद्च्युतं यज्ञस्य प्रियं देवानामन्तरयामेति चार्थवादस्य तुल्यत्वात्।

४. स्तीर्णं बर्हिरुप नो याहि वीतये आ वां रथो नियुत्वान्वक्षदवस इति याज्ये नित्ययोरुत्तरे। तद्यदाभिस्तदहर्न वषट्कुर्वन्तीति (२३. ४) श्रुतेः।

५. सुषुमा यातमद्रिभिरिति नित्याया उपरि मैत्रावरुणग्रहस्य पुरोनुवाक्या कार्या। उत्तरा याज्या। इम आ यातमिन्दव इत्येषा नित्याया उपरि उत्तरा याज्या।

६. युवां स्तोमेभिर्देवयन्तो अश्विनेत्येषा आश्विनस्य ग्रहस्य पुरोनुवाक्या नित्याया उपरि। उत्तरा याज्या अचेति दस्रेत्येवमादिका।

७. इयमिन्द्र इयपाणास इन्दव इति होतुः प्राकृताया उपरि।

तां वां धेनुं न वासरीमिति मैत्रावरुणस्य नित्यानन्तरा। विश्वेषु हि त्वा सवनेषु तुञ्जत इति ब्राह्मणाच्छंसिनो नित्यामुक्त्वा। मो षु वो अस्मदभितानि पौंस्येति पोतुर्नित्या च पूर्वा। आ यन्नः पत्नीर्गमन्त्यच्छेति नित्याया उपरि द्विपदा। ततस्त्वा नो रायस्त्वातिषाचो वसूनीति नेष्टुः। यथासङ्ख्याभावान्नेष्टुर्वचनं। द्विपदा त्रिष्टुप् चेति च[१] समुच्चयार्थः। अग्निं होतारं मन्ये दास्वन्तमित्याग्नीध्रस्य नित्या च पूर्वा। दध्यङ् ह मे जनुषं पूर्वो अङ्गिरा इत्यच्छावाकस्य नित्याया उपरि। प्रातःसवने प्रस्थितानामेता याज्याः।

८. तुभ्यं हिन्वानो वसिष्ठ गा अप इति षड्चयोः सूक्तयोरेकैका होत्रादीनामृतुप्रैषादूर्ध्वं याज्या भवति। नित्यान्पूर्वानृतुयाजान् कृत्वा गार्त्समदैर्यजन्तीति (२२. ४) श्रुतेः।

९. होतरेतद्यजेत्यध्वर्युराह गृहपतिश्चेत्यस्यापवादः। यचियविश्ययोरपि स्वयंक्रिया स्वयमिति वचनात्।

१०. साग्निचित्ये[२] कर्मणि चित्यस्याग्नेः पश्चादुपविश्याध्वर्युर्यजति। अनग्निके उत्तरवेदेः[३] प्राक्तामुखीयस्याग्नेः पश्चादुपविश्य गृहपतिर्यजति।

११. पिबा सोममिन्द्र सुवानमद्रिभिः इन्द्राय हि द्यौरसुरो अनम्नत। त्वया वयं मघवन्पूर्व्ये धने। पाहि न इन्द्र सुष्टुत स्रिधः। नू इत्था ते पूर्वथा च प्रवाच्य। अवर्मह इन्द्र दादृहि श्रुधी नः। वनोति हि सुन्वन् क्षयं परीणसः। इत्येता माध्यन्दिने सवने होत्रादीनां प्रस्थितयाज्याः। यागो यथासङ्ख्येन नित्यानामुपरि।

१ D om च, C has it in marg   २ C D साग्निके।   ३ A ins पश्चात्।

१२. न पारुच्छेपीसंधानं। कियांस्तु विकारः। उत माता दुहद्दिवा शृणोतु न इति नित्या अस्मेव न इति निवर्त्य[1] प्रस्थितयाज्या भवति।

१३. अनवानन्तो ऽर्धर्चेष्वनवानन्तः। त्रिष्वपि सवनेषु प्रस्थिताना, द्विदेवत्यर्तुयाजानां च[2] यजन्ति।

१४. तद्दे खल्वेकाह्निकीभिरेव यजेयुरिति (२२.५) श्रुतेः। अस्मिन्नपि पक्षे ऽनवानन्त एव।

---

## ८.

१. अयं जायत मनुषो धरीमणीत्याज्यमिति श्रुते.। पदविग्रहणमेकस्मिन्पादे।

२. वक्ष्यमाणकः। श्रुत्यन्तरे विशेषवचनात्।

३. स्तीर्णं बर्हिरुप नो याहि वीतय इति वायव्यस्तृचः।

४. आ वां रथो नियुत्वान्वक्षदवस इत्यैन्द्रवायवस्तृचः।

५. अयं मित्राय वरुणाय शंतम इति मैत्रावरुणस्तृचः।

६. युवां स्तोमेभिर्देवयन्तो अश्विनेत्याश्विनस्तृचः।

७. इयमिन्द्र वृषपाणाय इन्दव इत्येका ऐन्द्रस्य तृचस्य।

८. अवर्मह इन्द्र दादृहि श्रुधी न इत्येते द्वे पूर्वया सहैन्द्रस्तृचः।

९. ओ षू णो अग्ने शृणुहि त्वमीलित इति वैश्वदेवस्तृचः।

---

१ A निर्दश्य C नित्यां निवर्त्य प्र० D नित्यां निवर्त्य प्र०। २ CD तु instead of च।

१०. इयमददाद्रभसमृणच्युतमिति सारस्वतमृचः। इति प्रउगतृचानि। पुरोरुचस्तु नित्याः।

११. उत नः प्रिया प्रियास्विति सप्तर्च्छपदे सारस्वतमृचो भवति।

१२. स पूर्व्यो महानामिति मरुत्वतीयस्य प्रतिपदिति श्रुतेः।

१३. यं त्वं रथमिन्द्र मेधसातये। स यो वृषा वृष्ण्येभिः समोकाः। मरुत्वाँ इन्द्र मीढ्व इति त्रिस्र इति एतन्मरुत्वतीयं। सूक्तविहृद्धावन्ये निविल्प्रथमे त्वाहाव इति यथोक्तम्।

१४. रेवतीर्नः सधमादे रेवाँ इद्रेवतः स्तोतेति रैवतस्यान्यत्रापि सत एतौ स्तोत्रियानुरूपौ भवतः।

१५. मा चिदन्यद्वि शंसतेति साम्नः प्रगाथ इति श्रुतेः।

१६. एन्द्र याह्युप नः परावतः। प्र घा न्वस्य महतो महानि। उप नो हरिभिः सुतमित्येतान्निष्क इति निष्केवल्यं। सूक्तविहृद्धावन्ये निविल्प्रथमे त्वाहाव इति यथोक्तम्।

१७. अभि त्यं देवं सवितारमोण्योः। कविक्रतुमित्यतिच्छन्दसा वैश्वदेवं प्रतिपद्यत इति (१३.८) श्रुतेः।

१८. तस्या इत्यन्यत्रापि शंसने सति प्रतिपत्ते वर्त्तमानाया एष एव धर्मः। षोडशाक्षरेण प्रतिपत्पदविग्रहणं। ततोऽष्टादशाक्षरेण प्रणवः। पुनः पञ्चदशाक्षरेणावसानं। पञ्चदशाक्षरेण प्रणवः।

१९. अस्य हि स्वयशस्तरमित्येवमादिके प्रतिपद उत्तरे भवतः।

२०. अभिवानसुचर इति श्रुतेः।

२१. उदु ष्य देवः सविता सवायेति सावित्रमिति श्रुतेः।

२२. कतरा पूर्वा कतरापरायोरिति द्यावापृथिवीयमिति (२३. ८) श्रुतेः।

२३. किमु श्रेष्ठः किं यविष्ठो न आजगन्नित्यार्भवमिति श्रुतेः।

२४. इदमित्था रौद्रं गूर्तवचा इति वैश्वदेवं। तस्य द्वे उत्तमे परिशिष्य ये यज्ञेन दक्षिणया समक्ता इत्येतं नाराशंसं समावपतीति श्रुतेः। परिशिष्टे इदमित्येत्यस्य सूक्तस्य ये सुक्ते तस्मिन्क्रमे शंसतीति वैश्वदेवे विकारो ऽन्यत्प्राकृतम्।

२५. अहश्च कृष्णमहरर्जुनं चेति वैश्वानरीयमिति श्रुतेः।

२६. प्रयज्यवो मरुतो भ्राजदृष्टय इति मारुतमिति श्रुतेः।

२७. इमं स्तोममर्हते जातवेदस इति जातवेदसीयमिति श्रुतेः। इत्याग्निमारुते। विकार इति वाक्यशेषः। विकारवचनादन्यत्प्राकृतम्।

२८. मध्यमस्त्र्यहश्चतुर्थपञ्चमषष्ठान्यहानि। तत्र ये उक्ता निष्केवल्यमरुत्वतीययोरुत्तमास्तृचास्ताननुसृजति समूल्हपक्षे। व्यूल्हपक्ष एव गायत्रमध्यन्दिनत्वं युज्यते। अन्यत्प्रकृतिवत् त्रैष्टुभं माध्यन्दिनसवनमिति।

२९. व्यूल्हपक्षे[1] यान्युक्तानि वैश्वदेवानि मध्यमे त्र्यहे तानि शस्त्वा तदन्ते समूल्हपक्षे[2] स्वस्ति नो मिमीतामिति च तिस्रः। चकारः समुच्चयार्थः। एतास्तिस्रः प्राक् पञ्चजनीयायास्तिस्र्यपहस्तु प्राकल्प्येन व्यवस्थिताः करोति। यथामह्यं।

---

१ C in marg सम्। २ C D om समूल्हपक्षे।

२०. समूल्ह एव क्रियमाणे ऽयमपरो विशेषः। ततं मे अप-स्तदु तायते पुनरित्येतच्चतुर्थस्याह्न आर्भवं भवति। प्र ऋभुभ्य इत्ये-तन्निवर्तते।

२१. चतुर्थ एवाहनि चशब्दात्। चतुर्थे ऽहनि यन्मारुतमुक्तं क ईं व्यक्ता इति तस्यान्ते समाम्नावित्यर्थः। प्र यन्तु वाजास्तविषीभि-रग्नय इति तिस्रः करोति शंसतीत्यर्थः। प्र यन्तु वाजास्तविषीभि-रग्नय इति तिस्रो ऽधिकाः समूल्हा इति[1] (२२.८) श्रुतेः।

२२. चतुर्थस्य समूल्ह इति वर्तते। वसुं न चित्रमहसं गृणीष इत्येतच्चतुर्थे ऽहनि समूल्हे जातवेदसीयं भवति। ऊर्वे वः सुचो-त्मानमिति निवर्तते।

२३. वैयूल्हिकात्पलहातसामूल्हिके यो विशेषः स उक्तः। परोक्षपृष्ठादिषु तु छन्दोगवशेन स्तोत्रियानुरूपान्सामप्रगाथांश्च कुर्यात्। तत्र हि सामपरोक्षे एतेष्वेव स्तोत्रियेषु अन्यानि सामानि क्रमात् सामपरोक्षे ऽनुरूपेष्वन्यानि तत्रानुरूपे ऽपि वैराजे क्रिय-माणे न्यूङ्खो भवत्येव। वैराजस्येति सामाश्रयत्वात्। यदि पुनर्वि-राटसु सामान्तरं भवति ततो न न्यूङ्खः। न हि वैराजं तदयान-मन्यूङ्खनायेति श्रुतेः। शाक्वरं तु नान्यासूचु न शक्करीष्वन्यसामेति समाख्यानात्। बृहद्रथन्तरमितरे। अथ कस्मादन्वहं बृहत्क्रियत इति श्रुतेः। दशमे वाहनि स्वयोनौ रथन्तरं। उपाङ्गुपृष्ठ आपर्क्ष-पृष्ठे तनूपृष्ठे ब्रह्मसामानि छन्दोगद्वस्तोमे व्यूल्हाः स्तोमा इति छन्दोगवार्त्ता।

---

१ A समूल्ह इति।

२४. उक्तानां पलद्दानां ये विशेषा उक्तास्तद्व्यतिरिक्तमन्यत्तुल्यं समूल्हेन। ततश्च समूल्ह एषां प्रकृतिः[१]। उक्थ्यमुखीययोस्तु न्यूङ्खो भवत्येव होतुः। यस्माच्छन्दोगवशेन स्तोत्रियानुरूपाभ्यामप्रगाथार्थेति वचनं। अत्यर्थवादश्चानुगृहीतो भवति। अथ कस्माच्चतुर्थेऽहनि न्यूङ्खयतीत्येवमादिकः।

२५. विश्वजिदपि परोक्षपृष्ठो वृहद्रथन्तरपृष्ठ उपांश्वपृष्ठ आपर्यपृष्ठस्तनूपृष्टश्छन्दोरुट्स्तोम इत्येतैः प्रकारैर्भवति। तस्यापि तथैव भवति यथा पलहस्य छन्दोगवशेन स्तोत्रियानुरूपक्रिया सामप्रगाथक्रिया च। अग्निं नर इत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपाविव्येतदसंयुज्य विधीयमानत्वात्सर्वेच साधारणम्। वृहद्रथन्तरपृष्ठयोर्यदि भवति वृहत्प्रत्यक्षपृष्ठस्तत्रापि[२] त्वं हि चेतवद्यश इत्येतदाज्यं भवति। उभयथामापि वृहत्पृष्ठो भवत्येवाथ कस्मादन्वहं वृहत्क्रियत इति लिङ्गात्। तनूपृष्ठस्य सामप्रगाथांश्कृत्वा योनी परोक्षपृष्ठे। न[३] कण्वबृहद्रथन्तरयोर्योनी। स्वस्ति नो मिमीतामिति च तिस्रोऽन्ते वैश्वदेवानां करोतीत्येतत्समानमन्यत्समूल्हेनेति वचनाद्विश्वजित्यपि सर्वेषु[४] भवति। परोक्षपृष्ठेऽपि न होतुः प्रतिशिल्पक्रिया होत्रकाणां तत्राधिकारात्।

---

९.

१. मध्ये दशरात्र इति प्रकृतम्। तस्य पृष्ठ्यपलह उक्तः। छन्दोमा वक्तव्याः। तत्र तावच्छान्दोमिकं प्रथममहर्दश-

साकल्येन व्यतास्त..

---

१ C in mire ... २ C बृहत्पृष्ठ... D. बृहत्यचपक्षपृष्ठ०।

रात्रस्य सप्तमं तदुच्यते। चतुर्विंशस्तोमं सर्वमहः। होत्रकाणां स्तोमातिशंसनार्थं वचनं। बृहत्पृष्ठमिति स्मृत्यभिप्रायः। बृहद्रथन्तरपृष्ठे ऽपि दशरात्रे युगु बृहद्युगु रथन्तरमेवं प्राप्ते ऽयस्य सप्तमस्याह्नो बृहत्पृष्ठत्वेव वचनात्।

२. प्र वः शुक्राय भानवे भरध्वमित्याज्यमिति (२ ६. ८) श्रुतेः।

३. वक्ष्यमाणकः।

४. प्र वीरया शुचयो दद्रिरे वामिति वायव्यमिति श्रुतेः तृचम्।

५. ते सत्येन मनसा दीध्याना इत्यैन्द्रवायवस्तृचः।

६. उद्वां चक्षुर्वरुण सुप्रतीकमिति मैत्रावरुणमिति श्रुतेः।

७. आ गोमता नासत्या रथेनेत्याश्विनम्।

८. आ नो देव शवसा याहि शुष्मिन्नित्यैन्द्रम्।

९. प्र वो यज्ञेषु देवयन्तो अर्चन्निति वैश्वदेवम्।

१०. प्र क्षोदसा धायसा सस्र एषेति सारस्वतम्। इत्येतानि प्रउगतृचानि।

११. ये पार्ष्टिकस्य प्रथमस्य त्र्यहस्य प्रतिपदनुचराः सब्राह्मणस्तत्याश्योकास्ते छन्दोमेषु भवन्ति। स्वरसामानश्च वक्ष्यन्ते तेषु च त एव भवन्ति। अभिप्लवे च पलष्टे आवृत्त्या[1] त एवं भवन्ति।। एवमतिदिष्टानां विशेषविनियोग उच्यते।

१२. पार्ष्टिकात्प्रथमादह्नः प्रथमस्य छान्दोमिकस्याह्नो भवन्ति।

१३. द्वितीयात्पार्ष्टिकात् द्वितीयस्य छान्दोमिकस्याह्नो भवन्ति।

---

१ C D om आवृत्त्या।

१४. तृतीयात्पार्ष्ठिकात् प्रतिपदनुचराः सन्नाह्मणस्त्यात्तृतीयस्य च्छान्दोमिकस्याह्नो भवन्ति ।

१५. एवमेवेति पाठक्रमेण त्र्यहस्य पूर्वस्याभिप्लविकस्य पार्ष्ठिकाः प्रतिपदनुचराः सन्नाह्मणस्त्याः प्रथमत्र्यहोक्ता भवन्ति ।

१६. आभिप्लविकस्येति वर्तते । येन क्रमेण पूर्वस्याभिप्लविकस्य त्र्यहस्य तेनैव क्रमेणोत्तरस्यापि । ये त्र्यहस्य प्रथमस्य प्रतिपदनुचराः सन्नाह्मणस्त्यास्ते छन्दोमेष्वेवमादियत्तदोर्निर्देशं[1] कुर्वन्नैकाहिकानां पक्षे प्राप्तिं दर्शयति ।

१७. इत्थं छान्दोमिकेनैव क्रमेण स्वरसाम्नामपि पार्ष्ठिकप्रथमत्र्यहोक्ताः प्रतिपदनुचराः सन्नाह्मणस्त्याः । स्वरसामभ्यः शस्त्राणीत्यत्र प्राकृतविकल्पार्थमेवमित्यतिरेकवचनं । व्युत्क्रमाद्युपदेशः छन्दोमानामभिप्लवस्य च वैश्वदेवसाहचर्यार्थं ।

१८. कया शुभा सवयसः सनीलाः । त्यं सु मेषं महया स्वर्विदमिति त्रैष्टुभजागते सूक्ते मरुत्वतीयम् एवमेव श्रुतत्वात् ।

१९. तमु ष्टुहि यो अभिभूत्योजा अभि त्यं मेषं पुरुहूतमृग्मियमिति त्रैष्टुभजागते सूक्ते उभे अभिवती । तद्राथन्तरं रूपं द्वे द्वे सूक्ते निष्केवल्यमरुत्वतीययोः शस्तेते इति (२६.९) श्रुतत्वात् ।

२०. यद्यु काण्वरथन्तरं कुर्युर्नास्य योनिमनुशंसेत् इति श्रुतेः ।

२१. ये प्रथमयोः प्रथमद्वितीययोरित्यर्थः । अह्नोः पार्ष्ठिकयोरेवंनामत्वात् । प्रथमे ऽहनि च्छान्दोमिके प्रथमात्पार्ष्ठिकात् ।

---

१ C D चपनिर्देशं C alt. च to क; in marg च द्वेशं।

द्वितीये द्वितीयात्। तृतीये प्रथमात्। राथन्तरं शस्त्रमिति श्रुतिलिङ्गात्। एवमाभिप्लविके प्रथमे प्रथमात्पार्ष्ठिकात् द्वितीये द्वितीयात् तृतीये प्रथमादित्यादि ज्ञेयम्।

२१. तत्सवितुर्वरेण्यमिति सावित्रं तृचं सूक्तं। प्रेतां यज्ञस्य शंभुवेति द्यावापृथिवीयं तृचं सूक्तं। अयं देवाय जन्मन इत्यार्भवं तृच सूक्तं। तृचग्रहणात्। ऋजुनीती नो वरुण इति पञ्चर्चं वैश्वदेवं। आ याहि वनसा सहेति द्वृचं सूक्तं। सूक्तसंख्यावचनादाम्नानाच्च। छन्दोविचितौ च पितुभृतो न तन्तुमिदित्युदाहृतत्वात् षट्पदा। ओमासश्चर्षणीधृत इति तिस्रः। इत्येष वैश्वदेवे विकारः।

२२. वैश्वानरो न ऊतय इति कल्पजा पुनराधेयपठिता। वैश्वानरो न आ गमदित्येवमादिके गायत्र्याविह पठिते। एतत्तृचं वैश्वानरीयं[1] सूक्तं। प्र यद्वस्त्रिष्टुभमिति पञ्चदश नव वेति मारुतं। अर्चन्तस्त्वा हवामह इति जातवेदसीयं। इत्याग्निमारुते विकारः।

---

१०.

१. दशरात्रस्याष्टममहश्चतुश्चत्वारिंशस्तोमं। स्तोमसंख्या होत्रकाणामेकया द्वाभ्यां वा स्तोममतिशंसतीत्येवप्रयोजना। रथन्तरपृष्ठमिति स्वश्रुतिप्रकाशकम्।

२. अग्निं वो देवमग्निभिः सजोषा इत्याज्यमिति श्रुतेः।

---

१ C (orig.) D दत्ते हे वैश्वानरीयं सूक्त, C (by alt.) एतद्वैश्वानर सूक्तं।

३. वक्ष्यमाणकः।

४. कुविदङ्ग नमसा ये वृधास इत्येते प्रथमातृतीये द्वे वायव्यस्य तृचस्य।

५. आ वायो भूष शुचिपा उप न इत्येका। पूर्वाभ्यां सह समुच्चयार्थश्चकारः।

६. यावत्तरस्तन्वो यावदोज इत्यैन्द्रवायवः।

७. प्रति वां सूर उदिते सूक्तैरिति मैत्रावरुणमिति श्रुतेः।

८. अप स्वसुरुषसो नग्जिहीत इत्याश्विनमिति श्रुतेः।

९. अयं सोम इन्द्र तुभ्यं सुन्व इत्यैन्द्रमिति श्रुतेः।

१०. प्र ब्रह्माणो अङ्गिरसो नक्षन्तेति वैश्वदेवमिति श्रुतेः।

११. उत स्या नः सरस्वती जुषाणेति सारस्वतमिति श्रुतेः (२६. ११)। इत्येतानि प्रउगतृचानि।

१२. महाँ इन्द्रो नृवदा चर्षणिप्रा इति त्रैष्टुभानां प्रथमं मरुत्वतीयानामित्येवमारभ्य सर्वमाम्नातं श्रुतौ। क स्य वीरः को अपश्यदिन्द्रमित्यच सूक्ते भद्रमिदं रुशमा अग्ने अक्रन्निति चतस्रः सर्वोद्धर्तव्याः। श्रुत्यन्तरात्। नरस्तुतेर्देवतासंदेहाच्च।

१३. त्वं महाँ इन्द्र तुभ्यं ह चा इति त्रैष्टुभानां प्रथमं निष्केवल्यानामित्येवमनुक्रम्य श्रुतौ सर्वमाम्नातम्।

१४. चतुर्ऋचमेतत्साविचम्।

१५. मही द्यौः पृथिवी च न इति तृचं सूक्तं द्यावापृथिवीयम्। युवाना पितरा पुनरित्यार्भवम्।

१६. देवानामिदवो महदिति नवर्चं वैश्वदेवमिति श्रुतेः।

१७. इमा नु कं भुवना सीषधामेति द्विपदा इति श्रुतेः।

१८. विश्वे देवा ऋतावृध इत्येतास्मिन्। सूक्तविट्द्वावक्थे निविद्धिग्रथमे त्वाहावो देवानामिदवो महदित्यस्मिन्। इति वैश्वदेवे विकारः।

१९. द्वे इह पठिते कल्पजे तृतीया थाप्युपदिष्टाभ्युद्दृष्टायामिति वैश्वानरीयम्।

२०. मारुतमेतच्छ्रुतेः।

२१. दूत वो विश्ववेदसमिति जातवेदसीयम्। इत्याग्निमारुते विकारः।

---

## ११.

१. दशरात्रस्य नवममहर्वक्ष्यमाणं तदष्टाचत्वारिंशस्तोमं। स्तोत्रकाणां स्तोमानिर्गमनार्थां स्तोमसङ्ख्या। एतत्पृष्ठमिति स्वयुग्यभिप्रायः।

२. अगन्म महा नमसा यविष्ठं सोमस्य मा तवसं वक्ष्यग्न इत्येते उभे तदाज्यमिति श्रुतेः।

३. अगन्म महा नमसा यविष्ठं सोमस्य मा तवसं वक्ष्यग्न इत्येतयोर्यत्पूर्वं तदेव केवलमाज्यं भवति। तथा च श्रुतेः।

४. वक्ष्यमाणकः।

५. आ वायो भूष शुचिपा उप न इति पञ्चकस्य सूक्तस्य प्रथमाद्यतीये द्वे अन्त्यौ उत्तमा चैवं वायव्यमृचः।

६. आ वायो भूषेत्यस्यैव सूक्तस्य द्वितीयाचतुर्थ्यावृचौ। अर्वन्तो न श्रवसो भिक्षमाणा इति च तृतीयेत्येवमैन्द्रवायवमृचः।

७. दिवि क्षयन्ता रजसः पृथिव्यामिति मैत्रावरुणमिति श्रुतेः।

८. आ विश्ववाराश्विना गतं न इत्याश्विनमिति श्रुतेः।

९. इन्द्रं नरो नेमधिता हवन्त इत्यैन्द्रमिति श्रुतेः (२६.१५)।

१०. ऊर्ध्वो अग्निः सुमतिं वस्वो अश्रेदिति वैश्वदेवमिति श्रुतेः।

११. प्र क्षोदसा धायसा सस्र एषेति सारस्वतमिति श्रुतेः। इत्येतानि प्रउगतृचानि।

१२. अर्यमा मनुषो देवतातेत्येवमनुक्रम्य पञ्च सूक्तानि मरुत्वतीये शस्यन्त उत्तमे छन्दोम इति श्रुतेः।

१३. आ सत्यो यातु मघवाँ ऋजीषीति त्रैष्टुभानां प्रथमं निष्केवल्यानामित्येवमाद्यनुक्रम्य[1] षलन्ततो निष्केवल्य इति (२६.१६) वचनात् षट्सूक्तं निष्केवल्यम्।

१४. अभि त्वा देव सवितरिति सावित्रं तृचं सूक्तं। प्र वां महि द्यवी अभीति द्यावापृथिवीयं तृचं सूक्तम्।

१५. इन्द्र इषे ददातु न इत्येका। ते नो रत्नानि धत्तनेति द्वे इत्यार्भवमिति श्रुतेः।

१६. अग्निरुक्थे पुरोहित इत्येवमादीनि पञ्च सूक्तानि। : तृतीयेन सूक्तेन तेषां तृतीयं वा काश्यप इति सविकल्पेन।

---

१ C D om. आदि।

१७. ये त्रिंशति त्रयस्पर इत्येतत्सूक्तमुपोत्तमामुद्धृत्य।

१८. सूक्तनिवृत्त्यर्थमेकाग्रहणम्।

१९. आ शर्म पर्वतानामित्येतास्तिस्रः।

२०. बभ्रुरेको विषुणः सूनरो युवेति चैतत्सूक्तं भवति। वाशब्दः पूर्वेण सह विकल्पार्थः। मनुप्रवर्हवचनादुभयपक्षे ऽपि भारद्वाजसूक्तो भवति। उभयोः पक्षयोस्तुल्यत्वात्। ये त्रिंशतीत्युपोत्तमामुद्धृत्य न हि वो अस्त्यर्भक इत्येका शर्मेति तिस्रो बभ्रुरेक इति वा मनुप्रवर्हो। मनोः प्रवर्ह इति वृह उद्यमन इत्यस्य प्रपूर्वस्यानन्तस्य[१] रूपं। प्रकर्षोद्यतभार इत्यर्थः। यस्माच्चायं सारस्तस्माच्च किंचिदुद्धर्तव्यम्। तेन चित्रद्व्यराचपक्षे एकैकामितरेषां सूक्तानामित्युद्धारवचनान्मनुप्रवर्हपक्षो न भवति।

२१. विश्वे देवास आ गतेत्येतद्भारद्वाजं द्वचं शस्तान्त्यं भवति। इति वैश्वदेवे विकारः। अभि त्वा देवेत्यत आरभ्य भारद्वाजद्वचावधिकः।

२२. दिवि पृष्ट इत्येवमादिके द्वे कल्पजे। तृतीया च सार्वकामिक्यां। इत्येतत्तृचं वैश्वानरीयम्।

२३. मरुतो यस्य हि क्षय इति मारुतमिति श्रुतेः।

२४. अग्निर्होता पुरोहित इति जातवेदसीयमिति श्रुतेः।

२५. विकार इति वाक्यशेषः। व्यूढपक्षे छन्दोमानां यद्वक्तव्यं तदुक्तं। समूढपक्ष इदानीमाह।

---

१ C in marg स्त्र instead of स्य। A इन्द्र, C इद्द्र।

२६. [1]व्यूल्हपक्षे यानि त्र्यहस्य प्रथमस्य प्रातःसवनतृतीयसवनान्युक्तानि तानि समूल्हपक्षे छन्दोमानामिति[2]दिश्यन्ते। किंचान्यत्।

२७. यानि च निष्केवल्यमरुत्वतीययोः छन्दोमगतयोर्जागतानि व्यूल्हे ऽभिहितानि तानि समूल्हपक्ष उत्सृजति। चशब्दात्।

२८. स यो वृषा वृष्ण्येभिः समोका इत्येताः पञ्चदश कयाशुभीयादूर्ध्वं भवन्ति।

२९. यो जात एव प्रथमो मनस्वानित्येतत्सूक्तं तमुष्टुहीयादूर्ध्वं भवति।

३०. [3]बृहद्रथन्तरपृष्ठो दशरात्रः पाक्षिको ऽस्ति। तस्मिन्क्रियमाणे सर्वे छन्दोममध्यन्दिना होतुर्दिपूक्ता भवन्ति। सर्वे इति वचनात् संघातप्रयुक्ताः नैकैकत्वेन प्रयुज्यमानाः[4]।

---

## १२.

१. दशममहरिदानीं वक्तव्यं। तदेवंसंज्ञकं न विवक्तव्यमित्यविवाक्यं। केचित्तु मन्यन्ते न नामधेयमित्येतत् संव्यवहाराभावात् अविवाक्यमिति गुणविधानमेतत्। नात्र विचारयितव्यमिदं साधु कृतमिदमसाध्विति। चतुर्विंशस्तोमं। स्तोमसङ्ख्या होत्रकाणां स्तोमातिशंसनार्था। अत्यग्निष्टोमो ऽविवाक्यं दशममहरिति कात्यायनस्य।

२. त्रयस्त्रिंशमग्निष्टोमसामाग्निमारुतस्तोत्रं भवति।

३. मानसं स्तोत्रं त्रिकं भवति।

---

१ C D om व्यूल्हपक्षे। C has व्यूल्ह in marg  २ C °अनिदिश्यन्ते।
३ A ins माध्यन्दिनसवनानि छन्दोमप्रयुक्तानि भवन्ति। ४ C (orig) D °मानाः।

४. वामदेव्यस्य साम्नो या योनिस्तस्यां रथन्तरं पृष्ठं। रथन्तरपृष्ठे गीतिर्भवतीत्यर्थः। एवं च सति यः शस्त्रतो विशेषः स उपरिष्टादुच्यते।

५. यदि चेत्कश्चिच्चंसतः[1] प्रतिभाहानिः स्यात्ततोऽन्योऽविनियुक्तमसदुपदेशार्थं स्वाध्यायवदनुब्रूयात्। नन्दति ह वै यज्ञो विदुषागच्छता[2] यतोऽयमृद्धं भविष्यत्ययं मे तत्समर्धयिष्यतीति। यदि कश्चित्प्रमत्त उपहन्यादयसदधीयात् स तं देशं पार्श्वतः स्वाध्यायमधीयीतेति (२७. १) श्रुतेः।

६. उद्धृत्यानुष्टुभं छन्दो यत्प्राकृतमितरेषामनुष्टुप्विवर्जितानां छन्दसामनुष्टुप्संपदं संपाद्य पञ्चदशं सहस्रं कार्यमेकस्मिन्नश्वमेधीये[3]। यथा सहस्रं च पञ्चदशं चानुष्टुभः स्युस्तथैतदहः संपादयेदिति वचनात्। तत्र तावद्यदेतस्मिन्नहनि शस्यमनुप्रयोक्तव्यम् तत्तावदुच्यते। आपो रेवतीः क्षयथा हि वस्व इति चिरुक्तायां तिस्रः। उपप्रयन्तो अध्वरमिति नव। स हि यो मानुषा युगेति चतस्रः। अग्निं नरो दीधितिभिररण्योरिति तिस्रः। मसस्य यद्दियुता महिमूधनितिति पञ्च। अगन्म महेति तिस्रः। एना वो अग्निं नमसेति प्रगाथाः[4]। अयमग्निः सुवीर्यस्येति प्रगाथाः[5]। त्वामग्ने मनीषिण इति तृचौ मध्यमं विना। ईळिष्वा हि प्रतीव्यमिति तृचा दश। पुरु त्वा दाश्वान्वोच इति च तिस्रः। वेदिषदे प्रिय-

---

१ A C (orig) D छन्दस। २ A om the passage from गच्छता to श्रुते।
३ C (sec h) adds सति। ४ C (in marg) षय।
५ C (in g)' "।

धामाय सुद्युत इति सप्त। जनस्य गोपा अजनिष्ट जागृविरिति षट्। अग्निं तं मन्ये यो वसुरिति दश। कस्त उपः कधप्रिय इति तिस्रः। यावयद्द्वेषसं त्वेति चतस्रः। प्रति ष्या सूनरी जनीति तिस्रः। [¶]उपो रुरुचे युवतिर्न योषेति षट्। प्रति स्तोमेभिरुषसं वसिष्ठा इति तिस्रः। प्रत्यु अदर्श्यायतीति षट्। उषो यदद्य भानुनेति द्वे। उषस्तच्चित्रमा भरेति तिस्रः। एता उ त्या इति चतस्रः। महे नो दश। अश्विना यज्वरीरिष इति तिस्रः। आ मे हवं नव। आ शुभ्रा यातमिति तिस्रः। आ भातीति द्वे। उप त्या वह्नी इति द्वे। इमा उ वां दिविष्टय इति षट्। अयं वां मधुमत्तम इति प्रगाथौ। युवोरु षू रथमिति तिस्रस्त्रिश्चिन्नो अद्येति तिस्रः। क्व त्रिदद्य कतमास्वश्विनेति चतस्रः। प्रति प्रियतममिति नव। त्रिरुत्तमया परिधाय एकादश। एष प्रातरनुवाकः।

प्रशास्तुः स्तोत्रीयाः। उषस्तच्चित्रमा भरेति प्रथमा त्रिः। इमं नो यज्ञमित्येका। अभि प्रवन्तेति द्वे। तुभ्यं श्चोतन्त्यध्रिगो शचीव इति त्रिर्द्वितीया।

अच्छावाकस्य। अच्छा नः शीरशोचिषमिति तिस्रः। यजमान होतरध्वर्यो इत्यादिको निगदः। उन्नीयमानाय प्रति श्रुताय वो धृषदिति तिस्रः। अस्मा अस्मा इदन्धस इति चतुर्थी। गणधर्मस्तु प्रकृतिवत्।

आज्यमुच्यते। शों॰ अग्निर्ज्योतिरित्यारभ्य प्रकृतिवत्। सो

¶ from उपो up to प्रत्य om in D

अध्वरा करति जातवेदो३ अग्ने नमद्य। अश्वं न स्तोमैः क्रतुं न भद्रं। हृदिस्पृशम्ध्याम त ओहो३ अधा ह्यग्न इत्यादि। शों० शिवा नः सख्या सन्तु भ्रात्रेति। माधुच्छन्दसः प्रउग.। विश्वे देवासो अस्निध इति परिधानीया।

मैत्रावरुणस्याज्यं। शो० ता नः शक्तमिति स्तोत्रियः। शो० आ नो मित्रावरुणेत्यनुरूपः। शो० आ नो गन्तं रिशादसेत्येका। प्र वो मित्रायेति पञ्च। प्र मित्रयोरित्यष्टौ शस्त्वा शो० ते स्याम देव परिधानीया।

ब्राह्मणाच्छंसिन आज्यम्। शो० युञ्जन्ति ब्रध्नमिति स्तोत्रियः। शो० आ याहि सुषुमा हि त इत्यनुरूपः। उत्त्वा मन्दन्तु स्तोमा इति तु [1]च्छन्दोगाः स्तोत्रियं कुर्वन्ति। तत्रायमेवानुरूपः। उदयन्नीये परे। सुरूपकृत्नुमूतय इति महाव्रते[२]। तत्र याहि सुषुमा हि त इति द्वादश। प्रकृतं ब्रूमः। शोसावो आ नो याहि सुतावत इति दश। इन्द्र त्वा वृषभं वयमिति द्वे। उद् घेदभि श्रुतामघं। शोसावो स न इन्द्रः शिवः सखेति परिधानीया। अच्छावाकस्याज्यं। शोसावो ता हि शश्वन्त ईळत इति स्तोत्रियः। शोसावो इन्द्राग्नी आ गतं सुतमित्यनुरूपः। शोसावो तोशा वृत्रहणा हुव इति षट्। इहेन्द्राग्नी उप ह्वय इति पञ्च। इन्द्राग्नी अवसा गतमिति द्वे। शोसावो गोमद्धिरण्यवदश्विति परिधानीया। समाप्तं प्रातःसवनम्।

---

१ D छन्दोगा। C (orig.) छन्दो का स्तो०।

२ C D महाव्रते परे। परे seems to be struck out in C

धामाय सुद्युत इति सप्त। जनस्य गोपा अजनिष्ट जागृविरिति षट्। अग्निं तं मन्ये यो वसुरिति दश। कस्त उपः कधप्रिय इति तिस्रः। यावयद्द्वेषसं त्वेति चतस्रः। प्रति ष्या सूनरी जनीति तिस्र[१]। उपो रुरुचे युवतिर्न योषेति षट्। प्रति स्तोमेभिरुषसं वसिष्ठा इति तिस्रः। प्रत्यु अदर्श्यायतीति षट्। उषो यदद्य भानुनेति द्वे। उषस्तच्चित्रमा भरेति तिस्रः। एता उ त्या इति चतस्रः। महे नो दश। अश्विना यज्वरीरिष इति तिस्रः। आ मे हवं नव। आ शुभ्रा यातमिति तिस्रः। आ भातीति द्वे। उप त्या वह्नी इति द्वे। इमा उ वां दिविष्टय इति षट्। अयं वां मधुमत्तम इति प्रगाथौ। युवोरु षू रथमिति तिस्रस्त्रिश्चिन्नो अद्येति तिस्रः। क उ श्रवत्कतमाखश्विनेति चतस्रः। प्रति प्रियतममिति नव। त्रिरुत्तमया परिधाय एकादश। एष प्रातरनुवाकः।

प्रशास्तु[१] स्तोकीयाः। जुषस्व सप्रथस्तममिति प्रथमा त्रिः। इमं नो यज्ञमित्येका। अभि प्रवन्तेति द्वे। तुभ्यं श्चोतन्त्यध्रिगो शचीव इति चिद्वितीया।

अच्छावाकस्य। अच्छा नः शीरशोचिषमिति तिस्रः। यजमान होतरध्वर्यो इत्यादिको निगदः। उन्नीयमानाय प्रति श्रुताय वो धृषदिति तिस्रः। अस्मा अस्मा इदन्धस इति चतुर्थी। गणधर्मस्तु प्रकृतिवत्।

आज्यमुच्यते। शो॰ अग्निर्ज्योतिरित्यारभ्य प्रकृतिवत्। सो

१ from उपो up to प्रत्य om in D

अध्वरा करति जातवेदो१ अग्ने तमद्य। अश्वं न स्तोमै. क्रतुं न भद्रं। हृदिस्पृशमृध्याम त ओहो१ अधा ह्यग्न इत्यादि। शो॰ शिवा नः सख्या सन्तु भ्रात्रेति। माधुच्छन्दस प्रउग.। विश्वे देवासो अस्रिध इति परिधानीया।

मैत्रावरुणस्याज्य। शो॰ ता नः शक्रमिति स्तोत्रियः। शो॰ आ नो मित्रावरुणेत्यनुरूपः। शो॰ आ नो गन्तं रिशादसेत्येका। प्र वो मित्रायेति पञ्च। प्र मित्रयोरित्यष्टौ शस्त्वा शो॰ ते स्याम देव परिधानीया।

ब्राह्मणाच्छंसिन आज्यम्। शो॰ युञ्जन्ति ब्रध्नमिति स्तोत्रियः। शो॰ आ याहि सुषुमा हि त इत्यनुरूपः। उत्त्वा मन्दन्तु स्तोमा इति तु [1]च्छन्दोगाः स्तोत्रियं कुर्वन्ति। तत्रायमेवानुरूपः। उदयनीये परे। सुरूपकृत्नुमूतय इति महाव्रते[2]। तत्रा याहि सुषुमा हि त इति द्वादश। प्रकृतं भूमः। शोंसावो आ नो याहि सुतावत इति दश। इन्द्र त्वा वृषभं वयमिति द्वे। उद् घेदभि श्रुतामघं। शोंसावो म न इन्द्रः शिवः सखेति परिधानीया। अच्छावाकस्याज्यं। शोंसावो ता हि शश्वन्त ईळत इति स्तोत्रियः। शोंसावो इन्द्राग्नी आ गतं सुतमित्यनुरूपः। शोंसावो तोशा वृत्रहणा हुव इति षट्। इहेन्द्राग्नी उप ह्वय इति पञ्च। इन्द्राग्नी अवसा गतमिति द्वे। शोंसावो गोमद्धिरण्यवद्वसिति परिधानीया। समाप्तं प्रातःसवनम्।

---

१ D कन्दोगा। C (orig) छन्दो का शो॰।

२ C D महाव्रते परे। परे s ems to be struck out in C

D

मृजानो वारे पवमानो अव्यय इत्येता गावस्तृतः। उत्तिष्ठन्नो-जसा सह आतं हविरिति समानं॥ मरुत्वतीयं। अध्वर्यो शोंसावो चिकद्रुकेषु महिषो यवाशिरं तुविशुष्म इत्येका। तुविशुष्मेति द्वे। शोंसावो इदं वसो सुतमन्ध इत्यनुचरः। शोंसावो इन्द्र नेदीय एदिहीति प्रगाथः। शोंसावो प्र नूनं ब्रह्मणस्पतिरिति प्रगाथः। शोंसावो अग्निर्नेतेत्येका। शोंसावो त्वं सोम क्रतुभिरित्येका। शोंसावो पिन्वन्त्यप इत्येका। बृहदिन्द्राय गायतेति प्रगाथः। तथा प्र व इन्द्राय बृहत इति। शोंसावो जनिष्ठा उग्रः सहस इत्यादि प्रकृतिवच्छेषं।

निष्केवल्यम्। अध्वर्यो शोंसावो कया नश्चित्र आ भुवदिति स्तोत्रियः। शोंसावो कया त्वं न ऊत्येत्यनुरूपः। शोंसावो यद्वा-वानेति धाय्या। शोंसावो पिबा सुतस्य रसिन इति प्रगाथः। अभि त्वा शूर नोनुमः। अभि त्वा पूर्वपीतये। सखाय आ शिषामहीति नव। आ धूर्ष्वस्मै दधाताश्वान्। वज्रमेको बिभर्ति हस्त आहितं। तिग्ममेको बिभर्ति हस्त आयुधं[1]। शोंसावो इन्द्रस्य नु वीर्याणि प्र वोचमित्यादि प्रकृतिवत्।

मैत्रावरुणस्य पृष्ठं। अध्वर्यो शोंसावो मा चिदन्यद्वि शंसतेति[2] स्तोत्रियः प्रगाथः। मा भेम मा श्रमिष्मेत्यनुरूपः। कस्तमिन्द्रेति साममगाथः। अप प्राच इन्द्रेत्युक्थमुखीया। आ धूर्ष्वस्मै दधाता-श्वानिति द्विपदा। सद्यो ह जात इति सूक्तं। एवा त्वामिन्द्र

१ तिग्ममेको बिभर्ति हस्त आयुधम् is struck out in C.
२ C in marg मैत्रावरुणस्य।

वज्रिन्निति सूक्तं। आह्वयोत्तमया परिधानीया। स्तोत्रिये लिखित एवाहावः। अनुरूपे शोंसावो इति। तथा सामप्रगाथे तस्य चानन्तरं परिधानीयायै चेति। उक्तं मैत्रावरुणस्य पृष्ठम्[१]। ब्राह्मणाच्छंसिन उच्यते। अध्वर्यो शोंसावो तं वो दस्ममिति स्तोत्रियः[२] प्रगाथः। शोंसावो तत्त्वा यामि सुवीर्यमित्यनुरूपः प्रगाथ एव। शोंसावो कं नव्यो अतसीनामिति द्वे। शोंसावो ब्रह्मणा त इति चोक्थमुखीया[३]। छन्दोगवशादेवं। स्वशाखाभिप्रायस्तु। उदु त्ये मधुमत्तमा इति स्तोत्रियः। उदिन्वस्य रिच्यत इत्यनुरूपः। यद्दा त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म इति स्तोत्रियः। तव त्यं नर्यं नृतो ऽप इन्द्र। तमिन्द्रं जोहवीमि। विश्वाः पृतना इत्यनुरूपः। ततः कद्वान्। तत उक्थमुखीया। ततो रायस्कामो वज्रहस्तमिति द्विपदा। तत इन्द्रः पूर्भिदातिरदिति सूक्तं। तत उदु ब्रह्माणीति यथोक्त आहावः प्रस्तरेषश्च।

अच्छावाकस्य पृष्ठम्। अध्वर्यो शोंसावो तरोभिर्वो विदद्वसुमिति स्तोत्रियः प्रगाथः। शोंसावो तरणिरित्सिषासतीत्यनुरूपः प्रगाथ एव। शोंसावो कदू न्वस्याकृतमिति कद्वान्[४] प्रगाथः। शोंसावो उरुं नो लोकमनु नेषि विद्वानित्येका[५]। अया वाजं देवहितं सनेमेति[६] द्विपदा। भूय इद्वावृधे वीर्यायेति सूक्तं।

---

१ D om the text from परिधानीया up to अनन्तरं। २ C D om. प्रगाथ। ३ A एका instead of उक्थमुखीया। C एका over the line ४ C D om कद्वान। ५ C D उक्थमुखीया instead of एका। C एका over the line
६ The MSS differ as to the length of the quoted Pratikas. I have not registered these minutiæ

अभि तष्टेव दीधया मनीषामित्यस्योत्तमया आह्वावपूर्वया परिदधाति।

वैश्वदेवम्। अध्वर्यो शोंसावो अभि त्यं देवं सवितारमोण्योः कविक्रतुमित्येका। अस्य हि स्वयशस्तरमिति द्वे। इति वैश्वदेवस्य प्रातिपदिकस्तृचः। शोंसावो अभि त्वा देव सवितरित्यनुचरस्तृचः। शोंसावो अभूद्देवः सविता वन्द्यो नु न इति सनिविल्कं सूक्तं। शोंसावो एकया च दशभिश्च स्वभूते। शोंसावो प्र द्यावा यज्ञैः पृथिवी ऋतावृधेति सनिविल्कं सूक्तं। शोंसावो सुरूपकृत्नुमूतये। शोंसावो नचवयं सुहृतं विद्मनापस इति सनिविल्कं सूक्तं। शोंसावो अयं वेनश्चोदयत्पृश्निगर्भाः। शोंसावो येभ्यो माता मधुमत्पिन्वते पयः। शोंसावो एवा पित्रे विश्वदेवाय वृष्णे। शोंसावो प्र शुक्रैतु देवी मनीषेति सूक्तं। आ नो भद्राः क्रतवो यन्तु विश्वत इति सूक्तं सनिविल्कं। शोंसावो अदितिर्द्यौरदितिरन्तरिक्षमिति परिधानीया। उक्थवीर्यं याज्या च प्रकृतिवत्। द्वितीया घृतयाज्या भवा मित्रो न शेव्य इति।

आग्निमारुतं। अध्वर्यो शोंसावो वैश्वानराय पृथुपाजसे विप इति सनिविल्कं सूक्तं। शोंसावो आ ते पितर्मरुतां सुम्नमेतु[१]। शोंसावो प्रत्वक्षसः प्रतवस इति सनिविल्कं सूक्तं। शोंसावो अग्निं नरो दीधितिभिररण्योरिति स्तोत्रियः। शोंसावो प्र ते अग्नयो ऽग्निभ्यो वरं निरित्यनुरूपः। शोंसावो प्र तव्यसीं नव्यसीं धीति-

१ C D ins इत्येका।

मग्नय इति सनिविल्कं सूक्तं। शंसावो आपो हि ष्ठा मयोभुव इत्यादि प्रकृतिवच्छेषम्।

अथ समूल्हे ऽतिरिक्तोक्थम्। अध्वर्यो शोंशोंवो आयं गौः पृश्निरक्रमीदिति स्तोत्रियः। शंसावो मही द्यौः पृथिवी च न इत्यनुरूपः। शंसावो तं प्रत्नथा पूर्वथा विश्वथेमथेति त्रयोदश। शोंसावो यज्ञो बभूव स आबभूवेति परिधानीया। प्रजापते न त्वदेतान्यन्य इति याज्या॥ इति प्रातरनुवाके शतद्वयं पञ्चदशाधिकमनुष्टुभां संपन्नं। तत्पूर्वलिखितमेवानुष्टुभां प्रातरनुवाकः पञ्चदशे शते इत्यत्र सूत्रे। अष्टौ शतान्यन्यान्यनुष्टुभां। तत्र गायत्रीणां शतद्वयं पञ्चाशदधिकं षोलशोष्णिहः। अष्टौ विराजः। चित्वारिंशद्बृहत्यः। षोलश पङ्क्तयः। शतद्वयमेकषष्टिश्च त्रिष्टुभः। अशीतिर्जगत्यः। द्विपदाः षड्विंशतिः। द्वे शक्कर्यौ। पत्यष्टय इति।

अथ गायत्र्यस्तिस्रो ऽप्तोर्यामीये। एकचत्वारिंशत्पशुकर्मणि वपान्ते द्वे हविष्यंक्त्यां। द्विदेवत्येऽष्टौ। त्रयोदशोचीयमानसूक्ते। षट् प्रस्थितयाज्याः[1]। प्रति श्रुतायेति पञ्च। प्रातर्यावभिरित्येका। द्वादशर्तुयाज्याः। त्रयोविंशतिः प्रउगे सयाज्ये। षड्विंशतिःषड्विंशतिर्होत्रकाणामाज्येषु। त्रयस्त्रिंशदभिप्लवे। एका दधिघर्मे। पञ्च मरुत्वतीये। अष्टौ निष्केवल्ये। पञ्चैश्वदेवे। तिस्र आग्निमारुते। द्वे पत्नीसंयाजेष्विति गायत्र्यः।

अथोष्णिहः। तिस्रो ऽभिप्लवे। चतस्रो मरुत्वतीये। नव निष्केवल्ये इत्युष्णिहः।

---

१ A ०याज्या। C D ०याज्यास्तु।

अथ विराजः। आज्यनिष्केवल्ययोर्याज्ये। अग्निष्टोमसाम्नस्स्तोत्रियानुरूपयोः पङ्क्तिः।

अथ बृहत्यः। नव बहिःकर्मण्यच्छावाकस्य। चतस्रो मरुत्वतीये। तिस्रो निष्केवल्ये। नवनव शस्त्रेषु होत्रकाणामिति बृहत्यः।

अथ पङ्क्तयः। स्तोकीयासु तिस्रः। एकाच्छावाकस्य बहिःकर्मणि। एकैवाभिषवे। द्वे मरुत्वतीये। तिस्रो निष्केवल्ये। एकैका होत्रकाणां शस्त्रेषु। तिस्र आग्निमारुते इति पङ्क्तयः।

अथ त्रिष्टुभः। अपोनप्त्रीये विंशतिः। पशुकर्मणि वपान्ते त्रयोविंशतिः। सप्ताभिषवे। द्वे दधिघर्मे। चतस्रः पशुपुरोलाशे। द्वे हविष्पंक्त्यां। चतुर्दशोन्नीयमानसूक्ते। सप्त प्रस्थितयाज्याः। द्वे मरुत्वतीयग्रहे। शस्त्रे षोलश सयाज्ये। अष्टादश निष्केवल्ये। विंशतिर्मैत्रावरुणस्य शस्त्रे। एकविंशतिर्ब्राह्मणाच्छंसिनः। एकोनविंशतिरच्छावाकस्य। द्वे आदित्यग्रहे। सप्तदशकं मनोतासूक्तं। षट् पशुयागे। त्रयोदशोन्नीयमानसूक्ते। इन्द्राविष्णू पिबतं मध्वो अस्येति त्रिष्टुप् प्रस्थितयाज्या। सावित्रग्रहस्य च पुरोनुवाक्या। सूक्तस्य च सावित्रस्याद्योत्तमे। एकया च दशभिश्चेति वायव्या। ऋभुर्भराय सं शिशातु सातिमित्यार्भवस्योत्तमा। अयं वेनश्चोदयत्पृश्निगर्भाः[१]। एवा पित्रे विश्वदेवाय वृष्णे[२]। ता नो रासन्रातिषाचो वसूनीति चतस्रः। षष्ठी चानोभद्रीयस्य। भद्रं कर्णेभिरिति च। विश्वे देवाः शृणुतेमं हवं मे। इतं मिमिचे इतमस्य

१ C D ins स्त्रा। C sec h. इति। २ C D ins इत्येका।

योनिः[1]। त्वं सोम पितृभिः संविदानः[2] भवा मित्रो न शेव्यो घृतासुतिः। ऐभिरग्ने सरथं याह्यर्वाङ्। आ ते पितर्मरुतां सुम्नमेतु। अप्रयुच्छन्नप्रयुच्छद्भिरग्ने। उत नो ऽहिर्बुध्न्यः शृणोतु। उत ग्ना व्यन्तु देवपत्नीः। पैन्यस्तिस्रः। स्वादुष्किलीयास्तिस्रः[3]। ययोरोजसा स्कभिता रजांसि। विष्णोर्नु कं वीर्याणि प्र वोचम्। एवा न इन्द्रो मघवा विरप्शीति तिस्रः। तिष्ठा सु कं मघवन्मा परा गाः। अतिप्रैषस्य पुरोनुवाक्या। परा याहि मघवन्ना च याहीति पञ्च पत्नीसंयाजेष्विति त्रिष्टुभः।

अथ जगत्यः। एका अपोनप्त्रीये। षोडशाभिपवे। पिन्वन्त्यप इत्येका। द्वे हविष्पंक्त्यां। षट् प्रस्थितयाज्याः। साविचग्रहस्य च याज्या। चतस्रः साविचे सूक्ते। पञ्च द्यावापृथिवीये। चतस्र आर्भवे। येभ्यो मातेत्येका। पवमानोभद्रीये। वैश्वानराय पृथुपाजस इति चयोदश। प्रत्नवसः प्रतवसो विरप्शिन इति षट्। प्र तव्यसीं नव्यसीं धीतिमग्नय इति सप्त। देवानां पत्नीरित्येका। राकामहमिति द्वे। तन्तुं तन्वन्नित्येका। अग्ने मरुद्भिः शुभयद्भिरित्येका। युनज्मि ते ब्रह्मणा केशिनेत्येका। पुनश्च देवानां पत्नीरिति।

अथ द्विपदाः। द्वे निष्केवल्ये। एकैका होचकाणां शस्त्रेषु। एकविंशतिर्वैश्वदेव इति। अथाष्टयः। चिकद्रुकेषु महिषो यवाशिरं तुविशुष्म इत्येषा चिः। अभि त्यं देवं सवितारमोण्योरित्येषा[4] चिरिति।

---

[1] C D ins इत्येका।
[2] C D ins इत्येका।
[3] C (orig) D om स्वादुष्किलीयास्तिस्रः।
[4] C D इत्येषाभी चैषिः।

अथ शस्त्रयौँ। तच्छंयोरा तृणीमह इति शकरी द्विः प्रयुज्यते। एवमेतद्यथोपन्यस्तदृढीकरणाय संपत्त्यर्थैः श्लोकैरनूद्यते।

शतद्वयं सपञ्चाशमप इत्येत्यतः परम्।
गायत्रमुष्णिहश्चात्र षोलशाष्टौ विराजकाः ॥१॥
बृहत्यो ऽपि भवन्यत्र चत्वारिंशत्त्रिभिः सह।
एकषष्ट्यधिकं विद्धि त्रिष्टुभां च शतद्वयम् ॥२॥
पङ्क्तयः षोलशाशीतिर्जगतीनां सुनिश्चिता।
द्विपदा विंशतिः षट् च द्वे शक्वर्यौ पलष्टयः ॥३॥
उक्ता एवं पृथग्भूताः क्रियन्ते ऽनुष्टुभो यदा।
तदानेन प्रकारेणान्यथा वा यथेच्छया ॥४॥
शक्वर्यौ[१] बृहतीरष्टौर्गायत्रीणां गणे क्षिपेत्।
अनुष्टुभस्तथैताः स्युस्त्रिष्टुबेकातिरिच्यते ॥५॥
[२]त्रैष्टुभात्पूर्वसंख्यातादेकषष्टाच्छतद्वयात्।
अष्टानवतिरन्वेति चतुरक्षरवर्जिता ॥६॥
चतुरक्षरहीनानि शतानि त्रीण्यनुष्टुभाम्।
संपन्नान्यूनषष्टानि त्रिष्टुप्स्वपि न संशयः (३ ५
उष्णिहश्च विराजश्च पङ्क्तयश्चैकधा कृताः।
द्विचत्वारिंशदेताः स्युः श्रुतेरन्या अनुष्टुभः ॥८॥
जगतीनामशीतिर्या तद्विंशतिशतं भवेत्।
संपदा षोडश ज्ञेया द्विपदोत्था अनुष्टुभः ॥९॥

---

१ A शक्वर्या। २ by alt, A C त्रिष्टुभात्।

सप्तागीतानि सप्तैव (७८७) पूर्वोक्तानि ह्यनुष्टुभाम्।
द्वादशाग्रे तमित्यष्टेः[१] संपन्नाः श्रुतिचोदिताः ॥१०॥
[२]गायत्र्यादिगणात्त्रिष्टुप्पादश्च द्विपदोत्थितः।
चतुरक्षरमादाय पूरयेत्त्रिष्टुभं ततः ॥११॥
शेषैरनुष्टुभं कुर्यादेवमष्टौ शतानि तु।
षोडशैवातिरिक्तानि[३] अक्षराणीह योजयेत् ॥१२॥
त्रिष्टुभश्च द्विरुक्तेयं[४] द्वादशाक्षरहीनिका।
तुभ्यं श्चोतन्ति तिसृभिरेवं षोलश योजयेत् ॥१३॥
सहस्रमेतच्छ्रुत्युक्तं[५] पूर्णं पञ्चदशाधिकम्।
सहप्रातरनुवाकं संपदानुष्टुभामिह ॥१४॥

स्विस्वामिनोक्ता अत्रैव श्लोका लिख्यन्ते।

अथान्यानुष्टुबुद्धारः स हि सर्वत्र चोदितः।
न ययर्चाप्रियाभावे नोद्धारः[६] स्यादनुष्टुभाम् ॥
प्रजाकामत्रशाघागः सिनीवाल्याः क्रियेत चेत्।
नात्र तत्र तु कर्तव्ये खे खल्वया[७] अनुष्टुभौ ॥
उद्धृत्यानुष्टुभं यस्माच्छन्दसां संपदुच्यते।
शतातिरात्र उक्थ्यादेस्तस्माचानुष्टुभस्त्यजेत् ॥
उच्छ्रयस्वेति न त्याज्या सप्तानां चोदनारभात्।
ये वृचाम इति त्वेषा त्यक्तव्या तद्विचारितम् ॥

---

१ A चाश्चे। २ C ॰नयात्। ३ A षोलशैवा॰। ४ C त्रिरुक्ते॰ D ॰श त्रिरु॰। ५ C च्छतुयुक्तं D श्रुयुक्त। ६ I am not able to make out the meaning of this and several other passages in these verses. I have given the text as it is in the MSS. ७ D खखस्न च॰।

देवो ऽग्निस्त्वभिकृतिरेषा पृथक्त्वाद्विगण्यताम्।
इति स्यान्नेतरः शुद्धस्तुल्यप्रत्यायको ह्ययम्॥
सर्वा दाशतयीष्वेता उत्तरास्तु सुभेषजः।
अनेन व्यपदेशेन छन्दस्यस्या अतुल्यता॥
त्रिकद्रुकेष्वभि त्यं च शंयोर्वाके तथैव च।
द्वावतिच्छन्दसां वर्गावतिवर्गोत्तराश्रयात्॥
अतुल्या इति चेत्तत्र प्रतिपत्संपदश्रुतेः।
सर्वार्थी वेतरच्छन्दो[1] विराजस्तेन न त्यजेत्॥
विराडनुष्टुभोरैक्याद्दुह्वियेरन्विराजो ऽपि।
संपत्त्याच्छन्दसामत्र सवनीयविशेषणात्॥
अतिरिक्तक्रियायां हि संपन्नैवेति[2] चेद्भवेत्।
एकस्मिन्निति वारम्भादधिकेषु त्वनादरः॥
एकस्मिन्नित्यसत्येतद्वाक्यं स्यादविवक्षितम्।
इति स्यात्तत्र येनोक्तमनारम्भो भवेद्यस्य॥
आज्यभागौ विकल्पेन शंयोर्वाकस्य यः परः।
मद्यमामपरान् स्त्रा च सिनीवाली च राका च॥
तथा पशुपुरोलाशः स्विष्टकृतश्च यो भवेत्।
एकाहेन च विद्यन्ते तायमानस्य रूपाणि॥
पूर्वकारिवशात्कर्म स्वशास्त्रे यदि कल्पितम्।
क्रियेताभ्यधिकं किंचिदूनं वापि कदा चन॥

---

१ C चेतरच्छन्दो D चेतरच्छन्दो। २ A संपन्नैरिति C संपन्नैवेति; over the line रि D संपन्नैरेति।

स्वशास्त्रविहितं वा स्यात् पूर्वकारी न चेत् कुर्यात्।
संपत् तत्रापि संपाद्या तदारम्भः[1] प्रयोजनम्॥
अथार्याप्रीप्रयोगेन क्रतुयाज्या विकल्पने।
न चेत्तथापि पूर्येत संपत्तत्रावपेदिह॥
यथाकामी प्रकरणे ज्ञापकं परमेकेति।
ऊर्ध्वं चोक्थमुखीयाया आवापो ऽत्रापि चोदितः॥
अथवोच्चीयमानेषु सूक्तानां परिमाणतः।
श्रुतेः संपत्तु संपाद्या श्रुतिदृष्टा क्रिया यदि॥
अदृष्टं तु यदस्माकं क्रियेताभ्यधिकं रुचितम्।
संपत्तत्र न संपाद्या ज्ञापकं पशवो ऽधिकाः॥
वाजिनं च न संख्येयं तद्यस्माकमचोदितम्।
पयस्यांगमिदं होनि स्यादियं कस्य चिन्मतिः॥
साकमेधेषु तत्रापि प्रतिषेधास्तु युज्यते।
गण्यते चातिरिक्तोक्थे समाख्या हितयोस्तया॥
अत्यन्तं चैव भेदात्स्यात्संपदा विषमे हिते।
सोमातिरेकशस्तं च वै ताभ्यामुक्तकारणम्॥
शस्तं कलशभेदे यद्भावभेदे च यद्भवेत्।
संपत्तत्रापि संपाद्या तचैतस्मास्ति कारणम्॥
[2]सोमारम्भाचिदुत्स्तोमेन संपाद्या भवेत्संपत्।
कार्यस्तनुष्टुबुद्धारः सूत्रारम्भात्पुनःपुनः॥
उक्तारम्भो विशेषार्थो न तेषां साक्षि चोदना।

---

1 C D om  2 C सोमा०।

कुर्युरित्युपदेशाद्धि तस्मात्तेषु न संपत्स्यात् ॥
अनुष्टुप्संपदमत उच्यमानां निबोधत।
द्वे शतरनुवाके तु शते पञ्चदशाधिके ॥
जगत्येकापोनप्त्रीये त्रिष्टुभां विंशतिस्तिस्रः।
गायत्र्यो यस्य पीत्वेति न संख्या निगदा गण्याः ॥
संपदानुष्टुभो ज्ञेया एकविंशत्संपादिका।
यत्परित्र्ययणीयादि सवनीयान्तमत्र तु ॥
आज्यभागावसंख्याय संख्यायैकं पशु[१] तथा।
आप्रियस्त्रिष्टुभः संख्य[२] (?) सर्वेषां संपदस्तथा ॥
प्रजाकामवदाप्रीणां नाराशंस्यपि वासिष्ठी।
गायत्री वा भवेन्मत्वा संपद्गण्या ऋचो ऽत्र तु[३] ॥
सतोबृहत्यस्तिस्रो ऽत्र द्वाविंशतिश्च त्रिष्टुभः।
तुभ्यं श्चोतन्ति वाप्येषा विराट्रूपाष्टकोत्तमा ॥
चत्वारिंशच्च तिस्रश्च गायत्र्यः स्युरनुष्टुभाम्।
अष्टावष्टिस्तु[४] संपन्नाः पौलशाचरवर्जिताः ॥
द्विदेवत्यादि चाज्यात् प्राग्ऋतुयाज्या ऋचो[५] ऽत्र तु।
बृहत्यो नव गायत्र्यः चत्वारिंशच्च पञ्च च ॥
एका सतोबृहत्यत्र संपदानुष्टुभः पञ्च।
चत्वारिंशच्च ताः सार्धं चतुर्भिः स्युरिहाचरैः ॥
संपदानुष्टुभश्चाज्ये दश तिस्रश्च निश्चिताः।

---

१ C D पशुम्। २ C D सख्य। ३ C seems to read शेषो ऽत्र तु। ४ D ॰ष्टिष C ष्टितु॰। ५ C D ऋचो।

सयाज्ये प्रउगे च स्युः संपदा दश सप्त च ॥
होत्राज्येषु सयाज्येषु षष्टिरध्यर्धया विना।
सवने ऽनुष्टुभां संपच्चत्वारिंशच्च पञ्च च ॥
शतानि पञ्च चत्वार्यक्षराणि च विंशतिः।
ग्रावस्तोत्रे तु गायत्र्यस्त्रयस्त्रिंशत्तथोष्णिहः ॥
तिस्रः सतोबृहत्येका जगत्यः षोडशैव तु।
त्रिष्टुभः सप्त संपन्ना द्विषष्टिः स्यात्सपादिका ॥
दधिघर्मादिशस्त्रात् प्राक् स्याच्चेत्पशुपुरोळाशः।
तत्स्विष्टकृत्पृथक्के तु त्रिंशत्सैकाच त्रिष्टुभाम् ॥
गायत्र्येका च संपन्नाश्चत्वारिंशदनुष्टुभः।
अधिका तिसृभिर्ज्ञेया अक्षराणि च द्वादश ॥
एका मरुत्वतीये तु सयाज्ये जगत्यस्तिस्रः।
अष्टयः पञ्च गायत्र्यस्ततः ककुभस्तथा ॥
बृहत्यः सतोबृहत्यस्त्रिष्टुभः षोळशैव तु।
चत्वारिंशच्चतस्रश्च संपन्नाः पादवर्जिताः[1] ॥
निष्केवल्ये सयाज्ये तु गायत्र्यो ऽष्टौ विराळेका।
तिस्रः सतोबृहत्यो ऽत्र बृहत्यस्तिस्र एव च ॥
त्रिष्टुभो ऽष्टादश ज्ञेया द्विपदे द्वे नवोष्णिहः।
चत्वारिंशत्सहाष्टाभिः संपन्नाः स्युरनुष्टुभाम् ॥
मैत्रावरुणशस्त्रे तु सयाज्ये द्विपदैकिका।
एका सतोबृहत्यच्च त्रिष्टुभो दश सप्त च ॥

---

१ C पादावर्जिता।

त्रिष्टुभस्त्रिर्विराट्स्थानान्मुख्यात्स्थानवको[1] नव।
बृहत्यः संपदा तु स्याच्चत्वारिंशद्विनोष्णिहः॥
ब्राह्मणाच्छंसिनः शस्त्रे वार्हते स्तोत्रिये कृते।
एका सतोबृहत्यत्र सयाज्ये द्विपदा तथा॥
बृहत्यो नव विज्ञेयाः त्रिष्टुभश्चैकविंशतिः।
संपदानुष्टुभस्त्वेताश्चत्वारिंशत्सहोष्णिहा॥
अच्छावाकस्य त्रिष्टुभः शस्त्र एकान्नविंशतिः।
एका सतोबृहत्येका सयाज्ये द्विपदा तथा[2]॥
बृहत्यो ऽनुष्टुभां त्रिंशत्साष्टा सचतुरक्षरा।
सवने ऽनुष्टुभां संपच्छतानि त्रीणि पञ्च च॥
ज्ञेयानि दशभिः सार्धमक्षराणि च षोडश।
स्याच्छस्त्रादैश्वदेवात्प्राग्यदादित्यग्रहादि तु॥
जगत्यो ऽत्र नव ज्ञेयाश्चत्वारिंशच्च त्रिष्टुभः।
अभूद्देव इति त्रिष्टुवेवमन्यस्त्वाशुत्रिंशता[3]॥
संपदानुष्टुभो ह्येता अष्टाषष्टिः सहार्धेन।
वैश्वदेवादि संख्याय परीक्ष्या[4] साग्निमारुतम्॥
त्रिष्टुभो विंशतिस्तत्र जगत्यश्चैकविंशतिः।
षट् गायत्र्यो ऽष्टयस्तिस्रो द्विपदाश्चैकविंशतिः॥
संपन्नानामशीतिः षट्विंशत्यक्षरसंयुता।
एकत्रिंशज्जगत्यः स्युः सयाज्ये त्वाग्निमारुते॥

---

१ A मुख्यास्था D ॰मुख्या स्यान्मुख्या स्थाम॰। २ C नव।
३ A ॰त्रिंशता C ॰त्रिंशत। ४ C D पराक्ष्या।

यास्ते राके सुमतय एषोपजगती स्मृता।
त्रिष्टुभो ऽष्टादश ज्ञेयास्तिस्रश्चाचरपङ्क्तयः॥
विराजः षट् च गायत्र्यस्तिस्रः स्युः संपदा त्विह।
अनुष्टुभां अशीतिः स्यादधिकाष्टाभिरक्षरैः॥
शंयोर्वाकादि शंय्वन्तं शंयुः स्युः(?) स्यादिहोत्तरः।
सिनीवाली च राका च क्रियेयातां न चेदिह॥
गायत्र्यौ द्वे जगत्येका शक्वर्यौ द्वे तथैव च।
उपत्रिष्टुप् च विज्ञेयायं यत्र इतीयमृक्॥
त्रिष्टुभो ऽष्टौ तु संपन्नाः स्युः षोलशभिरक्षरैः।
अधिका दशभिः सार्धं सदा ज्ञेया अनुष्टुभः॥
सवने ऽनुष्टुभां संपच्छतान्यर्धद्वतीयानि।
द्वे चैवाचापरे ज्ञेये चतुरक्षरवर्जिते॥
यास्ते राके जगती वा ज्ञेया त्रिष्टुबथापि वा।
एवं संपादिता संपद्युक्ता ब्राह्मणकल्पयोः॥

७. उपप्रयन्तो नव स हि यो मानुषा युगेति पतस्रः कस्त उषः इति तिस्रो यावयद्वेषसं त्वेति चतस्रो ऽश्विना यज्वरीरिष इति तिस्र आ मे हवं नवेति।

८. अग्नि नरो दीधितिभिररण्योरिति द्वृचमाग्नेयं। प्रति ष्या सूनरी जनीत्युषस्ये। आ शुभ्रा यातमश्विना स्वश्वेत्याश्विने।

९. आपो रेवतीः क्षयथा हि वस्व इति त्रिः समस्य यद्वियुता समिन्नूधमिति पद्यागन्म महेति तिस्र उपो रुरुचे षट् प्रति स्तोमेभिरिति द्वृचं। आ भात्यग्निरुषसामनीकमिति द्वे उप त्वा

वह्नी गमतो विश्वं न इति द्वे इति चतुर्विंशतिं त्रिष्टुभो ऽनुब्रूयात्।

१० वेदिषद् इति सप्त जनस्य गोपा इति षट् एता उ त्या इति तिस्रः त्रिश्चिन्नो अद्येति चतस्रः क्व त्यदद्य कतमास्वश्विनेति चतस्र इत्येताश्चतुर्विंशतिं जगतीरनुब्रूयात्।

११. एना वो अग्निं नमसेति त्रयः प्रगाथाः। अयमग्निः सुवीर्यस्येति त्रयः प्रगाथाः। प्रत्यु अदर्श्यायतीति त्रयः प्रगाथाः। उषो यदद्य भानुनेत्येकः प्रगाथः। इमा उ वां दिविष्टय इति त्रयः प्रगाथाः। अयं वां मधुमत्तम इति द्वौ प्रगाथौ। एतान्पञ्चदश प्रगाथाननुब्रूयात्।

१२. त्वामग्ने मनीषिण इति तिस्रः। अग्ने यजिष्ठो अध्वर इति तिस्रः। ईळिष्वा हि प्रतीव्यमिति दश तृचाः पुरु त्वा दाश्वान्वोच इति तिस्रः। उपस्तिचित्रमा भरेति तिस्रः। युवोरु षू रथं हुव इति तिस्रः। तथा च श्लोकः।

त्वामग्ने मनीषिण इत्युद्धार्यो मध्यमस्तृचः।
तृचोपदेशात् कर्तव्यास्तिस्र उष्णिह आश्विने॥

१३. सर्वाण्येव भवन्ति। संख्यार्थं वचनं। सह त्रिर्वचनेनैकत्रिंशत्पङ्क्तयः।

१४. यः पूर्वमुक्तः प्रातरनुवाको द्वात्रिंशतं गायत्र्य इत्येवमादिः सो ऽनुष्टुभां द्वे शते पञ्चदशाधिके संपद्यते। तत्संपत्त्यर्थाः श्लोकाः।

द्वात्रिंशदेव गायत्र्यः पङ्क्तिराजस्तथैव च।
भवन्त्यनुष्टुभस्त्रिंशत्संपन्नास्ता यथा श्रुतिः॥

चतुर्विंशतिं त्रिष्टुभो जगत्यश्च तथैव याः[1]।
अनुष्टुभो ऽपि संपन्ना ऊनसप्ततिरेव ताः॥
पृथक्कृत्य प्रगाथेभ्यो बृहत्यो दश पञ्च च।
ताः सप्तदश संपन्नाश्चतुरक्षरवर्जिताः॥
य उक्ताः परिसंख्याय तृचाः पञ्चदशौष्णिहः।
त्रिंशच्च संपन्ना अधिकद्वादशाक्षराः॥
सतोबृहत्यः पञ्चदशैकत्रिंशच्च पङ्क्तयः।
प्रति त्या सूनरी तिस्रो द्वादशाक्षरमौष्णिहम्॥
अनुष्टुभस्तु संपन्नाः षष्टिरेताः समासतः।
चतुरक्षरमत्येति तत् त्रिपेत् बृहतीगणे॥

इति समाप्ता संपत्। ननु सिद्धैवाचैतावत्यनुष्टुप्संपत्। उच्यते। ज्ञापयत्याचार्यो जपानामच नोद्धारो न संपत्। तथा च वृद्धश्लोकाः।

या प्रातरनुवाकस्य संपत् सिद्धैव चोदिता।
जपास्तेन न संख्येयाः संपदुद्धारयोरिह॥
यज्ञपेत्त्वोत्तरेलां वै जपमन्त्राणि चोक्तवान्।
आप्यायनाद्यस्ते न करणे जपधर्मिणः॥
अनुद्रवो ऽपि तद्धर्मा प्रायश्चित्तश्रुतिर्यतः।
वाक्यभेदादनित्यत्वाच्चतुर्थत्वाद्यापि च॥
ग्रावभेदो ऽर्बुदः शङ्खो यद्वत्तद्वद्भवेदिदम्।
इति स्यात् तत्र सोमार्थं विकल्पतो[2] यतः स्मृतौ॥
यदद्य होत्वूर्याय इन्द्रमन्वारभामहे।

---

[1] C over the line च instead of य।   [2] C D विकल्पेत्।

इदमाप इत्यचस्तिस्रो दधिक्राव्णो अकारिषम् ॥
समुद्रं वो नि वर्तध्वं नैतास्त्वाज्या अनुष्टुभः।
जपत्वात्करणत्वाच्च तथानुद्रवणादपि ॥

१५. सोकीयानां तृतीयाचतुर्थ्यावनुष्टुभौ। ते उद्धृत्याभि प्रवन्त समनेव योषा इत्येते द्वे प्रयोक्तव्ये।

१६. अच्छा नः शीरशोचिषमित्येतास्तिस्रो ऽच्छा वो अग्निमवस इत्येतासां तिसृणां स्थाने।

१७. प्रति श्रुताय वो धृषदित्येतास्तिस्रः। प्रत्यस्मै पिपीषत इत्येतासां तिसृणामनुष्टुभां स्थाने।

अस्मास्मा इदित्येषा गणोद्धारो ह्यनुष्टुभाम्।
तेनैतासामिति प्रायः सूक्तमेतद्विचोदितम् ॥

---

## १३.

१. तदेतत्सृष्टं दशमायाह्ने न संपादयेन्नाद्रियेतात्रैव संपन्नमिति (२०. २) श्रुतेः।

२. त्रिष्वपि वचनेषु उष्णिगुदेतीति सेनिमहे (२०. १)। गायत्री वेति श्रुतावुक्तं। तदिह्याज्ययाज्यासंबन्धेन पूर्वाचार्योक्तं लिख्यते श्लोकैः।

अग्निं नरस्तृचे चैष्णा शुभ्रेति तृचे तथा।
शोचिये चानुरूपे च पट्सु चैवाग्निमारुते ॥
एकं चाज्यस्य याज्यायां निष्केवल्यस्य चापरम्।
राया हिरण्ययेत्यन्त्यां पादयोरचरद्वयम् ॥

सुते अध्वर इत्ययां चिरुक्तावचरद्वयम्।
अभूद्देव इत्युभये अधिके द्वे तथाचरे ॥
अचरे अधिके अन्ये स्यातामचरपङ्क्तिषु।
पादयोरधिके चान्ये अया वाजं रया इव ॥
आ नो यज्ञाय पादे ऽस्मिन्नेकं चाधिकमचरम्।
ऋतुयाजेषु चत्वार्यचराण्यधिकानि तु ॥
उष्णिक्स्वा कालगेत्येषोदिता तद् ह्यधिकाचरा[1]।
ऋतुयाजेषु[2] चत्वार्यो नो यज्ञाय चापरम् ॥
एतानि नातिरिच्यन्ते शाकलानामियं ततः।
तेषामेतेन गायत्री उदिता अचराधिका ॥
तां प्रातरनुवाके वै वचनात्संपदं विदुः।
अनुष्टुब्यपि न त्याज्या या पञ्चस्यत्र षट्पदा ॥
श्रुतेर्यस्मास्य विहिता सूत्रे ऽनुष्टुप् चतुष्पदा ॥

३. मह सारस्वतेनेति कृत्स्नार्थ आरम्भः।

४. पूर्वोक्तस्य विकल्पार्थं वचनं। आरम्भसामर्थ्यात् गायत्र्य इति वचनमस्मिन्पचे संपदनुष्टुभामिति ज्ञापनार्थं।

संपदर्थे च कर्तव्ये गण्या गाच पुरोरुचः।
महती या श्रुता संख्यासंख्या मा चेह चोदिता ॥
त्याज्या सारस्वते संख्या गायत्रीणामयं भवेत्।
पुरोरुचो ऽपि नैवाच गण्याः सूत्रमिदं तथा ॥

---

१ A मध्वधिकाचरा C सेषो—orig. मयचराधि०, in marg. गृ हा D चदिता बखमे सेषोदिता तयचराधिका। २ C तु instead of षु।

५. मृजानो वारे पवमानो अव्यय इत्येवं ग्रावस्तुतः स्तोत्रे यथाकाम्यं। यथाकाममत्वेनेत्यर्थः[१]।

६. उत्तिष्ठताव पश्यतेत्येतस्याः स्थाने उत्तिष्ठन्नोजसा सहे-त्येतामभिष्टुयात्।

७. त्रिकद्रुकशब्दो यस्यां विद्यते सा त्रिकद्रुकीया। त्रिकद्रु-केषु महिषो यवाशिरं तुविशुष्म इत्येषा मरुत्वतीयस्य शस्त्रस्य प्रति-पद् भवति।

८. त्रिकद्रुकीयायां चत्वारः षोलशाचराः पादाः[२]। तत्रैकेन पादेन षोलशाचरावधिना[३] विग्रहणं। द्वितीयेन प्रणवः तृतीयेना-वसानं। चतुर्थेन प्रणव इति शस्त्रम्।

९. तुविशुष्म तुविक्रतो इत्येते त्रिकद्रुकीयाया उत्तरे भवतः।

१०. बृहदिन्द्राय गायत प्र व इन्द्राय बृहत इत्येतौ जनिष्ठा-उग्रीयात् सूक्तात् पूर्वौ प्रगाथौ पिबन्त्यपीयया संशंसति। समि-त्येकीभावे। एकीभावश्चाचाहावेनाव्यवच्छेदः। तत एतदुक्तं भवति। पिबन्त्यपीयायामाहावं कृत्वा ततः सूक्तं करोति। इति मरुत्व-तीयमिति नियमार्थम्। ततः सत्यामसत्यां वा संपदि सर्वत्रैवं भवति। चिरुद्दशरात्रे ऽपि।

११. निष्केवल्ये ऽयं संशंसनकमः। वामदेव्यस्य स्तोत्रियानुरूपौ शस्त्वा कया नश्चित्र आ भुवत्कया त्वं न ऊत्येत्येतौ धाय्यां च तत

---

१ A adds इन्द्रायेन्द्रो मरुत्वत इत्यन्त अभि त्वा देवेत्यादिक प्राक्न शस्त्वा मृजान इत्यमाश्रित्य इन्द्राविकल्पेदिति भाष। २ C D om पादाः। ३ C (orig.) D ०षधिकविग्रहण, C alt क to ना।

ऊर्ध्वं धाय्याया राथन्तरं प्रगाथं पिबा सुतस्य रसिन इत्येतं स्तोत्रियानुरूपौ च राथन्तरौ शंसेत्[1]।

१२. राथन्तरादनुरूपादनन्तरम्।

१३. आ धूर्ष्वस्मै दधाताश्वान् वज्रमेको बिभर्ति हस्त आहितमित्येते द्विपदे शंसेत्। चकारः समुच्चयार्थः।

१४. इन्द्रस्य नु वीर्याणीत्येतत्।

१५. धाय्यानन्तरो यः प्रगाथ उक्तस्तचाहावं कृत्वा हैरण्यस्तूपीयादौ करोतीत्यर्थः।

१६. इति यदेतदुक्तं। एवं नियमतो निष्केवल्यं भवति। यदापि स्तयोनौ रथन्तरक्रिया तदापि सखाय आ शिषामहीत्येता नव भवन्त्येव द्विपदे च। त्रिवृद्गुराचे। तत्र हि संपदसंभवात्[2] अभाव आशङ्क्येत। तत्संपन्नमिति श्रुतेरत्रैव स्यात्।

१७. अभि त्वं देवमित्येवमादिकौ।

१८. अयं चापरो विशेषः। एकपातिनीनामुपर्याहावं[3] कृत्वा पुरस्ताद्यानोभद्रीयात्प्रशुक्रीयं शंसेत्। एतावान्वैश्वदेवे विकारः। विकारवचनं संसवे विहव्यनिवृत्त्यर्थम्।

१९. उरु विष्णो वि क्रमस्वेत्येतां घृतयाज्यामुद्धृत्य भवा मित्रो न शेव्यो घृतासुतिरित्येतया यजति।

२०. अग्नि नरो दीधितिभिररण्योरित्यग्निष्टोमसाम्न आग्निमारुते स्तोत्रियानुरूपौ।

---

१ C D om शंसेत्। २ C D संपदां। ३ C धाय्यानामुपर्याहावं D om. this passage.

यज्ञायज्ञीययोनिस्तु विकल्पेनाच शस्यते।
संपत्त्वान्यथा गण्या हृहत्यः[१] संभवे तथा॥

२१. अतिरिक्तोक्थमिदानीमुच्यते। आयं गौः पृश्निरक्रमीदित्ययं स्तोत्रियः। मही द्यौः पृथिवी चन इत्यनुरूपः।

२२. तं प्रत्नथा पूर्वथा विश्वथेमथेत्येता त्रयोदश शस्त्वा।

२३. [२]यज्ञो बभूव स आ बभूवेत्यनया परिधाय तेनैव स्वरेण।

२४. प्रजापते न त्वदेतान्यन्य इत्येतया यजति।

२५. चतुराह्वावा होत्रका होता चातिरिक्तोक्थेष्विति। तत उक्थैर्व्याख्यातस्तेषूत्थ्य इत्यर्थः।

२६. इति यदेतदुक्तमेतत्समूल्हे ऽतिरिक्तोक्थं भवति। अतिरिक्तोक्थवचनान्नात्र संपदः कार्याः। उत्तरमप्यतिरिक्तोक्थमेवाविशेषात्।

२७. प्राक् पत्नीसंयाजेभ्यः। संस्थिते दशमे ऽहनि पुरा पत्नीसंयाजेभ्य इति श्रुतेः। संस्थाप्य वा पत्नीसंयाजान्। संस्थितेषु वा पत्नीसंयाजेष्विति श्रुतेः। गार्हपत्ये हुत्वा यो ऽनिरुक्ते गार्हपत्ये प्राजापत्ये द्वे आहुती जुहोतीति श्रुतेः। अन्वारब्धेष्विह रतिरिति जुहोतीति कात्यायनस्य। पूर्वथा द्वारा सदः प्रपद्य नियमतः स्वस्य धिष्ण्यस्य एकैकः पश्चादुपविशेत्। ब्रह्मा तु स्वदेशे एव धिष्ण्यवचनात्। मानसेन स्तुत इति वचनं स्तोत्रप्रसवे मानसो व्यापार इत्यस्य

---

१ C (in marg.) त्र instead of त्य। २ This Sutra is in the text edition erroneously counted as No. 22. It ought to be No. 23 and the following Sutras numbered accordingly.

भावार्थम्। आर्यं गौरित्येतास्तिस्त्रऋचः सार्पराज्ञीरित्येवं संज्ञिता। पराङ्गनावृत्त्या। निर्वचनरहिता उपांशुप्रणववन्। आहेति वाक्यशेषः।

२८. मानसेन स्तुते शंसावो इत्यनेनैवाध्वर्योरामन्त्रणम्। आहावप्रकरणे[1] शस्त्रादावित्यतिरिक्तवचनात् ततश्च सार्पराज्ञीशंसनादनन्तरमध्वर्यो इत्यामन्त्रितो ऽध्वर्युर्होचा वा गृहपतिना वा होइ होतरिति प्रतिगृणोति। प्रत्याभार्ष सर्वत्र करोति। सर्वत्रग्रहणाद्यथान्यायं[2] होइ गृहपत इति गृहपतेः।

२९. ओ होतरित्येकस्मिन्नवसाने[3] तथा होतरित्यपरस्मिन्नेवं वक्ष्यमाणमर्थमाचक्षाणे होतरि गृहपतौ वाध्वर्युरनुगृणाति। गृणन्नर्थविशेषानुच्चरन्नमनुकूलयतीत्यर्थः।

---

## १४.

१. दशहोता नाम यज्ञस्तत्र वदिष्यन्नेवमामन्त्रयेत्। न केवलमत्र कर्मणि। पृथगप्येतस्मात्कर्मणः। चरकश्रुतेः। यः प्रजाकामः स्यात्सो ऽरण्यं प्रतिपरेत्य ब्रह्माणं दक्षिणत उपवेश्य दशहोतारं निगदेत्। अयजमानस्यापि शौन.शेपाख्यानवचने यदप्रतिगरदर्शनादत्र समविच्छेदा इष्यन्ते। तान् पूर्वाचार्योक्तानतुब्रूम.।

२. एतावानयमेकान्नत्रिंशदक्षरो विच्छेदः।

३. एकान्नविंशतिरक्षराण्ययं विच्छेदः।

४. इतिशब्देनानन्तरं निर्दिश्यते। उच्चैरिति संकीर्तनविनाश आवृत्त्यर्थं। अथोपांश्वित्यथशब्दादनन्तरमुपांशुद्रवेत्।

---

१ C D आवाप्र॰। २ C D om च। ३ C D ओमित्येक॰।

५. त्र्यक्षरो विच्छेदः। अध्वर्यादि वदिष्यन्तमित्युक्तादिषलक्षरं इत्युपांशु तथातीतमन्यत्सर्वमिहोच्यते[1]।

६. चतुरक्षरो विच्छेदः।

७. त्र्यक्षरो विच्छेदः।

८. पञ्चाक्षरो विच्छेदः।

९. चतुरक्षरो विच्छेदः।

१०. पञ्चाक्षरो विच्छेदः।

११. षलक्षरो विच्छेदः।

१२. षलक्षरो विच्छेदः।

१३. चतुरक्षरो विच्छेदः।

१४. चतुरक्षरो विच्छेदः।

१५. पञ्चाक्षरो विच्छेदः।

१६. चतुरक्षरो विच्छेदः[2]।

१७. नवाक्षरो विच्छेदः।

१८. चतुर्दशाक्षरो विच्छेदः।

१९. एकाक्षरो विच्छेदः।

२०. पूर्वोक्तमुपांशु तत उच्चैरित्यर्थः।

२१. त्रयोविंशत्यक्षराण्ययं विच्छेदः।

२२. त्रयोदशाक्षरो विच्छेदः।

२३. चतुर्दशाक्षरो विच्छेदः।

---

१ I propose वदिष्यद्यन्तमि॰ C D अनूच्यते। २ C D चतुरक्षरः। विच्छेद इति अग्रे सर्वत्र संबध्यते, they omit from here to this chapter the word विच्छेदः।

२४. षट्त्रिंशत्यक्षराण्ययं विच्छेदः[१]।

२५. पूर्वोक्तमुपसंहृतम्।

---

## १५.

१. चतुर्होतरि वक्ष्यमाणे वदिष्यन् अध्वर्यो३ इत्यामन्त्रयेत।

२. सप्तदशाक्षरः। विकर्षणादष्टादशाक्षरो ऽयं विच्छेदः।

३. पञ्चत्रिंशदक्षराण्ययं विच्छेदः[२]।

४. एकविंशत्यक्षरो ऽयं विच्छेदः[३]।

५. सूत्रमेतदुक्तार्थम्।

६. पञ्चाक्षरो ऽयं विच्छेदः।

७. चतुरक्षरो ऽयं विच्छेदः।

८. त्र्यक्षरो ऽयं विच्छेदः।

९. षडक्षरो ऽयं विच्छेदः।

१०. पञ्चाक्षरो ऽयं विच्छेदः।

११. चतुरक्षरो विच्छेदः।

१२. अष्टादशाक्षरो ऽयं विच्छेदः।

१३. चतुर्दशाक्षरो ऽयं विच्छेदः।

१४. नवाक्षरो ऽयं विच्छेदः।

१५. एकादशाक्षरो ऽयं विच्छेदः।

१६. यत्पूर्वमुक्तम्।

१७. चतुर्विंशत्यक्षरो ऽयं विच्छेदः।

---

१ C D परिच्छेद। २ C D •चरो विच्छेद। ३ C D om. from here in this chapter अयं विच्छेद (with the exception of Sūtra 22)

१८. त्रयोदशाक्षरो ऽयं विच्छेदः।

१९. एकादशाक्षरो ऽयं विच्छेदः।

२०. त्रयोदशाक्षरो ऽयं विच्छेदः।

२१. पञ्चदशाक्षरो ऽयं विच्छेदः।

२२. सप्तविंशत्यक्षरो ऽयं विच्छेदः।

२३. परिसमाप्तं पूर्वमुक्तम्।

---

## १६.

१. अनुगरार्थमामन्त्र्य वक्ष्यमाणमुपन्यस्यति। पञ्चहोतरि वदिष्यतिति[1]।

२. अष्टादशाक्षरो ऽयं विच्छेदः[2]।

३. विंशत्यक्षरो ऽयं विच्छेदः।

४. प्राग्व्याख्यातम्।

५. चतुरक्षरो ऽयं विच्छेदः।

६. षलक्षरो ऽयं विच्छेदः।

७. त्र्यक्षरो ऽयं विच्छेदः।

८. अष्टाक्षरो ऽयं विच्छेदः।

९. पञ्चाक्षरो ऽयं विच्छेदः।

१०. चतुरक्षरो ऽयं विच्छेदः।

११. चतुर्दशाक्षरो ऽयं विच्छेदः।

१२. द्वादशाक्षरो ऽयं विच्छेदः।

१३. प्राग्व्याख्यातम्।

---

१ D om. the Comm. on this Sūtra. २ C D अयं विच्छेदः om. in this Sūtra.

१४. अष्टादशाक्षरो ऽयं विच्छेदः।

१५. त्रयोदशाक्षरो ऽयं विच्छेदः।

१६. द्वादशाक्षरो ऽयं विच्छेदः।

१७. पञ्चविंशत्यक्षरो ऽयं विच्छेदः।

१८. परिसमाप्तं पूर्वमुक्तम्।

---

## १७.

१. अध्वर्यो३ इत्यनुगरार्थमामन्त्र्य पङ्क्तौ तरि व्याख्यातव्य इत्यर्थः।

२. चतुर्दशाक्षरो ऽयं विच्छेदः।

३. अष्टादशाक्षरो ऽयं विच्छेदः।

४. पूर्ववद्व्याख्यानम्।

५. पञ्चाक्षरो ऽयं विच्छेदः।

६. चतुरक्षरो ऽयं विच्छेदः।

७. षलक्षरो ऽयं विच्छेदः।

८. पञ्चाक्षरो ऽयं विच्छेदः।

९. त्र्यक्षरो ऽयं विच्छेदः।

१०. षलक्षरो ऽयं विच्छेदः।

११. पञ्चाक्षरो ऽयं विच्छेदः।

१२. चतुरक्षरो ऽयं विच्छेदः।

१३. षोलशाक्षरो ऽयं विच्छेदः।

१४. पञ्चदशाक्षरो ऽयं विच्छेदः।

१५. कृतव्याख्यानमेतत्।

१६. एकादशाक्षरो ऽयं विच्छेदः।

१७. त्रयोदशाक्षरो ऽयं विच्छेदः।

१८. त्रयोदशाक्षरो ऽयं विच्छेदः।

१९. सप्तविंशत्यक्षराण्ययं विच्छेदः।

२०. एतावत्पूर्वोक्तम्।

---

## १८.

१. सप्तहोतरि विषयभूते वदिष्यन्नध्वर्युमामन्त्रयेत।

२. एकोनविंशत्यक्षराण्ययं विच्छेदः[1]।

३. विंशत्यक्षरो ऽयं विच्छेदः।

४. स्पष्टव्याख्यानम्।

५. षडक्षरो ऽयं विच्छेदः।

६. सप्ताक्षरो ऽयं विच्छेदः।

७. सप्ताक्षरो ऽयं विच्छेदः।

८. नवाक्षरो ऽयं विच्छेदः।

९. त्रयोदशाक्षरो ऽयं विच्छेदः।

१०. षडक्षरो ऽयं विच्छेदः।

११. पञ्चाक्षरो ऽयं विच्छेदः।

१२. षड्क्षरो ऽयं विच्छेदः।

१३. चतुर्दशाक्षरो ऽयं विच्छेदः।

१४. अष्टाक्षरो ऽयं विच्छेदः।

१५. त्रयोदशाक्षरो ऽयं विच्छेदः।

---

१ C D •क्षरो ऽयं।

१६. सप्तदशाक्षरो ऽयं विच्छेदः ।

१७. पूर्वोक्तं उपांशु ब्रूयात् ।

१८. अष्टाक्षरो ऽयं विच्छेदः ।

१९. द्वादशाक्षरो ऽयं विच्छेदः ।

२०. अष्टाक्षरो ऽयं विच्छेदः ।

२१. त्रयोदशाक्षरो ऽयं विच्छेदः ।

२२. द्वादशाक्षरो ऽयं विच्छेदः ।

२३. चतुर्दशाक्षरो ऽयं विच्छेदः ।

२४. त्रयोविंशत्यक्षरो ऽयं विच्छेदः ।

२५. षट्त्रिंशदक्षरो ऽयं विच्छेदः ।

२६. [१]प्रागुक्तं यत् ।

---

## १९.

१. वक्ष्यमाणिकास्तन्त्वः । अतो वदति । प्रजापतेः प्रत्यक्षं तन्त्वसा होता वदेदिति श्रुतेः । अतो वदतीत्यतःशब्द आनन्तर्ये । ततो नान्तरा यागः । अतो ऽन्ये वापि कामं यजेयुरिति श्रुतौ विकल्पो[२] न सूचितः । उपरिष्टादुपदेशात् ।

२. अध्वर्यो इत्येको ऽवच्छेदो द्वितीयः शेषेण । एवमुत्तरास्वपि द्रष्टव्यं । उत्तमा तु त्र्यवसाना[३] ।

१४. परिसमाप्तास्तन्त्वः ।

---

१ Omitted in D and (orig.) in C  २ A ins. ऽत्र ।
३ There is no commentary on Sutra 3-13

## २०.

१. वक्ष्यति गृहपतिसप्तदशाः सत्त्रमासीरन्निति। श्रुत्यन्तरे दीक्षाक्रमविधौ तेषां गृहपतिः प्रथमो दीक्षित[1] इति। स गृहपतिः सत्त्रभूते द्वादशाहे तनूवदनादनन्तरं वदति। असत्त्रभूते लेकएक[2] एव यजमानः। सो ऽपि गृहपतिरित्युच्यते। गृहपतिवदनं वक्ष्यमाणकम्।

२. अध्वर्यो इत्येको विच्छेदः। येषां वै गृहपतिर्गृहपतिं विद्वान् गृहपतिर्भवतीति द्वितीयो विच्छेदः।

३. तृतीयो विच्छेदः।

४. चतुर्थो विच्छेदः।

५. गृहपतिवदनस्य पञ्चमो विच्छेदः।

६. षष्ठो विच्छेदः।

७. सप्तमो विच्छेदः।

८. अष्टमो विच्छेदः।

९. समाप्तं गृहपतिवदनम्।

## २१.

१. प्रजापते न त्वदेतान्यन्य इति मनसा यजति।

२. उच्चैस्तरामित्यस्य प्रतिषेधार्थं मनसा वषट्करोतीति वचनम्।

३. प्रसिद्धम्।

४. ग्रहं गृह्णाति प्राजापत्यं वायुं पृथिव्या पात्रेण ग्रहणसादनस्तोत्रोपाकरणहोमभक्षाहरणभक्षणानि मनसेति कात्यायनस्य[3]।

---

१ A दीक्षते। २ C D लेकभू. स्य। ३ ११. ५ १९।

५. तार्तीयसवनिक एव भक्षमन्त्रः। प्रकरणात्।

६. औदुम्बरीं यजमाना अन्वारभन्ते। सात्त्रिके द्वादशाहे[१] ऋत्विज इति तस्मिन् अग्रेण धिष्ण्यान्परीत्यासीनाः। सामर्थ्यात्।

७. अपरेण धिष्ण्यान् ये नातिकामेयुस्ते ऽप्यासीनाः पलाशशाखाभिः स्पृशेयुः।

८. तेषां स्पृशतामुत्तमौ हस्तौ होता कुर्यात्।

९. अनेन कामेन। इति मनसा संकल्पेदित्यर्थः[२]।

१०. अपिधाय सदसो द्वाराविव्यस्मिन्नवधौ पत्न्यौ ऽपि शालायामासते। शालायाश्चेति वचनात्। कृते वागुपाकरणे वाग्यमनं नेत्रसंमीलनं च।

११. नक्षत्रेषु दृश्यमानेषु सत्सु मार्जालीयदेशे स्थिताः। तच्चक्षुर्देवहितं शुक्रमुच्चरदित्यनयर्चा नक्षत्रेषु विषयभूतेषु यजमानाश्चक्षुर्विसृजन्ते। सूर्ये चक्षुर्विसर्गः शतातिरात्रे नक्षत्रासंभवात्। सौर्यत्वादृ[३] मन्त्रस्य।

१२. ते ऽपरया द्वारा हविर्धाने प्रपद्यन्ते। अथाध्वर्युरुत्तरस्य हविर्धानस्य कूबरीमभिपद्याह सत्त्रस्यर्धि गायेति गायति सत्त्रस्यर्धि तत्सत्त्रस्यर्धिमाप्नुवन्ति सर्वे साम्नो निधनमुपयन्तीति (२९.२) श्रुतेः। उत्तरस्य हविर्धानस्याधोऽचं यजमानाः सर्पन्ति।

१३. उत्तरेणागारं यज्ञस्यानुसंचरन्त इति श्रुतेः।

१४. युवं तमिन्द्रापर्वता पुरोयुधेत्येतामतिच्छन्दसं जपन्तो ऽधोऽचं सर्पन्ति। उत्तरेण वा गच्छन्तो ऽचवेलायां तदुद्देश

१ C in marg. यजमाना। २ C D have only अनेन कामेन। ३ A सूर्यादा।

इत्यर्थः। ततो ऽग्रेण हविर्धाने समुपविश्य। संशब्दादेकप्रदेश आसीनाः कामान्ध्यायन्ते यत्कामाः सत्त्रिणः।

१५. ये बहुकामाः सत्त्रिणो ऽनेककामाः पृथक्कामा इत्यर्थः। भूर्भुवः स्वरित्येतास्ते व्याहृतीर्न तु प्रतीकग्रहणात् सुप्रजा इत्येवमादिकं मन्त्रम्[१]।

१६. ते यजन्तो यजमानास्ते वा ऋत्विजः आसते। शाखान्तरोपदेशात्। ते प्राञ्च उदञ्च उत्क्रम्य वाचं विह्वयन्ते विस्पष्टमुच्चैराह्वयन्त इत्यर्थः। कथम्। वागेतु वागुपैतु वागुप मैतु वागिति।

१७. सुब्रह्मण्याप्रतीकं सुब्रह्मण्योमिति[२] त्रिरुपांश्वक्त्वा वाचं विसृजन्ते ये पूर्वं वाग्यताः।

१८. केचिन्मानसमहरन्तरं[३] वदन्ति। केचिदुदयनीयान्ते। अपरे दशमाहरङ्गं। तदभिप्रायं सूत्रमेतत्। तन्निराकरणायेदमारभ्यते ऽनन्तरं सूत्रम्।

१९. कालवाद एषः। यो ऽयं पुरा पत्नीसंयाजेभ्यः संस्थाप्येति (१०.१३.२७)। यथा दिवि देवनादीनामभिषेचनीयमध्ये पठितानामपि नाभिषेचनीयाङ्गत्वं। कालमात्रवादो ऽस्मिन्नवधौ। पष्ठौहीं दीव्यति राजन्यं जिनातीत्येवमादयो ऽभिषेचनीयमध्ये ऽपि क्रियमाणा राजसूयाङ्गं एवं मन्त्रोत्थानं दशमे ऽहनि क्रियमाणं द्वादशाहाङ्गमिति। अतो वाग्शब्दः पराभिप्रायनिवृत्त्यर्थः।

इति शाङ्खायनश्रौतसूत्रभाष्ये दशमो ऽध्यायः समाप्तः।

---

१ C D •दिकं मन्त्र। २ C D सुब्रह्मण्याम्। ३ A मानसमहरन्तर (रं?) C (orig) मानसमहन्तर, alt by marg add. of र to मानसमहरन्त• D मानसमरन्तर।

# अथ एकादशोऽध्यायः ।

१.

भाष्यकारगिरां यत्र विनष्टं लेखनादिना ।
अचर तद्दाशशर्मा[१] मुञ्जसूनुरकल्पयत् ॥

शाङ्खायनसूत्रोक्त[स्य] एकादशाध्यायस्य भाष्यं लिख्यते[२] । व्याख्यातो ऽग्निष्टोम प्रकृतिर्द्वादशाहस्यैकाहानां चेति सूचितत्वात् पूर्वकारिवशाच्च द्वादशाहः सत्त्रमहीनश्चेत्युभयरूपस्यापि द्वादशाहस्य श्रुत्यन्तरात् धर्मान् विधाय यथाप्राप्ते च होत्रयाजमाने[१] । अथेदानीं स्वश्रुतिक्रमेण चतुर्विंशादीन्यहानि वक्तव्यानि । तेषां च श्रुतौ होत्रमेवोक्तं । न होत्रकाः । पुनश्च पृथक्प्रकरणे होत्रकाणां कर्मविधिः । तेनैव न्यायेन द्वादशाह शेष परिभाषां पोक्ता प्रक्रमते ततो भगवान् सुयज्ञः सूत्रकारः ।

१. सत्त्राहीनानामन्ये ऽपि द्वादशाहाः सन्त्येव तदर्थं व्याख्यात इति विशेषणं । न्यायप्राप्त चैतत् । बहूनो धर्मजातस्य विधानादयमेव प्रकृतिः सत्त्राहीनानां युज्यते ।

२. स्तोत्रियानुरूपौ तृतीये ऽहनीत्येवमादिकं वचनं । लक्षणं च स्तोत्रिया होत्रकाणां प्रातःसवने समसङ्ख्याका' । एवमादिको वचनलक्षणो विधिः । सो ऽस्यैव द्वादशाहस्य विशेष. सकलीकरणत्वेन वेदितव्य' । शाखान्तरीयश्च मध्याश्रयेत् घृतं वेत्येवमादि ।

१ D शर्म॰ । २ A om from शा॰ to लिख्यते ।
१ C (sec h) याज॰ A C D यज॰ ।

३. द्विरात्रप्रभृतयः अहीना इत्युच्यन्ते। एकोत्तराश्च याजन इति प्रतिषेधार्थं पृथगभिधास्यन्ते।

४. न तु प्राक् द्वादशाहात्प्रायः।

५. उभयतोऽतिरात्रं सत्त्रमुपरिष्टादहीनस्येति तन्त्रान्तरम्।

६. अहीनेषु न विद्यन्ते।

---

## २.

१. चतुर्विंशस्तोममित्येवमादिः स्वमतपरिग्रहः। चतुर्विंशमित्याचक्षत इति संज्ञार्थम्।

२. होताजनिष्ट चेतन इत्यष्टर्चमाज्यमिति (१९. ८) श्रुतेः।

३. सह सारस्वतेन तृचेन।

४. आ त्वा रथं यथोतय इत्येवमाद्यनुक्रम्य श्रुतत्वात्।

५. अनुत्तमा ते मघवन्नकिर्नित्येषा परिधानीया कर्तव्या। न स्वक्रमेण किं तर्हि उत्तरा या एकस्य चिन्मे विभ्वस्त्वोज इत्येवमाद्याः षट् पूर्वाः शस्त्वा यत्रास्मिन् धीयते निवित्। अन्यत्रापि यत्रयत्रैतस्मिन्निविद्धानं भवति तत्रतत्रायं धर्मः।

६. तदिदास भुवनेषु ज्येष्ठमिति बृहद्दिवो निष्केवल्यमिति श्रुतेः।

७. तद्देवस्य ते हि द्यावापृथिवी इति।

८. द्वितीयादेव पाङ्क्तात् यज्ञस्य वो रथ्यं शर्धाय।

९. किमु श्रेष्ठ इति।

१०. वैश्वानराय धिषणामृतावृध इति।

११. यज्ञेन वर्धत जातवेदसमिति जातवेदसीयं भवति।

१२. चतुर्विंशे ऽन्यच्च वा यो विशेषस्तं वक्ष्याम इति वाक्यशेषः। अनारभ्यवादश्चायं। तथापि च्छन्दोगानामस्मिन्नहनि प्रायेण पाठादिहैवोच्यते।

१३. यज्ञा यज्ञा वो अग्नय इत्यचाहावं कृत्वा ततो ऽस्य स्तोत्रियानन्तरमेह्यू षु ब्रवाणि ते ऽग्न इत्थेतरा गिर इति स्तोत्रियानुरूपौ तानुक्थ्यस्तोत्रियान् संशस्य तत आहावः।

१४. उक्थ्यग्रहणमनुवर्तते यज्ञायज्ञियग्रहणं च।

१५. अग्ने मरुद्भिरित्येवमादिका कल्पजा। आग्निमारुतोक्थ्यशस्त्रदेवतालिङ्गा। एतां शस्त्वा तन्तुं तन्वन्नित्येतस्या अनन्तरमाहावमेकैकस्याश्चैकयातिन्या इति (८.७.८) वचनात्। ततो यथोक्तया परिदधात्यन्यया।

१६. यद्यान्तरुक्थ्यो ऽप्यनारभ्यवाद एव। तत्रायं विशेषः। अग्ने मरुद्भिर्ऋक्वभिरित्येतयैव यथोक्तयाभ्यासयया यजेत्। एतामेव याज्यां कुर्यादित्यर्थः। स्तोत्रियानुरूपप्रतिषेधार्थमेतयेत्यतिरिक्तवचनम्।

---

२.

१. एकचिक्रो ऽप्यनारभ्यवाद एव। तत्रायं विशेषः। इयत्तकृत्स्नं शस्त्रं वक्ष्यमाणेन विधिना।

२. यथास्तुतमिति च्छन्दोगापेक्षा। तदपेक्षया स्तोत्रिया-

च्छस्त्वा। तृचान्वा सकलां योनिमित्यर्थः। अस्त्वेतिवचनाद्विशेषेण होतृहोत्रकाणां चायमुपदेशः।

३. यादृक्सङ्ख्याका स्तोत्रियास्तादृक्सङ्ख्याकाननुरूपान् कुर्यात्। अहर्गणे तु तृचानेव। तावमानरूपत्वात्।

४. क्रमार्थं वचनम्।

५. पर्यासा इत्यन्त्यानां सूक्तानामाख्यां वक्ष्यति। तेषामुत्तमांस्तृचान् होत्रकाः शंसन्ति।

६. उत्तमानेव तृचान् होता शंसति। उत्सृज्यन्त एवान्यानि सूक्तानि वक्ष्यसूक्तेषु।

७. उक्तादन्यत्सर्वं प्रकृत्या भवति। तद्यथा। प्रतिपदनुचरेन्द्रनिहवब्राह्मणस्पत्यैकपातिनीधाय्यापोहिष्ठीयादेवपत्नीराकावरपङ्क्तीपैचीयामीसादुष्कीलीया इति।

---

## ४.

१. वक्ष्यमाणः शलहो ऽभिप्लवाख्यः पृष्ठ्यविकारो भवति। ततस्तृतीये ऽहनि सावित्रवैश्वानरीये पष्ठे चार्भवं सिद्धं भवति।

२. यानि पार्ष्ठिकस्य प्रथमस्य त्र्यहस्याज्यानि सामूहिके पञ्चे तानि पूर्वेषामाभिप्लविकानां त्रयाणां यथासङ्ख्येन भवन्ति।

३. प्रथमे ऽहनि रथन्तरं द्वितीये बृहत्तृतीये रथन्तरमित्यनेन क्रमेण विपर्यासमेते पृष्ठे भवतः।

४. ज्योतिःसञ्ज्ञकमग्निष्टोमसंस्थं प्रथममहर्भवत्युत्तमं च षष्ठम्[1]।

---

१ A षष्ठम्।

५. प्रथमोत्तमयोरह्नोर्मध्ये चलायुंक्थ्यसंज्ञानि वक्ष्यमाणसंज्ञकानि भवन्ति।

६. गां द्वितीयमहरुपयन्ति। गां चतुर्थमहरुपयन्तीति श्रुतेः।

७. आयुस्तृतीयमहरुपयन्ति। आयुः पञ्चममहरुपयन्तीति (२०.४.२१.२) श्रुतेः।

८. इन्द्रो रथाय प्रवतं कृणोतीति मरुत्वतीयमिति श्रुतेः।

९. आ याह्यर्वाङुप वन्धुरेष्ठा इति निष्केवल्यमिति श्रुतेः।

१० कथा देवानां कतमस्य यामनीति वैश्वदेवम्। अथ पञ्चमे चाहनि।

११. मारुतं सूक्तमेकसुत्याद्दाद्ग्निष्टोमाद्भवति।

१२. एति प्र होता व्रतमस्य माययेति जातवेदसीयं भवति।

१३. यदिह नोक्तं तत्प्राष्ठिकेन प्रथमेनाह्ना समानम्।

---

## ५.

१. इमा उ त्वा पुरुतमस्य कारोरित्येतन्मरुत्वतीयं द्वितीयस्याभिप्लविकस्य भवति।

२. सुत इत्त्वं निमिश्ल इन्द्र सोम इति निष्केवल्यमिति श्रुतेः।

३. अभूद्देवः सविता वन्द्यो नु न इति सावित्रमुदिति श्रुतेः।

४. ततं मे अपस्तदु तायते पुनरित्यार्भवमित्युद्दिति (२०. ३) श्रुतेः।

५. ततं म इत्येतदेवार्भवं पञ्चमे चाभिप्लविके ऽहनि। व्याघार्यमिहोक्तम्।

६. देवान्हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवमुदददिति (१०. २) श्रुतेः। विपुवति चेति नोक्तमसंमोहार्थम्।

७. यज्ञेन वर्धत जातवेदसमिति जातवेदसीयमिति (१०. ३) श्रुतेः।

८. यदिह नोक्तं तद्द्वितीयादह्नः पाष्ठिकात् ग्रहीतव्यं। तथा च गां द्वितीयमहरुपयन्तीत्यत आरभ्य सर्वमेवाम्नातम्।

---

## ६.

१. वक्ष्यमाणकः[1] प्रउग औष्णिहो वैश्वमनस इत्येवंसंज्ञकस्तृतीयस्याभिप्लविकस्याह्नो भवति। तथैव श्रुतत्वात्। स उच्यते।

२. वायो याहि शिवा दिव इति तृचो वायव्यः।

३. आ वां सहस्रं हरय इत्यैन्द्रवायवः।

४. ता वां विश्वस्य गोपेति मैत्रावरुणः।

५. आ वां वाहिष्ठो अश्विनेत्याश्विनः।

६. इत्यैन्द्रस्तृचः।

७. इति वैश्वदेवस्तृचः।

८. उत नः प्रिया प्रियास्विति सारस्वतस्तृचः।

९. वायो याहि शिवेत्येवमादीनि सप्त यान्युक्तानि।

१०. तिष्ठा हरी रथ आयुज्यमानेति मरुत्वतीयमिति श्रुतेः।

११. इन्द्रस्य नु वीर्याणि प्र वोचमित्येतत्।

---

[1] C D om क।

१२. एतेन द्यावापृथिवी अभीष्टते इति द्यावापृथिवीयं तृचं लिङ्गात् श्रुतेश्च।

१३. एतेन द्यावापृथिवी इत्येतदेव षष्ठे चाभिप्लविके[1] द्यावापृथिवीयं प्रसङ्गादिहोक्तम्।

१४. एकाहात्आहताद्दार्भवं तचन् रथं सुहृतं विद्मनापस इति। वैश्वदेवं चा नो भद्राः क्रतवो यन्तु विश्वत इति।

१५. आ रुद्रास इन्द्रवन्तः सजोषस इति मारुतमिति श्रुतेः।

१६. त्वामग्न ऋतायवः समीधिर इति जातवेदसीयमिति श्रुतेः।

१७. एवं विशिष्टमाग्निमारुतम्।

---

७.

१. होताजनिष्ट चेतन इत्येतदाज्यं चतुर्थस्याह्नः आभिप्लविकस्य भवति।

२. मेधातिथ इत्येवंसंज्ञः प्रउगो भवति। नामधेयविज्ञानमपि फलाय।

३. ये गार्त्समदे प्रउगे वायव्येन्द्रवायवे ते अत्रापि भवतः। किंयांस्तु विशेषः। तत्र गार्त्समद्यः पूर्वा मैधातिथ्य उत्तराः। तद्यथा। वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आ गह्रीत्येका शुक्रस्याद्येत्येकोभा देवा दिविस्पृशेति द्वे (१०.२.५)।

---

१ A •प्लविके C D •प्लवे।

इह तु मैधातिथ्यः पूर्वास्तोत्राः सोमास आ गहीत्येतां शस्त्वा ततो वायो ये ते सहस्रिण इति द्वे। एवमुभा देवा दिविस्पृशेति द्वे शस्त्वा ततः शुक्रस्याद्येत्येकां शंसेत्।

४. मित्रं वयं हवामह इति मैत्रावरुणः।

५. प्रातर्युजा वि बोधयेत्याश्विनम्।

६. आ त्वा वहन्तु हरय इत्यैन्द्रम्।

७. ऐभिरग्ने दुवो गिर इति वैश्वदेवस्तृचः। इति तृचानीत्यर्धर्चशार्थम्।

८. अतिदेशो ऽयं सारस्वतानां प्रउगतृचानां। ततः प्र णो देवीति चतुर्थे। उत स्या नः सरस्वती घोरेति पञ्चमे। उत नः प्रियेति षष्ठे[1]।

९. एकाहात् प्राकृतादग्निष्टोमादित्यर्थः। तत्र जनिष्ठा उग्रः सहसे तुरायेति।

१०. उग्रो जज्ञे वीर्याय स्वधावानिति निष्केवल्यम्।

११. पार्ष्ठिकस्य द्वितीयस्याह्नो द्वितीयमिति संज्ञा। तस्मात्साविचद्यावापृथिवीये इह भवतः। तद्देवस्य सवितुर्वार्यं महदिति साविचम्। ते हि द्यावापृथिवी विश्वशंभुवेति द्यावापृथिवीयम्।

१२. तृतीयसंज्ञकात् पार्ष्ठिकादार्भवं भवति। अनश्वो जातो अनभीशुरुक्थ्य इत्येतत्।

१३. अग्निरिन्द्रो वरुणो मित्रो अर्यमेति वैश्वदेवं भवति।

---

१ C in marg. एवमत्रापि।

१४. वैश्वानराय पृथुपाजसे पृचस्य वृष्णो वैश्वानराय धिषणाम्।

१५. प्र ये शुम्भन्ते जनयो न सप्तय इति मारुतम्। जनस्य गोपा अजनिष्ट जागृविरिति जातवेदसीयम्।

---

८.

१. अग्न ओजिष्ठमा भरेत्येतदाज्यं पञ्चमस्याभिप्लविकस्य भवति।

२. यत्रयत्राग्न ओजिष्ठमा भरेति शस्यते तत्रतत्रोत्तमां परिहाप्य शस्यते।

३. निर्ज्ञातनामधेयः शस्तव्यः। श्रुत्यनुकरणात्।

४. वायव्य इति वाक्यशेषः। अयं पिबा मधूनां तव वायवृतस्पते स त्वं नो देव मनसा इति।

५. ग्रतेना नो अभिष्टिभिरित्यैन्द्रवायवस्तृचः[1]।

६. इति मैत्रावरुणस्तृचः[2]।

७. आ नो गोमन्तमश्विनेत्याश्विनः।

८. अतश्चिदिन्द्र ण उपेत्यैन्द्रः।

९. विश्वे देवा इत्येवमादिर्वैश्वदेवः। इत्येतानि यथोक्तानि प्रउगतृचानि नान्यानि। भिन्नाभिर्ऋग्भिरिति क्रमसमाहरणाशङ्का मा भूत्।

१०. क स्य वीरः को अपश्यदिन्द्रमिति मरुत्वतीयं भवति।

११. एतायामोप गव्यन्त इन्द्रमिति निष्केवल्यं भवति।

---

१ C D om तृचः। २ C D om तृचः।

इह तु मैधातिथ्यः पूर्वास्तीव्राः सोमास आ गहीत्येतां ग्रस्त्वा ततो वायो ये ते सहस्रिण इति द्वे। एवमुभा देवा दिविस्पृशेति द्वे ग्रस्त्वा ततः शुक्रस्याद्येत्येकां शंसेत्।

४. मित्रं वयं हवामह इति मैत्रावरुणः।

५. प्रातर्युजा वि बोधयेत्याश्विनम्।

६. आ त्वा वहन्तु हरय इत्यैन्द्रम्।

७. ऐभिरग्ने दुवो गिर इति वैश्वदेवतृचः। इति तृचानीत्यसंदेहार्थम्।

८. अतिदेशो ऽयं सारस्वतानां प्रउगतृचानां। ततः प्र णो देवीति चतुर्थे। उत स्या नः सरस्वती घोरेति पञ्चमे। उत नः प्रियेति षष्ठे[१]।

९. एकाहात् प्राकृतादग्निष्टोमादित्यर्थः। तत्र जनिष्ठा उग्रः सहसे तुरायेति।

१०. उग्रो जज्ञे वीर्याय स्वधावानिति निष्केवल्यम्।

११. पार्ष्ठिकस्य द्वितीयस्याह्नो द्वितीयमिति संज्ञा। तस्मात्साविचद्यावापृथिवीये इह भवतः। तद्देवस्य सवितुर्वार्यं महदिति साविचम्। ते हि द्यावापृथिवी विश्वशंभुवेति द्यावापृथिवीयम्।

१२. तृतीयसंज्ञकात् पार्ष्ठिकादार्भवं भवति। अनश्वो जातो अनभीशुरुक्थ्य इत्येतत्।

१३. अग्निरिन्द्रो वरुणो मित्रो अर्यमेति वैश्वदेवं भवति।

---

१ C in marg एवमत्रापि।

१४. वैश्वानराय पृथुपाजसे पृक्षस्य वृष्णो वैश्वानराय धिषणाम्।

१५. प्र ये शुम्भन्ते जनयो न सप्तय इति मारुतम्। जनस्य गोपा अजनिष्ट जागृविरिति जातवेदसीयम्।

---

८.

१. अग्न ओजिष्ठमा भरेत्येतदाज्यं पञ्चमस्याभिप्लविकस्य भवति।

२. यत्रयत्राग्न ओजिष्ठमा भरेति शस्यते तत्रतत्रोत्तमां परिहाप्य शस्यते।

३. निर्ज्ञातनामधेयः शस्तव्यः। श्रुत्यनुकरणात्।

४. वायव्य इति वाक्यशेषः। अयं पिबा मधूनां तव वाय-ऋतस्पते स त्वं नो देव मनसा इति।

५. शतेना नो अभिष्टिभिरित्यैन्द्रवायवस्तृचः[1]।

६. इति मैत्रावरुणस्तृचः[2]।

७. आ नो गोमन्तमश्विनेत्याश्विनः।

८. अतश्चिदिन्द्र ण उपेत्यैन्द्रः।

९. विश्वे देवा इत्येवमादिर्वैश्वदेवः। इत्येतानि यथोक्तानि प्रउगतृचानि नान्यानि। भिन्नाभिर्ऋग्भिरिति क्रमसमाहरणाशङ्का मा भूत्।

१०. क ईं वीरः को अपश्यदिन्द्रमिति मरुत्वतीयं भवति।

११. एतायामोप गव्यन्त इन्द्रमिति निष्केवल्यं भवति।

---

१ C D om तृचः।　　२ C D om तृचः।

१२. तृतीयात्पार्ष्ठिकात् सावित्रद्यावापृथिवीये सूक्ते भवतः। उदु ष्य देवः सविता हिरण्ययेति सावित्रम्। घृतवती भुवनाना-मभिश्रियेति द्यावापृथिवीयम्।

१३. प्र वः स्पलक्रन्सुविताय दावन इति मारुतम्। चित्र इच्छिशोस्तरुणस्य वक्षथ इति जातवेदसीयम्। वैश्वानरीयमत्र पृक्षस्य वृष्णो अरुषस्य नू सह इति। इत्याग्निमारुतम्।

---

## ९.

१. षष्ठस्याभिप्लविकस्य सखायः सं वः संयञ्चमित्याज्यम्।

२. यत्रयत्रैतच्छ्रूयेत।

३. श्रुत्यनुकरणं प्रउगनाम।

४. इति वायवम्।

५. इत्यैन्द्रवायवः।

६. अन्यतरन्मैत्रावरुणम्।

७. पुरुप्रिया ण ऊतय इत्याश्विनम्।

८. उप नो हरिभिः सुतमित्यैन्द्रः।

९. विश्वे देवास आ गतेति वैश्वदेवं भारद्वाजं न तु गार्त्स-मदम्।

१०. एतानि तृचानि प्रउगे शंसेत्। सह सारस्वतेन यानि इह्योत्तरस्येत्येवमादतिदिष्टेन।

११. महाँ इन्द्रो नृवदा चर्षणिप्रा इति मरुत्वतीयं भवति।

१२. यो जात एव प्रथमो मनस्वानिति निष्केवल्यं भवति।

१३. द्वितीयात्पार्ष्ठिकात्त्वाविचं तद्देवस्येत्येतत्।

१४. अवुभ्रमु त्य इन्द्रवन्तो अग्नय इति वैश्वदेवं भवति।

१५. वैश्वानराय धिषणामृतावृध इति वैश्वानरीयं। यानि च्यहस्य पूर्वस्य वैश्वानरीयाणीत्येवमादिवचनात्। धारावरा मरुतो धृष्णोजस इति मारुतम्। त्वमग्ने द्युभिस्त्वमाशुशुक्षणिरिति जातवेदसीयम्। इत्याग्निमारुतम्। एतावता विकारेणाग्निमारुतं षष्ठे आभिप्लविके।

१६. इन्द्र दृह्य मघवन् त्वावदिद्भुज इति वैश्वदेवं भवति षष्ठस्याह्न आभिप्लविकस्य द्वितीये ऽभिप्लवप्रयोगे।

१७. उषासानक्ता बृहती सुपेशसेति वैश्वदेवं षष्ठे आभिप्लविके तृतीये[1] ऽभिप्लवाभ्यासे।

१८. अग्निरिन्द्रो वरुणो मित्रो अर्यमेति वैश्वदेवं षष्ठे आभिप्लविके चतुर्थे ऽभिप्लवाभ्यासे।

१९. शं न इन्द्राग्नी भवतामवोभिरित्येतद्वा वैश्वदेवं भवति षष्ठे आभिप्लविके चतुर्थे ऽभिप्लवाभ्यासे। ननु क्वायमभिप्लवाभ्यासो यत्रैतानि वैश्वदेवान्यन्वायात्यन्ते। उच्यते। पृष्ठ्यपञ्चमांश्चतुरो ऽभिप्लवानुपयन्तीति समास इति वक्ष्यति गवामयने (१३.१९.९)। तत्रैतानि वैश्वदेवान्यन्वायात्यन्त इति।

२०. अग्निरिन्द्र इति चतुर्थे शं न इन्द्राग्नी इति वेत्येतयोर्वा व्यवस्थितो विकल्पः। प्रथममग्निरिन्द्र इत्येतत्पूर्वस्मिन्पटले। माग्निपु-

---

१ C D omit वैश्वदेवं षष्ठे आभिप्लविके।

वत इत्यर्थः। द्वितीयं श्रं न इन्द्राग्नी इत्येतदुत्तरे पटले। ऊर्ध्वं विषुवत इत्यर्थः।

११. परावतो ये दिधिषन्त आप्यमिति वैश्वदेवमाभिप्लविकस्य षष्ठस्याह्नः पञ्चमे ऽभिप्लवप्रयोगे। पृष्ठ्यस्याभिप्लवःस्थाने तदभिप्लवायनमित्यत्रावकाशः (१२.१८.२०)।

---

## १०.

१. पृष्ठ्याभिप्लवयोरनन्तरं श्रुतिक्रमेणाभिजितमाह। अभिजिन्नामैकाहः। सर्वस्तोमस्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशेषु सर्वशब्दो ऽयं। उभयसामा बृहद्रथन्तरसामेत्यर्थः। प्रत्यर्चं पृष्ठं बृहद्रथन्तरं पृष्ठं वास्य भवति संस्थया चाग्निष्टोमः। पूर्वकारिणामायत्तमपि सदेतदुक्तं स्वमतप्रकाशनार्थम्।

२. प्र वो देवायाग्नय इति सूक्तं। यद्वाहिष्ठं तदग्नय इति तृचमित्येतदाज्यं भवति।

३. माधुच्छन्दसस्य गार्त्समदस्य द्वौ प्रउगौ संप्रवयेदिति।

४. शंसनक्रमो ऽयं। तथैव श्रुतिः। वायव्यां पुरोरुचं शस्त्वाथो उभे वायव्ये तृचे इत्येवमाद्याह।

५. माधुच्छन्दस एव प्रउगे सति गार्त्समदं वैश्वदेवमुपरिष्टान्माधुच्छन्दसस्य वैश्वदेवस्य पर्याहरेदित्युक्त्वाथ माधुच्छन्दसं सारस्वतमिति शस्त्रक्रमः श्रुतेः।

६. ऐकाहिकं च यथोक्तं वा। ऐकाहिकं प्रातःसवनं स्यादिति । स्थितिरिति श्रुतेः। होतुरेव प्रकरणात्।

७. माध्यन्दिने सवने ऽय विशेषः। ऐकाहिक जनिष्ठाउग्रीयं शस्त्वा ततस्तस्योर्ध्वमिन्द्र पिब तुभ्य सुतो मदायेति शंसेत्।

८ ऐकाहिकादूर्ध्वमित्यनुवर्तते।

९. बृहत्पृष्ठपक्षे ऽभिजिति। इन्द्र पिब तुभ्यमित्यस्योर्ध्वं जनिष्ठाउग्रीय। या न ऊतिरित्यस्योर्ध्वं हैरण्यस्तूपीयम्।

१० एकसूक्ते वा निष्केवल्यमरुत्वतीये भवत। तस्मिन्पक्षे पिबा सोममभि यमुग्र तर्द इति मरुत्वतीय शुद्धमेव। तथा तमु ष्टुहि यो अभिभूत्योजा इति निष्केवल्य। पूर्वस्य पिबा सोममभि यमुग्र तर्द इत्येतस्योत्तमामुत्सृजति द्विपदेति हत्वा अया वाजमिति।

११. प्राकृताद‌ग्निष्टोमात्। अथ नित्यमेवैकाहिक तृतीयसवनं स्यादिति या स्थितिरिति श्रुते।

---

## ११.

१. अभिजितो ऽनन्तर श्रुतिपाठक्रमेण स्वरसामानो ऽवसरप्राप्ता उच्यन्ते। सप्तदशस्तोमा इति स्तोमातिशंसनार्थं। स्वरसामान इति नामधेय शास्त्रव्यवहारार्थं। एव स्वरसाम्ना (१०.९.११) ते छन्दोमेषु (५) स्वरसामस्वित्येवमादौ।

२ एवमेव श्रुतत्वात्।

३. स्वरसाम्नानि पृष्ठान्येषामिति स्वरपृष्ठा कौषीतकेर्भगवतो मतेन। स्वराणि त्वेव पृष्ठानि स्युरिति ह स्माह कौषीतकिरिति (२४ ८) श्रुते।

४. त्रयाणामपि[1] स्वरसाम्नां यथानिर्दिष्टे बृहद्रथन्तरे पवमानेषु गीयेते। न पृष्ठमाने[2]। तथापि योन्यनुशंसनं यथोपदिष्टं भवति। स्वमतोपदेशार्थं वचनम्।

५. अग्निष्टोमा इति पैङ्ग्यं ब्रह्मवर्चस्विनो[3] भवन्ति ये अग्निष्टोमानुपयन्तीति श्रुतेः।

६. उक्थ्याः स्युरिति ह स्माह कौषीतकिरित्येवमादि श्रियो विराजो ऽन्नाद्यस्योपाप्त्या इति (२४.९) श्रुतत्वात्।

७. आ यज्ञैर्देव मर्त्य इति प्रथमस्य स्वरसाम्न आज्यमावद्रायन्तरं बृहद्यो हि भानव इति द्वितीयस्य बृहद्वार्हतमग्न ओजिष्ठमा भरेति तृतीयस्यावद्रायन्तरमिति (२४.५) श्रुतेः।

८. यथोक्तानामाज्यानामेकैकस्योत्तमां चोत्तमां चेत्युत्तमाः परिहाप्य शंसनं सर्वत्र।

९. माधुच्छन्दसः प्रथमस्य स्वरसाम्नः प्रउगो गार्त्समदो द्वितीयस्यौष्णिह आत्रेयस्तृतीयस्येति (२४.५) श्रुतेः।

१०. क स्य वीरः को अपश्यदिन्द्रमिति प्रथमस्य स्वरसाम्नो मरुत्वतीयं कोति कदत्कया शुभा सवयसः सनीला इति द्वितीयस्य कयेति कदत् गायत्साम नभन्यं यथा वेरिति तृतीयस्य ता कर्माषतरास्मा इति कर्मेति कद्वदिति श्रुतेः (२४.५)।

११. एकस्यैव साम्प्रगाथस्यात्यपेक्षं बहुवचनं। प्राकृतसामप्रगाथशंसनादनन्तरं वक्ष्यमाणकान् कदतः प्रगाथसंज्ञकान् प्रगाथान् शंसेत्।

१ A चयाणामपि C गायत्रा०। २ D दृष्टमाने। ३ A ०वर्चसिनो।

१२. कं नव्यो अतसीनामिति ककुभ्प्रगाथ इति प्रथमे श्रुतत्वात्। तथा कदू न्वस्याकृतमिति कद्वान् प्रगाथ इति द्वितीये श्रुतत्वात्। तथा इमा उ त्वा पुरूवसो इति प्रगाथः पावकवर्णाः कवर्णा इति कद्वानिति तृतीये स्वरसाम्नि (१४.७) श्रुतत्वात्। कद्वत्प्रगाथादनन्तरं बृहतश्च योनिं शंसेत्।

१३. यस्ते साधिष्ठो ऽवस इत्येतत्सूक्तमुत्तमामृचं परिहाप्यावीयथं विश्ववारं न उपेति च प्रथमे स्वरसाम्नि शंसेत्।

१४. गायन्ति त्वा गायत्रिणो ऽपादित उदु नश्चित्रतम इति आनुष्टुभत्रैष्टुभे[1] द्वितीये स्वरसाम्नि।

१५. इन्द्रं विश्वा अवीवृधन् सं च त्वे जग्मुर्गिर इन्द्र पूर्वीरित्यानुष्टुभत्रैष्टुभे तृतीये स्वरसाम्नि निष्केवल्यसूक्ते भवतः।

१६. यो ऽयमुक्तो विधिरित्येष बृहद्रथन्तरपृष्ठानां स्वरसाम्नां भवति नोत्तरः।

१७. यन्नायथा अपूर्व्येत्येष स्तोत्रियः स्वरपृष्ठानां। स्वरपृष्ठाः कौषीतकेरिति य उक्ताः स्वरसामानस्तेषां त्र्यणामप्यविशेषेण।

१८. द्वे अनुष्टुभौ तृतीया बृहती।

१९. वाशब्दो विकल्पार्थः। पूर्वोक्तेन सह द्वितीयस्य स्वरसाम्नो मत्स्यपायि ते मह इति वा स्तोत्रियो भवति। एतामेव प्रथमां बृहतीं तृतीयां करोति। द्वितीयतृतीये अनुष्टुभौ शस्त्वा।

२०. मत्स्वि न इत्यादिके द्वे अनुष्टुभौ। वयं घ त्वा सुतावन्त इति बृहती[2] तृतीयानुरूपस्य कार्या।

---

१ CD चानुष्टुभे। २ A om बृहती।

२१. प्रत्यस्मा इत्येवमादिके द्वे अनुष्टुभौ शस्त्वा तृतीयामुत्सृज्य ततो अस्मा अस्मा इदन्धस इति बृहतीं तृतीयां करोति। एष स्तोत्रियस्तृतीयस्य स्वरसाम्नो ऽनुरूपस्य वक्ष्यमाणो यज्जायथा इत्येवमादिना सह विकल्पो ऽर्थात्।

२२. इममिन्द्र सुतं पिबेति द्वे अनुष्टुभौ। क ईं वेद सुते सचेति बृहती तृतीयानुरूपस्य कार्या।

---

## १२.

१. आदिबृहतीको मध्यबृहतीको ऽन्तबृहतीको वा यतोबृहतीकः स्तोत्रियस्ततोबृहतीक एवानुरूपो ऽपि कर्तव्यः।

२. धाय्यानन्तरं त्रिष्वपि स्वरसामसु कद्वतो यथोक्तान् शंसेत्। ततो रथन्तरस्य योनिं प्रथमे बृहतो द्वितीये बृहद्रथन्तरयोस्तृतीये।

३. [1]यत्रयत्रोभयोपदेशस्तत्रतत्र पूर्वां रथन्तरस्य शंसेत् ततो बृहतः।

४. योन्यनुशंसनानन्तरं यमिन्द्र दधिषे त्वमिति तृचः प्रथमे स्वरसाम्नि। स्वरन्ति त्वा सुते नर इति तृचो द्वितीये स्वरसाम्नि। दाना मृगो न वारण इति तृच एव तृतीये स्वरसाम्नि। तथैव श्रुतत्वात्।

५. इन्द्र तुभ्यमित्येवमादीनां नवानामृचां प्रत्यहं तिस्रस्तिस्र ऋचः शंसेत्। पूर्वाणि च सूक्तानि। तद्यथा। यस्ते साधिष्ठ इति

१ C D insert धाय्यानन्तर त्रिष्वपि स्वरसाम (!) कद्वतः।

प्रथमे। गायन्ति त्वा गायत्रिण इति द्वितीये। इन्द्रं विश्वा इति तृतीये।

६. इन्द्र तुभ्यमित्येवमादीनि तृचानि न वा शंसेत्। कथं कुर्यात्। तृचानन्तरसुभयानि सूक्तानि शंसेत्। तद्यथा। यस्ते साधिष्ठ इत्युत्तमां परिहाप्यावापयमिति च प्रथमे। गायन्ति त्वापादित उद् नखिचतम इति द्वितीये। इन्द्रं विश्वाः सं च त्वे जग्मुरिति तृतीय इति।

७. अयमेव शंसनक्रमः स्वरयोनिषु इध्द्रथन्तरयोश्छन्दोगैः प्रापितयोः।

८. एकस्मिन्पक्षे प्रागानुष्टुभात् अपरस्मिन्पक्षे प्राक् तृचात् यदुक्तं तत्प्रगायेन सशंसति। नान्तराकृयत इत्यर्थः।

९. प्रथमात् त्र्यहात्पार्ष्ठिकाद्यथासङ्ख्यं तृतीयसवनानि इध्द्रथन्तरपृष्ठानां स्वरसाम्नां भवन्ति।

१० स्वरपृष्ठानां[1] स्वरसाम्नां पृष्ठ्यस्य षडहस्य समूल्हस्य याः पूर्वस्य त्र्यहस्य वैश्वदेवानां प्रतिपदस्ताः प्रतिपदो भवन्ति।

११. स्वरयोनीनां च[2] स्वरसाम्नामेवं प्रतिपदः।

१२. यान्युत्तरस्य त्र्यहस्य तृतीयसवनानि तानि तृतीयसवनानि सानुचराणीति (२४.९) श्रुतेः।

१३. तुशब्दो मध्यमात्र्यहादित्यस्य विशेषणार्थः। तत्र यानि वैश्वदेवानि प्रस्तान्युक्तानि तेषामुत्तमानि सूक्तान्युद्धृत्य। स्वस्ति नो मिमीतामिति च तिस्रो ऽग्ने वैश्वदेवानां करोतीति

---

1 C D om स्वरपृष्ठानां।　　2 C D om स्वरयोनीनां च।

(१०. ८. १७) यस्तृच उक्तस्तं चोद्धृत्य प्र वः पान्तं रघुमन्यवो ऽन्ध इति प्रथमे स्वरसाम्नि वैश्वदेवं करोति। तं प्रत्नथा पूर्वथा विश्वथेमथेति द्वितीये। कदित्था नॄः पात्रं देवयतामिति तृतीये। तद्यानि तत्र वैश्वदेवानि भवन्ति (२४. ९) इति प्रकृत्य श्रुतौ सर्वमाम्नातम्।

१४. वाशब्दो विकल्पार्थः। अग्निरिन्द्रो वरुणो मित्रो अर्यमेति वा[१] वैश्वदेवं प्रथमे स्वरसाम्नि भवति।

१५. प्रथम एव स्वरसामनि। यस्मिन्कल्पे ऽग्निरिन्द्रो वरुण इति वैश्वदेवं तस्मिन्नेव कल्पे प्र ये शुम्भन्ते जनयो न सप्तय इति मारुतं भवति।

१६. देवान्हुवे बृहच्छ्रवसः स्वस्तय इति द्वितीये स्वरसाम्नि वैश्वदेवं भवति।

१७. उषासानक्ता बृहती सुपेशसेति तृतीये स्वरसामनि वैश्वदेवं भवति। तद्वै खलु प्रत्यक्षं वैश्वदेवान्येवावधीयेरन्नित्येवमादि (२४. ९) प्रकृत्य कल्पान्तरं श्रुतौ सर्वमाम्नातम्।

---

## १३.

१. स्वरसाम्नामनन्तरं श्रुतिपाठक्रमेण विषुवान् वक्तव्यः। तदर्थमेकविंशस्तोममिदमहर्बृहत्पृष्ठं पक्षे[२] महादिवाकीर्त्यं वा। अग्निष्टोमो विषुवानिति शास्त्रसंव्यवहारार्थं संज्ञाकरणम्।

---

१ C D om. वा

२ C D ॰त्पृष्ठपक्षे।

२. नियमार्थमेतद्वचनं। पुरादित्यस्यास्तमयादेतदहः संस्थापयिषेयुरिति (२५. १०) श्रुतेः।

३. अस्मिन्नहनि उदित आदित्ये प्रातरनुवाकः कार्यः। सप्रातरनुवाकमेतदहर्दिवाकीर्त्यं भवति। सप्रातरनुवाकेन सपत्नीसंयाजेनैतेनाह्ना पुरादित्यस्यास्तमयात्समीप्सेयुरिति (२५. १०) श्रुतेः।

४. महारात्रे प्रातरनुवाको[1] भवति। तदु ह स्माह कौषीतकिः प्रजापतिर्वै प्रातरनुवाको न तमस एव तद्यथायथमेव तमुपाकुर्यादिति (२५. १०) श्रुतेः।

५. यस्मिन्पक्षे उदिते प्रातरनुवाकस्तस्मिन्पक्षे अग्निं मन्ये ऽपि पितरमग्निमापिमित्येका प्रतिपद्भवति।

६. अस्मिन्नहनि प्रातरनुवाकस्य नियमत इमे सङ्ख्याविकल्पाः। शतं द्विशतं विंशतिशतं वेति। अनुब्रूयादिति प्रत्येकमभिसंबध्यते। वाशब्दस्य।

७. वसिष्ठेन दृष्टं वासिष्ठं। जुपस्य न इत्येतदाश्रौसूक्तं भवति।

८. सूर्यदैवत्यः पशुः सवनीयस्य पशोरुपालम्भ्यो न प्रधान. उपशब्दात्।

९. चित्रं देवानामुदगादनीकमिति तिस्रो वपायाः पुरोलाशस्य पशोः पुरोनुवाक्या भवन्ति। तिस्र उत्तरा याज्या अनेनैव क्रमेण। सौर्ययेति वचनाच्चेतरस्य सावनस्य।

१०. सौर्यस्य पशोरुपांशु प्रचरणं भवति। तथा च श्रुतिः।

---

१ A महारात्रे C D ०त्र।

ते वा एते चत्वार एव पञ्चव उपांशु भवन्ति। सौर्यः सावित्रः प्राजापत्यो वाग्देवत्य (२५.१०) इति।

११. समुद्रादूर्मिर्मधुमाँ उदारदित्याज्यसूक्तं भवति।

१२. वच्यमाणकः।

१३. प्रथमे वायव्यैन्द्रवायवे उत्तमं सारस्वतमिति मध्यमाच्छन्दोमात्। तथा चैव श्रुतिः। कुविदङ्ग नमसा ये वृधास इति वायव्यमत एवोत्तरं तृचमैन्द्रवायवमुत स्या नः सरस्वती जुषाणेति सारस्वतमिति।

१४. प्रथमाच्छन्दोमात्त्रीणि तृचानि भवन्ति। मैत्रावरुणमाश्विनमैन्द्रं। तथा चैव श्रुतं। उदां चचुर्वरुण सुप्रतीकमिति मैत्रावरुणम्। आ गोमता नासत्या रथेनेत्याश्विनम्। आ नो देव शवसा याहि शुष्मिन्नित्यैन्द्रमिति।

१५. आश्विने त्वयं विशेषः। क्रमप्राप्तां तृतीयामुत्सृज्य विधेदुच्छन्त्यश्विना उषास इति भानुशब्दवती तृतीया कर्तव्या। तस्योर्ध्वं भानुं सविता देवो अश्रेदिति भानुमती तृतीयेति (२५.२) श्रुतेः।

१६. प्र मन्नोतु सदनादृतस्येति वैश्वदेवमिति (२५.२) श्रुतेः।

१७. वाशब्दो विकल्पार्थः। अस्मिन्नहन्यैकाहिकं[१] प्रातःसवनं भवति पूर्वोक्तं वा। तदाऊर्ने त्रैष्टुभं प्रातःसवन स्यान्मोहयति कृत्स्नच्छन्दसो यज्ञमुखमैकाहिकमेव स्यादिति (२५.३) श्रुतेः।

१८. तस्य[२] प्र वो देवायाग्नये त्वं हि चेतवद्यश इत्येते उभे तदाज्यमिति (२५.२) श्रुतेः। तच्छब्दादयमिष्टतरः पचः।

---

१ C adds वा।   २ A om तस्य।

१९. तस्मिन्कल्पे माधुच्छन्दसस्य प्रउगो भवति। माधुच्छन्दसे[1] वेति सारस्वतस्य विकल्पः। एवमेतत्पञ्चत्र्ययुक्तं प्रातःसवनमुक्तम्।

२०. कया शुभा सवयसः सनीळा इति मरुत्वतीयम्। त्यं सु मेषं महया स्वर्विदमिति जागतमिति श्रुतेः। जनिष्ठा उग्रः सहसे तुरायेत्येतस्मिंस्त्रिष्टुभे निविदं दधातीति श्रुतेः। ता वा उभय्यस्त्रिष्टुब्जगत्यः शस्यन्त इति (२५.३) च श्रुतत्वात्।

२१. आयन्त इव सूर्यमित्येष स्तोत्रियो भवति। वक्ष्यति एकाहतं निष्केवल्यमिति। तच्च तावदयमस्त्रयोनौ इहति गीयमाने आयन्तीयः स्तोत्रियो भवति। न चेत्स्त्रयोनौ आयन्त इव सूर्यमिति सूर्यवान् स्तोत्रिय इति (२५. ६) श्रुतेः।

२२. यद् द्याव इन्द्र ते शतमित्यनुरूप इति श्रुतेः।

२३. अस्त्रयोनौ इहति[2] महादिवाकीर्त्यं वा वक्ष्यमाणकं पृष्ठं भवति[3]।

२४. चित्रं देवानामुदगादनीकमिति स्तोत्रियो महादिवाकीर्त्यस्य पृष्ठस्य।

२५. चित्रं देवानामित्यस्य तृचस्य ये उत्तरे ऋचौ[4] तत्सूर्यस्येत्येवमादिके ते चानुरूपार्थत्वेन शस्येते।

२६. उत्सूर्यो बृहदर्चींष्यश्रेदित्येषा तृतीयानुरूपस्य कर्तव्या।

२७. बण्महाँ असि सूर्येति स्तोत्रियः। उदु त्यद्दर्शतं वपुरित्यनुरूप इत्येतौ महादिवाकीर्त्यस्य स्तोत्रियानुरूपौ प्रगाथौ वा भवतः।

---

१ C sec h. ॰ घो।  २ C D बृहत्; sec h. बा इ॰।
३ C D om. पृष्ठ भवति।  ४ C D om. ऋचौ।

२८. विभ्राड् बृहत्पिबतु सोम्यं मध्विति स्तोत्रियस्तृचः। वि सूर्यो मध्ये अमुचद्रथं दिव इत्यनुरूपः। एतौ वा स्तोत्रियानुरूपौ महादिवाकीर्त्यस्य पक्षे भवतः।

२९. विश्वाहा त्वा सुमनसः सुचक्षस इत्यनुरूपो वि सूर्यो मध्य इत्यनेन सह विकल्पते।

३०. अस्तयोनौ बृहति महादिवाकीर्त्यपक्षे बण्महाँ असि सूर्येति सामप्रगाथो भवति।

३१. सामप्रगाथः पूर्वेण सह विकल्पते।

३२. स्तयोनिपक्षे बृहतः स्तोत्रियानुरूपौ शस्त्वा सामप्रगाथं च बार्हतं ततो रथन्तरस्य योनिं शंसेत्। बृहत आतानं शस्त्वा रथन्तरस्य योनिं शंसतीति (२५. ५) श्रुतेः।

३३. अस्तयोनिबृहत्पृष्ठपक्षे[1] सामप्रगाथादनन्तरमुभयोर्बृहद्रथन्तरयोर्योनी शंसेत्[2]। अथ बृहद्रथन्तरयोर्योनी शंसतीति श्रुतेः।

३४. महादिवाकीर्त्यं पृष्ठं चेत् सामप्रगाथानन्तरं बृहद्रथन्तरयोर्द्वयोरपि साम्नोर्योनिं स्वीयांस्वीयां होता शंसेत् महादिवाकीर्त्यपृष्ठपक्षं प्रस्तुत्यापि। अथ बृहद्रथन्तरयोर्योनिं शंसतीति श्रुतेः। तस्य च महादिवाकीर्त्यस्य[3] त्रयः पक्षाः। तद्धैके त्रिष्टुप्सु कुर्वन्ति तथा बृहतीषु स्यादिति हैक आहुः तथा जगतीषु स्यादिति त्वेव स्थितमिति पक्षत्रयं (२५. ४) श्रुतेः।

---

१ C D om बृहत्पृष्ठ। २ C D om. the text from अथ to Sutra 34 शंसतीति श्रुतेः C in marg महादिवाकीर्त्यं च। त्रिष्वप्यस्तयोनौ बृहद्रथन्तरयोर्योनी . शंस। ३ महादिवाकीर्त्यस्य om C D.

१४.

१. यद्येते बृहद्रथन्तरे माध्यन्दिने पवमाने सामगाः कुर्युः ततो योन्यनुशंसनम्।

२. अयमप्युद्धृतबृहद्रथन्तरपक्षः। एवमेते षट् पक्षाः। अस्व-योनिपक्ष एकः। महादिवाकीर्त्यपक्षास्त्रयः। स्वयोनिपक्ष एकः। उद्धृतबृहद्रथन्तरपक्ष एकः। एते सूत्रकारेण सूचिताः। छन्दोग-वशात्तु बहवो ऽन्ये ऽपि संभाव्यन्ते। तद्द्युक्तमेव[1] स्तोत्रिये छन्दो-गमित्यादि।

३. इन्द्रः किल श्रुत्या अस्य वेदेत्युक्थमुखीया। त्रिषु कल्पेषु स्वयोनौ अस्वयोनौ उद्धृतबृहद्रथन्तरे च।

४. शं नो भव चक्षसा शं नो अह्नेति महादिवाकीर्त्यपक्षे इयमुक्थमुखीया।

५. यौर्न य इन्द्राभि भूम्यार्य इति चयोदशकं सूक्तं त्रैष्टुभं स्वयोनौ इहति सति।

६. य एक इद्धव्यश्चर्षणीनामित्यस्वयोनिपक्षे एकादशर्चं त्रैष्टुभं सूक्तम्।

७. य एक इद्धव्य इत्येतदेव सूक्तं भवति।

८. तमु ष्टुहि यो अभिभूत्योजा इत्येतत्सूक्तं त्रैष्टुभं पञ्चदशक-मुद्धृतबृहद्रथन्तरपक्षे शंसेत्।

९. त्रैष्टुभादनन्तरमभि त्यं मेषं पुरुहूतमृग्मियमित्येतज्जागतं सूक्तं पञ्चदशर्चं शंसेत्।

१ C ०वाक्ते०।

१०. ऋतुर्जनित्री तस्या अपसरीत्येतस्य चयोदशर्चस्य नव शस्त्वा सर्वेश्वरेर्वा प्र ते मह्ने विदथे शंसिषं हरी इत्येतस्य चयोदशर्चस्यैव पूर्वेण सह विकल्पितस्य नवैव शस्त्वा ततो निविदं शंसेत्।

११. आ सत्यो यातु मघवाँ ऋजीषीत्येकविंशतिमृचो निविद्धानानन्तरं शंसेत्।

१२. विश्वजिते धनजिते स्वर्जित इत्येतस्य षड्चस्य सूक्तस्योत्तमां परिहाप्य पञ्च शस्त्वा ततः।

१३. विश्वजित इत्यस्य पञ्चर्चस्यानन्तरमाहूय दूरोहणं रोहति। शंसनप्रकारमेवंसंज्ञकं करोति। तस्य स्वरूपमाह।

१४. हंसः शुचिषदसुरन्तरिक्षसदित्येतामृचं सप्त वाराञ्छंसेत् पच्छो ऽर्धर्चशस्त्रिपच्छो ऽनवानं त्रिपच्छो ऽर्धर्चशः पच्छ इति। अस्या दूरोहणसंज्ञा शास्त्रसंव्यवहारार्था।

१५. विश्वजित इत्यस्य या उत्तमा शिष्टा[1] तां दूरोहणानन्तरं शंसेत्।

१६. एष स पूर्वैरेव तस्य चक्षिष इति जागतं षळृचमिति (२५.७) श्रुतत्वात्।

१७. पतङ्गमक्तमसुरस्य माययेति तिस्र इति श्रुतेः।

१८. उरुं नो लोकमनु नेषि विद्वानिति त्रिःशस्तया परिधानीयेत्यादि (२५.८) श्रुतेः।

१९. इति यदेतदुक्तं पूर्वोक्तया रचनया निष्केवल्यमेतत्पैङ्ग्यं मतमिति पैङ्गी संपदिति (२५.७) श्रुतेः। संपदुपेतं च श्रुत्युक्तम्।

---

१ C D शिष्टं।

२०. अथशब्दो विशेषार्थः। अविशेषो ऽपि विधीयते। '

२१. स्तोत्रियप्रभृति सर्वेषु पक्षेषु पूर्वोक्तेन तुल्यमोक्थमुखीयायाः।

२२. य उद्धृतरथन्तरपक्षस्तस्मिन् चतुर्जनित्रीयं चयोदशर्चं शंसेत्।

२३. चतुर्जनित्रीयस्यैव एकादश शंसेत्। स्वयोनौ द्वहयच।

२४. चतुर्जनित्रीयस्य नव शंसेत्। अन्यच पूर्वोक्ताभ्याम्।

२५. सर्वेण तृष्टं साम्यं। अभि त्वं मेषमित्येतदुद्धृत्येन्द्र याहि हरिभिरिति पञ्चदश शंसेत्।

२६. प्र ते महे विदथे ऋषिर्नामा सूक्तं। ऋषिर्बलः। तस्यैकादशं[1] शस्त्वा निविदं दध्यात्।

२७. अभूरेको रयिपते रयीणामिति त्रैष्टुभं पञ्चर्चमेष प्र पूर्वीरित्येतस्य साम्यस्य स्थाने।

२८. त्यमू षु वाजिनं देवजूतमिति तार्क्ष्यः। पतङ्गमक्तमसुरस्य मायचेत्येतस्मात्पूर्वः शस्यः।

२९. एकाधिकं शतं निष्केवल्यं पैङ्गमतेन कौषीतकिमतेन च श्रुतिरेव सूचीकृता।

३०. प्रथमादह्नः पार्ष्ठिकात्सावित्रं। युञ्जते मन उतेत्येतत्।

३१. द्वितीयात्पार्ष्ठिकाद्यावापृथिवीयं भवति। ते हि द्यावापृथिवी इत्येतत्।

---

१ A मध्य इत्येतस्य मध्यस्तत्स्थे०।

३२. पश्चात्पार्श्चिकादार्भवमारुते भवतः। किमु श्रेष्ठ इत्यार्भवं प्रयज्यव इति मारुतम्।

३३. देवान् ह्ववे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं भवति।

३४. तृतीयात्पार्श्चिकाद्वैश्वानरीयं याज्यं। वैश्वानराय धिषणामृतावृध इत्येतत्।

३५. .मूर्धानं । दिवो अरतिं पृथिव्या इत्यग्निष्टोमसाम्नः स्तोत्रियः। मूर्धा दिवो नाभिरग्निः पृथिव्या इत्यनुरूपः।

३६. वेदिषदे प्रियधामाय सुद्युत इति जातवेदसीयं भवति।

३७. गवामयनप्रयोगे विषुवतो ऽनन्तरमावृत्ताः स्वरसामानः कार्याः। यस्तृतीयः स प्रथमो यो द्वितीयः स मध्यमो यः प्रथमः स तृतीय इत्येवमावृत्ताः। अथ त्रीन् स्वरसाम्न आवृत्तानुपयन्तीति (२५.१०) श्रुतेः।

---

## १५.

१. विश्वजित्संज्ञक एकाहः। सर्वस्तोमस्त्रिवृदादिभिस्त्रयस्त्रिंशान्तैः स्तोमैर्युक्तः। सर्वपृष्ठो रथन्तरादिभिः पृष्ठैः रैवतान्तैर्युक्तः। बृहत्पृष्ठो वा विकल्पेन। अग्निष्टोमः। त्रयोदशं वा एतं मासमाप्नुवन्ति यद्विश्वजितमुपयन्तीति प्रक्रम्य (२५.११) श्रुतौ सर्वमाम्नातम्।

२. तस्याग्निं नरो दीधितिभिररण्योरिति वैराजमाज्यमिति श्रुतेः।

३. त्वं हि चैतवद्यश इत्येतदाज्यं भवति। बृहत्पृष्ठस्य विश्व-

जितः। अग्निं नर इत्येतत्स्वर्वयोगविहितं[1] परोक्षपृष्ठादिषु भवति। बृहद्रथन्तरपृष्ठस्य यदि बृहत्प्रत्यक्षं ततस्त्वं हि चैतवदित्येतदाज्यम्।

४. सह सारस्वतेन भवति। सूत्रारम्भात्।

५. चतुर्विंशादह्नो मध्यन्दिनो भवति। मध्यन्दिनशब्देन निष्केवल्यमरुत्वतीये उच्येते।

६. वैराजस्य साम्नो यौ स्तोत्रियानुरूपौ सन्यूङ्खावुक्तौ तौ तथैव शस्त्वा सर्वपृष्ठे विश्वजिति नेतरस्मिन् तनूपृष्ठे ब्राह्मणाच्छंसिनो ऽपि स्तोत्रियत्वविशेषात्[2]। सन्यूङ्खवैराजयोनिगतस्य वैराजस्य[3] न्यूङ्खो भवति। स्तोत्रिय एव न्यूङ्खस्योपदेशात्। तत्तत्स्थाने तु भवत्येव। न हि वैराजं तत्स्थानमन्यूङ्खनायेति (२५. ११) श्रुतेः। प्रगाथं चाग्निष्टोमपक्षे ऽपि नियमतः शंसेत्। तनूपृष्ठे ऽपि तथा रथन्तरस्य योनिं बृहतश्च।

७. अनुचरादारभ्य षष्ठात्पार्ष्ठिकादैथूल्हिकात्सामूल्हिकाद्वा तृतीयसवनं भवति।

८. कया देवानां कतमस्य यामनीति वैश्वदेवं भवति। सात्त्विकस्य विश्वजितो बृहत्पृष्ठस्य। उभयपृष्ठे ऽपि बृहति प्रत्यक्षे। तृचस्तु न निवर्तते षष्ठाह्निकः[4]।

९. आ नो भद्रीयं वैश्वदेवमेकाहस्य विश्वजितः।

१०. सर्वपृष्ठे विश्वजिति यो विशेषः स उच्यते। पुरस्तान्मारुतस्य सूक्तस्य होता प्र वो महे मतय इत्येवमादिकमेवयामरुतं

१ A इत्येनत्तु स्व॰ C is not quite legible, but it seems to agree by alt (स्वर्व) with A. २ A त्वाविशेषात्। ३ A om. वैराजस्य। ४ C (orig) D षष्ठाह्नः।

३२. पश्चात्पार्ष्टिकादार्भवमारुते भवतः। किमु श्रेष्ठ इत्यार्भवं प्रयज्यव इति मारुतम्।

३३. देवान् हुवे बृहच्छ्रवसः स्वस्तय इति वैश्वदेवं भवति।

३४. तृतीयात्पार्ष्टिकाद्वैश्वानरीयं ग्राह्यं। वैश्वानराय धिषणामृतावृध इत्येतत्।

३५. मूर्धानं दिवो अरतिं पृथिव्या इत्यग्निष्टोमसाम्नः स्तोत्रियः। मूर्धा दिवो नाभिरग्निः पृथिव्या इत्यनुरूपः।

३६. वेदिषदे प्रियधामाय सुद्युत इति जातवेदसीयं भवति।

३७. गवामयनप्रयोगे विषुवतो ऽनन्तरमावृत्ताः स्वरसामानः कार्याः। यस्तृतीयः स प्रथमो यो द्वितीयः स मध्यमो यः प्रथमः स तृतीय इत्येवमावृत्ताः। अथ चीन् स्वरसाम्न आवृत्तानुपयन्तीति (२५.१०) श्रुतेः।

---

## १५.

१. विश्वजित्संज्ञक एकाहः। सर्वस्तोमस्त्रिवृदादिभिस्त्रयस्त्रिंशान्तैः स्तोमैर्युक्तः। सर्वपृष्ठो रथन्तरादिभिः पृष्ठैः रैवतान्तैर्युक्तः। बृहत्पृष्ठो वा विकल्पेन। अग्निष्टोमः। त्रयोदशं वा एतं मासमाप्नुवन्ति यद्विश्वजितमुपयन्तीति प्रक्रम्य (२५.११) श्रुतौ सर्वमाम्नातम्।

२. तस्याग्निं नरो दीधितिभिररण्योरिति वैराजमाज्यमिति श्रुतेः।

३. त्वं हि चैतवद्यश इत्येतदाज्यं भवति। बृहत्पृष्ठस्य विश्व-

जितः। अग्निं नर इत्येतत्त्वसंयोगविहितं[1] परोक्षष्टष्ठ्यादिषु भवति। इष्टद्रथन्तरपृष्ठस्य यदि इहत्प्रत्यचं ततस्त्वं हि चेतवदित्येतदाज्यम्।

४. यह सारस्वतेन भवति। सूत्रारम्भात्।

५. चतुर्विंशादह्नो माध्यन्दिनो भवति। माध्यन्दिनशब्देन निष्केवल्यमरुत्वतीये उच्येते।

६. वैराजस्य साम्नो यौ स्तोत्रियानुरूपौ न्यूङ्खावुक्तौ तौ तथैव शस्त्रा सर्वपृष्ठे विश्वजिति नेतरस्मिन् तनूपृष्ठे ब्राह्मणाच्छंसिनो ऽपि स्तोत्रियत्वविशेषात्[2]। न्यूङ्खवैराजयोनिगतस्य वैराजस्य[3] न्यूङ्खो भवति। स्तोत्रिय एव न्यूङ्खस्योपदेशात्। तत्तत्स्थाने तु भवत्येव। न हि वैराजं तत्स्थानमन्यूङ्खनायेति (२५. ११) श्रुतेः। अगार्यं चाग्निष्टोमपक्षे ऽपि नियमतः शंसेत्। तनूपृष्ठे ऽपि तथा रथन्तरस्य योनिं बृहतश्च।

७. अनुचरादारभ्य षष्ठात्पार्ष्ठिकादैयूल्हिकात्सामूल्हिकाद्वा तृतीयसवनं भवति।

८. कया देवानां कतमस्य यामनीति वैश्वदेवं भवति। सात्त्विकस्य विश्वजितो बृहत्पृष्ठस्य। उभयपृष्ठे ऽपि बृहति प्रत्यक्षे। तृचस्तु न निवर्तते षष्ठाह्निकः[4]।

९. आ नो भद्रीयं वैश्वदेवमेकाहस्य विश्वजितः।

१०. सर्वपृष्ठे विश्वजिति यो विशेषः स उच्यते। पुरस्तान्मारुतस्य सूक्तस्य होता प्र वो महे मतय इत्येवमादिकमेवयामरुतं

---

१ A इत्येतत्तु स्व० C is not quite legible, but it seems to agree by alit (त्वस्व) with A. २ A स्तोत्रियविशेषात्। ३ A om. वैराजस्य। ४ C (orig) D षष्ठाह्न०।

शंसति। तत्तत्पृष्ठे ऽप्ययं धर्मो[१] विश्वजिति सर्वपृष्ठस्याविशेषत्वात्[२]। ननूष्ठपरोक्षपृष्ठे अच्छावाकस्य शिल्पत्वात्। विश्वजितीत्यतिरेको न[३] ऐकाहिकमाध्निकाहीनिकार्थत्वादित्यशिल्पग्रहणस्य[४]। मारुतस्य सूक्तस्येति सूक्तग्रहणात् आहावोत्तरकालमेवयामरुतं। तत्राग्निमारुते रौद्रीं शस्त्वा होतैवयामरुतं पङ्क्तिशंसं शंसतीति (२५. १३) श्रुतेः।

११. जगतीशंसं पच्छः शस्यमित्यर्थः। अतिजागतत्वाच्च स्यात्। अन्यूङ्खमिति न्यूङ्खस्य प्रतिषेधान्नित्यो ऽस्य न न्यूङ्ख इत्येतत् ज्ञापयति।

१२. पङ्क्तिशंसं वा शंसेत्। सह न्यूङ्खेन।

१३. पङ्क्तिशंसमेव।

१४. त्वमग्ने यज्ञानां होतेति क्रमेण द्वौ तृचावग्निष्टोमसाम्नः स्तोत्रियानुरूपौ भवतः। द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचार-

इति शाङ्खायनसूत्रभाष्ये एकादशो ऽध्यायः समाप्तः।

---

शाङ्खायनसूत्रस्य सम्यं शिष्यहितेच्छया।
वरदत्तसुतो भाष्यमानर्तीयो ऽकरोत्रवम्॥

---

१ C D om धर्मो।
२ C D •रकाना।
३ C D om न।
४ D om स्य।

४. आ याहि सुषुमा हि ते। इन्द्रमिद्गाथिनो बृहत्। इन्द्रेण सं हि दृक्षसे। इन्द्रो दधीचो अस्थभिः। उत्तिष्ठन्नोजसा सह। भिन्धि विश्वा अप द्विषः। प्र सम्राजं चर्षणीनां। तमिन्द्रं वाजयामसि। महाँ इन्द्रो य ओजसा। युञ्जन्ति ब्रध्नमरुषमिति ब्राह्मणाच्छंसिनः स्तोत्रिया दशरात्रे यथासंख्येन।

५. प्रातःसवने स्तोत्रिया अच्छावाकस्य दशानामह्नां। तमीळिष्व यो अर्चिषा ता हि शश्वन्त ईळत इत्येतयोर्विकल्पो दशमेऽहनि॥

---

## २.

१. द्विरात्रप्रभृतिषु द्वादशाहविकारेषु अद्वादशाहविकारेषु च। पृष्ठ्यस्य पञ्चमं चतुर्थमहः इत्येवमादिषु अहःसंघातेषु सत्राहीनादिषु अनुरूपाः शोभाविसृत्यै ऽहनि ये स्तोत्रियास्ते भवन्ति। यदि पुनः समानस्तोत्रियं श्वस्तनमहस्ततः[१] परस्मिन्नहनि ये स्तोत्रियास्ते ऽनुरूपाः कर्तव्याः। अपिशब्दात्परतरे ऽप्यहनि।

२. परे ऽहन्यसमानस्तोत्रिये।

३. नित्यानवश्यंभाविनो ये ऽन्येष्वपि स्तोमेषु न ह्रसन्ति[२] ताननन्याच्छस्त्राणां पर्यासा इत्येवमाचक्षते याज्ञिकाः। संज्ञाकरणं शास्त्रसंव्यवहारार्थं[३]। स्तोत्रियानुरूपौ च नित्यौ। छन्दोगानुविधानात्। ततः[४] स्तोत्रियानुरूपपर्यासानां नास्ति ह्रासः।

---

१ C ह'चमादिषु तत' प॰, over the line थरे (?) D वर्यादिषु म तत.।
२ M ते भवन्ति। ३ M om शास्त्र। ४ C D M om तत'।

४. प्रति वां सूर उदिते मित्रं गृणीष इत्येवमादिकस्तृचः पर्यासो मैत्रावरुणस्य भवति ।

५. यदा प्रति वां सूर उदिते इत्ययं तृचः स्तोत्रियत्वे वा विनियुक्तो ऽनुरूपत्वे वा तदा काव्येभिरदाभ्येत्ययं तृचः पर्यासो भवति ।

६. विद्यमाने अस्तनस्तोत्रिये काव्येभिरदाभ्येति वा पर्यासो भवति ।

७. उच्छेदभि श्रुतामघमित्ययं तृचः पर्यासो भवति ब्राह्मणाच्छंसिनः । यद्यपि विषुवति छन्दोगाः स्तोत्रियमेतं कुर्वन्ति तथाप्ययमेव पर्यासो भवति ।

८. इन्द्राग्नी अवसा गतमित्येष तृचो ऽच्छावाकस्य पर्यासः ।

९. अन्तरेणानुरूपं पर्यासं च वक्ष्यमाणं आवापस्थानं भवति । आवाप इति वक्तव्ये स्थानग्रहणं सर्वेण शस्त्रेण स्तोममतिशंसेत् ।

१० एकयर्चा द्वाभ्यां वा यथासंख्याविशिष्टं स्तोमं त्रिवृदादिकमतिशंसन्ति होत्रकाः । न स स्तोमो देवान् गच्छति यो नातिशस्यत इति श्रुतेः । [१]अदृष्टत्वान्मैत्रावरुणस्तोमातिरेकः वाचस्तोमे ऽप्येवमेव[२] ।

११. भूयसा शस्त्रेन त्रिवृति स्तोमातिशंसनं । ननु स्तोत्रियानुरूपपर्यासानां नित्यत्वादर्थसिद्धमेतत् । सत्यम् । त्रिवृतो ऽल्पतराः स्तोमास्त्रिवृद्विकाराः । कुतो ह्यन्यं स्तोममाहरिष्यन्तीति श्रुतिवचनात् । त्रिवृत्येवायं धर्मो नान्येषु त्रिवृद्विकारेषु सूत्रारम्भात् ।

---

१ A यत्र दृ० । २ C (orig.) D, यदृष्टत्वात् C (sec h ) adds इव । M यदृष्टत्वाद्वरुणस्तोम० ।

१२. वच्यति विश्वजिति सर्वपृष्ठे महानाम्नीनां मैत्रावरुण इत्येवमादि। तस्मिन्विश्वजिति सर्वपृष्ठे भूयसा स्तोममतिशंसन्ति। तच शस्त्रस्य विहितत्वात्तूचारम्भो नियमार्थः।

१३. एकया[1] स्तोमातिशंसनं होत्रकाणां दशमे ऽहनि। अन्यत्र चिरहत्रराचादयं नियमः।

१४. युवं दचं धृतव्रता। आ नो वर्ही रिशादसः। यं रचन्ति प्रचेतसः। कया राधाम सखायः। ऋजुनीती नो वरुणः। मा कस्याद्भुतक्रतू मित्रो नो अत्यंहतिं। महि वो महतामवः[2]। सोमस्य मित्रावरुणा। ते नः सन्तु युजः सदा। प्र यो वां मित्रावरुणा। महि चीणामवो ऽस्तु। एता एकपातिन्यः। सूक्तादिप्रदिष्टत्वात् सूक्तनिवृत्त्यर्थमेकपातिनीग्रहणम्।

१५. कार्येभिरदाभ्येत्ययं तृचः। आ नो गन्तं रिशादसेत्ययं तृचः। एवमेतौ तृचौ।

१६. यथा नो मित्रावरुणा यजा नो मित्रावरुणेत्येते वर्जयित्वा। सप्तचत्वारिंशन्मित्रावरुणदेवत्यो गायत्र्यो दाशतयीषु सर्वास्वेव बह्वृचशाखासु। दाशतयीग्रहणं काव्ययोराजानेष्वेवमादिनिवृत्त्यर्थं। सङ्ख्याग्रहणं सूत्रपाठक्रमार्थं। तेन स्तोमातिशंसने स्तोत्रियानुरूपान्यथाक्रमं प्रक्षिप्यैकपातिनीस्ततस्तृचौ। तासां मैत्रावरुण इति तासां मध्ये याश्छन्दोरूपयुक्ता अङ्गो रूपसंपन्ना मैत्रावरुणस्ता आवपेत् मैत्रावरुणः स्वेषु शस्त्रेषु।

---

१ C (orig.) D एकयर्चा। २ M ०वो प्रथम।

१७. दाशतयीष्विति वर्तते[1]। स्तोमातिशंसनाधिकार एव। सर्वास्वपि दाशतयीषु निपुणमन्विष्यमाणानि चतुश्चत्वारिंशदैन्द्राणि गायत्राणि। तेषां यथोपयोगं यथाछन्दो ऽनुरूपं स्तोमातिशंसनार्थमावापस्थाने शंसेत्। अत्र चाग्निस्वामिना तत्प्रख्यापनाय श्लोकाः कृतास्त उच्यन्ते।

सङ्ख्यामेषां प्रवक्ष्यामि वेदाम्नायक्रमेण तु[2]।
इन्द्रा याहीति तिस्रः स्युः सूक्ते च द्वे सुरूपेति ॥१॥
युञ्जन्तीति त्वचो ज्ञेयः सूक्तानि चीण्ययेन्द्रमित्।
सूक्तमा त्वा वहन्तु स्यादा व इन्द्रं त्रिपञ्चकम् ॥२॥
त्वच इन्द्रो दधीचः स्यादिन्द्रो अङ्ग महत्तृचः।
वार्त्रहत्याय इमकमिन्द्र त्वा चीणि सूक्तानि ॥३॥
इदं ह्यन्वोजसा तिस्रो धानावन्तस्ततस्तु।
चीणि स्तुर्नकिरिन्द्रेति तेभ्यः पञ्चचमुद्धरेत् ॥४॥
वामं वाममयैतद्दैत्कनीनकेव वक्रचम्।
अपोषा इति चोपश्ये द्वे निरुक्ते यतः प्रोक्ते ॥५॥
य आनयत्परा त्रिंशन्न[3] व इन्द्राय मादनम्।
इदं वसो सुतं सूक्तं द्वे अन्ये अत उद्धरेत् ॥६॥
एका च स्वादवः सोमा महाँ इन्द्र इति सूक्तम्।
त्वचं विनान्त्यं यदिन्द्राहं प्र सम्राजं ततः सूक्ते ॥७॥

---

१ M om. दाशतयीष्विति वर्तते।

२ I am not able to account for all the readings in these partly obscure verses.　　३ C D य आनयत्परा॰।

आ याहि सुषुमान्याभ्यां[1] प्र कृतान्यथ सूक्ते द्वे।
घतस्रस्त्वावतः पुरु उक्ता मन्दन्तु सूक्ते द्वे ॥८॥
अभि प्र गोपतिं दृच उत्तिष्ठन्नोजसा तिस्रः।
अतः पञ्च नवर्चानि।
जज्ञानः पुरोलाशं स्यात्तद्यन्यं बला तु नः ॥९॥
आ प्र द्रवेत्यन्तिमैषां पुरुहूतं पुरुष्टुतम्।
द्वाविंशत्सूक्तमुद्दिष्टा जनं लेष पञ्चकम् ॥१०॥
ईङ्खयन्तीर्भवेत्सूक्तं स्यात्त्वं त्यमिटतस्तथा।
आ यदिन्द्रश्च दद्वहे न हि षस्तव नो मम ॥११॥
षड्ज्ञानाच्छिन्नभेदाच्च दृचौ त्याज्यौ मतौ मम।
इयमु ते चतुर्ऋचं सूक्तं गण्यतामिदम् ॥१२॥
यस्य ते स्वादु च दृचमिति स्यात्कस्य चिन्मतिः।
तामघे अनु हि द्वे द्वे यत्प्रगाथोत्तरे ततः ॥१३॥
पान्तमित्युत्तरे तस्य गण्ये गायत्री चान्त्ये द्वे।
*गायत्रीवचने कार्ये प्रतिषिद्धो यतो ऽध्यासः ॥१४॥*
तिस्रो मरुत्वतीयास्तु मरुत्वन्तं हवामहे।
न गण्या मिश्रदेवत्या न वा येमं नु मायिनं ॥१५॥
पश्चाद्देहेति मारुत्य ऐन्द्रमध्यात्तदुद्धृता।
कियन्ते रात्रिपर्याया इति स्याद्वचनं तु तत् ॥१६॥
[2]अन्तध्वनिं त्यजेत्तस्मादितो वा शातिमित्येका।

१ C D सुषुमेनाभ्यां D प्राक्कृतान्याथसूक्ते द्वे M सुष्टुवेनाभ्यां प्राक्कृतान्याधाये।
२ D अत०।

इन्द्र सोमं पिबाथ सा पिशङ्ग ब्राह्मणानि तु ॥१७॥
इन्द्र[1] विश्वानि गव्येषु विश्वामित्रो अध श्रियम्।
दश श्यावास्त्वमिंद्रं वं नह्यंती[2] याथ चैव च ॥१८॥
वह्व ऊरुभ्य उदगिति चैका चैकपातिन्यः।
तद्वधान्य[3] इति चैषा[4] मरुत्वत्येकपातिनी ॥१९॥
तं त्वा मरुत्वती परीतीयमपि स्यात्पतिर्नु[5] तत्।
वात्याविशेषणमिदं तदानींद्रीवन्योच्यते ॥२०॥
यो यशातीति चोत्तमं तु तुविशुभ्र न यस्य ते।
स्यादियमु ते तथा चाभिष्टये सदा ॥२१॥
देवा[6] एते च संत्याज्याः सूक्तानां चोदना यतः।
जागतेषु हि सूक्तेषु क्रियन्ते ऽनुष्टुभो यतः ॥२२॥
गायत्रमध्ये यानुष्टुप्तस्मात्तामपि न त्यजेत्।
अर्थवादे यतस्त्वाह गायत्रीत्वमनुष्टुभः ॥२३॥
[7]इत्यांमन्त्रायुष्यार्थप्रायाद्धोत्रकतुल्यत्वात्।
पर्यायेषु प्रयत्नात्तु या गवेषु तथा भवेत् ॥२४॥
अर्थवादान्न तत् कुर्यात् गायत्र्या अपि संपदम्।
दशमे ऽहनि मुख्यार्थं तत्र चेत्स्यादिहापि सः ॥२५॥
[8]मध्यादोद्ध्रियमाणायामेकमेव भवेत्सूक्तम्।
ज्ञापकं त्यं सु मेषं जागतं नवमं[9] विना ॥२६॥

---

१ C D इन्द्रं। २ A इन्द्र वं न ह्यति या॰, C इन्द्रं वन् ह्यंतीया॰, D इन्द्र व नह्यतीपाय। ३ C D तद्वधान्द॰। ४ C चैषां, C D ॰त्येकपा॰। ५ A पतिर्र्दे। ६ C D देव। ७ C D इत्यामंत्यामुष्यार्थप्रायोद्दोत्रक॰। ८ C मध्यालोऽद्धि॰, D मध्याधोभ्रिय॰। ९ C (in marg.) ॰मीं।

उद्धृत्यान्या ऋचः सर्वगायत्र्यो चैव मध्यमा[1]।
यथान्तरेषु शस्यन्तामिति चेत्तन्न युज्यते ॥२७॥
वशो हि विविधच्छन्दा[2] यत आरण्यके श्रुताः।
वाज्येन्द्र इव इत्येषा पर्याये यत उद्धृता ॥२८॥
आर्भवे शस्यते वापि वचनं कार्यवद्भवेत्।
सूक्तैकदेशाः कर्तव्याः संख्याने तत्प्रयोजनम् ॥२९॥
रैवतस्य तु तृचाः स्यादि अपेतो जन्य इत्यपि।
इन्द्रस्य नः शुनासीरीये ताश्च दाशतयो[3] हि ॥३०॥
वाच.स्तोमे प्रयोक्तव्याः सर्वशब्दो यतस्तत्र।
इयोर्होत्रकयोर्यच्च प्रोक्तं दाशतयीष्विति ॥३१॥
छन्दोरूपान्विता आद्याः कर्तव्याः श्रुत्यनुग्रहात्।
विमुक्तान् तृचविंशत्या प्रयोज्यानां शतानि षट् ॥३२॥

१८. इहेन्द्राग्नी तोशेत्येवमादिके षट्चे स्तोमातिशंसनायाच्छावाकस्यावापे भवतः।

१९. यत्सोम आ सुते नर इत्येते द्वे भवतः।

२०. उप सक्रेषु वप्सत इत्येका भवति। एकेति नियमार्थं। ततो यद्यपि छन्दोगा महाव्रत आ सुते सिञ्चत श्रियमिति स्तोचियं कुर्वन्ति तथाप्येकैवावापे प्रयोक्तव्या।

२१. जुषेथां यज्ञमिष्टय इति सप्तावापिक्यः।

२२. षट्चत्वारिंशत्सर्वास्वपि दाशतयीष्वैन्द्राग्न्यो गायत्र्यस्तासां यथास्तोमातिशंसं छन्दोरूपसंपन्ना आवपेदच्छावाकः। इन्द्रे अग्नेयं

[1] C द्वैवमध्यमौ। [2] C D विविध०। [3] A दाशतया।

वामस्य वामस्य ता ऊवे ता हि शश्वन्त इत्येताः षट्तृचप्रगाथाः षड्लोपदेशात्।

२३. [१]तस्य ता नः शक्रं पार्थिवस्य युञ्जन्ति ब्रध्नमरुषं ता हि शश्वन्त ईळते तमीळिष्व यो अर्चिषेति वा स्तोत्रिया इति (२५.१५) श्रुतेः। तनूपृष्ठे परोक्षपृष्ठे चैत एव।

२४. पञ्चस्तोकः पार्ष्टिकस्य स्तोत्रियास्ताननुरूपान् कृत्वा तत इतरेषां पञ्चानां प्रथमद्वितीयतृतीयचतुर्थपञ्चमानां[२] ये स्तोत्रियास्तानावापे शंसन्ति। इतरे पञ्च तदुक्तमिति (२५.१५) श्रुतेः।

२५. आवृत्तांस्तृचेष्वावृत्तस्तोमेषु विश्वजित्येवावृत्तेषु स्तोत्रियेष्वित्यर्थः। तस्मात् चतुरावृत्त्युदयो भवतीति श्रुतेः।

२६. एकाहभूतस्य[३] विश्वजित आवृत्तस्तोमेष्वपि ऊर्ध्वानेव शंसेत्।

२७. त्रिकैः पर्यासैः परिदधति। एवमेव श्रुतेः।

---

## ३.

१. माध्यन्दिन इति माध्यन्दिनानि सवनानि चतुर्विंशतेरेवाह्नां वक्ष्यमाणानि तेषु विकारो ऽत उच्यते। विकारवचनादनुक्तं प्राकृतम्।

२. शस्त्राणां यान्यन्त्यानि सूक्तानि तानि पर्याससंज्ञानि भवन्ति। उत्तरयोरित्यप्राकृतस्यापि तृतीयसवनस्य ग्रहणं यथा स्यादिति।

---

१ A शौनकायानिसमुचयंते तस्य। २ C D पञ्चानां। ३ D M om. C in marg.

३. द्वेद्वे सूक्ते होत्रकाणां माध्यन्दिने सवने भवत इत्यर्थः। प्राकृतानां निवृत्त्यर्थं वचनम्।

४. उक्थानि तृतीयसवनेषु होत्रकाणां शस्त्राणि। तानि चतुःसूक्तानि भवन्ति। प्राकृतानि च निवर्तन्ते सूक्तानि। चतुःसूक्तान्येवेत्यारम्भसामर्थ्यात्।

५. अप प्राच इन्द्र विश्वाँ अमित्रानिति सौकीर्तीं मैत्रावरुण इति (२८. ४) श्रुतेः।

६. शंसा महामिन्द्रं यस्मिन् विश्वा इति सूक्तं। यन्न इन्द्रो जुजुषे यच्च वष्टीति सूक्तं। विश्वामित्रस्य च वामदेवस्य च मैत्रावरुणः शंसतीति श्रुतेः।

७. युध्मस्य ते वृषभस्य स्वराज इति सूक्तं। कथा महामवृधत् कस्य होतुरिति सूक्तं। विश्वामित्रवामदेवौ पूर्ववत्।

८. प्र वो महे महिवृधे भरध्वं यजामह इन्द्रमिति तृचौ। वक्ष्यति। मध्यमे ऽहे तृचाञ्छिल्पानीत्याचक्षत इति १४। तत्र इमौ शिल्पतृचौ। विराजय वै मध्यस्य चतुर्थे ऽहन्निति श्रुतेः। सद्यो ह जातो वृषभः कनीन इति सूक्तम्। आ न इन्द्रो दूरादा न आसादिति च सूक्तम्। एतच्चतुर्थे ऽहनि सूक्तद्वयम्।

९. प्रो अस्मा उपस्तुतिम्। उभे यदिन्द्र रोदसी। इत्येतौ शिल्पतृचौ। पङ्क्त्यस्य महापङ्क्त्यस्य पञ्चमे ऽहन्निति श्रुतेः।

१०. गर्भे नु सन्नन्वेषामवेदमिति सूक्तं। का सुष्टुतिः शवसः सूनुमिन्द्रमिति सूक्तम्। एते पञ्चमे ऽहनि भवतः।

११ इन्द्राय हि द्यौरसुरो अनम्नतेति शिल्पतृचमतिच्छन्दस षष्ठे ऽहनीति (१८ ५) श्रुते ।

१२ आ न स्तुत इत्येवमादिक सूक्तम् । आ सत्यो यातु मघवाँ ऋजीषीति सूक्त षष्ठे ऽहनि ।

१३ तदिति सर्वनाम्ना अनन्तरस्य नियम । तेन आ सत्यो यात्वित्यहीनसूक्त भवति । अहीनसूक्तमिति च शास्त्रसव्यवहारार्थं सज्ञाकरणम् ।

१४ दशरात्रस्य मध्यमे त्र्यहे चतुर्थपञ्चमषष्ठेष्वहस्सु होत्रकाणा यानि तृचानि तानि शिल्पानीत्याचक्षते याज्ञिका । आख्यातवचन सज्ञार्थम् । अथैतानि शिल्पानि मध्यमे त्र्यहे शसन्ति । तथा तानि वै तृचानि भवन्तीति (१८ ५) श्रुते ।

१५ प्रदेशो ऽतिदेश । [१]अन्यत्रोपदिष्टस्यान्यत्र वचन । तस्मिन्प्रदेशे सति यदन्यत्स्तोत्रियानुरूपाभ्या तृचेभ्यश्च तद्भवतीति विद्यात् । शस्त्रप्रदेशो ऽनन्तरमेवोदाहरणमस्य ।

१६ प्रथमद्वितीययोरह्नोर्यच्छस्त्र होत्रकाणा तदेकीकृत प्रथमे छन्दोमे भवति । यदन्यत् स्तोत्रियानुरूपाभ्या तृचेभ्यश्चेति पञ्चपञ्च सूक्तानि मैत्रावरुण शसति सर्वेषु छन्दोमेष्विति श्रुते ।

१७ सर्वेषामिति वर्तते । तृतीयपञ्चमयोरह्नो[२] सर्वेषा होत्रकाणामात्मीयमात्मीय शस्त्र स्तोत्रियानुरूपतृचवर्जित तन्मध्यमे यथास्व भवति ।

---

१ C D अन्यत्रोपदसस्या० ।   २ From सर्वेषाम् to अह्नो om n A

१८. सर्वेषां होचकाणां[1] यच्चतुर्थपष्ठयोरह्नोः शस्त्रं तदुत्तमे छन्दोमे यथास्वं[2] भवति।

१९. त्वं महाँ इन्द्र तुभ्यं ह क्षा इत्येतत्सूक्तं मैत्रावरुणस्याहीनसूक्तस्थाने भवति। यत्र यस्मिन्नहनि होताहीनसूक्तं शंसेत्। तद्यथा। नवमे ऽहनि विषुवन्महाव्रतयोश्च। यद्यपि च चतुर्विंशे ऽभिजिति विषुवति विश्वजिति महाव्रतीये ऽह्नीति श्रुतेस्तथाप्यविरोधः अहीनसूक्तानि शस्त्रैकाहिकानि शंसन्तीति श्रुतेः।

२०. त्विह यत्पितरश्चिन्न इन्द्रेत्येता एकविंशतिर्ध्वंचम्छन्दोमेषु चिष्वपि पुरस्तात्पर्यासस्य मैत्रावरुणः शंसेत्।

२१. मा चिदन्यद्वि शंसतेति स्तोत्रियः प्रगाथः। मा भेम मा श्रमिमेत्यनुरूपः प्रगाथः। एतौ दशमे ऽहन्यस्य मैत्रावरुणस्य भवतः। अस्येति वचनात् स्वयोनौ रथन्तरक्रियायां वामदेव्यमेवास्य भवति।

२२. आ धूर्ष्वस्मै दधाताश्वानिति चास्य मैत्रावरुणस्य द्विपदा भवति।

---

४.

१. उक्तं दशानामह्नां मैत्रावरुणस्य माध्यन्दिनमनन्तरं ब्राह्मणाच्छंसिन उच्यते। कं नव्यो अतसीनामित्ययं प्रगाथो ब्राह्मणाच्छंसिनो माध्यन्दिनेष्वनुरूपादनन्तरो नान्यस्मात्तेन न द्विच्छन्दो-

---

[1] M om सर्वेषां होचकाणां। [2] A O D om छन्दोमे, M om यथास्व।

मेषु। कदानिति तस्य संज्ञा। ऐकाहिकस्य स्थान इत्यैकाहिकनिवृत्त्यर्थं वचनम्।

२. ब्रह्मणा ते ब्रह्मयुजा युनज्मीत्युक्थमुखीया भवति। पशब्दादनन्तरमेव। तत इयमपि तद्विग्निष्यते। छन्दोमेषु यदार्षेये सूक्ते तदार्षेये उक्थमुखीये इतरयोरिति (२८.४) श्रुतेः। तृतीयमेव युक्ता वचनाच्च।

३. उदु ब्रह्माण्यैरत श्रवस्येत्यहरहः पर्यास एव भवति। छन्दोमेषु तद्विग्निष्यते। यद्देवास्य पर्यासत्वे[1] विनियोगत्वात्।

४. वयं घ त्वा सुतावन्तः क ईं वेद सुते सचेति स्तोत्रियानुरूपौ तृतीये ऽहनि भवतः।

५. पूर्वोक्तावेव स्तोत्रियानुरूपौ प्रथमद्वितीययोश्छन्दोमयोः।

६. तुशब्दो विशेषार्थः। सो ऽयं विशेषः। मध्यमे छन्दोमे पूर्वोक्तावेव स्तोत्रियानुरूपौ विपर्यस्तौ भवतः।

७. यदिन्द्र प्रागपागुदगिति वा स्तोत्रियः प्रगाथः। औपरिष्टो[2] ऽनुरूपः। एतौ वा स्तोत्रियानुरूपौ प्रगाथौ मध्यमे छन्दोमे भवतः[3]। स्तोत्रियानुरूपौ प्रगाथाविति स्तोत्रियानुरूपग्रहणमविपर्यासार्थम्[4]।

८. अध्वर्यवो भरतेन्द्राय सोममित्येता एकादश शंसेत् तृतीये पार्ष्टिके ऽहनि[5]। तृतीयवचनादयं[6] विधिर्मध्यमे छन्दोमे न भवति। पूर्व एव तु भवति।

---

१ C (orig) D पर्यासे, A ॰योगात्। २ A उपरि॰ M उपरिष्टा॰ D om ३ C om मध्यमे छन्दोमे भवतः D om the whole passage. ४ C विपर्यसार्थे, M विपर्यस्तार्थम्। ५ C D om. पार्ष्टिके ऽहनि। ६ C D तृतीयवचनाद्,

९. विश्वा. पृतना अभिभूतरं नरमिति चतुर्थे ऽहनि स्तोत्रियः कार्यः।

१०. तमिन्द्रं जोहवीमि मघवानमुग्रं मत्स्यपायि ते महः अस्माअस्मा इदन्धस इति बार्हतौ ऽनुरूपः।

११. कद्रा वसो स्तोत्र हर्यत आ यो वाचा विवाचो मृध्र-वाचः। एतौ शिल्पदृचौ भवतः।

१२. य एक इद्धव्यश्चर्षणीनामित्येतत्सूक्तं चतुर्थे ऽहनि।

१३. इन्द्रो मदाय वावृधे मदेमदे हि नो ददिरित्येतौ स्तोत्रियानुरूपौ पञ्चमे ऽहनि भवतः।

१४. आ याहि सुषुमा हि ते। यो न इन्द्राभितो जन इत्येतौ शिल्पदृचौ पञ्चमे ऽहनि भवतः।

१५. यस्तिग्मशृङ्गो वृषभो न भीम इत्येतत् स्तोत्रियादारभ्य पञ्चमे ऽहनि भवति।

१६. सुरूपकृत्नुमूतय इत्येतौ स्तोत्रियानुरूपौ षष्ठे ऽहनि भवतः।

१७. त्वया वयं मघवन्पूर्व्ये धन इत्येतत् शिल्पदृचं षष्ठे ऽहनि भवति।

१८. अस्मा इदु प्र तवसे तुरायेति सूक्तमित्येतत् सुरूप-कृत्नुमूतय इत्यत आरभ्य षष्ठे ऽहनि भवति।

१९. तदेतदस्मा इदु प्र तवस इत्युक्तम्।

२०. आयन्त इव सूर्यं शग्ध्यू ष्वित्येतौ स्तोत्रियानुरूपौ प्रगाथा उत्तमे छन्दोमे। यत्प्रथमयोरह्नो: शस्त्रं[१] तच्च समानम्।

---

१ A शस्त्रमित्यादि।

२१. त्वं महाँ इन्द्र यो ह शुष्मैरित्येतत्सूक्तमहीनसूक्तस्य[1] स्थाने शस्यते।

२२. इन्द्रं स्तवा नृतमं यस्य मह्नेत्येतत् सूक्तं त्रिष्वपि च्छन्दोमेषु पुरस्तात्पर्यासस्य भवति।

२३. उदु त्ये मधुमत्तमाः उदिन्न्वस्य रिच्यत इत्येतौ स्तोत्रियानुरूपौ प्रगाथौ दशमे ऽहनि क्रियेते।

२४. त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म इत्ययं वा स्तोत्रियो दशमे ऽहनि ब्राह्मणाच्छंसिनो भवति।

२५. उत्तमा च त्रिकद्रुकीयस्य। तमिन्द्रं जोहवीमि मघवानमुग्रं। विश्वाः पृतना अभिभूतरं नरमित्येष संहार्यो ऽनुरूपः।

२६. रायस्कामो वज्रहस्तं सुदक्षिणमित्येषा। द्विपदाग्रहणाद्योन्यनुशंसनयोग्यत्वे ऽपि नापरा प्रक्षेप्तव्या।

---

## ५.

१. कदू न्वस्याकृतमित्ययं कदाप्रगाथो ऽच्छावाकस्यानुरूपादनन्तरो भवति। अच्छावाकाधिकारो ऽन्तरेण प्रायणीयोदयनीयाविति यावत्।

२. उरुं नो लोकमनु नेषि विद्वानित्युक्थमुखीया भवति।

३. अभि तष्टेव दीधया मनीषामित्यहरहः पर्यासः।

४. त्वामिदा ह्यो नरो वयमेनमिदा ह्य इत्येतौ स्तोत्रियानुरूपौ प्रगाथौ भवतः।

---

[1] M °रित्येतत्स्थान्। च°।

५. अपूर्व्या पुरुतमान्यस्मा इति सूक्तं द्वितीये ऽहन्येतच्छस्यम्।

६. तरणिरित्सिषासतीति स्तोत्रियः। तरोभिर्वो विदद्वसुमित्यनुरूपः।

७. य ओजिष्ठ इन्द्र तं सु नो दा इत्येतत्सूक्तं यथोक्तेन शस्त्रेण सह तृतीये ऽहनि भवति।

८. यो राजा चर्षणीनामिति स्तोत्रियः। नकिष्टं कर्मणा नशदित्यनुरूपः।

९. सचायोरिन्द्रश्चर्कृष इति तृचः। इन्द्र सोममिमं पिबेति तृचः। एतौ शिल्पतृचौ।

१०. सं च त्वे जग्मुर्गिर इन्द्र पूर्वीरित्येतत्सूक्तं चतुर्थे ऽहनि पूर्वोक्तेन स्तोत्रियादिना सह भवति।

११. स्वादोरित्था विषूवत इति स्तोत्रियः। इत्था हि सोम इन्मद इत्यनुरूपः।

१२. यच्चिद्धि सत्य सोमपा इति तृचः। अव यत्त्वं शतक्रतविति तृचः। एतौ शिल्पतृचौ।

१३. कदा भुवद्रथक्षयाणि ब्रह्मेति पञ्चमे ऽहनि भवति।

१४. उभे यदिन्द्र रोदसी इत्येतौ आम्नायक्रमेण स्तोत्रियानुरूपौ भवतः। उभे यदिन्द्रेति स्तोत्रिय उत्तरो ऽनुरूप इत्येवं नोक्तम्। कथं नाम छन्दोगानां स्तोत्रियक्रमान्यत्वे तथैव शस्त्रा शेषो ऽनुरूपः स्यादिति।

१५. विदुष्टे अस्य वीर्यस्य पूरव इत्येतास्तिस्रः शिल्पम्।

१६. शासदह्निर्दुहितुर्नप्त्यं गादित्येतत्सूक्तं च शिल्पं षष्ठे ऽहनि भवति[१]।

१७. शासदह्निरित्येतत्।

१८. नकिष्टं कर्मणा नशदिति स्तोत्रियः। न त्वा दृहन्तो अद्रय इत्यनुरूपः। एतौ प्रथमे छन्दोमे भवतः।

१९. उभयं शृणवच्च न इति स्तोत्रियानुरूपौ मध्यमे छन्दोमे भवतः।

२०. यत इन्द्र भयामहे इति स्तोत्रियानुरूपौ उत्तमे छन्दोमे भवतः।

२१. त्रिष्वपि छन्दोमेषु यथोक्ताः।

२२. इच्छन्ति त्वा सोम्यासः सखाय इत्येतत्सूक्तं त्रिष्वपि छन्दोमेषु पुरस्तात्पर्यासस्य भवति।

२३. अया वाजं देवहितं सनेमेत्येषा द्विपदा दशमे ऽहनि भवति।

२४. ऐकाहिकमाग्निष्टोमिकं अथ इद्धाहेध इत्येतत् पूर्वं द्वयोरैकाहिकयोः। चशब्दाद्द्विपदाया अनन्तरं प्राक् पर्यासात्।

---

## ६.

१. कुर्यादिति वाक्यशेषः। सर्वे चकाराः साहचर्यसमुच्चयार्थाः।

२. अन्तरेणोक्थमुखीयां[२] प्रतिष्ठोचकं सूक्ते च प्रक्षेपः पर्यासस्यावापस्य स्थानम्।

---

१ A सूक्तं शिल्पं च। २ C D M om

३. होचकाधिकारो[1]ऽनुवर्तते। पृष्ठ्याद्धोत्रकविहितात् सूक्तानि माध्यन्दिने सवने ऽभिप्लवे ऽतिदिश्यन्ते। अभिप्लवः षळहः पृष्ठ्यविकार इत्येतत्तु होतुरुक्तं। तेनेह न सिध्यति। यदन्यत् स्तोत्रियानुरूपार्थं तृचेभ्यश्च तत्प्रदेशे प्रतीयेतेति परिभाषणमिहापि समानं। सूक्तग्रहणात् प्रातःसवने पाष्ठिकानां स्तोत्रियानुरूपाणां सिद्धिश्छान्दोग्ये ऽप्येवमेव।

४. यान्यहीनसूक्तानि संज्ञाविशिष्टानि षष्ठे ऽभिहितानि तेषां स्थाने द्वितीयादह्नः सूक्तानि भवन्ति।

५. शंसा महां यत्र इन्द्र इति द्वयोर्यदुत्तरं तन्मैत्रावरुणस्याहीनसूक्तस्थाने भवति।

६. प्रथमात्पृष्ठात्पाष्ठिकात् स्वरसामसु होत्रकाणां शस्त्रं भवति।

७. चतुर्विंशादिषु षष्ठात्[2] शस्त्रं भवति पूर्वसूत्रयोरुपादानं प्रथममधिकरणमुत्तरम्। इह तु तद्विपरीतं क्रियते कार्यार्थं तच्चेतत्कार्यं। प्रातःसवने न षष्ठात् स्तोत्रियाः।

८. इत उत्तरं यदुच्यते तद्विश्वजिति सर्वपृष्ठे भवति। परोक्षपृष्ठे ऽपि वक्ष्यमाणं भवत्येवोद्धृत्य वालखिल्या इति सिद्धवदुपदेशात्। उपाङ्गपृष्ठानि प्रयुज्यन्ते। तत्राप्येतद्भवति।

९. शंसतीति वाक्यशेषः।

१०. ब्राह्मणाच्छंसी वैरूपस्य स्तोत्रियानुरूपौ कद्वन्तं च प्रगाथं शंसति।

---

[1] C D होत्रधिकारो।

[2] C D षळहस्य instead of षष्ठात् श०, M षष्ठाशस्त्रं।

११. रेवतीसंज्ञिकानां यौ स्तोत्रियानुरूपौ तावच्छावाकः कद्रन्तं च शंसति।

१२. वालखिल्या अभि प्र वः सुराधसमित्यारभ्य षट् सूक्तानि इन्द्र नेदीय एदिहीतीन्द्रनिहवं प्रगाथं[१] परिहाप्या नो विश्वे सजोषस इति च प्रगाथं परिहाप्य द्वेधा अविहृता मैत्रावरुणः शंसति। इह विहारप्रतिषेधादन्यत्र विहृतानामेव शंसनम्।

१३. वृषाकपिं वि हि सोतोरसृक्षतेत्येतद्दृते कुन्तापेनेत्यर्थः[२]। ऋते कुन्तापमिति च ब्रुवन् वृषाकपेः सर्वत्र कुन्तापसाहचर्यं दर्शयति ततो यत्र वृषाकपेरुद्धारस्तत्र कुन्तापस्यापि भवति। अन्यूङ्ख-मिति च ब्रुवन् वृषाकपेर्नित्यं न्यूङ्खं दर्शयति। एवंलक्षणं ब्राह्मणा-च्छंसी शंसति।

१४. द्यौर्न य इन्द्राभि भूमार्य इति विष्णुन्यङ्गाख्यमच्छावाक एवयामरुतः स्थाने शंसति।

१५. अभूरेको रयिपते रयीणामिति सामसूक्ताख्यं मैत्रा-वरुणस्य भवति।

१६. यो जात एव प्रथमो मनस्वानित्येतत्सूक्तं ब्राह्मणाच्छंसिनः सामसूक्ताख्यं शस्त्रं भवति।

१७. प्र घा न्वस्य महतो महानीति सामसूक्ताख्यमच्छावाकस्य शस्त्रं भवति।

---

१ C D M om प्रगाथं।

२ A ॰त्येतत् ऋते कुन्ताप विना इदं शस्त्रा इत्यनेनेत्यर्थं । ऋते॰

१८. [1]शामसूक्तादनन्तरमहीनसूक्तानां शंसनं कृत्वा ततो होत्रका ऐकाहिकीभिर्ऋग्भिः परिदधति। या एकाहे परिधानीयास्ताभिः परिधानं कुर्वन्तीत्यर्थः।

१९. एकाहभूतस्य विश्वजितः सर्वपृष्ठस्यैकाहिकान्पर्यासान् सकृतानेवोर्ध्वमहीनसूक्तेभ्यः शंसेयुः।

---

७.

१. विश्वजिदधिकारो ऽनुवर्तते। विश्वजित्युक्थेषु क्रियमाणेषु माध्यन्दिने सवने वालखिल्या वृषाकपिं विष्णुन्यङ्गमित्येतदुद्धृत्य यथोक्तान्यविशेषान्माध्यन्दिने सवने होत्रकाः शंसन्ति।

२. विश्वजिति[2] षष्ठादह्न उक्थानि भवन्ति।

३. प्रदेशान्तरार्था अपि परिभाषेयं। तदर्थो ऽयशब्दो विशेषाधिकारार्थः। यदिशब्दो ऽपि तृतीयसवनातिदेश एवेत्येतत् ज्ञापयितुं नाक्तः पृष्ठ्याहान्यनुपूर्वमित्यादौ (१४. ६८. २)। षष्ठाह्निकं तृतीयसवनं असर्वपृष्ठे ऽहनि अन्यस्मिन्नहनि प्रदिष्टं। तद्यथा वाजपेये पुरुषमेधे गर्गत्रिरात्रे पञ्चरात्रादिषु द्वितीयादह्न उक्थानि भवन्ति।

४. परोक्पृष्ठे विश्वजिति प्रतिशिल्पानि वक्ष्यमाणानि क्रियन्ते।

५. शंसतीति मैत्रावरुणस्य प्रतिशिल्पक्रियोच्यते[3]। उद्धृत्य वालखिल्याः पिबा सुतस्य रसिन इत्यैन्द्रान् प्रगाथाञ्छंसति। यावत्य

---

१ M सूक्तशंसनाद॰। २ C D विश्वजिदिति। ३ C D ॰शिल्पं।

ऽह्वियन्ते प्रगाथर्चा ऽपि तावत्यः प्रतिशिल्पवचनात्। ततो माध्यन्दिने सवने षड्विंशतिं प्रगाथाञ्छंसति। तृतीयसवने चयस्त्रिंशत्तृचान्[1] तत्परिमाणत्वात्। पिबा सुतस्य रसिन इति पञ्च। यदिन्द्र प्रागपागुदगिति सप्त। वास्तोष्पते ध्रुवा स्थूणेत्येकः। उभयं शृणवच्चन इति नव। तरोभिर्वः सप्त। यो राजा चर्षणीनामिति चयः[2]। विश्वेत्ता विष्णुरित्येकः। बार्हताः प्रगाथाः प्रतिशिल्पत्वात्।

६. वृषाकपिं सकुन्तापमुद्धृत्य वृषाकपिसंमिता एव न्यूङ्खवर्जिता इन्द्रो मदायेत्येवमाद्याः पङ्क्तीरैन्द्रीः शंसति[3]। इन्द्रो मदायेति चतुर्दश स्वादोरित्थेति तिस्रः अस्माकमिन्द्रेहि न इत्येका अस्मा इत्काव्यं वच इत्येका प्रो अस्मा उपस्तुतिमिति षट् उज्जातमिन्द्र ते शव इति तिस्रः आ ह्यू षु गिर्व इत्येका वारवायतीति द्वे नकिर्देवा मिनीमसीति च नूनं तं नव्यमिति च। उत्तमा या पङ्क्तिरिति व्यपदेशात्।

७. अच्छावाकस्तु प्रतिशिल्पक्रियायां विष्णुन्यङ्गमेव शंसति।

८. इति यदुक्तमेतत्परोक्षपृष्ठे भवति।

---

८.

१. अथानन्तरं विश्वजिच्छिल्पे यो विधिः स उच्यते।

२. ऐकाहिकान्प्रगाथाञ्छस्त्वा ततो ऽनन्तरं मैत्रावरुणो वालखिल्याः शंसति। ब्राह्मणाच्छंसी वृषाकपिं। अच्छावाको

---

१ C त्वच॰। २ C (orig) D तिस्रः।

३ C (orig) D om the text from वृषाकपिं to शंसति।

विष्णुन्यङ्गमिति । होता नाभानेदिष्ठं। ऐकाहिकवचनमग्निष्टोमस्यैव विश्वजितो ऽधिकारार्थं। यद्यपि श्रुतौ स्तोत्रियानुरूपौ शस्त्वा वालखिल्याः शंसतीत्युक्तं तथापि पूर्वकालमात्रं तद्विश्वजित्प्रकारादूर्ध्वं प्रगाथेभ्यः शिल्पविधानं। अहर्गणे चोर्ध्वमुक्थमुखीयायाः परिभाषितत्वात्। तृचान्वा वालखिल्यादीन् शंसेत्।

३. तृचपक्षे वालखिल्यानां चतुर्थ्यं भवति।

४. प्रत्येकं सामसूक्तादीनां त्रयस्त्रयस्तृचास्तद्‌र्था वीप्सा। होत्रका विश्वजिति सामसूक्तादीनां[1] त्रींस्त्रींस्तृचान् शंसन्ति। होत्रकाधिकारे पुनर्होत्रकग्रहणं होतुर्नाभानेदिष्ठार्थम्[2]।

५. य एष विश्वजिति त्रींस्त्रींस्तृचान् होत्रकाः शंसन्ति सामसूक्तानां यथार्थं तृचशंसनेन त्रयस्तृचा एवमहीनसूक्तानां पर्यासानामित्येष विकारो नियमतः। उत्तरस्तु विकल्पेन। विश्वजिच्छिल्पग्रहणं होतुरपि यथा स्यात्।

६. येषु निविद्धीयते तान्निविद्धानीयांस्तृचान् होता शंसेत्। आ यद्दुवस्याद् दुवसे न कारुरिति[3] अनुत्तमा ते मघवन् नकिर्न्विव्येका कयाशुभीया एवं तृचः क्रियते। अनुत्तमा त इति परिधानीयोत्तराः पूर्वाः शस्त्वा यत्रास्मिन् धीयते निविदित्यविशेषेणोक्तत्वात्।

७. युवोर्यदि सख्यायास्मे इति नाभानेदिष्ठस्य यस्तृचस्त्रोदितः सो ऽयमेव कर्तव्यो निविद्धानीय इति।

---

१ A साम्य॰ C सम॰। २ A ॰दिष्ठस्वार्थम्। ३ C D ins ३।

८. ये यज्ञेन दक्षिणया समक्ता इत्येतत्सूक्तं नियमतो न तृचः। युवोर्यदीत्येकां[1] शस्त्वा तत एतत्सूक्तं ततः परिशिष्टं शंसति।

९. स्वस्ति नो मिमीतामश्विना भग इत्येतत्तृचं[2] सामूह्निके वैयूह्निके वा तृतीयसवने निविद्धानीयं कर्तव्यम्। तृचवचनं विकल्पबाधनार्थं क्रियते।

१०. प्र वो मह इत्येवयामरुतस्तृचं शंसेत्। चकारो माहतान्तरेण सह[3] समुच्चयार्थः।

११. प्रातःसवने यदुक्तं विश्वजित इतरेषां पञ्चानां स्तोत्रियाऽकंसन्ति तस्यापवादः। यथास्तोमं छन्दोगवशेन होतुर्होत्रकाणां च प्रातःसवनं भवति। पञ्चप्रातःसवनस्य वचनं विकल्पनिवृत्त्यर्थम्।

---

## ९.

१. होत्रकाधिकारोऽनुवर्तते। तत आग्न्याधेयिकं तृचक्लृप्तमिह न भवति। चित्रद्वशरात्रस्य विधिं वक्ष्याम इति वाक्यशेषः। तृचक्लृप्तं शस्त्रं भवति वक्ष्यमाणेन विधिना।

२. निविद्धानवचनसामर्थ्यादौ परिशिष्टसूत्रे[4] होता होत्रकाश्चाद्यानामाद्यांस्तृचान् शंसेयुः।

३. निविद्धानानां सूक्तानामुत्तमांस्तृचान् होता शंसेत्।

४. यानीतराणि निविद्धानव्यतिरेकेण सूक्तानि तेषामेकैकां शंसेयुः शिल्पतृचानां च।

---

१ M युवोर्यदीति तृचमेकां ; om. तत एतत्सूक्तं। २ M inserts नियमतः।
३ C D om सह। ४ A C D परिशि॰।

५. षष्ठस्याह्नः समानं विश्वजिच्छिल्पेन शस्त्रं शिल्पानाम्। षष्ठग्रहणादन्यत्रापि षष्ठे ऽहन्यग्निष्टोमसंस्थे शिल्पानामेव भावार्थ[१] आरम्भः। सर्वपक्षे दशरात्रे चाहीने अदशरात्रे ऽपि षडहे तुशब्दात्पृष्ठशिल्पावियोगो न्याय्यः[२]।

६. समानमेव विश्वजिच्छिल्पेन छौचलादारम्भः[३]।

७. समानं विश्वजिच्छिल्पेन।

८. यदि पूर्वकारिणो गवामयने ब्राह्मणाच्छंसिने तदीयाय शस्त्राय शार्ङ्गिवत ऐन्द्रेषु प्रगाथेषु अभीवर्ताख्यमन्वायातयेयुस्ततो ब्राह्मणाच्छंसिनो यो विशेषः स उच्यते। यस्मिन् स्तुवते छन्दोगाः स एव स्तोत्रियः कार्यः श्वःस्तोत्रियो ऽनुरूपः कार्यः[४]। न पृष्ठे[५] ऽन्वायातनं तत्र स्तोत्रियानुरूपाणां प्रत्यक्षशिष्टत्वात्। एकाहविंशतेरेवाह्नामन्वायातनम् तत्र चतुरुत्तरं शतं प्रगाथानामैन्द्राः[६] बार्हताः प्रगाथा द्वाशतयीष्विति च्छन्दोगानां।

लमङ्गिकस्तत[७] सप्त शुल्लामिद्धि हवामहे।
चयोदश च मो षु त्वा तृतीयां लत उद्धरेत्॥
उदु त्यद्दर्शतं लेको द्वौ तु मा चिदिति स्मृतौ।
पिबा सुतस्येति दश यदिन्द्र प्रागपागसप्त॥
वास्तोष्पते ध्रुवेत्येको न हि ते शूर चापरः।
स भागे[८] द्वितीये तु तरोभिर्वो विदत्सप्त॥

१ A सर्वभावार्थं। २ C D न्याया। ३ A छौचलाद् C D छौचदाद् M छौच०। ४ C D कर्तव्य। ५ A पृष्ठे] C D पृष्ठे। ६ M प्रगाथानामैन्द्राणां विद्यते। चतु०-शतरैन्द्रा०। ७ C D लमङ्ग प्र शक्षिप इत्येक। ८ C D भाग।

यो राजेति चयो ज्ञेया विश्वेत्ता विष्णुरित्येकः।
तं वो दस्मं तु पञ्च स्युरा नो विश्वाखिति चयः॥
त्वामिदा ह्यो ऽथ चत्वारः स्यादेको बल्महानिति।
सं मा तपन्ति[1] कवयो[2] विज्ञेयाः सप्तविंशतिः॥
वालखिल्ये प्रगाथा ये षड्भिर्गेन विवर्जिताः।
नकिः सुदास इत्येको द्वौ चापि बृहदिन्द्राय।
एवं[3] मरुत्वतीयेषु न हि ते विपरीततः[4]॥
सूर्यदेवौ च विज्ञेयावुदु त्यं बण्महाँ असि।
सर्वे एते ऽपि कर्तव्या नान्यथास्ति चतुःशतम्॥
अन्यशाखाश्रयाभावा छान्दोग्ये गणना भवेत्।
अथर्ववेदे त्वपरे ज्ञेयाः पञ्चदशाधिकाः॥

९. एतदपि परमतमेव। यदिवाशब्दात् कदाचिच्छन्दोगा गवामयने तत्प्रकृतिषु च संवत्सरसत्त्रेषु माध्विपुवतः षट्प्रगाथैरेयुः। द्वादशभिरेतव्यमिति[5] च्छन्दोगानां वचनम्। तस्मिन्पक्षे वक्ष्यमाणाः षट्प्रगाथा अन्ये संप्रयोक्तव्याः[6]।

१०. यदि गवामयन इत्यस्मिन्नपि कल्पे तृतीये ऽहनि बृहत्यो भवन्ति। विकल्पार्थं सूत्रम्। न चात्र श्वःस्तोत्रियक्रिया। बृहत्य एवानुरूपः। एवं सति पृष्ठस्यापि विकल्पेनाम्नायातनम्। नित्यमभिप्लवे[7] ऽन्वायातनम्। तृतीये ऽहनि बृहतीविकल्पः।

१ C मतर्यंति कवयो विज्ञेया; in marg मा as insertion between म and त; D मतर्यंति कवयो वि॰। २ A कवये। ३ C D एव। ४ C D परिमाणः। ५ C D ᳚न्मध्यमिति। ६ M यस्यापि प्रयोक्तव्याः। ७ C D चभिप्लवेन।

चतुर्विंशे ऽभिजिति स्वरसामसु नित्यमन्वायातनम्। न प्रायणीये। प्रायणीयमतिरात्रमुपेत्येति सूत्रातिरेकात् (१२.१८.७) न च्छन्दोमेषु प्रदेशे तु नित्यमेव च।

११. तं वो दस्ममृतीषहमिति स्तोत्रियः प्रगाथः। तत्त्वा यामि सुवीर्यमित्यनुरूपः। अभि प्र वः सुराधसमिति स्तोत्रियः प्रगाथः। प्र सु श्रुतं सुराधसमित्यनुरूपः। आ त्वा सहस्रमा शतमिति स्तोत्रियः प्रगाथः। आ मन्द्रैरिन्द्र हरिभिरित्यनुरूपः। यो राजा चर्षणीनामिति स्तोत्रियः प्रगाथः। नकिष्टं कर्मणा नशदित्यनुरूपः। न त्वा बृहन्तो अद्रय इति स्तोत्रियः प्रगाथः। त्वमिन्द्र यशा असीत्यनुरूपः। त्वमिन्द्र प्रतूर्तिष्विति स्तोत्रियः प्रगाथः। पिबा सुतस्य रसिन इत्यनुरूपः। षडेते प्रगाथाः।

१२. विषुवति यदि च्छन्दोगा आदित्यव्रताख्यं साम कुर्युः तत उत्तमे स्वरसाम्नि विषुवतः स्तोत्रियानुरूप. कर्तव्यः।

१३. चित्रं देवानामुदगादनीकमिति स्तोत्रियः। उत्तरे चोत्सूर्यो बृहदर्चींषीति तृतीयानुरूपस्येति (११.१२.२५.२६) तत् पूर्ववत् द्रष्टव्यमविशेषात्।

१४. विषुवति। ब्राह्मणाच्छंसिनो गवामयने यदि विकर्णमन्वायातयेयुः चित्रं देवानामित्यनयोरेवान्वायातयेयुः। प्रकृतत्वात्। तच्[1] मन्तमेव शस्त्रम्।

१५. यद्य वर्ग अभि सूर्येति स्तोत्रिय' प्रगाथः। उदु त्यद्दर्शतमित्यनुरूप'। विकर्णस्येत्यनूच्यमाने[2] पूर्वसूत्रस्यायमर्थ इति विज्ञायते।

---

१ C D om तच। २ १ अनुच्य० C विकर्णस्य त्वनन्यमाने।

१६. प्रगाथग्रहणमनुवर्तते। इन्द्र क्रतुं न आ भरेत्ययं स्तोत्रियो विकर्णस्थान्यस्य वोर्ध्वं विषुवतः। भेदेनोपदेशात्। इन्द्र ज्येष्ठं न आ भरेत्यनुरूपः।

१७. पौरुमीढादीनि सामानि नामविशिष्टानि यदूर्ध्वं विषुवतो ऽभीवर्तस्थाने ऽध्यायातयेयुश्छन्दोगा इन्द्र क्रतुं न आ भरेत्यचैव कुर्युः तत्रायमेव स्तोत्रियो भवति ऊर्ध्वं विषुवतः।

---

१०.

१. होत्रकाणामिति वर्तते। उक्तो माध्यन्दिनेषु सवनेषु विकारो होत्रकाणाम्। अथेदानीमवसरप्राप्त उक्थ्येषु यः प्राकृताद्विकारः स उच्यते। तार्तीयसवनिकान्युक्थ्यसंबद्धानि होत्रकशस्त्राण्युक्थान्युच्यन्ते। साकमश्वं मैत्रावरुणस्येत्येवमादिना सूत्रजातेन। तद्विषयो विकारः। विकारवचनादनुक्तं प्राकृतं। चतुर्थे ऽहनि ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपौ प्रयोजनम्[१]।

२. अन्येषां जागतानां पक्षे विधानार्थं सूत्रम्। द्वितीयं नित्यवचनं नित्यपरिमाणान्येवेत्यवधारणार्थम्। तत्र प्राकृतेभ्यो ऽन्यानि वृद्धसंप्रदायानुगमादैन्द्राणि जागतानि लिख्यन्ते। एवा पतिं द्रोणसाचं सचेतसमिति मैत्रावरुणस्य द्वितीये ऽहनि वृषायस इति वृषण्वत्। तृतीये अयावति प्रथमो गोषु गच्छतीत्यश्वावत्। चतुर्थे जज्ञान एव व्यबाधत स्पृध इति जातवत्। पञ्चमे अनानुदो वृषभो दोधतो वध इति वृषभवत्। अष्टमे तुभ्येदमिन्द्र परि षिच्यते

---

१ cf १२ ११ C Comm

मच्छिति खर्जितं महीति महद्वत्। नवमे एवेवापागपरे मनु दूळ्य इति द्यौः क्रन्ददिति दिव इति तदमुष्य लोकस्य रूपम्। चतुर्विंशे आदङ्गिराः प्रथमं दधिरे वय इति समविन्दन्त भोजनमिति संवत्। प्रथमे स्वरसाम्नि यो न इन्द्राभितो जन इति वृकायुरिति कद्वत्। द्वितीये स्वरसाम्नि उभे यदिन्द्र रोदसी इति तमीं हधीति कद्वत्। तृतीये स्वरसाम्नि अव यत्त्वं शतक्रतो इति वाद्वत्। अथ ब्राह्मणाच्छंसिनः। *ऐन्द्राणि जागतानि। प्र वः सतां ज्येष्ठतमाय* सुष्टुतिमिति तृचं द्वितीये ऽहनि हस्ते वज्रं भरतीति वज्रवत्। तृतीये ऽहनि विविष्टिधातु प्रतिमानमोजस इति चिवत्। चतुर्थे यो नो दाम आर्यो वा पुरुष्टुतेति परि कुत्सादिहा गहीति परिवत्। पञ्चमे विश्वे ह्यस्मै यजताय धृष्णव इति वृषभायेति वृषभवत्। अष्टमे नाना हि त्वा हवमाना जना इम इति धिषणा तितिषे महीति महद्वत्। नवमे अस्य श्रवो नद्यः सप्त बिभ्रतीत्यस्माकमंशमुदवा भरेभर इति निवृत्तिः। चतुर्विंशे प्र ते नावं न समने वचस्युवमिति संबाधादिति संवत्। प्रथमे स्वरसाम्नि येहान उप पृतना इति एकराळिति कद्वत्। अथाच्छावाकस्यैन्द्राणि जागतानि। द्वितीये ऽहनि अभि त्वं मेषं पुरुहूतमृग्मियमिति चयोदश तृचं यदिन्द्र शवसावधीरहिमिति वृत्रवत्। तृतीये त्वं सु मेषं महया स्वर्विदमित्यष्टौ द्यौश्चिदस्यामवाँ अहेः स्वनादिति च पञ्च हवनस्यदं रथमिति रथवत्। चतुर्थे अहं भुवं वसुनः पूर्व्यस्पतिरित्येकादश। एता विश्वा सवना तूतुमा कृष इति द्वे। चिताय गा अजनयमिति जातवत्। पञ्चमे ऽहं दां गृणते पूर्व्यं वस्वित्येकादश।

प्र वो महे मन्दमानायान्धस इति च द्वे स्वादुं गवामूधःस्विति पञ्चमत्। सप्तमे तदस्मै नव्यमङ्गिरस्वदर्चतेत्यष्टौ। अजातशत्रुमजरा स्वर्वतीति पञ्च महिमानमातिरदित्यावत्। अष्टमे प्र ते महे विदथे शंसिषं हरी इति चयोदश मह इति महद्वत्। नवमे अर्चा दिवे हृहते शूष्यं वच इति नव दिवश्चिदस्य वरिमा वि पप्रथ इति चतस्रो दिव इति तदमुष्य लोकस्य रूपमिति। चतुर्विंशे न्यू षु वाचं प्र महे भरामह इत्येकादश। मा नो ऽस्मिन् मघवन् पृत्स्वंहसीति द्वे। समिन्द्र रायेति संवत्। प्रथमे स्वरसाम्नि अच्छा म इन्द्रं मतयः स्वर्विद इति नव। अन्ते दधामीति चतस्रः। त्वे इत्कामममिति कद्वत्। द्वितीये स्वरसाम्नि प्र इन्महानि समिथानीति चतस्रः। एष प्र पूर्वीरिति षट्। युनज्मि ते ब्रह्मणेत्येका इमां ते धियमित्येका। मह. सु वो अरमिति चैका ऋणोति युधा इति कद्वत्। तृतीये स्वरसाम्नि तमस्य द्यावापृथिवी सचेतसेति द्वे। जज्ञान एवेति पञ्च। तव त्य इन्द्र सख्येषु वह्नय इति षट्। श्रावान इति कद्वत्। सप्तमे ऽहनि मैत्रावरुणस्य ब्राह्मणाच्छंसिनश्चैकाहिके। तत्रैव च यज्ञात्। पृष्ठ्ये यानि तान्येवाभिप्लवे। अभिजिद्विषुवद्विश्वजिन्महाव्रतेषु चातुर्विंशिकान्येव तद्धितोपदेशात्। पृष्ठ्याभिप्लवप्रथमयोर्दशमे चाहन्यैकाहिकानि। उत्तमे चाभिप्लविके द्वितीयात् तार्तीयकानि। यत्तदित्यारम्भात्। विश्वजिति सर्वपृष्ठे परोक्षपृष्ठे च नैव[1] विद्यते। षष्ठे ऽहन्यभावात्। बृहत्पृष्ठपरोक्षपृष्ठेभ्य-

---

१ A नैव।

स्त्वन्यप्रकारे[1] विश्वजिति द्वितीयादेव। उक्थविकार[2] उक्थवचनात्। अन्यस्मिन्नहनि संघातमापद्यमाने जागतविशेषः। स्तोमातिशंसने प्राकृते एतेषां त्वङ्गामेकाहीभवतामपि[3] अहःसवनोपदेशे (१४. १. २) च सहौचं। तदित्यारम्भात्। शस्त्रातिदेशो[4] ऽपि यदा सहौचस्य प्राप्तिः।

३. उक्थेष्विति वर्तते। प्र वो वाजा अभिद्यव इति स्तोत्रियः। प्र वः सखायो अग्नय इत्यनुरूपः। गायत्रीषु मैत्रावरुणाय प्रणयन्तीति श्रुतेः। अनुरूपादनन्तरमेवा पतिं द्रोणसाचं सचेतसमिति तृचः।

४. प्र सम्राजे बृहदर्चा गभीरमिति सूक्तं। इन्द्रा को वां वरुणा सुम्नमापेति च। मैत्रावरुणग्रहणमितरयोर्निवृत्त्यर्थं। अहनि द्वितीय इति नियमार्थम्।

५. आ वां राजानावध्वरे वहत्यामित्ययं पर्यासस्तृतीयपञ्चमयोरङ्गोर्मध्यमे च च्छन्दोमे। न तु द्वितीये ऽहनि सूक्तं क्रमभेदात्।

६. मैत्रावरुणस्येत्यनुवर्तते[5]। पुनीषे वामरक्षसं मनीषामिति पर्यास इतरेष्वहःसु द्वितीयचतुर्थषष्ठसप्तमनवमेषु।

७. ककुप्सु मैत्रावरुणाय प्रणयन्ति तृतीये ऽहनीति श्रुतेः। अनुरूपादनन्तरो अश्वावति प्रथमो गोषु गच्छतीति तृचः।

८. धीरा त्वस्य महिना जनूंषीति सूक्तम्। इन्द्रावरुणा युवमध्वराय न इति च [6]तृतीये ऽहनि।

---

१ M ॰न्यस्य॰ C D ॰स्त्वन्यप्रकारवि। २ M उक्थाधिकारे उक्थव। ३ A रेकाहिकीर्भं स्वपि तामपि C D रेकाहिकीर्भे भवतामपि चाहः। सवनो (D चाहः सव॰)। ४ A शस्त्राभिदेशो C शस्त्रातिदेशो D शस्त्रापि देशो। ५ om in C D M ६ A ins तत पर्यास इति।

९. गायत्रीषु मैत्रावरुणाय प्रणयन्ति चतुर्थे ऽहनिति श्रुतेः। अनुरूपादनन्तरो जज्ञान एव व्यबाधत स्पृध इति तृचः।

१०. इदत्पयो वरुणः सूर्यायेति सूक्तम्। श्रुष्टी वां यज्ञ उद्यतः सजोषा इति च। ततः पर्यास इति चतुर्थे ऽहनि।

११. आ ते अग्न इधीमहीत्येका। सो अग्निर्यो वसुरित्येका। अग्निं तं मन्ये यो वसुरित्येका[१]। अयं क्रमः स्तोत्रियः।

१२. आ ते अग्न ऋचा हविरित्यनुरूपः। पङ्क्तिषु मैत्रावरुणाय प्रणयन्ति पञ्चमे ऽहनिति (३०. २) श्रुतेः। अनुरूपादनन्तरो अनानुदो वृषभो दोधतो वध इति तृचः।

१३. प्र सुन्ध्रुवं वरुणाय मेधां इन्द्रावरुणा युवमध्वराय नः। ततः पर्यास इति पञ्चमे ऽहनि।

---

११.

१. द्विपदाः षष्ठे स्तोत्रियानुरूपतया सर्वेषां होत्रकाणां न केवलं मैत्रावरुणस्य।

२. अग्ने त्वं नो अन्तम इति स्तोत्रियो द्वैपदस्तृचो भवति मैत्रावरुणस्य।

३. आम्नायक्रमेण या चतुर्थी तां तृतीयां करोति।

४. अग्ने भव सुषमिधा समिद्ध इत्ययमनुरूपो भवति।

५. वालखिल्या ऋचो ऽभि प्र वः सुराधसमित्यष्टौ सूक्तानि।

---

१ M inserts इति।

तच्छंसनं विहारश्चेति विधीयते। स्तोत्रियानुरूपौ शस्त्वा वालखिल्याः शंसतीति श्रुतेः।

६. विहारो नाम अन्यदीयस्य सूक्तस्य अन्यदीयेन पादादिना संधायाम्नानम्[१]। तस्यानियमे प्राप्ते नियम उच्यते। पच्छः प्रथमे इत्यनेन प्रथमद्वितीये उच्येते। प्रथमद्वितीये सूक्ते पादंपादं विहरन् शंसति।

७. अर्धर्चमर्धर्चं विहरन् तृतीयचतुर्थे सूक्ते शंसति।

८. ऋचमृचं विहरन् तृतीये सूक्ते शंसति। द्वित्वापेक्षं तृतीयत्वं। पञ्चमषष्ठे इत्यर्थः।

९. उत्तमसूक्ते उत्तमोपोत्तमे सप्ताष्टमे विपर्यस्येत्[२]। अष्टमं शस्त्वा सप्तमं शंसेत्।

१०. विहृतास्त्वन्यचाप्येवमेव प्रतिगृणन् प्रतीक्षितव्य इति सूत्रारम्भः।

११. वाक्यद्वय प्रतिगरः। तत्रायं विभागविनियोगः। ओथा मोदैव मदे इत्यवसाने मोदा मोदैवो थो ३ इति सुतान्ते प्रणवे।

१२. त्यमू षु वाजिनमिति तार्क्ष्यं तस्यानुवादेन शंसनं विधायोत्तमां परिशिंष्येत्येवमादि विधीयते। उत्तमां सुब्रह्मण्यावं करोति। ततो दूरोहणं हंसः शुचिषदिति। यथा विषुवति शंसनमस्यास्त्याचापि शसति। यथा विषुवतीत्युक्तमाहावस्य नित्यार्थम्।

१३. तार्क्ष्यः प्रकृतस्तस्योत्तमामृचमुपसंगृह्य तत ऐकाहिकौ

१ C संधाय मानं। २ C in marg सप्ताष्टिपर्यस्ता सप्तमे जायन्ते इति श्रुतेरन्यः।

तृचौ शंसति। ऐकाहिकौ प्राकृताविलर्थः। तौ चर्षणीधृतमस्तभ्नाद्द्यामिति।

१४. ऐकाहिकाभ्यां तृचाभ्यामनन्तरास्मिन्न ऋचो ऽस्माकमत्र पितर आषन्निति।

१५. इन्द्रावरुणा युवमध्वराय न इति सूक्तं शंसेत्। ततः पर्यासमिति षष्ठे इत्युपसंहरन्नेतद्‌शंयति। नाच चतुःसूक्तान्युक्थानीति नियमः।

१६. आ ते वत्सो मनो यमदिति स्तोत्रियः। आग्निरगामि भारत इत्यनुरूपः। एतौ प्रथमे छन्दोमे भवतः।

१७. पर्यासं त्रीणि च पूर्वाण्यैकाहिकान्यन्तरेणेमानि वां भागधेयानि सिस्रत इति षड् शंसेत्। युवां नरा पश्यमानास आप्यमिति पञ्चेव[1]। षट्त्रिंशतं मैत्रावरुणश्चतुर्विंशे शंसतीति (२०. १०) श्रुतेः। चतुर्विंशे शस्त्रं प्रथमाच्छन्दोमादित्यतिदेशः।

१८. प्रेष्ठं वो अतिथिमिति स्तोत्रियः। प्रियो नो अस्तु विश्पतिरित्यनुरूपः। मध्यमे छन्दोमे छन्दोमाधिकारात्। ततो ऽनुरूपादनन्तरं जागतं तुभ्येदमिन्द्र परि षिच्यते मध्विति।

१९. भद्रो नो अग्निराहुत इति स्तोत्रियः। यदी घृतेभिराहुत इत्यनुरूपः। प्रगाथौ काकुभौ। उत्तमे छन्दोमे छन्दोमाधिकारात्।

२०. पूर्वाभ्यां सह विकल्पः। ततो जागतमेवैवापागपरे सन्तु दूढ्या इति।

---

१ A has वा instead of आप्यमिति and inserts [after पश्यमानास] चर्षणीधृतमित्यादीनि त्रीणि शस्त्वेमानि वामिति पञ्च युवां नरेति वा पञ्च शस्त्वा पर्याससूक्तं शंसेदित्यर्थः।

२१. न हि ते चत्रं न सहो न मन्युमित्युभयोश्छन्दोमयोर्मध्यमोत्तमयोः सूक्तशेषो दशर्चः।

२२. इन्द्रा को वां वरुणा सुम्नमापेति मध्यमे छन्दोमे।

२३. श्रुष्टी वां यज्ञ उद्यतः सजोषा इत्येतत्सूक्तमुत्तमे छन्दोमे।

२४. इमा उ वां भूमयो मन्यमाना इति तिस्र उभयोश्छन्दोमयोः। उक्तान्युक्थानि मैत्रावरुणस्य। ब्राह्मणाच्छंसिन इदानीं वक्तव्यानि। तदर्थमाह।

---

## १२.

१. एवा ह्यसि वीरयुरिति स्तोत्रियः। एवा ह्यस्य सूनृतेत्यनुरूपः। गायत्रीषु ब्राह्मणाच्छंसिने प्रणयन्ति द्वितीये ऽहनीति श्रुतेः। अनुरूपादनन्तरं जागतं प्र वः सतां ज्येष्ठतमाय सुष्टुतिमिति। एवैवापागपरे सन्तु दूढ्य इति केचित्[1]। तद्विचार्यम्।

२. यस्तस्तम्भ सहसा वि ज्मो अन्तानिति षड् द्वितीये ऽहनि। ब्राह्मणाच्छंसिन इत्यधिकार आ अच्छावाकशब्दात्।

३. यस्तस्तम्भेति षलुत्तरयोरपि च्छन्दोमयोः सूक्तानां मध्ये भवन्ति।

४. यो अद्रिभित्प्रथमजा ऋतावेति सर्वत्र पूर्वं पर्यासाच्छंसेत्। द्व्यचपक्षणं षष्ठे चोर्ध्वं द्व्यचेभ्य इत्यत्रोपयुज्यते।

५. अस्तेव सु प्रतरं लायमस्यन्निति पर्यासस्तृतीयपञ्चमयोरह्नोर्मध्यमे च च्छन्दोमे भवति।

---

[1] केचित् C in marg D om

६. अच्छा म इन्द्रं मतयः स्वर्विद इति पर्याय इतरेष्वहःसु द्वितीयचतुर्थषष्ठसप्तमनवमेषु।

७. तं ते मदं गृणीमसीति स्तोत्रियः। तन्वभि प्र गायतेत्यनुरूपः। उष्णिह एताः। ककुप्सु मैत्रावरुणाय प्रणयन्ति तृतीये ऽहंसेनो ब्राह्मणाच्छंसिनो वशमेतीति (२०.८) तुल्यच्छन्दसः शंसनं वशगमनम्। अनुरूपादनन्तरमैन्द्रं जागतं। त्रिविष्टिधातु प्रतिमानमोजस इति केचित्। तदपि विचार्यम्।

८. अनर्वाणं वृषभं मन्द्रजिह्वमिति सूक्तं तृतीये ऽहनि भवति।

९. उदप्रुतो न वयो रक्षमाणा इति सूक्तं चतुर्थे ऽहनि भवति। स्तोत्रियानुरूपावत्र नोक्तौ उक्थ्येषु विकारवचनात्[१] (१२. १०. १)। प्राकृतौ वयमु त्वामपूर्व्य यो न इदमिदमिति (९. ३. २)। उष्णिक्षु ब्राह्मणाच्छंसिने प्रणयन्तीति चतुर्थे ऽहन्निति श्रुतेः। उष्णिक्ककुभस्तुल्याचरत्वात्। अनुरूपादनन्तरमैन्द्रं जागतं। यो नो दास आर्यो वा पुरुष्टुतेति। परि कुत्सादिहा गहीति परिवत्। अपरे जज्ञान एव व्यबाधत स्पृध इति वदन्ति।

१०. उदप्रुत इत्येव।

११. प्र मंहिष्ठाय यो अद्रिभिदव इष इत्येतेभ्यः।

१२. इन्द्राय साम गायतेति स्तोत्रियः। तन्वभि प्र गायतेत्यनुरूपः। अनुरूपादनन्तरमैन्द्रं जागतं विश्वे ह्यस्मै यजताय धृष्णव इति।

१३. यज्ञे दिवो नृषदने पृथिव्या इति सूक्तं पञ्चमे ऽहनि मध्यमे च च्छन्दोमे यज्ञे दिव इति।

---

१ M ०च विकार इति विकारवचन०।

१४. इमा नु कं भुवना सीषधामेति द्वैपदः स्तोत्रियः कार्यः।

१५. तृतीयमनुरूपमृक्त्रिः। इमा नु कमिति द्वैपदस्य तृचस्योत्तरे द्वे अया वाजं देवहितं सनेमेति तृतीयानुरूपस्य कार्या।

---

## १३.

१. अप प्राच इन्द्र विश्वाँ अमित्रानिति सूक्तं सुकीर्तिसंज्ञितं शस्त्वा पङ्क्तिशंसं वृषाकपिं शंसेत्। वृषाकपिर्नाम वि हि सोतोरसृक्षतेति सूक्तमृषिनाम्ना निर्दिश्यते। तं पङ्क्तिशंसं न्यूङ्खयति। कथमित्याह। मध्यमस्य पादस्य द्वितीयोत्तमयोरक्षरयोर्न्यूङ्खं विशेषयन्नाह।

२. वैराजः पूर्वस्मिन्निति। वैराज उक्तस्वरूपश्चतुर्थे ऽहनि। स पूर्वस्मिन् न्यूङ्खस्थाने द्वितीये ऽक्षर इत्यर्थः[1]। द्वितीयस्थाने[2] स्वरूपं उदाहरत्यन्यत्रापि व्यञ्जनान्ते सन्धिविशेषज्ञापनार्थं। मदद्वृषाकपो ३ ओ ३[3] अर्यः पुष्टेषु मत्सखेत्युत्तरस्मिन्निति पूर्वाभिप्रायम्।

३. प्रतिगृणाति यावत्तावत्प्रतीच्यते शंसिता। तदुभयमुदाहरति।

४. वैराजं द्वादशोकारं न्यूङ्खमुक्त्वा ततो मदेथ मदैवो ओ ओथा मोदैव एवं प्रतिगृणाति।

५. तदिति वाक्योपादाने। यत्र शाखान्तरीयमहः[4]सर्वाहन्यूङ्खपक्षे उपद्रुतसन्धियुक्तमक्षरं तस्मात् यथा चतुर्थमहस्तैत्तिरीयाणां

---

१ M om. द्वितीये ऽक्षर इत्यर्थः द्वितीये स्थाने। २ A द्वितीये। ३ C D कपो ओ ओ; sec. h. कपो ३ ओ ओ ३। ४ C M D सर्वाहन्यू A सर्वाहन्यूं।

सर्वन्यूङ्खम्। उपद्रुतो नाम सन्धिर्वाष्कलानां प्रसिद्धस्तस्योदाहरणं। न ऋते श्रान्तस्य सख्याय देवा इति। अभिनिहित उक्तः सन्धिः प्रातिशाख्ये। अथाभिनिहितः सन्धिरित्येवमादिना ग्रन्थेन (२. १३)। तस्योदाहरणं। परे ऽवर उभया अमित्रा इति संभवे प्रयोगः। प्रश्लिष्ट उक्तः। समानाक्षरे सस्थान (२. ६) इत्येवमादिना ग्रन्थेन प्रातिशाख्ये प्रतिपादितः। तस्योदाहरणं। माश्चेषसो ऽवीरता परि त्वेति। अथ क्षिप्रसन्धिः। समानाक्षरमन्तःस्थां (८) स्वामित्येवमादिना[1]। तस्योदाहरणं। स्वश्वासः सुचेतुनेति प्रगाथे[2]। सन्धिवचनं कृत्रिमस्वाभाविकयोरुभयोर्ग्रहणार्थं। न्यूङ्खनीयस्य पादस्यादाविति[3] न मध्ये। उपातीत्यातिक्रम्य तदुपद्रुतादिसन्धियुक्तं। द्वितीये प्रदर्शनार्थं द्वितीयवचनं। हर्यश्वाद्रिरित्युदाहरणं[4] ज्ञापकं। श्वा न्यो३ इति क्षिप्रस्योदाहरणम्। क स्यो इति स्वाभाविकस्य प्रदर्शनार्थम्[5]। कृत्रिमस्योदाहरणस्य द्वित्वं तु विशेषणार्थम्। ततस्तृतीये ऽप्यक्षरे सन्ध्ये एव[6] (?)। यस्येदमप्यमिति। यथा त्वं देव मघवञ्चः सुपूद इति वाष्कलिकायां[7] लक्षणमुक्तं[8] तस्य परिहरणार्थम् संनिपातसन्धियोगयोः सन्धिं[9] व्यूहेदिति ततो ऽत्र दकारे न्यूङ्खः स्यात्। शौनकेन

१ A ins यत्ता। २ A प्रगाथ॰। ३ C (orig.) D पादस्येत्यादाविति। ४ C D ॰हरण॰। ५ A ॰दर्शनार्थं। द्वित्वे तु मध्यमस्य पादस्य द्वितीयोत्तमयोरिति (१॰ ५. २॰) सिद्धे द्वितीये ऽक्षरे इति पुनर्द्वित्वं तु कृत्रिमस्य विशेषणार्थं। तेन वायस्य यस्येदमित्यादौ तृतीयस्यापि सन्धि कृत्वा द्वितीयत्व उपाय मत च(?) न्यूङ्खयेत् त्वं देवेत्यत्र तु लक्षणान्तरात् तुवं देव इति व्यूहाभाव इति दकार एव द्वितीयं इति फलितो ऽर्थे विशेषणार्थम्। ततस्तृतीये ऽप्यक्षरे सन्ध्ये एव न्यूङ्खयेत्। यस्येद॰। ६ C D सन्ध्येव। ७ A C D वाष्पविकायां M वाष्पिकायन् C in marg ॰ष्कलि॰। ८ C D लक्षणयुक्तस्य। ९ C D सवस्य व्यूहेदिति।

त्वविशेषेण व्यूहस्य उक्तत्वात् वकारे प्राप्नोति[1] तच्च न युक्तं क स्यो इत्युदाहृतत्वात्।

६. अथ यच्च स्यादिति ब्रुवन् क्वचिच्छाखान्तरे पञ्चालपद-वृत्त्याख्या विवृत्तिर्नास्तीति ज्ञापयति। तथा च नो इत्युदाहरण-पाठः। शाकलाभिप्रायेण विवृत्तिप्रत्यये विवृत्तेः प्रत्युदाहरणं[2] ये अस्या आचरणेषु दध्रिरे इत्यकारे न्यूङ्खः। ननु अकार एवात्र द्वितीयः तत्रैव न्यूङ्खेन भवितव्यं। किमर्थं सूत्रमेतत्। उच्यते। सूत्रारम्भादेवं[3] ज्ञायते। सन्ध्यक्षराणामपि न्यूङ्खने[4] पादे विकर्षो भवति। तेन एकार एव द्विधाकृते तृतीये भागे न्यूङ्खः प्राप्नोति। स मा भद्रिति विवृत्तिप्रत्यये न्यूङ्खयेदित्युक्तं। यत्रेदमयं हविः यदायुक्त त्मनेत्युभयोः पदयोः सन्धिं कृत्वा न्यूङ्खः स्या न्वो इत्युदा-हरणतुल्यत्वात्। मुष्को ओ इदस्या एजत इत्यकृत्वा[5] सन्धिं उप-द्रुतादिपरिसंख्यानात्। विश्वङ्ङिति सानुनासिकेन[6] प्रत्यादानं पराङ्गत्वात्[7]। प्र ओ ओ ओ ओ३ ओ ओ ओ ओ३ ओ ओ ओ ओ३ धयेति रेफस्वरभक्तिद्वकारेण पराङ्गपक्षे तु लोपः। विष्णो ओ ओ ओ३ इत्येवमादिषु तु लोप[8] एव पराङ्गत्वात्[9]।

७. तं वृषाकपिं शस्त्वा कुन्तापं शंसति। तमिति साहचर्यार्थम्।

---

१ C D इभिप्राप्नोति। २ A ॰प्रत्यये इत्ते यर्धुद॰ M परे उदा॰। ३ A ॰भादेत-मतयत्नारीनित्। ४ A न्यूने। ५ C D त्वा न सन्धिं। ६ A नानुनासिकेन। ७ C D M पदान्तत्वात्। ८ C D त्युलोप M फलो॰। ९ C D M पदान्तत्वात् ^(in marg.) प्रत्यादानं पदान्तत्वा देव प्र ओ ओ ओ३ धयेति कारः क्रमजः ङ्गाक्षरस्य ततो लोपः।

## १४. १५.

Without commentary.

## १६.

१. उक्तानां च तिस्रो नाराशंस्यः। ततस्तिस्रो रैभ्यः ततः कारव्यास्तिस्र एव। ततस्तिस्र इन्द्रगाथास्तिसृष्वानन्तरा भूतेच्छदः।

२.[1] शस्त्वा ततो ऽनन्तरं वक्ष्यमाणायतस्रः पारिक्षित्यस्तासां तृतीये पादे प्रथमचतुर्थयोरक्षरयोर्वैस्वर्यं कुर्यात्। उदात्तानुदात्तस्वरितप्रचितानां स्वरान्तरैः।

## १७.

१. एतास्ततस्रः पारिक्षित्यः।

२. वैस्वर्यानन्तरमेव प्रतिगरणातीत्यर्थः[2]।

३. पारिक्षितीः शस्त्वा तत एतशप्रलापो वक्ष्यमाणो विंशतिपदः। तमेतशप्रलापं निविच्छंसं शंसति।

## १८.

१. इत्येतशप्रलापः।

## १९.

१. षट्पदेयं तस्यां द्वाभ्यांद्वाभ्यामवसाय द्वाभ्यां प्रणौति।

२. त्रिष्टुभेषा।

---

१ M inserts भूतेच्छदः।  २ M ॰नन्तरं प्रगानं इत्यर्थः।

३. पङ्क्तिरियं द्वाभ्यामवसायद्वाभ्यामवसायैकेन प्रणौति।

४. इयं गायत्री।

५. इत्येतास्रतस्र आदित्या अङ्गिरसः।

६. एवाह जरितरोथा मोदैवेत्यवमाने तथा ह जरितरोथा मोदैवेति प्रणवे प्लुतान्ततान्येषां पाठात्[1]। अन्ये तु प्रकृतिदृष्टत्वात्[2] प्लुतं न पठन्ति।

---

## २०.

१. दिशां क्लृप्तीः शंसतीति श्रुतेः।

२. एताः पञ्च दिशां क्लृप्तयः संज्ञया।

---

## २१.

१. जनकल्पाः शंसतीति श्रुतेः। षळिति संदेहव्युदासार्थम्। अत इति क्रमार्थम्।

२. एता जनकल्पाख्याः।

३. चतस्रः प्रवल्हिकासंज्ञा अतस्त्रयश्च प्रतीराधा अनन्तरं[3] तस्मिविच्छंसं शंसेत्।

---

१ M प्लुतान्तस्यान्ये०। २ C प्रकृतिदृष्टे D प्रकृतिदष्टुनं (?)। ३ C D अनन्तरमनन्तरं।

## २२.

No commentary.[१]

## २३[२].

१. इति धतस्रः प्रवह्लिकाः।

२. एतास्तयः प्रतीराधाः।

३. अलाबूनि जरितरित्येवमादीनामेकैकमुक्त्वा नित्यं प्रतिगरं ओथा मोदैव इति ब्रूयात्। अध्वर्युः प्रतीचितव्यः।

४. इयमतीवादा। प्रवह्लिकाः प्रतीराधानतीवादामाहनस्या इति श्रुतौ संज्ञाकरणात्।

५. पत्नी वियस्समाना[३] जरितरोथामोदैवेत्यवमाने। होता विद्धी मे जरितरोथा मोदैवेति प्रणवे एवमस्यामतीवादायां प्रतिग्टणन्तं प्रतीचेत।

---

## २४.

१. अतीवादाया अनन्तरं वक्ष्यमाणा दशाहनस्यासंज्ञाः शंसति।

२. अष्टौ एताः। ता वा अष्टौ भवन्तीति श्रुतेः।

३. कष्टघरः कष्टयभुद्धातन। यद्व प्राचीरजगन्तेति द्वे इति श्रुतेः। एवमेताः पूर्वाभिरष्टभिः सह दश।

४. तासामाहनस्यानां तृतीये पादे न्यूङ्खः कर्तव्यो यथा दृधाक्रपावुक्तः।

---

१ vers 7 is left out in all MSS २ C (in marg.) कचिदयमेवादो कुर्वीयभिमेदममध्वर्युंप्रत्यपादा मदर्थमिव पाठ। ३ C यपस्मा०।

५. कपृन्नरः कपृथमुद्दधातनेत्येतस्या द्वितीयदशमयोरर्धर्चयोर्यथा वृषाकपौ तथा न्यूङ्खः कर्तव्यः।

६. इतरासामाहनस्यानां द्वितीये ऽर्धर्चे वैराजन्यूङ्खमुक्त्वा तृतीयस्य पादस्यान्ते आनुष्टुभेन न्यूङ्खेनावसाय तत उपरितनं पादं शंसेत्। चतुर्थः पादः संतानायोत्तरस्या ऋचः कर्तव्यः[१]।

७. अथ प्रतिगरे विप्रश्नतयः[२] त्रय इकारा ह्रस्वाश्चतुर्थः प्लुतः। एवमपरौ द्वौ चतुष्कौ। ततः किमयमिदमाहो ओ ओथा मोदैवेति प्रतिगृणाति।

## २५.

१. आहनस्यानन्तरं दधिक्राव्णो अकारिषमित्येकां शंसेत्। दाधिक्रीं शंसतीति (२०.८) श्रुतेः। एकाग्रहणं तृचाशङ्कानिरासार्थम्।

२. सुतासो मधुमत्तमा इति तृचं। प्र मंहिष्ठाय बृहते बृहद्रय इति तृचं। यो अद्रिभित् प्रथमजा ऋतावेति तृचं। अव द्रप्सो अंशुमतीमतिष्ठदिति तृचं। एतानि[३] पूर्वं च यदुक्तमिमा नु कमित्यारभ्य एतत्षष्ठं भवति।

३. त्वं न इन्द्रा भरेति स्तोत्रियः। तदिन्द्राव आ भरेत्यनुरूपः।

४. स्तोत्रियानुरूपादनन्तरं प्र मंहिष्ठाय बृहते बृहद्रय इत्येतदेव पञ्चर्चं सूक्तमैन्द्रं जागतं भवति। स विकल्पो ऽन्येन सह। प्र

---

१ C D यथोक्तमेव M यथाधर्मम्। २ C D om. अथ प्रतिगरे विप्रश्नतय। ३ M ins तृचानि।

मंहिष्ठाय बृहते बृहद्रय इति पञ्चचं दिस्तावद्यावन्मैत्रावरुणस्येति (३०.८) श्रुतिवचनमेवंविषयमेव।

५. यो अद्रिभित्प्रथमजा ऋतावेत्येका शस्यते। सा चमस्दात् सूक्तस्थाने गण्यते। चत्वारि सूक्तानि ब्राह्मणाच्छंसी शंसति प्रथमे छन्दोम इति श्रुतेः।

६. एन्द्र नो गधि प्रिय इति स्तोत्रियः। एदु मध्वो मदिन्तरमित्यनुरूपः। मध्यमे छन्दोमे छन्दोमाधिकारात्। अनुरूपादनन्तरं जागतं ऐन्द्रं। नाना हि त्वा हवमाना जना इम इति। अमात्रं त्वा धिषणा तित्विषे महीति मद्वत्। शेषं पुरस्तादुक्तं यस्तस्तम्भेत्यादि।

७. उष्णिक्षु ब्राह्मणाच्छंसिन इति श्रुतेः। प्राथम्यादैन्द्रमनम.[1]। एतो न्विन्द्रं स्तवाम सखाय इति स्तोत्रियः। सखाय आ शिषामहीत्यनुरूपः। उत्तमे छन्दोमे छन्दोमाधिकारात्। अनुरूपादनन्तरमैन्द्रं जागतं। अस्य अवो नद्यः सप्त बिभ्रतीत्यस्माकमंशमुदवा भरेभर इति निवृत्तिः। शेषमुक्तम्।

---

## २६.

१. इन्द्रं विश्वा अवीवृधन्निति स्तोत्रियः। इन्द्रमीशानमोजसेत्यनुरूपस्य प्रथमा। ये पूर्वे अस्यास्तवाहं शूरेत्येते[2] ते उत्तरे भवतो द्वितीये ऽहनि[3]। एवमयं तृचः। अग्निं दूतमित्याग्नेयत्वाद्-

---

[1] M ॰स्याव वै॰ C D om प्राथम्यादैन्द्रमनम । [2] C D M om. सखाय शूरेत्येते ।
[3] C D M om द्वितीये ऽहनि C (orig ) M भवत तच न ।

नन्तरस्य। अनुरूपादनन्तरमैन्द्रं जागतं। अभि त्वं मेषं पुरुहूत-मृग्मियमिति चयोदश। इत्वं यदिन्द्र शवसा वधीरहिमिति तृचहवत्।

२. नू मर्तो दयते सनिष्यन्नित्येतत्सूक्तमच्छावाकस्यैन्द्रादनन्तरं द्वितीयचतुर्थयोरह्नोः प्रथमोत्तमयोश्च च्छन्दोमयोः शस्यम्।

३. विष्णोर्नु कं वीर्याणि प्र वोचमित्येतत्सूक्तमच्छावाकस्यैन्द्रादनन्तरं तृतीयपञ्चमाष्टमेषु[1]।

४. उरुं यज्ञाय चक्रथुरु लोकमित्येतदृचं पर्यासात्पूर्वं भवति सर्वेष्वहःसु। सर्वग्रहणमितरेषु इत्यस्यानुवृत्तिर्मा भूत्[2]।

५. सं वां कर्मणा समिषा हिनोमीत्येष सर्वदाच्छावाकस्य पर्यासो भवति। अत्र सर्वदाग्रहणादुरुं [3]यज्ञायेत्यस्य क्वचिद्शंसनमपि। तथा च षष्ठे ऽहनि परो मात्रयेत्यत्र विनियुक्तस्य न पुनः-शंसनम्।

६. श्रुधी हवं तिरश्च्या इति स्तोत्रियः। आश्रुत्कर्ण श्रुधी हवमित्यनुरूपस्तृतीये ऽहनि। अनुरूपादनन्तरमैन्द्रं जागतं त्वं सु मेषं महया स्वर्विदमित्यष्टौ। द्यौश्चिदस्यामवाँ अहेः स्वनादिति पञ्च। हवनश्रुदं रथमिति रथवत्।

७. इममिन्द्र सुतं पिबेति स्तोत्रियः। पिबा सोमं मदाय कमित्यनुरूपः चतुर्थे ऽहनि। अनुरूपादनन्तरमैन्द्रं जागतं। अहं भुवं वसुनः पूर्व्यस्पतिरेकादश। एता विश्वा सवना तूतुमा कृष इति द्वे। चित्राय गा अजनयमिति जातवत्।

---

१ C D •ष्टकेषु। २ C D M om इत्यस्यानुवृत्ति। ३ A M मदा•।

८. असावि सोम इन्द्र त इति स्तोत्रियः। इममिन्द्र सुतं पिबेत्यनुरूपः पञ्चमे ऽहनि। अनुरूपादनन्तरमैन्द्रं जागतं। अहं दां गृणते पूर्व्यं वस्वित्येकादश। प्र वो महे मन्दमानायान्धस इति द्वे स्याहे गवामूधःस्विति पञ्चमत्।

९. प्र व इन्द्राय वृत्रहन्तमायेत्यारण्यकपठितः स्तोत्रियः। अनुरूपो विश्वतोदावन्विश्वतो न आ भरेति षष्ठे ऽहनि। षष्ठग्रहणमुपरिष्टादिह चोच्यमानमतिरिच्यते। तस्य प्रयोजनं[१] इन्द्रमीशानमोजसेति द्वितीय एवाहनि (२६. १)। अनारभ्यवादाशङ्का च न[२] कार्या। सर्वेष्वहःसु स्तोत्रियानुरूपविधानात्।

१०. एवयामरुतं[३] प्र वो मह इति यथा वृषाकपिमेव शस्त्वा ततो ऽनन्तरं। यथा वृषाकपिमिति मध्यमस्य पादस्तेत्येवमादतिदिश्यते (१३. १)।

११. इह मदो ओ ओ ओ३[४] ओ ओ ओ ओ३ ओ ओ ओ ओ३ मदे मधोर्मदस्य मदिरस्य मदेवो ओ ओया मोदैव एवं प्रतिगृणात्यध्वर्युः प्रतीचितव्यः।

१२. ऋतुर्जनित्री तस्या अपस्परीति सूक्तमेवयामरुतो ऽनन्तरं शंसेत्।

१३. तमस्य द्यावापृथिवी सचेतसेति सूक्तमृतुर्जनित्रीयानन्तरं शंसेत्।

---

१ A ins इन्द्र विश्वा। २ M तु। ३ A om. एवयामरुत।
४ C adds one आ more

१४. विष्णोर्नु कं वीर्याणि प्र वोचमिति सूक्तं तमस्य द्यावापृथिवी इति शस्त्रा।

१५. प्र वः पान्तमन्धसो धिया यत इति सूक्तं विष्णोर्नुकीयादनन्तरं शंसेत्।

१६. प्र वः पान्तमन्धस इत्येतत्सूक्तं छन्दोमेषु च शस्यते न केवलमच।

१७. प्र वः पान्तमन्धस इत्येतस्य तिस्रः शंसेत् प्रथमे छन्दोमे। तुशब्दो नियमार्थः। ततो न सूक्तं विकल्प्यते।

१८. उक्तं यज्ञायेत्यस्मात्तृचात्पूर्वं भवामित्रीयमुत्तरयोश्छन्दोमयोर्भवति। तत्रैव नोच्यते। षष्ठे ऽप्यहनि भवामित्रीयं कथं नाम स्यादिति। तच्च शाखान्तरादिकल्पेन प्रकरणपाठस्य[1] कारणाच्चेहापि सूचितमेव।

१९. नू मर्तो दयते सनिष्यन्निति सूक्तं। परो मात्रया तन्वा वृधानेति सूक्तं उत्तमामृचमुद्धृत्य शस्यते। उक्तं यज्ञायेत्यस्य सूक्तस्य[2] शंसनं कृत्वा न पुनरिति (26.5 Comm)। षष्ठ इत्युपसंहारात् विष्णोर्नु कमितीतरेष्वित्यस्य[3] विशेषेणाप्युक्तं[4] भवति। ननु[5] भवत्येव नू मर्तः परो मात्रयेति। [6]सत्यम्। चोदनाक्रमेणानुरूपादनन्तरं पुनर्मा[7] भूत्।

१ C D •पाठाकरणाच्चे•; C in marg स्य। M पाठाच्च। २ A सूक्तस्य परो मात्रयेत्यस्य सूक्तस्य। ३ A •रेष्वेत्यवि•, C रेष्वित्यस्य वि•। ४ A •प्युक्तं नागतं च। ५ A न ननु। ६ A मात्रयेति नू मर्तेस्तस्मिन् सति कुतो विष्णोर्नु कमिति चेत्। सत्यम्। ७ A पुनर्विष्णोर्नु कमिति मा भूत्। पर्यायस्तु भवति यदायच्चयात् अच्युतपर्यायो भोवाकरति श्रुतेश्च।

२०. यदिन्द्र चित्र मेहनेति स्तोत्रियः। यदिन्द्र ते चतस्र इति अनुरूपः। प्रथमे छन्दोमे। अनुरूपादनन्तरमैन्द्रं जागतं। तदस्मै नव्यमङ्गिरस्वदर्चतेत्यष्टौ। अजातशत्रुमजरा स्वर्वतीति पञ्च। ओजो-मिमानो महिमानमतिरदित्यावत्।

२१. पुरां भिन्दुर्युवा कविरिति स्तोत्रियः। अस्यैव यः पूर्वस्तृचः सो ऽनुरूपः। तृतीया तु प्रथमा। उत्तरयोराम्नायक्रमः। मध्यम इति मध्यमे छन्दोमे छन्दोमाधिकारात्। अनुरूपादन-न्तरमैन्द्रं जागतं। प्र ते महे विदथे शंसिषं हरी इति त्रयोदश। मह इति महद्वत्।

२२. गायन्ति त्वा गायत्रिण इति स्तोत्रियः। अनन्तर एवानुरूपः। उत्तमे छन्दोमे छन्दोमाधिकारात्। अनुरूपादन-न्तरमैन्द्रं जागतं। अर्चा दिवे बृहते शूष्यं वच इति नव। दिवश्चिदस्य वरिमा वि पप्रथ इति चतस्रः। दिव इति तदमुष्य लोकस्य रूपम्।

---

## २७.

१. उक्थ्येषु विकार इत्यनुवर्तते। द्वितीयप्रभृतीनां पञ्चानां पार्ष्ठिकानां छन्दोमानां चोपदिष्टान्युक्थानि। तान्येवैतेषामुपदि-श्यन्ते। चतुर्विंशे ऽहनि प्रथमात् छन्दोमाच्छस्त्रं सर्वेषां होत्रकाणां भवति। षट्त्रिंशतं मैत्रावरुणश्चतुर्विंशे शंसति चत्वारिंशतं ब्राह्म-

णाच्छंसी चतुश्चत्वारिंशतमच्छावाक इति (३०.१०) लिङ्गात्। शस्त्रग्रहणात्सकलानि स्तोत्रियानुरूपौ चानुवृत्तेः[1]। सर्वग्रहणमच्छावाकाधिकारनिवृत्त्यर्थम्।

२. यच्चतुर्णां द्वितीयप्रभृतीनां पार्ष्ठिकानां शस्त्रं तदवशिष्टं चतुर्णामाभिप्लविकानां द्वितीयप्रभृतीनाम्।

३. तृतीयप्रभृतिभ्यः पार्ष्ठिकेभ्यः स्वरसामसु यथासङ्ख्येन शस्त्रम्।

४. अभिजिदादीनि यदि परमतेनोक्थ्यसंस्थान्यहानि कुर्युस्तत्रश्चातुर्विंशिकानि महैन्द्रेभ्यः जागतेभ्यः सकलान्येवोक्थ्यानि कार्याणि। अन्यसंस्थेषूक्थ्यवत्तु न्यायकल्पितानि। नकाहिकान्युत्तरचैकाहिकवचनात्। न्यायकल्पे वृद्धसंप्रदायो लिख्यते। जागतविशेषपर्यासवैष्णवविपर्यासः[2]। वैष्णवे विपर्यासो[3] योऽग्निर्भीयोरुयज्ञायज्ञियानि[4] चतुःसूक्तान्येव। जागतपर्यासयोर्मध्ये मैत्रावरुणस्य मध्यमे द्वे जागते। ब्राह्मणाच्छंसिन उदप्रुतीयं योऽग्निर्भीयात् पूर्वं। अच्छावाकस्य न्यायक्लृप्तमेव महाव्रतीयमहरिति वा। अहर्वचनस्य कृत्स्नार्थस्य पुरुषमेधीयमध्यमे प्रतिषेधार्थ आरम्भः। स हि षोडशिसंस्थो दिवसः संज्ञापकज्ञापितत्वात्। अन्यसंस्थस्य न्यायकल्पनात्।

५. अथ यदीति वचनात् अत्रापि परमतमेव। ऐकाहिकान्येव न न्यायक्लृप्तानि। प्राप्तेषु पुनर्वचनात्।

---

१ C D ॰क्थ्यावनुवृत्तेः। २ A वैद्युतपर्यासः। ३ C विपर्यासो M विपर्ययेः। ४ C (orig) ॰रंयाज्ञाया D ॰यंयज्ञाय।

६. ततो ऽथ यदीत्यनुवर्तत एव। अथ यद्युत्तममाभिप्लविकमुक्थ्यं कुर्युः ततो द्वितीयस्याह्नः पार्ष्ठिकस्य यत् तृतीयसवनं होत्रकाणां होतुश्चोक्थं तदुत्तमस्याभिप्लविकस्य भवति। द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति।

इति शाङ्खायनश्रौतसूत्रभाष्ये द्वादशो ऽध्यायः समाप्तः।

# अथ त्रयोदशो ऽध्यायः ।

१.

१. अभिजिदादयो ऽग्निष्टोमाः स्वश्रुतावुक्तास्तेषां स्वश्रुतिं परित्यज्य किमर्थमुक्थान्युपदिष्टानीति । यत इदमाह । पूर्वकारिणश्छन्दोगा अध्वर्यवः । उत्तरकारिणो बह्वृचा इत्यर्थाद्गम्यते । न हि ग्रहग्रहणं[1] स्तोत्रस्तवनं च शस्त्रमन्तरेण परिसमाप्यते श्रुतेर्न्यायाच्च ।

२. एवं तावदुपदिष्टं युज्यते कर्तुं । यदि पुनस्ते छन्दोगाध्वर्यवो ऽस्मच्छ्रुतिकल्पानुपदिष्टं कुर्युस्ततः कथमिति । उक्त एव न्यायो यथास्तुतमनुशस्यं [2]कल्पशस्त्रैरप्युत्तरकारिभिर्भवितव्यं[3] । शाखान्तरविहिते तदा कल्प्यं[4] वा स्यात् । सूत्रारम्भयत्नात् । अत्रोदाहरणं । यदि त्रिकद्रुकीयास्वष्टाचत्वारिंशेन स्तुवता तदा रात्रिपरिशेषं च शंसति असंलोपाय ऐन्द्री त्रिष्टुब्भवति । याज्या पिबा सोमं महत इन्द्रियायेत्युत्तरा वा महती भवति । यानि चोत्तमस्य छान्दोमिकस्य[5] निष्केवल्यसूक्तानि तानि वा शंसेत् अष्टाचत्वारिंशस्तोमसामान्यात् । पूर्वैव तु याज्या । यद्योत्तममतिरिक्तं तदा कुर्युरिति भारद्वाजकानां । तत्राश्विनीभिः स्तोममतिशंसेदाश्विनीयाज्या जगत्यस्तु कर्तव्याः । सवनच्छन्दोगवशात् । तत्र त्रिषु षष्टिशतेषु या न प्रयुक्तास्ताः कार्याः । संभवे सकृत्क्रियान्याय्या । आ वां रथं

---

१ C D om. ग्रह । २ A कल्पशास्त्रै० । ३ D वधि० ।
४ A ०विहिते तदा कल्प्या वा स्यात् । ५ C D om. स्य ।

पुरुमायं मनोजुवमिति दश। अबोध्यग्निर्ज्म उदेति सूर्य इति चतस्रः। अभूदिदं वयुनमो षु भूषतेति पञ्च। कः स्विद्वृक्षो निष्ठितो मध्ये अर्णस इत्येका। अर्वाञ्चमद्य यय्यं नृवाहणमित्येका। एष स्य भानुरुदियर्ति युज्यत इति षट्। यदिन्द्रेण सरथं याथो अश्विनेत्येका। उभा हि दस्रा भिषजा मयोभुवेति पञ्च। यो वां परिज्मा सुवृदश्विना रथ इति पञ्च। भुज्युमंहसः पिपृथो निरश्विनेत्येका। एता वा याज्याः। अर्वाञ्चमद्य यय्यं नृवाहणमिति याज्या। उत स्या वां मधुमन्मक्षिकारपदिति वा महती।

३. इष्टीनां शस्त्रतादिनि[1] क्रियमाणे हविषां यागक्रमेण दैवते शब्दे सगुणनिर्गुणे उच्चैस्त्वांशुतायां च मन्द्रादिः शब्दस्य। एतेष्वध्वर्युमनुविदधीत। तदुक्तं कुर्यादात्मीयमुपदिष्टमप्युपेक्षेत। यजमानो ऽन्यो वाध्वर्युबलादस्य।

४. स्तोत्रियादिषु च्छन्दोगमनुविदधीत। उपदिष्टमप्यात्मीयं नाद्रियेत तत्प्राधान्यात्।

५. छन्दोगानुविधानस्यायमपवादः। अत्रोदाहरणं। सुरूपकृत्नुमूतये सुदुघामिव गोदुहे जुहूमसीर हविघवाइ हविघवाइ हविघवाइ[2]।

६. पूर्वणानादरे[3] प्राप्ते विशेषे ऽनुविधानं। ऋचां विपर्यासमनुविदध्यादेव।

७. येन तृचाणि हर्यश्व हंसीत्येवमादिको न्यूङ्खनीयः पादो

१ D शास्त्रानि कि॰ C in marg एतावच्चे। तेर्ष्णा परि।
२ A om इति हवाइ। ३ A ॰णादरे।

विकर्षेण पूर्येत। ततस्तस्य विकर्षस्य द्वितीयं भागं गणयित्वा न्यूङ्खनीयं संपादयेत्। तथा निष्टिग्र्यः पुत्रमा च्यावयोतय इति। संख्यानमात्रमेव विकर्षस्यात्र विधीयते। न तु विकृष्टप्रयोगः। ननु न्यूङ्खाधिकार एवास्य विधानं युक्तं। उच्यते। इह विधानस्यैतत्प्रयोजनं न्यूङ्खनीयपादव्यतिरेकेणान्यत्र न्यूङ्खने पादे छन्दोगैर्विकृष्टे तदनुविधानाधिकारात् विकर्षप्रयोगेणापि पादपूरणं यथा स्यादिति। अत्रोदाहरणं। मा नो अज्ञाता वृजना दुराध्य इति।

८. अयं च न्यूङ्खसंबन्धो विशेषः प्रसङ्गादिहोच्यते[१]। न्यूङ्खनीयात्स्वरादूर्ध्वं यानि समानि च्छन्दोमानानि तेनैव स्वरेण तुल्यं छन्दोमानं कुर्वन्ति। तदङ्गानीत्यर्थः। तानि लुप्येरन् अदर्शनं[२] तेषां कार्यमित्युक्तं भवति। व्यञ्जनग्रहणादनुस्वारस्य लोपो भवति। अस्योदाहरणं। चतुर्थे ऽहनि न्यूङ्खे प्रातरनुवाके तपूंष्यग्ने जुह्वा पतङ्गानिति।

---

२.

१. अथ यदि पशुरानीतो ऽनुपाकृतो म्रियेतलिंगभ्यस्तं कारयेदिति श्रुतेः। पशुलिंगभ्य एव तत्प्रकृतत्वात्।

२. यद्युपाकृतः पशुः कम्पते तत आज्याहुतिं होता जुहुयात् यस्माद्भीषावेपिष्ठा इत्येवमादिना मन्त्रेण।

३. उपाकृते वाश्यमाने यस्माद्भीषावाशिष्ठास्ततो न इत्येवमादिना मन्त्रेणाज्याहुतिं जुहुयात्।

---

१ A विशेषप्र॰। २ C in marg दर्शनाभावः।

४. पलायितुं प्रवृत्ते।

५. उपाकृते पशावुपविष्टे।

६. यस्माद्दीषा संज्ञप्ता ततो न इत्येवमादिना मन्त्रेणाज्याहुतिं जुहुयात्। उपाकृते स्वयंमृते पशौ।

७. यद्रूपः यद्देवत्यो पशुः पूर्वः। पशुशब्दे ऽनुवर्तमाने पुनः-पशुशब्दात् शाखापशुष्वपेतन्नैमित्तिकं न वेपमानाद्याज्याहुतयः।

८. उपाकृतस्य मृतस्यायं विनियोगो वचनात्।

---

३.

१. प्रवृत्तेषु प्रयाजेषु मृते पशौ तेनैव संस्थाप्यं कर्म। यदि त्वपेक्षयैवाप्रिया प्रीतः स्यात्तेनैव प्रचरेयुरिति सा स्थितिरिति श्रुतेः (१८. १२)।

२. अवदाने जिह्वादौ नष्टे अनुपलभ्यमाने। दुष्टे शिष्टभक्षणायोग्ये। विमथिते। उपलभ्यमान[१] एवाप्राप्ये भ्रंसिते वाज्यं प्रतिनिदध्यात्। इति प्रतिनिधेयनियमः।

३. पूर्वसूत्रस्यैकदेशस्यायमपवादः। हृदयस्य नाशे ऽन्यमालभेत। न तु दुष्टविमथितयोः। तत्र हि आज्यं प्रतिनिधानमेव। अन्यवचनात्[२] पूर्वस्योपलक्षणं तर्कु छागमिति। आलभेत प्रतिनिदध्यादित्यर्थः। प्रतिनिध्यधिकारादालभतिः[३] प्रतिनिध्यर्थः। अतो नाग्निप्रणयनादीनामावृत्तिः। वपापशुपुरोळाशयोर्न पुनःक्रिया

---

१ C ०लभ्यमाना।　　२ A श्चाम्यवचनात्।

३ A श्चालभति　C D ०भतिं।

ह्नतत्वात्[1]। सर्वेषामवदानानां परित्यागो भारद्वाजवचनात्। अग्निगोराहत्तिः संग्रासनत्वात् उपप्रैषस्य च तादर्थ्यात्। मनोतापर्यग्निकरणानामावृत्तिः। संनिपातात्।

४. यदीच्छेद्यजमानो ये मे पशुप्रध्वंसितारस्त त आर्तिं आप्नुयुरिति ततः कुविदङ्ग यवमन्तो यवं चिदित्यनेन मन्त्रेणाग्नीध्रीये आज्याहुतिं [2]जुहुयात्। होता च कुर्यादनादिष्टमिति परिभाषितत्वात्।

५. अष्टापद्यां गर्भिण्यामित्यर्थः। वशायामनूबन्ध्यायामिति विशिष्टचोदना। चोदितायामष्टापद्यां सत्यामेतद्गर्भस्य[3] त्वचो वपारूपं फलीकरणानां फालीकरणान्। फलीकरणा मध्यमास्तण्डुलास्ते हि स्वविष्टान्फलीकुर्वन्ति तेषां ये फालीकरणा अवकणा[4] इति प्रसिद्धास्तान्गर्भे च। इतिशब्दस्य स्वार्थे। शामित्रेऽग्नौ अपथितेतरस्य वपाप्रधानस्विष्टकृदादेराहुतिजातस्य वषट्कारेषु वपाद्युपजुहुयात्।

---

४.

१. अनपवृत्ते यूपकर्मणि स्वरुहोमे यदि यूपविरोहणं स्यात्तस्मार्द्रं बहुरूपमनेकवर्णं पशुमालभेत। पशुवत्सं कुर्यादित्यर्थः। अहर्गणेष्वन्ये ऽहनि स्वरुहोमस्तनोर्ध्वं स्वरुहोमकालाद्विरोहणे उत्तरे पशावन्वायातनम्।

---

[1] A सरह०।  [2] A ins होता।

[3] A स्मदग्रभेस्य, C स मदग्रभेस्य, D स मद्गर्भस्य।  [4] D अवकणा M om

२. वपायाः पुरोडाशस्य पशोः पुरोनुवाक्या यथाम्नातेन।

३. प्र सू मह्ने सुशरणाय मेधामिति वपाया याज्या। प्रथमभाजं यशसं वयोधामिति पुरोडाशस्य याज्या देव त्वष्टरिति पशोर्याज्या।

---

५.

१. क्रियमाणकर्मज्ञानगोचरे देवयजनान्तर्ये विद्यमानयोर्यजमानयोः सत्ययोरक्रोर्यः संनिपातः। एककालोपनिपातः पदार्थानां। तं संसव इत्याचक्षते याज्ञिकाः।

२. इतरापेक्षं[१] पूर्वत्वम्।

३. याः काश्चिदाहुतीः।

४. प्रातःसवनादावाज्याहुतीर्जुहोति संवेशायेत्येवमादिना मन्त्रेण।

५. माध्यन्दिने सवने एतावान्मन्त्रविकारः।

६. त्रिष्टुभे जगत्या इति नोक्तमदित्यार्थं ककारस्य।

७. इतरयज्ञकारिणमध्वर्युमितरो ऽध्वर्युर्हतमिच्छन्प्राजापत्याभिस्तिसृभिर्ऋग्भिः प्रातःसवने आज्याहुतीर्जुहुयात्। अस्माभिरो ऽपि वचःफलवचनात्[२]।

८. होतारं हतमिच्छन् होता माध्यन्दिने सवने प्राजापत्याभिस्तिसृभिराज्याहुतीर्जुहुयात्।

---

१ C D ॰पेक्षत।　　२ A वच पर्कं च वचनात्।

९. उद्गातारं मृतमिच्छन् तृतीयसवने उद्गाता प्राजापत्याभिस्तिसृभिराज्याहुतीर्जुहुयात् ।

१०. ब्रह्माणं मृतमिच्छन् प्राजापत्याभिस्तिसृभिस्तिस्र आज्याहुतीरनुसवनं ब्रह्मा जुहुयात् ।

११. यजमानं मृतमिच्छन् प्राजापत्याभिस्तिसृभिस्तिस्र आज्याहुतीरनुसवनं यजमानो जुहुयात् ।

१२. सर्वानितरानृत्विज इतरयज्ञस्थान् मृतानिच्छन्तः सयजमानकान् सर्वे सयजमानकाः[१] । प्राजापत्याभिस्तिसृभिस्तिस्र आज्याहुतीरनुसवनं जुहुयुः ।

१३. संसवे उभे बृहद्रथन्तरे कुर्यादिति वचनात् । संसवापन्नाः कुर्युः ।

१४. आभीकादीनां साम्नामुपदेशः । एतेषु सत्सु कयाशुभीयादीनि कथं नाम स्युरिति ।

१५. कया शुभा सवयसः सनीला इति मरुत्वतीयं भवति । प्रक्रान्तनिवृत्त्यर्थं मरुत्वतीयादीनां ग्रहणम् ।

१६. यो जात एव प्रथमो मनस्वानिति ।

१७. समाग्ने वर्च इति ।

१८. यदि प्रथमाः संस्थापयेयुरितरे तत उत्तरां संस्थां कुर्यात् । अग्निष्टोमे प्रक्रान्ते उक्थ्यादिकम् ।

---

१ A inserts between स and यजमानकाः the following passage: पूर्वं प्रातरनुवाकमिति संभवदोषनिरासार्थं । प्रथमारम्भका' सपमा यद्मात् पूर्वप्रातरनुवाकारम्भकाश्च प्रक्रान्तो विदितश्चेदिम देशात' प्रातरनुवाकारम्भ करिष्यन्तीति मत्वा तत पूर्वमेवसप्तामिति प्रातरनुवाकारम्भ कृत्वा समापनकालात् पूर्वमेव समापयेयु' ।

१९. तस्यैवाह्नो ऽभ्यासेन द्विरात्रकरणम्[1]। विशेषणानुपदेशादन्यः सोमः क्रेतव्यो ऽहरन्तरत्वात्। तथानुक्रयणाप्यायनप्रणयनानि सांनिपातिकानि कर्तव्यानि सद्यःक्रीवाण्यक्षतत्वात्। सोमस्यैव केवलस्य प्रणयनं। तथाग्नेयीरूप प्रियमिति चोद्धरेत्[2]। यथासवनविधि पश्चावाग्नीध्रप्रणयने[3] सोमो जिगाति गातुविदित्येवमादिनां ग्रावपरिधानीयायाः उद्धारः। तत्र चाग्नीध्रसमीप एव परिधानं प्राङ्मुखस्यार्थस्य परिसमाप्तत्वात्। एवमिहापि यावदर्थं कर्म। नैवाग्राहगणधर्मा भवति निमित्ते कर्मान्तरत्वात्। आशिषां निर्वचनमेव समाप्त्यपेक्षितत्वात्। समिष्टयजुरन्तं च पूर्वपूर्वमहरङ्गत्वात्[4]।

२०. संसवधर्मरहितं प्रकान्तशब्दाभिधायकमहरभ्यासेनाहरन्तरं मुख्यद्रव्याभावे प्रतिनिध्यनुष्ठेये संसवाहनि तस्याभ्यासः तादृशस्यैवाभ्यासो न युज्यते। प्रतिनिधौ तत्कालादिति न्यायात्। तेन पूतीकैरनुष्ठीयमाने संसवाहनि तस्याभ्यासः सोमेनैव न पूतिकैः।

२१. वाशब्दः पक्षान्तरे। तस्यामग्निष्टोमादिकायां संकल्पितायां संस्थायां भूयसीः संकल्पितयज्ञचोदिताभ्यो बहुतरा दक्षिणा दद्यात्।

२२. स्रवन्त्यो वा विहरन्ति। स्रवन्त्य आपो नदीतडागादिस्थाः संस्रवन्त्यो विहरन्ति। विच्छिन्दन्तीत्यर्थः। वायुर्वान्तरावती विहरन्त्याकाशश्चेति वा संस्थानं भावयेत्। चकारः सर्वत्र विद्विषाणानामित्यस्य प्रापणार्थः।

---

1 A C D M •रात्रंक•। 2 C M वे•। 3 A यथासवनविधि• M यथा स च विधिवप•, C D यथासवनवि•। 4 C पूर्वं D om. once पूर्वं।

६.

१. क्रीत इति विशेषणादक्रीतापहारे चोदितकालस्यातिनयनमपि[1]। सोममात्रे सर्वास्ववस्थासु करिष्यमाणप्रयोजने। अपहृत इत्यपशब्दाद्दृश्यमाने विनाप्यपहरणेन। अमेध्यसंसृष्टे[2] तु शक्ये अमेध्यापनयने शुद्धिः कार्या।

यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः।

तावन्मृद्वारि वादेयं सर्वासु द्रव्यशुद्धिषु॥ इति

सर्ववचनात्। अभिषुतेषु दुष्टे परित्यागो ऽपहृतवच्च कर्म। अन्यमाहृत्येत्यन्यस्याहरणमात्रम्। न क्रयः। अभिषुणुयादिति प्रागभिषवात्क्रीतापहृतस्य लब्धस्यापि तेन सह समुच्चयः। उभयोः संस्कृतत्वात्।

२. सोमाहरणशालिने मूल्यनिरपेक्षयापि सोमविक्रयिणे वा मूल्यार्थिने किंचिद्दद्यात्। न तु शास्त्रीयम्।

३. यजेतेति वाक्यशेषः। अभिषुणुयादिति यागचोदनानुवर्तत एव। अनुपलभ्यमाने सोमे पूतीकादीनभिषुत्य यजेत्[3]। पूतीका रोहिततृणाख्याणि[4]। अर्जुनो ऽपि तृणजातिरेव। तत्पुष्पाण्यपि शुक्लानि।

४. तृणानां पूर्वोक्तानां यागसाधनानामभिषुतानामयं संस्कारः। मतिदुह्वा चीरेण सद्योदुग्धेन प्रातःसवने श्रीणीयात्। मिश्रयेत्। शृतेन शृतातञ्चनेन माध्यन्दिने श्रीणीयात्। दध्ना तृतीयसवने।

---

[1] All MSS. कालाख्या॰ or कालाख्या॰। [2] A ॰सृष्टे तु शब्दे।
[3] A का यजेत। [4] M रोहिंत॰, C रोहिय॰(?) D रोहित॰।

५ एका स्तोगौर्देया। दक्षिणाग्रहणात् प्राकृतस्य दाक्षिणस्य निवृत्तिः। अवभृथादुदेत्य तदन्तं कृत्वा पुनर्दीक्षेत तादृशेनैव कल्पेन।

६ तत्र तस्मिन् पुनर्यज्ञे प्रकाम्यक्रतुदक्षिणा दद्यात्। पुनर्यज्ञो ह्येष तत्र क्रतुमायश्चित्तिरिति[१] शतपथश्रुते (४ ५ १० ६)। एकस्यामपि लाक्रतौ पूतीकादिभि कृतायामेतत्प्रायश्चित्तम्। अनेकयागाभ्यस्ते ह्येतदेकमपूर्वं सोमेन यजेतेति चोदनैक्यात्।

७ दुष्टे ऽपि कुर्यादिति वाक्यशेष।

८ सोमाभावे पूतीकादि यदुक्तं तत्र दाहेनाभावे। पञ्च गा दक्षिणा दद्यादित्यय विशेष। शेष पूर्ववत्।

---

७

१ प्रातःसवनात्सोमो ऽतिरिच्येत। ततो वक्ष्यमाण कर्म।

२ अस्ति सोमो अय सुत इति स्तोत्रिय। आम्नायक्रमेण उत्तरो ऽनुरूप। होतृग्रहणं पूर्वत्राधिकारविच्छेदात्।

३ वक्ष्यमाणाभिरन्याभिश्चैवदेवताभि[२] सह स्तोत्रियानुरूपाभ्यां स्तोमातिशंसनम्। ऐन्द्रावैष्णवीभिरिति सहार्थे तृतीया।

४ विष्णो कर्माणि पश्यतेति नैघण्टुके [३]ऐन्द्रावैष्णव्युक्ता। अन्यथाप्येव स्वरूपस्य परिग्रह। कथं नाम स्यादिति।

५ इन्द्रमिद्गाथिनो बृहत्सूक्तम्। अतो देवा अवन्तु न इति पञ्चच एता सूक्तासभवात्[४]।

---

१ A om क्रतु॰। २ C D ॰भिस्त्वदेवताभि। ३ A ins ऐन्द्र। ४ A सूक्तस॰।

६. अतो देवा अवन्तु न इत्येतस्य षळृचस्योत्तमया परिधाय विष्णोः कर्माणि पश्यतेत्येतया यजति।

---

## ८.

१. वक्ष्यमाणं कर्म। सोमाधिकारो होतृग्रहणं चानुवर्तते।

२. बण्महाँ असि सूर्येति स्तोत्रियः प्रगाथः। उत्तरो ऽनुरूपः।

३. त्रिष्टुबर्थं वचनम्। अस्येदु मातुः सवनेषु सद्य इत्येका। दिवो न तुभ्यमन्विन्द्र सत्रेत्येका। सं वां कर्मणा समिषा हिनोमीत्यष्टौ। उरुं यज्ञाय चक्रथुरु लोकमिति तिस्रः। सूक्तमेव गायत्र्यः। एताः क्वचित्। अर्यमा वरुणश्चेति पन्थामित्येका। वर्धान्यं विश्वे मरुतः सजोषाः। प्रोतये वरुणं मित्रमिन्द्रमित्येते विकल्पिते।

४. या विश्वासां जनितारा मतीनामिति यद्वा इन्द्राविष्णू तत्पनयाय्यं वामित्येतयोरन्यतरा[1]।

---

## ९.

१. यथा पूर्वयोः सवनयोः शस्त्रं तथेहापि द्रष्टव्यम्। आश्विनादतिरिक्त इति विशेषारम्भात्।

२. प्र तत्ते अद्य शिपिविष्ट नामेति स्तोत्रियः। प्र तद्विष्णुः स्तवते वीर्येणेत्यनुरूपः।

---

[1] C D ॰तमा।

३. जगत्यर्थ आरम्भः। प्र वः पान्तमन्धसो धियायत इति तिस्रः सूक्तं वा। आ यो विवाय सचथाय दैव्य इत्येका। सखे विष्णो वितरं वि क्रमस्वेत्येका। तमस्य विष्णुर्महिमानमोजसेत्येका सूक्तं वा। मरुल्लिङ्गान् परित्यजेदन्यांश्च।

४. लेपमित्या समरणं ग्रिमीवतोरिति।

---

## १०.

१. सोम इति वर्तत एव। आश्विनं शस्त्रं समाख्यानात्। तस्मात्सोमे ऽतिरिक्ते वक्ष्यमाणं शस्त्रम्।

२. अत्र स्तोत्रियानुरूपौ प्र तत्ते अद्य शिपिविष्ट प्र तद्विष्णुरिति तृतीयसवनत्वाविशेषात्[1]। स्तोमातिशंसनायाश्विन्यः[2] प्रचुरा एव।

३. अविशेषाद्धा काचित्।

४. पर्यायैरस्तुते यद्यादित्य उद्यात्ततः पञ्चभिः स्तोमैः पञ्चकैः स्तोमैर्होत्रकेभ्य इति तादर्थ्ये चतुर्थी। स्तुवते छन्दोगाः।

५. आदितो ऽवच्छेद इति न्यायात्[3] आद्ये द्वे ऋचौ। आगतानामिति नोक्तं त्रिष्टुप्परिहारार्थम्। ततो मां धुरिन्द्र नाम देवतेत्युद्धार्या।

६. कर्तव्या इति वाक्यशेषः। अशस्त्रापि चतुर्दशीं त्रयोदश्या परिधानं नित्या इति वचनात्।

---

१ C D ॰त्वाविशेषात्, A M ॰त्वाद्विशेषात्। २ A स्तोमातिशयेषु नायाश्वि॰।
३ A न्यायात्।

७. छन्दोगाः स्तुवते तथैव शस्त्रम्।

८. ऋचे वा प्रथमानां स्तोत्रिणां कृत्स्नंभवति। तथैव[1] शस्त्रम्।

९. कृत्स्नस्तवनशंसने कर्तव्ये।

१०. कृत्स्नस्तवनं शंसनं च।

११. आश्विनमथैतावत्परिमाणमभिप्लोपे कार्यम्।

शतानि त्रीणि पञ्चा च[2] व्युष्टायामाश्विनं भवेत्।
प्रत्यचाणामृचां नात्र बृहतीनां च संपदा ॥१॥
प्रतिपत्त्रिर्नवोपेत्यग्निमीळे पुरो नव।
ता राजाना चतस्रस्तु ज्ञेया अग्ने कदाचन ॥२॥
यो मर्त्येष्विति चैका स्यादगन्मेति तृचः स्मृतः।
प्रगाथो ऽग्ने विवस्वत्यादेष एव ककुप्स्मृतः ॥३॥
एते द्वे अयमग्निः यट् त्वामग्ने द्वे तृचं पुरु।
सप्त वेदिषदे ज्ञेयास्तृचे मेति[3] जनस्य च[4] ॥४॥
अग्निं तं दश तिस्रः कः पञ्च चोत सखासीति।
उषो भद्रेभिरा सूक्तमेकोषो रुरुचे तथा ॥५॥
प्रति स्तोमेभिरुषसं सूक्तमुषो यदद्य द्वे।
उषस्तिस्र एता उ चतस्रः स्युर्महे दश ॥६॥
अश्विना यज्वरीरिषस्तिस्र एका न यत्परः।
दूरादिहेव यद्विंशदुदीराथां दशाष्टौ च ॥७॥
आ मे हवं नवैका नः को वामद्य चतस्रस्तु।

---

१ A तथैव। २ A पञ्चा, C पञ्चा, M पञ्चानि। ३ C °स्तृचे मेति, A स्तृचमेति। ४ A जनस्य चरु।

एका भात्यग्निरुषसां नासत्याभ्यां सूक्तं तथा ॥८॥
का राधद्व मध्वस्तु सूक्ते सूक्ते युवोस्तथा।
तं युञ्जाथां नवा मे हवं नासत्या पञ्चपञ्च[1] ॥९॥
युवोरु पू रथं चित्रिदेका तिस्रः समानमु।
नव प्रति प्रियतमं तुल्यं सूर्यादि यत्परम् ॥१०॥
अकूभियेत (?)[2] ता ज्ञेया गायत्र्येकोष्णिहा परे[3]।
अनुष्टुबुष्णिहौ च द्वे बृहत्युष्णिगनुष्टुभः[4] ॥११॥

---

## ११.

१. सत्रे गणयज्ञे वा। यदि दीक्षितो म्रियेत कथं स्यादित्यत आह।

२. दग्ध्वा निर्मन्थ्येन ग्रामिजादा आहृतेन लौकिकेन वा शाखान्तरात्। अस्थीन्युपनह्य ततः पुत्रं[5] भ्रातरं वा दीक्षयित्वा सांनिपातिकैः संक्लृप्तं तेन सह यजेरन्।

३. पुत्रं भ्रातरं वा दीक्षयित्वा सह यजेरन्नित्येतन्निरासेन[6] कल्पान्तरमेतद्वाशब्दात्[7]। दग्ध्वास्थीन्युपनह्येत्येतदस्मिन्नपि पक्षे भवत्येव। अभिषुत्य सोमं राजानमगृहीत्वा ग्रहान्दक्षिणापरस्यां वेदिश्रोण्यां यजमानास्थिकुम्भं निधाय तस्मिन्देशे दक्षिणापरवेदिश्रोण्या देशे छन्दोगाः सार्पराज्ञीभिरायं गौरित्येताभिः परा-

---

१ C in marg मो मोमतादशाष्टौ चान्वयं स्तुतः। २ C D चकूभीय्यत। ३ A परो।
४ C D उष्णिक्त्रिष्टुभ। C in marg पिच देषानामित्यादि याज्यांसं प्रकृतिवदित्यर्थः।
५ C तत्। ६ C D M निरासेन। ७ C D M ॰द्वादशमब्दात्।

चीभिरनावृत्ताभिः स्तुवते। तत्र दक्षिणतो ब्रह्मा मैत्रावरुणश्चोपविश्य स्तोत्रप्रसवं कुर्याताम्।

४. मार्जालीयसंनिधौ वा अस्थिकुम्भं निधाय सार्पराज्ञीभिः पराचीभिः स्तुवते।

५. यजमानास्त्रिः प्रसव्यं प्रदक्षिणं मार्जालीयं परियन्ति भ्रमन्ति सव्यानूरूनपाघ्नानास्ताडयन्ति[१]। सव्यैरेव पाणिभिः।

६. आयं गौरिति स्तोत्रदेश[२] एव प्राचीनावीती दक्षिणामुख इति शाखान्तरात्। निगदेदिति नैकस्वर्यं न गणधर्मः।

७. असंमितमपरिमितं न्यूनमतिरिक्तं वा। न प्रमाणाद्भूयः। अपरिमितेष्टके[३] ऽग्नौ श्रुतिदर्शनादैवरे[४] च यथा नवम्यां यथेति(?)।

८. नियमतो ऽस्मिन्नहनि भवन्ति।

९. मरणात्संवत्सरे ऽस्थीनि याजयेयुरितरे यजमानाः। अस्थिमतो याजयेयुरिति केचिदाहुः।

१०. स्तोत्रेस्तोत्रे स्तूयमाने स्तोत्रसंनिधाने ऽस्थिकुम्भं निदध्युः।

११. तद्दीयान्।

---

## १२.

१. कलशो द्रोणकलशः। पूर्वपदलोपेन। तस्मिन् दीर्णे सोमनाशे सतीति[५] शाखान्तरात्। नैमित्तिकमुच्यते।

---

१ C D om साडयन्ति। २ A स्तोत्रशेष। ३ A अपरिमिते इष्टके। ४ D श्रुतिदर्शनादिति वैषरेव। यथा नवाभ्या यथेति। C like D, M °दर्शनादिवैषरेव। यथा नवाभ्यायथेति; in marg ये। ५ A om इति।

२. विधुं दद्राणं समने बहूनामित्यस्यां वषट्कारनिधनेन साम्ना[1] पृष्ठं ब्राह्मणाच्छंसिने स्तुवते छन्दोगाः। स एव स्तोत्रियः कार्यः।

३. महत्तन्नाम गुह्यं पुरुस्पृगिति। पूर्वो ऽनुरूपः शंसितव्यस्ततः स्तोत्रिय इति। संदेहो मा भूदिति तृचग्रहणम्।

४. ग्रावणीत्येकवचनमविवक्षितं। किं तत्र भवतीत्यत आह।

५. स्तवनाधीनत्वाच्छंसनस्येति सूत्रारम्भः।

६. अस्यैवोत्तरो ऽनुरूपो मह उग्राय तवसे सुवृक्तिमिति। यदि पुनः कलशदरणं ग्रावदरणं चोभे भवेतां ततः पूर्वदौर्बल्यं न्याय्यम्।

७. उभयोरपि ग्रावदरणकलशदरणयोः।

८. त्रिष्टुप् माध्यन्दिनत्वात्।

९. अभ्युदीत नाराशंसमन्तःपरिधि भस्मनि जुहुयात् हुताहुतस्येत्येवमादिना मन्त्रेण।

१०. शुष्के[2] नाराशंसे वक्ष्यमाणकं विध्यपराधे नैमित्तिकम्।

११. यं ग्रहं जघन्यं गृह्णीयात्तस्याल्पमर्धादूनमुपवाते नाराशंसे सोमचमसे ऽवनयेत्प्रजापतये स्वाहेत्यनेन मन्त्रेण।

१२. दुष्टं सोममविशेषात् नाराशंसमन्यं वा प्राजापत्याभिर्हिरण्यगर्भ इत्याद्याभिस्तसृभिरध्वर्युर्मन्त्राम्नेन [3]प्रतिमन्त्रमुत्तरार्धपूर्वार्धे उपरवाख्ये अवटे ऽवनयेत्।

१३. यस्याभिषुतस्य सोमस्योपरिष्टादववर्षणं भवति तस्य अन्यस्काले स्थयामानं मन्त्रमपनीय मन्त्रान्तरेणेन्दुरिन्द्रमित्यादिना

१ A साम्नो। २ A शुक्रे। ३ A inserts प्रतिमन्त्रानेन।

भक्षणं कुर्यात्। कृत्स्नं वेदमन्त्रमन्नाद्यमित्यादेश्च ध्यानं युगपत् कार्यम्।

१४. हिरण्यगर्भः समवर्तताग्र इत्यनेन मन्त्रेणाज्याहुतिं जुहु-याद्यस्य चमसो ऽभ्युपाहृतः।

१५. उत्तरग्रिवावच्छाद्येति[१] (?) छन्दोगानां। तेन वान्येन वावच्छाद्य सदसो निर्हरेदभ्युपाहृतं चमसम्[२]।

१६. य एते चिदभिश्रिष इत्यनेन हृचेन महावीराख्यं[३] भिन्नपात्रमनुमन्त्र्य तत आहुतीर्जुहुयात्। निर्हरेत्कर्मानादिष्टत्वात्[४]।

१७. त्रयस्त्रिंशत्तन्तव इत्येवमादिना देवानित्येवमन्तेन मन्त्रेणैकाम्। द्वितीयां यज्ञस्य दोहो विततं इत्यादिना स्वाहाकारान्तेन मन्त्रेणैते आज्याहुती होता जुहोति। चशब्दादध्वर्युश्च। सुगमास्त्वोक्ता।

---

१३.

१. यदीति वचनान्निमित्तं न स्वयमुत्पाद्यम्। सत्त्राय दीक्षितः सत्त्रार्थं दीक्षादिषु प्रवृत्तक्रियः। अथशब्दाद्दृढबुद्धिरपि कथंचिद्वा-भ्युत्तिष्ठेदपरिसमाप्तसत्त्रस्य तदनुष्ठानभङ्गो भवेत्। ततः सोममप-भज्य सोमं विभज्य राजानं प्रधानद्रव्यत्वेन सत्त्रिभिरङ्गीकृतं क्रीत-मक्रीतं वा विश्वजितातिरात्रेण यजेत सर्वस्तोमेन सर्वपृष्ठेन सर्व-वेदसदक्षिणेनेति विशिष्टो विश्वजिद्यागो नैमित्तिकः। सत्त्राङ्गं

१ A मि चा॰। २ C निर्हरेद्यस्याऽभ्युपाहृतं। D निर्हरेद्यस्या चभ्युपा॰। ३ C D महावीरपात्रं भिन्नम्। ४ A महत्वात्, M ॰त्कर्म नोपदि॰।

चोच्यते। अनिष्टप्रथमयज्ञस्याहिताग्नेः सत्त्रिणः सामुत्थाने आग्नेयीष्टिः सर्ववेदसदक्षिणा भवति। अनाहिताग्नेराग्नेयश्चरुरित्येवं[1] केचिदाहुः।

२. संकल्प्यापि सत्त्रमकुर्वन् विश्वजितातिरात्रेण यजेत। वाशब्दो विकल्पार्थः॥

[2]उक्तो द्वादशाहः सहीनस्तद्धर्मातिदेशश्च केषांचिदह्नाम्। तदनन्तरं ते चेदनुपदिष्टं कुर्युरित्यनेनोपदिष्टानुपदिष्टप्रयोगेन नैमित्तिकान्युपदिष्टानि। तत्र द्वादशाहो ऽहर्गणः। अहर्गणानां च कानिचित्सत्त्राणि केचिदहीनाः। अस्ति तेषु धर्मभेदः। तत्र द्वादशाह उभयात्मा समाने ऽप्यहर्गणत्वे। तस्यायनेन विशेषेण सत्त्रत्वं। सत्त्रसंज्ञस्तु यो ऽहर्गणस्तस्य धर्मविशेषा वक्तव्यास्तानाह।

---

## १४.

१. गृहपतिषष्ठदशा होत्रादयो यथोपदिष्टाः[3] सत्त्रार्थमासीरन्। य ऋत्विजस्ते यजमाना गृहपतिसप्तदशाः[4] सत्त्रमासीरन्निति शाखान्तरश्रुतेः। आहिताग्नय इष्टप्रथमयज्ञा[5] दीक्षिता इत्येतदेषामेव विशेषणत्रयम्।

२. सत्त्रे गृहपतिरोधो[6] नास्ति। यथा साह्नं याजमानं च सर्वोदमिति ब्राह्मणः। अशक्ये तु यौगपद्ये सति आर्त्विज्यस्यानु-

---

१ C D अनाहिताग्नेराहिताग्नेश्चरुरि (चरुरि॰ ?)  २ C D om. the passage beg with उक्तो and ending with स्तानाह। ३ C D यथोदिष्टा। ४ A यजमान। ५ A ins समग्रेऽसतः। ६ A गृहपदीतिरो॰, M गृहपतिः रो॰।

रोधेन क्रिया। यथा होतुरिलोपह्वानं मयीदमिति जपस्य। तत्रार्त्विज्यमिलोपह्वानं कृत्वा तस्यानुरोधेन[1] पश्चान्मयीदमिति जपः।

३. दीक्षणानुपूर्व्यं दीक्षणाक्रमः। तेषां गृहपतिः प्रथमो दीक्षेत[2] इत्येवमादिकः। तेनानुपूर्व्येण सर्वेषां यजमानानामिदमिति याजमानमार्षेयाभिव्याहरणादि।

४. परार्थानि क्रत्वर्थान्यौदुम्बरीसंमानादीनि[3] तानि मुख्यः प्रधानः कुर्यात्। स च एकः कुर्यात्। तथा च कात्यायनः[4] परार्थेष्वेकः[5] कृतत्वादिति (१२. १. १४)।

५. केचिच्चाराशंसकल्पाः केचित्तनूनपात्कल्पाः केचित्तूभयकल्पाः[6] मन्त्रकल्पे द्वैधे[7] भूयसां यः कल्पस्तत्साधर्म्यमितरेषाम्।

६. कृतेषु दाक्षिणेष्विति सत्यसति वा[8] दक्षिणाहोमे कालावधिरयं[9]। दक्षिणापथेन दक्षिणामार्गेण। ते शालामदसो दक्षिणेनाग्नीध्रतीर्थेन कृष्णाजिनानि धून्वन्तश्चालयन्तो दीक्षिताः प्रतिदिनमेवं [10]जपेयुरिदमहमित्यादिकं मन्त्रम्।

७. उत्थाय परिसमाप्य सत्त्रमग्निष्टोमसंस्थः महस्रदक्षिणः पृष्ठशमनीयाख्यः कार्यः। सत्त्रिणः सत्त्रादुदवसाय पृष्ठशमनीयेन यजेरन्निति शाखान्तरश्रुतेः। स काममेव पृष्ठशमनीयेन यजेत कामं न यजेत (१८. २४. २०) यदि तु यजेतैत एवास्य सत्त्रिण ऋत्विजः स्युरित्यारण्यके वचनात् पृथक्पृथक् पृष्ठशमनीय इत्येवावसीयते।

---

१ C D तस्यानुपरोधेन। २ A प्रथम दीक्षित। ३ C D M समादीनि।
४ C D M कात्यायनः। A कथ्यायन। ५ M एव instead of एक।
६ C D M om उभयकल्पा, C (in marg) ०भयास्तु। ७ A मन्त्रकल्पद्वैध०।
८ A om वसति। ९ C D M ०विधिरिय। १० A एव नमन्तो गच्छेयुरिद०।

८. साधारणं सत्रिणामभिन्नं पृष्ठशमनीयमेके मन्यन्ते। एकशब्दः श्रुत्यनुकरणः।

९. पृष्ठशमनीय प्रकृतः। स केषु नित्यः केष्वनित्य इति तद्विवेकायाह। रात्रिसत्त्रेषु नित्यः पृष्ठशमनीयो ऽन्येष्वनित्यः। स काममेव पृष्ठशमनीयेन यजेत कामं न यजेतेति दर्शनात् आह। कीदृशानि तानि रात्रिसत्त्राण्युच्यन्ते। द्वादशाहप्रभृतीनि। कियत्पर्यन्तानि। आ चत्वारिंशद्रात्रात्। अभिविधावयमाकारः। एकोत्तराणि एकैकवृद्ध्या द्वादशरात्र इत्येवंप्रकाराणि। एकान्नपञ्चाशद्रात्र एकषष्टिरात्र इति रात्रिसत्त्रेष्वेवानुप्रवेशात् रात्रिसत्त्राख्यां लभेते। रात्रिसत्त्राणीति शालानुष्ठेयानि[1]। धर्मविशेषश्च। छान्दोग्ये संज्ञाप्रयोजनम्।

१०. व्याख्यातो द्वादशाहः प्रकृतिः सत्राहीनानामित्युक्तः। स यैरहोभिर्विवर्धते तानि त्रयोदशरात्रादिसंपत्त्यर्थमुदाहरिष्यामः। पृष्ठशमनीयप्रसङ्गेन रात्रिसत्त्राण्युपदिदिक्षोराचार्यस्य प्रतिज्ञा।

---

## १५.

१. एकाहार्थे महाव्रतस्येत्येवमादि यदारण्यकोक्तं तदाहरन्ति कुर्वन्ति सत्रिणः।

२. वाशब्दो विकल्पार्थः। सर्वस्तोमं वातिरात्रमेकाहार्थे आहरेयुः। सर्वस्तोमो ऽतिरात्र उत्तममहरित्यश्वमेधे यो वक्ष्यते तमाहरेयुः।

---

१ A °ष्ठेयानि C (orig) D चनुष्ठेयानीति।

३. सर्वस्तोमस्यातिरात्रस्य स्थानं शाखान्तरात्।

४. द्व्यहार्थे गोआयुषी आहरेयुः। के पुनस्ते गोआयुषी इत्यत आह।

५. गोआयुषी इत्येतस्यां चोदनायां द्वितीयं तृतीयं चाभिप्लविके द्वे अहनी प्रत्येतव्ये।

६. त्र्यहेणापूर्यमाणे त्रीणि प्रथमान्याभिप्लविकान्युपेयुः।

७. त्रीणि पूर्वाण्याभिप्लविकानि महाव्रतं चतुर्थमिति चतुरहार्थे।

८. आभिप्लविकानि पूर्वाणि पञ्चाहार्थे पञ्चावपेयुः।

९. अभिप्लव इति नोक्तं लाघवाभिप्रायेण।

१०. षलाभिप्लविकानि महाव्रतसप्तमानि। सप्ताहेनापूर्यमाणे सप्ताहरेयुः।

११. एतेन न्यायेन। कतमेन। यद्यदल्पसङ्ख्यं तत्तत्पूर्वं कुर्वाणास्तां सङ्ख्यां पूरयन्ति यावा सङ्ख्या पूरयितव्या। यथा त्रयोविंशतिरात्रे पञ्चाहः षलहो द्वादशाह इति।

१२. एतेषां गोआयुषीप्रभृतीनां प्रायणीयं पृष्ठ्यं चान्तरेण स्थानमनुष्ठानक्रमः।

१३. एकाहार्थे महाव्रतमाहरन्तीत्युक्तं। तस्यायं स्थाननियमः। तुशब्दो ऽवधारणार्थः।

## १९.

१. अथशब्दो विशेषाधिकारार्थः । एतानि वक्ष्यमाणान्यहानि यथोक्तां न्यायक्लृप्तिमपवदन्ति ।

२. विंशतिरात्राख्ये अभिप्लवः पलहः अभिजिद्विश्वजिच्च । एतान्यागन्तूनि प्राक् पृष्ठ्यात्ततो दशरात्रः ।

३. अभिप्लवः पलहस्ततो ऽतिरात्रस्ततो द्वावभिप्लवौ प्रथमद्वितीयौ । अमुष्मु त्य इति वैश्वदेवं (११.८.७) षष्ठस्याह्नो द्वितीये ऽभिप्लव इत्यनेन द्वितीयेन विशेषेण द्वितीयः । एवमेतान्यूनविंशतिरहानि[1] प्रायणीयोदयनीयसहितानि एकविंशतिरात्रः पूर्वः ।

४. पृष्ठ्यः पलहः स्वरसामानस्त्रयस्ततो विषुवान् तत आवृत्ताः स्वरसामानः ततस्त्रयस्त्रिंशारम्भण इति । त्रयस्त्रिंशमारम्भणं प्रथमं[2] । यज्ञशेषाणि पञ्च । तेनैव प्रातिलोम्यक्रमेण स एवमुच्यते त्रयस्त्रिंशारम्भणः पृष्ठ्य इति । अयं प्रायणीयोदयनीयाभ्यां सहैकविंशतिरात्र उत्तरो ऽभिधीयते । अहो ऽभिप्लवो महाव्रतं चेति द्वादशाहसहितानीति द्वाविंशतिरात्रे तु क्लृप्तिः । पञ्चाहो ऽभिप्लवश्च द्वादशाहसहितानीति त्रयोविंशतिरात्रे तु क्लृप्तिः ।

५. इति चतुर्विंशतिरात्रः संसदामयनमित्याचक्षते । इति सूत्रच्छेदः । खण्डशस्त्वुच्यते । पृष्ठ्यस्य ये स्तोमास्त्रिवृदादयस्ते स्तोमा

---

[1] C D एवमेतानि न्यून॰ ।　　[2] A त्रयस्त्रिंशारम्भण इति त्रयप्रथम ।

यस्य सो ऽयं पृष्ठ्यस्तोमः षलहः। स्तोमा एव न तु तानि पृष्ठानि। परिसंख्यानात्। तेनायं न्यायतो बृहद्रथन्तरपृष्ठो भवति।

६. षलहानन्तरं त्रयस्त्रिंशस्तोमकमहः षष्ठं पार्ष्ठिकमनिरुक्तताविशिष्टं कार्यम्। अहरतो न तद्विधीयते न षष्ठस्याह्नो गुणविधिः। अनिरुक्तता च पूर्वकारिवशात् कार्या। एवं स्वरूपाभिधानं। तदनिरुक्तं भवतीत्यभितष्टीयं[१] देवतायाः परोक्षाभिधानेन स्वश्रुतौ (२८. ७) प्रदर्शितम्।

७. तस्य त्रयस्त्रिंशस्याह्नः अनिरुक्तस्य कण्वरथन्तरं माध्यन्दिने छन्दोगाः कुर्वन्ति। तत्र योन्यनुशंसनं कार्यम्।

८. वचनाच्छेषं पूर्वेण तुल्यं। न तु[२] कण्वरथन्तरं तस्येति पूर्वेच यत्नात्।

९. ततस्त्रयस्त्रिंशानिरुक्तादनन्तरं त्रिणवस्तोमकमहः।

१०. एकविंशस्तोमं वैराजपृष्ठं चतुर्थमिति। तदेव केनचिदभेदेन[३] द्वित्वयुक्तम्।

११. एकविंशयोः पुरस्ताच्चोपरिष्टाच्च।

१२. यथोक्तं पूर्वेच तथा त्रिणवादनन्तरमेतावान्विशेषः।

१३. [४]पूर्वेच पृष्ठ्यस्तोमात्षलहादुत्तरमिह तु त्रयस्त्रिंशानिरुक्तादुत्तरमेतावान्विशेषः।

---

१ C (orig) D अभितष्ठीयं C (sec h.) अभितष्टीय। २ C D M नतू instead of तु A यत्नात् C M ॰यत्नात्। ३ C D M अभेदद्वित्वयुक्तं। ४ A om. Sūtra 13 and gives the words from पूर्वेच to विशिष्यते as

१४. चयस्त्रिंशारम्भण इत्येतावता विशेषेण पूर्वस्मादयं विशिष्यते।

१५. ततः षलहानन्तरं चिवृत्स्तोमकमहर्दशरात्रिकमनिरुक्तं भवति।

१६. अनिरुक्तात्रिवृत्स्तोमकादनन्तरो ज्योतिष्टोमो ऽग्निष्टोमः कार्यः।

१७. इत्येतेनाहर्योगेनायं चतुर्विंशतिरात्रः संसदामयनाख्यः। प्राक् चयस्त्रिंशद्रात्रादहर्योगः परिभाषानुसारेणोच्यते। द्विरभिप्लवो महाव्रत इत्यागन्तूनि पञ्चविंशतिरात्रे गोआयुषी अभिप्लवो द्विरित्यागन्तूनि षड्विंशतिरात्रे। त्र्यहो द्व्यभिप्लव इत्यागन्तूनि सप्तविंशतिरात्रे[1]। त्र्यहो द्वावभिप्लवौ महाव्रतं चेत्यागन्तूनि अष्टाविंशतिरात्रे[2]। पञ्चाहो द्वावभिप्लवावित्यागन्तून्येकान्नत्रिंशद्रात्रे[3]। त्रिरभिप्लवा इत्यागन्तूनि त्रिंशद्रात्रे। त्रिरभिप्लवो महाव्रतं चागन्तून्येकत्रिंशद्रात्रे। गोआयुषी त्र्यभिप्लवा इत्यागन्तूनि द्वात्रिंशद्रात्रे।

## १७.

१. "आभिप्लविकान्यहानि पञ्च त्रिरावृत्तान्युपेत्य ततो विश्वजिदतिरात्र उपेय."[4]। तत एष एवाभिप्लविकः पञ्चाहस्ततो दशरात्र

१ A पञ्चविंशति॰। २ A सप्तविंशरात्रे ष्याष्टाविंशति॰। ३ A एकविंशद्रात्रे। ४ A ins. इति। ५ CD उपेयुः।

इत्येतेनाहर्योगेन त्रयस्त्रिंशद्रात्राख्यो ऽतिरात्रसत्त्रविशेषः[1]। प्राक् सप्तत्रिंशद्रात्रादहर्योग उच्यते। पारिभाषिक एव। त्रीण्यभिप्लविकानि त्र्यस्त्राभिप्लवा महाव्रतं चेत्यागन्तूनि चतुस्त्रिंशद्रात्रे। पञ्चाहस्त्राभिप्लवास्त्रय इत्यागन्तूनि पञ्चत्रिंशद्रात्रे। चत्वारो ऽभिप्लवा आगन्तुत्वेन षट्त्रिंशद्रात्रे।

२. चतुर्विंशमहस्ततो ऽभिप्लवः षलहस्ततः पृष्ठ्यः षलहस्ततो नवाहो नवरात्रो यो वक्ष्यते। अभिजित्स्वरसामानो विषुवानावृत्ताः स्वरसामानो विश्वजिच्चेति। अत्रापि तेष्वेवाभीवर्तान्वायतनं संवत्सरसंमित इति वचनात्। ततो गोआयुषी। तदनन्तरो दशरात्रस्ततो महाव्रतमित्येष सप्तत्रिंशद्रात्रः। त्रयाणामहर्योग उच्यते। परिभाषान्यायेन गोआयुषी चतुरावृत्तो ऽभिप्लव इत्यागन्तून्यष्टत्रिंशद्रात्रे। अहश्चतुरावृत्तो ऽभिप्लव इत्यागन्तून्येकान्नचत्वारिंशद्रात्रे[2]। अहश्चतुरावृत्तो ऽभिप्लवो महाव्रतं चेत्यागन्तूनि चत्वारिंशद्रात्रे।

३. संवत्सरसंमित इति सूत्रान्तः। खण्डशस्तु व्याख्या क्रियते। चतुर्विंशाख्यमहस्ततस्त्रयो ऽभिप्लवास्ततो नवरात्रो वक्ष्यमाणकः।

४. अभिजिदादयो यथादिष्टक्रमसमुचिता नव।

५. संज्ञाकरणं शास्त्रसंव्यवहारार्थम्। अभितो[3] नवरात्रं (१३. १८. २) चेत्येवमादयो ऽपदेशाः।

६. अभिप्लवो नवरात्रानन्तरम्। गोआयुषी अभिप्लवानन्तरम्। दशरात्रो गोआयुर्भ्यामनन्तरं महाव्रतं दशरात्रानन्तरम्।

---

१ A रात्रिसत्त्रवि॰ C D ऽतिरात्रिसत्त्रवि॰ M ऽतिरात्रविशेषः।
२ A चष्टत्रिंशद्रात्रे। ३ A C D चभिजितो।

७. चतुर्विंशं त्र्यो ऽभिप्लवा इत्यारभ्य य उक्तो ऽसावेकान्न-पञ्चाशद्रात्रो ज्ञेयः ।

८. संवत्सरसत्त्रेण तुल्यतामापादितः । संवत्सरसत्त्रधर्मैर्युक्त इत्यर्थः । तत्र उच्यन्ते दीक्षासङ्ख्याकालविशेषाः । अबुभमु त्य इत्येवमादयश्च वैश्वदेवविशेषा अनारभ्यवादसिद्धाः[१] । अभीवर्तान्वायातनं विषुवति भद्मषामाभिप्लवत्वान्वहमावृत्तिः । यज्ञागाराणां दाहविकल्पः[२] । अनूबन्ध्यावपान्ते (का० १३. ४. ६) वपनं । पूर्णाहुत्युदवसानीययोर्भेदेन करणम् । पयस्यायास्य । माशिके यच्च[३] पृष्ठशमनीयो विकल्पेन रात्रिसत्त्रेषु नित्यः । तेषु नित्यो द्वादशाह (१३. १४. ९) इति । यत्र तु कृतानग्नीन्विभजन्ति । अन्येषु तु सत्त्रेषु प्रागग्निहोत्राहुतेरग्निविभागः । एवमाद्यर्थं संवत्सरसंमित इत्युक्तम् ।

---

## १८.

१. अथशब्दाद्वक्ष्यमाणको विशेषः । शेषं पूर्ववत् समानम् । एकषष्टिरात्रे विधिं वक्ष्याम इति वाक्यशेषः ।

२. अभिजित्प्रभृति नवरात्रमभितः पृष्ठ्यौ कर्तव्यौ ।

३. तयोः पृष्ठ्ययोरावृत्तस्त्रयस्त्रिंशादारभ्य प्रतिलोम उत्तरः ।

४. वक्ष्यमाणः शतरात्रो ऽनूद्यमानो न्यायक्लृप्तः । किमस्यानु-

---

१ C D ॰माद्यासिद्धा । २ C दाहदाह । ३ A ॰के यास्य ।

वादस्य प्रयोजनं। संवत्सरसंमितधर्मप्राप्तिः[१]। एतस्माच्च धर्मभेदाच्चत्वारिंशद्रात्राद्रात्रिसत्त्राणीत्युक्तम्[२]।

५. प्रथम आभिप्लविकस्त्र्यहः पुनश्चतुर्दशाभिप्लवास्ततो दशरात्रस्तदनन्तरं महाव्रतमित्येवं प्राप्तः शतरात्रः।

---

१९.

१. गवामयनं नाम वक्ष्यमाणकं संवत्सरसत्त्रम्। तस्य सप्तदश दीक्षाः कर्तव्याः।

२. द्वादश वा गवामयनस्य दीक्षा भवन्ति। तुल्यकल्पार्थं पृथग्योगकरणम्।

३. तैषः पौषः। तस्य यामावास्या तां स्तोका मार्गशिरसीऽमावास्यामाहुः। कृष्णपक्षादिमासाङ्गीकरणेन सा तैषस्य भवति। ज्योतिषामयने ऽपि क्वचित्कृष्णपक्षादिमासाङ्गीकरणमस्ति। स्वश्रुतिलिङ्गानि च विद्यन्ते। अतस्तस्या अमावास्याया उपरिष्टादेकाहेन ते दीक्षेरन् द्वितीयायामित्यभिप्रायः। माघस्य वेति विकल्पः कृष्णपक्षादिमासाङ्गीकरणेनैव[३]।

४. तेषां दीक्षितानां माघस्यामावास्यायामुपवसथः पौषशुक्लपक्षप्रवृत्तानाम्। फाल्गुनस्य वा माघशुक्लप्रवृत्तानां। एवमेव श्रुतत्वात्। नियमार्थं चैतद्वचनं। प्रतिपदि स्यात्तदमावास्याविशेषात्।

---

१ A संवत्सरधर्मसंमितप्राप्ति। २ A om. द्रात्रा।
३ C D •कारेणैव।

ततो अवमरात्रे[1] ऽल्पावशिष्टे पूर्वं पातयित्वा दीक्षारम्भः। दुहेयं(?) पर्व चेत्यात्[2] इति सांवत्सराः।

५. यदि द्वादश दीक्षा अङ्गीकुर्वन्ति ततः पौर्णमास्याः पुरस्ताच्चतुरहे दीक्षेरन्नेकादश्यां दशम्यां वावमरात्रे सति।

६. तेषामेकादश्यां दशम्यां वावमरात्रपक्षे दीक्षां प्रारभमाणानां। ज्यौत्स्नस्य शुक्लपक्षस्येत्यर्थः। पञ्चम्यां प्रसवः सुत्याकालः।

७. अहर्योगक्रमार्थो ऽनुवादः।

८. तदनन्तरम्। चशब्दः समुच्चयार्थः। तेन तथा युक्तान्पञ्च मासानुपेत्येत्यत्रानयोरङ्गोर्ग्रहणं[3] न भवति।

९. पृष्ठ्यः पञ्चमो येषां त इमे पृष्ठ्यपञ्चमा अभिप्लवाः। तेन-तेन क्रमेण सत्त्रिण उपयन्ति।

१०. प्रायणीयादारभ्य एवमहर्युक्तः प्रथमो मासः। स इति विशेषणात्तेतरे।

११. तथा युक्तान्। कथं युक्तान्। पृष्ठ्यपञ्चमाभिप्लवयुक्तान् पञ्च मासान् प्रथमं द्वितीयं तृतीयं चतुर्थं पञ्चममिति। एतानुपेत्य कृत्वेत्यर्थः।

१२. षष्ठस्य मासस्याहर्योग उच्यते। पृष्ठ्यचतुर्थान् त्रीनभिप्लवानुपयन्त्यनेन क्रमेण।

१३. ततश्चतुर्थे[4] पलहेभ्यो ऽनन्तरं नवरात्रमनेन विभागेनोपयन्ति। अभिजितं त्रींश्च स्वरसामस्ततो विषुवन्तम्। एवमयं

१ M नवरात्रे, C अवमरात्रि। २ M विद्धोयं पर्वेत्यात्। ३ C D •पेत्येत्येतयोर्। ४ C D M चतुर्थे।

प्राग्विषुवतो ऽष्टाविंशौ मासः। विषुवांस्तु तावद्गणित एवास्ते। नावरेषां न परेषामित्याहुरिति[1] (कौ० १६.१) श्रुतेः।

१४. पृष्ठ्यारम्भणान्वा ऊर्ध्वं विश्वजितस्त्रतुरस्त्रतुरो ऽभिप्लवानुपयन्तीति श्रुतेः।

१५. पृष्ठ्याभिप्लवौ चान्वहं स्वेनस्वेनाहर्योगेन पृष्ठ्यादारभ्य प्रातिलोम्येनावर्तेते। चकारः समुच्चयार्थः। अतश्च मासावृत्तिरहर्योगावृत्तिश्चोभयं भवति।

१६. अवृभ्रस्य त्य इत्येवमादीनि यान्युक्तानि षष्ठस्याह्नो द्वितीये ऽभिप्लव इत्येवमादिना ग्रन्थेन तान्यावर्तन्ते। चतुर्थतृतीयद्वितीयप्रथममिति।

१७. विषुवतो ऽगणितादूर्ध्वमावृत्तान्स्वरसाम्नो विश्वजितं चोपेत्य ततः [2]पृष्ठ्यांस्ततस्त्रीनभिप्लवान् स मासो ऽष्टाविंशौ। अष्टाविंशिनावभितो विषुवन्तं मासाविति (कौ० २६.२) श्रुतेः।

१८. एवमियमावृत्तिः। पृष्ठ्यप्रथमैर्मासैः। य एष पृष्ठ्यः षलहः पुनः परस्तात्पर्येति तेन मासा आवृत्ता इति वदन्त इति (२६.१) श्रुतेः। एवमेते द्वितीये पटले पञ्च मासा उक्ताः। षष्ठ उच्यते।

१९. त्रीनभिप्लवानुपयन्ति पूर्ववदन्वहमावृत्तान्। आयुर्गामिति यथोद्दिष्टौ[3] न क्रमेण। ततो दशरात्रं। ततो महाव्रतं तत उदयमतिरात्रम्।

---

१ C om न परेषाम्। २ A तत इष्टा षलह त०। ३ M यथोपदिष्टेन C स्थोदिष्टौ।

२०. सप्तदश गवामयनस्य दीक्षा इत्येवमादिको य उक्तः। स्मृत्या तावदेवं पूर्वकारिवशादन्यथापि भवतीति सूत्रारम्भः।

२१. तदिति सर्वनाम्ना गवामयनं निर्दिश्यते। गवामयनप्रकृतीनि संवत्सरसत्त्राणि भवन्ति।

२२. तेषु संवत्सरसत्त्रेषु विकारो वक्ष्यमाणो ऽन्यत्र दशराचाद् द्रष्टव्यः।

२३. दशराचेयः पृष्ठ्यस्तं वर्जयित्वान्यस्य स्थाने[१] ऽभिप्लवः कार्यः। तदेवंयुक्तमभिप्लवायनं नाम संवत्सरसत्त्रम्। चतुर्थादीनि वैश्वदेवानि सप्तमे मासे। पञ्चमादीन्युत्तमे। आदितो ऽवच्छेद इति न्यायात्।

---

२०.

१. उत्सर्गिणामयनं नाम संवत्सरसत्त्रं गवामयनधर्मग्राहि। तत्र विधिं वक्ष्यामः।

२. यानि गवामयनप्रकृतेः पौर्णमासीभिः सह सुत्यान्यहानि संगच्छेयुस्तान्युत्सृजेरन् सत्त्रिणः। पौर्णमासीशब्दो ऽयं यजमानायाश्वर्वचन[२] उत्तरसूत्रे कर्मनिर्देशात्।

३. वाशब्दो विकल्पार्थः। दर्शपूर्णमासाभ्यां यजनीयदिवसाभ्यां[३] सह यान्यहानि संनिपतेयुस्तान्युत्सृजेरन्।

---

१ A om the first six words.     २ A •शब्दो याजमामीयायचम।
३ C यजमान- -य दि। sec. b. यजनी D has lacuna between या-य M यजमानाय। A यजनी।

४. उभयोरपि कालकल्पयोरविशेषादेकचिकं स्तोमं[1] कुर्वीरन्।

५. [2]वाशब्दो विकल्पार्थः।

६. एकैकामृचं स्तोत्रियाणां वोत्सृजेरन्[2]।

७. यजुषां चैकैकस्योत्सर्गः। आध्वर्यवस्योपदेशः। एकैकस्य प्रतिगरस्योत्सर्गार्थः।

८. अहरुत्सर्गपक्षे तस्मिन्नहनि प्राजापत्यः पशुः कार्यः।

९. तस्मिन्नहन्युत्सृज्यमाने यद्देवतः सवनीयस्तेन वा यजेरन्।

१०. तत्र तस्मिन् पशौ पशुतन्त्रे सवनीयहवींष्यन्वायातयन्ति। पशुतन्त्रवचनादपापशुपुरोळाशहवींष्यन्वायातयन्ति। तस्य वपया प्रचरन्ति। ततः सवनीयेनाष्टाकपालेन। तत आग्नेयेनाष्टाकपालेन। ततश्चरुणैन्द्रेण। तत्प्रातःसवनं संतिष्ठते। पशुपुरोळाशेन प्रचरन्ति। ततः सवनीयेनैकादशकपालेन। ततो मरुत्वतीयेनैकादशकपालेन। ततो दध्नैन्द्रेण। तन्माध्यन्दिनं सवनं संतिष्ठते। पशुना प्रचरन्ति। ततः सवनीयेन द्वादशकपालेन। ततो वैश्वदेवेन द्वादशकपालेन। ततश्चरुणाग्निमारुतेन। तत्तृतीयसवनं संतिष्ठते। इति च्छन्दोगानां। तैत्तिरीयाणामध्वरकल्पे वैश्वानरेषु[4] सवनीये च पशुपुरोळाशे[5] त्वेकस्मिन्सवनीये होता यचदिन्द्रमिन्द्रस्याज्ञपुरोळाशमिन्द्र प्रस्थितं

१ A om अपि कालकल्पयोर्। २ The words of the text एकैकां या स्तोत्रियाणामुत्सृजेरन् मन्त्राणां यजुषां च formed orig. one Sūtra in A, but have been disjoined in three. In M they form three Sūtras, in C D 5 and 6 form one Sūtra, which in C has been alt. by sec. h

३ A om. च। ४ A C (orig.) D वै स्वानेषु। ५ A M •पुरोळाशो त्वे C •शो मे। sec. b. त्वे D पशुपुरोळाशे लेक•।

जुषाणो वेत्विति। न यथासवनीयवितारणं[1] सवनाभावात्। संतिष्ठत इत्यर्थवादः पशूपदेशात्। इमं नु मायिनं हुवे स यो वृषा वृष्ण्येभिः समोका इति मरुत्वतीयस्य याज्यापुरोनुवाक्ये मन्त्राम्नाये दृष्टे एव[2]। इन्द्रः प्रति त्यं चारुमध्वरमित्याग्निमारुतस्य पुरोनुवाक्या यदुत्तमे मरुतो मध्यमे वेति याज्या।

११. तेषां सवनीयानां वा तदाख्यानां स धर्मो भवति यः पशुतन्त्रे चोद्यमानानाम्। कश्चासौ। न निगमाः सन्ति। पशुतन्त्रे चोद्यमानानामिति सूत्रारम्भे यथैते सवनीयहविर्देवतानिगमाः प्रैषे च तथैव स्युरिति।

१२. परस्याह्नो ये स्तोत्रियास्ताननुरूपान् कुर्वीरन्नाह्न[3] उत्सृज्यमानस्य।

१३. यथार्थमतिप्रैषो ह्यस्रे सुत्यामग्नीदिति।

१४. उत्थायेति वचनात् पृष्ठशमनीयमहत्वा। चशब्दाद् द्वादशाहान्ते पृष्ठशमनीयं च।

१५. उभयोः पौर्णमास्यमावास्ययोरुत्सृजमानाः उत्सर्गिणामयनं समाप्य[4] संवदामयनमुपेयुः। संयोगाद् व्यवतिष्ठत इति (१.१.५) सिद्धे उभयोरुत्सृजमाना इति वचनादितरयोरपि पक्षयोरेकत्रिकं वेत्यनयोर्द्वादशाह एव।

---

१ A °वीतारणं In C the words from वितारणं to थर्थ are bracketed by sec. h. २ A om दृष्टे एव। ३ A °माह्वस्त्य° C °रत्नि। नेत्स्य M °स्रोतस्त्य। ४ C M om. उत्सर्गिणामयनं समाप्य D om the text from उत्सर्गिणा° to इति वचनाद्ध।

## २१.

१. आदित्यानामयने संवत्सरसत्त्रे वक्ष्यमाणको विकारविधिः।

२. एकस्मिन्नहनि त्रिवृत्परस्मिन्नहनि[1] पञ्चदशः। एवमहर्व्यत्यासः। पूर्वस्मिन्पटले प्राग्विषुवतः पटले ऽहःसमुच्चये इत्यर्थः[2]।

३. अभिप्लवस्तोमाविति वर्तते। विषुवत उत्तरस्मिन् पटले पञ्चदशत्रिवृतौ स्तोमौ। पूर्ववद्व्यत्यासः।

४. मध्ये पृष्ठ्याः पार्श्वयोरभिप्लवा इत्येवंरूपा मासाः।

५. षष्ठे मास्यभिप्लवचयं कृत्वा ततः पृष्ठ्यमुपयन्ति नवरात्रं च पाठक्रमेण।

६. नवरात्रे यो ऽभिजित् तस्य स्थाने बृहस्पतिसवम्। बृहस्पतिसवेन्द्रस्तुतावभिजिद्विश्वजितोः स्थान इत्यैतरेयिणाम्।

७. विश्वजितः स्थाने इन्द्रस्तोमम्।

८. इन्द्रस्तुतो ऽनन्तरं पृष्ठ्यमुपेत्याभिप्लवः पृष्ठ्यादनन्तरम्[3]।

९. उपप्रयन्तो अध्वरमिन्द्याज्यं व्यूल्ह इत्येवमादिभिर्विशेषैर्य उक्तो नवरात्रः सह दशमेनाह्ना स उच्यते व्यूल्हच्छन्दा दशरात्रः। शाखान्तरीयो वा यथावचनं छन्दसां व्यभिचारेण।

१०. संस्थान्तरे पक्षप्राप्ते[4] नियमः।

११. देवा इ पशुकामा इत्येवमादिनोद्भिदक्तव्यस्तदनन्तरञ्च[5] वलभित्। तावुद्भिद्वलभिदौ यथोद्दिष्टौ दशरात्रादनन्तरमुपयन्ति।

---

[1] C D M om. परस्मिन्नहनि C in marg परस्मि। [2] M प्राग्विषुवतः षड्रात्र इत्यर्थः। [3] A C D om. इ। [4] A प्राप्त। [5] A उक्त instead of वक्तव्य।

१२. सप्तमं मासं यथोक्तं कृत्वा ततो मध्येपृष्ठ्यांश्चतुरो मासानुपेत्य क्रमेण।

१३. द्वादशे मासे मध्येपृष्ठ्यौ द्वावभिप्लवौ कुर्वन्ति।

१४. मध्येपृष्ठ्ययोरभिप्लवयोरनन्तरे गोआयुषी उपेतव्ये।

१५. छन्दोमदशाह इति शाखान्तरे विशिष्टस्य दशाहस्याख्या। छन्दोमरूपो वा दशाहश्छन्दोमदशाहः। बृहद्रथन्तरपृष्ठसारूप्यात्[१]। तं छन्दोमदशाहं गोआयुर्भ्यामनन्तरमुपयन्ति[२]।

---

## २२.

१. अङ्गिरसामयनाख्ये संवत्सरसत्त्रे विधिं वक्ष्याम इति वाक्यशेषः।

२. अभिप्लवास्त्रिवृत्स्तोमकाः।

३. प्रागविषुवतः पटलं पूर्वं पटलं। तस्मिन्पृष्ठ्यारम्भणान्मासानुपयन्ति।

४. पृष्ठ्योदयान्पृष्ठ्यान्तानिति यावत्।

५. यथोद्दिष्टेन क्रमेण।

६. अभिजितः स्थाने बृहस्पतिसवमिन्द्रस्तोमं (१ १. ६) विश्वजित इत्येवमादि।

---

१ not quite legible in A; M सडमा - - यात्। २ A om. चनन्तरम् C सामरूप्यात् alt to सारूप्यात् D सामरूप्यात्।

## २३.

१. दृतिवातवतोरयनाख्ये संवत्सरसत्त्रे वक्ष्यमाणको विधिः।

२. पृष्ठ्यस्तोमानां त्रिवृदादीनामेकैकेन मासंमासमुपेयुः।

३. विषुवतः स्थाने महाव्रतं भवति।

४. [१]आवृत्तानां त्रयस्त्रिंशादारभ्य प्रातिलोम्येन पृष्ठ्यस्तोमानामेकैकेन मासमुपेयुः।

५. सर्पसत्त्रं वक्तुमारभ्यते[२]। तत्रातिरात्रावभितः। सर्पसत्त्रविशेषणमेतत्।

६. सर्पसत्त्रस्य मध्ये सर्वं एवाग्निष्टोमसंस्था दिवसाः।

७. दशकाः स्तोमाः प्रत्यहमस्य सन्तीति दशदशी। ईदृशः संवत्सरः सहातिरात्राभ्याम्।

८. द्वादशकाः स्तोमा अस्येति [३]द्वादशीको ऽसौ विषुवान्सर्पसत्त्रस्यायं विधिः। गवामयनमेवैतत् स्तोमसंस्थाविशिष्टमिति गवामयनं वाभिगरश्रुतेरिति तत्र (२४. ४. ४८) कात्यायनस्य।

---

## २४.

१. कौण्डपायिनामयनं नाम संवत्सरसत्त्रं। तस्य माससंमिता दीक्षाः। दीक्षानियमैर्मासं व्याप्नुयुरित्यर्थः। अश्वत्थकाः कुण्डप्रतिरूपाश्चमसास्तैः[४] पीयते सोम इति यागाख्या[५]।

---

१ C D आवृत्तपृष्ठ्यस्तोमानामेकैकेन मासंमासमुपेयुः। २ C D M सर्पसत्त्रं च तत्क्रमारभ्यते। ३ A C M (orig) D (?) द्वादशीको। ४ A (orig) अश्वत्थ, in marg. त्थ C अश्वत्थपत्राणि; in marg क instead of प D अश्वत्थपकुण्डप्राति॰ M अश्वत्थकाः कुण्डप्रतिरूपाः चमसास्तैः। ५ C योगा॰ M योग्या॰।

२. क्रीत्वा सोमं राजानमुपनह्येति वाचनिकमेतदुपनद्धस्योपनहनम्। तच्चोपसद उपेत्य कर्तव्यं। तथा च श्रुत्यन्तरमुपसद्भिश्चरित्वा सोममुपनह्य सुत्यास्थानेषु मासमग्निहोत्रं जुह्वति (का० २४. ४. १४)। तन्त्रवत्सायंप्रातर्होमक्रमतो[1] दद्यान्मासं भवति (?)।

३. दर्शपूर्णमासकर्मभ्यामेकतन्त्रक्रियया मासमुपेयुः। तन्त्रेण वा समस्तचोदितत्वात् अग्निहोत्रं चेति (२८. १९) कात्यायनस्य।

४. चातुर्मास्यपर्वणां वैश्वदेवप्रभृतीनां चतुर्णां एकैकेन मासं-मासमुपेयुः।

५. त्रिवृता मासमुपेयुः। पञ्चदशेन मासं। सप्तदशेन मासं। एकविंशेन मासं। त्रिणवेन मासमिति।

६. उत्तमे मासे ऽयं विधिः। अष्टादशाहं त्रयस्त्रिंशस्तोमेनोपेयुः।

७. अष्टादशाहानन्तरं दशरात्रं ततो महाव्रतं ततो ऽतिरात्रम्। इतिकरणान्न प्रायणीयः।

८. यो होत्रस्य कर्ता चोदनाप्राप्तः सो ऽध्वर्युः स पोतेति[2] स एवाध्वर्यवपोत्रीये कुर्यात्।

९. यो मैत्रावरुणपदार्थे[3] प्रवृत्तः स एव ब्रह्मत्वप्रतिहर्तृत्वे[4] कुर्यात्।

---

१ A होमं क्रमतो दद्यान्मासं भवति C होमक्रमतो दद्यान्मा० M मन्त्र चा: सायप्रातर्होमक्रमतो दद्यात् मा०। २ C D M om स पोता।
३ C D M ०पदार्थे। ४ C ०हर्तॄ D प्रतिहर्त्रे M ०हर्त्रे A om. त्व।

१०. य औद्गात्रकस्स नेद्राच्छावाकीये कुर्यात्

११. यः प्रस्तोत्रायः स ब्राह्मणाच्छंसिग्रावस्तोत्रिये कुर्यात्।

१२. यः प्रतिप्रस्तातोच्यते स आग्नीध्रोन्नेतृत्वे कुर्यात्। एवमेते पञ्च स्थानीतराणि च कुर्युः।

१३. यः सुब्रह्मण्यः स सुब्रह्मण्य एव।

१४. गृहपतिरपि स्वकर्मैव कुर्यात्। परिसङ्ख्याशङ्कायां[1] द्वयोरनुवादः।

१५. देशो होतृषदनाहवनीयसमीपादिः। कालो निमेषक्षणाद्युपलक्षितः। स च यज्ञे प्रयुज्यते अस्मिन्काल एतत्कुर्यादिति। तद्यथा वषट्कृते जुहोति वषट्करोतीत्यादि। देशश्च कालश्च देशकालौ। तौ च व्यवस्थितौ क्रियाङ्गत्वेन क्रियाभेदाच्च भिन्नौ। तत्र कर्तृभेदे[2] प्रकृतिवदनुष्ठानं प्रकथमेव[3]। इहैकस्य कर्तुरनेकक्रियोपदेशे तत्तत्संबद्धयोर्देशकालयोः संनिकर्षेणेहोपनिपाते[4] अनियमकारिणः शास्त्रस्याभावादिति प्राप्त आह। अवैदेश्याप्रधानस्य[5] वशं नयेत्। होत्रादेरयमुपदेशः। तत्र क्रियाविशेषयौगपदेनासंभाव्यदेशकाले सत्त्वमप्रधानस्य मैत्रावरुणादेर्वशं नयेत्[6]। तदापन्नं कर्तृत्वं[7] कुर्यात् इत्यर्थः। आत्मीय[8] मैत्रावरुणादेः समर्थ[9] स्वयमाध्वर्यवादि कुर्यात्। तस्य प्रत्यचलात्। अप्रधानस्य वशमनया व्यवस्थया नयेत्। कया। उच्यते।

---

१ C D परिगङ्काया। २ C D प्रकृतवद्। ३ A वाक्यम्।
४ A •कर्षणो•। ५ C D •देश्या ह्यप्र•। ६ C D om the words from तत्र क्रिया• to नयेत्। ७ A तदापदंतकर्तृत्वं C तदापन्नं तत्कर्तृकं DM तदापन्नं तत्कर्तृकं। ८ A आत्मीय C M •य। ९ A समर्थे C मैत्रावरुणादसमर्थः M मैत्रावरुणादेरसमर्थः।

अवैदेशा। विदेशे भवं वैदेश्यम्[1]। न विद्यते वैदेश्यमस्यां व्यवस्थायामिति सा व्यवस्था अवैदेशी। ईकारेण स्त्रीप्रत्ययेन। अतस्तया युक्तं भवति। मैत्रावरुणादिर्हौत्रे[2] कुर्यात्। होतृसदन एव कुर्याच्च[3] विदेशे। अथोदाहरणम्। परिव्ययणीयां मैत्रावरुणो ब्रूयात्। यूपानां परिव्ययणं होता कुर्यात्। विप्रतिषिद्धकरणसमवायादिति[4]। तथा[5] इतरमन्यस्तेषां यतो विशेषः स्यादिति मीमांसकाः।

१६. गत्वागत्वा यथादेशमितराणि पोत्राच्छावाकनेष्ट्रादिधिष्ण्यानि मुख्यासनसंबन्धीनि[6] कर्माणि कुर्युः। तथा च कात्यायनः। मुख्यासनेभ्यो ऽनुप्रसर्पन्नितराणीति (२४. ४. ४७)।

१७. एकाहत्यतुर्विंशमभिजिद्विश्वजिद्विषुवन्महाव्रतादिः। तत्संघातः समानजातीयसमुदायः। तत्रैकाहश्चतुर्विंशमित्येवमादिरहःसंघातमापद्यमानः समुदायं प्रविशन् वक्ष्यमाणानि तायमानरूपाणि लभेत। परिभाषाप्रसङ्गेनेदमारब्धम्।

१८. संघाताः पृष्ठ्याभिप्लवच्छन्दोमस्वरसामप्रभृतयस्तेषु भवं सांघातिकमहः। तद्यदेकाहीभवतीति[7] ततस्तस्मात्तायमानरूपाणि निर्वर्तेरन् न भवन्ति इत्यर्थः।

१९. अयं यज्ञ इति याज्या हारियोजनस्य। इह मद एव[8] मघवन्नित्यतिशेषः। सह पुरोनुवाक्यया परा याहीत्येतयाङ्गभूतया[9]।

---

१ A (by alt) उच्यते विदेशस्य भाव वैदेश्य M विदेशभावो। २ A M ॰णादिहौत्रे कुर्यात् CD ॰दिहौत्रं। ३ C कुर्याच विदेशी। ४ A ॰षिद्धे करणं। ५ A ins. देश। ६ CD मुख्यासं॰। ७ CD नैवयेकाहिकी भवति A नैवादे॰। ८ CD om एव। ९ CD M चान्नभूतया।

प्रैषस्य पुरोनुवाक्याग्रहणं प्राधान्यार्थम्[१]। तेनाग्निष्टुति श्वोभूत आग्नेयी कर्तव्या श्वःस्तोत्रिया। अनुरूपाः श्वःस्तोत्रिया इति (१२. २. १) ये उक्ता होत्रकाणां कद्दन्तः कर्तव्याः। तद्यथा। यदिन्द्र नाहुषीष्वेति तृतीयः। ग्रावाणं मैत्रावरुणस्येत्यत्र संभवः। उक्थमुखीयास्तु। अप प्राचो ब्रह्मण ते उरुं नः। अभि तष्टेव दीधया मनीषामित्यभितष्टीयमित्येतानि तायमानरूपाण्युच्यन्ते। संज्ञाकरणं शास्त्रसंव्यवहारार्थम्। नित्यमेतत्प्रागुत्तमादह्नो ऽन्तरेण प्रायणीयोदयनीयावित्यादिभिः सिद्धे (१२. ६. १) पुनर्वचनमद्वादशाहविकारार्थम्। प्रसङ्गेन परिभाषां कृत्वा कौण्डपायिनामयनस्य यद्वक्तव्यं तदाह।

१०. यद्यपि कौण्डपायिनामयने संपूर्णा विधिस्तथाप्यभीवर्तान्त्यायातनमहःसंस्थाद्यर्योगो गवामयनस्यैव यः स एव ग्रहीतव्यः। एवशब्दो नाम मध्ये प्रयुक्त एकदेशस्यापि संज्ञाज्ञापनार्थः। तथा च जैमिनिः। गव्यस्य च तदादिलादित्याह[२]।

---

## २५.

१. उपेयुरिति वाक्यशेषः।

२. चतुर एव मासानुपसद उपेयुः।

३. चतुर एव मासान् सुन्वन्तीति[३] सुत्याभिर्व्याप्नुवन्ति।

---

१ C (orig.), D धान्यार्थं C (sec h ) प्रधान्यार्थं M प्राधान्यार्थं A प्राध्यन्यार्थं।

२ C तदादिष्टमादि ( in marg. ॰त्यादि) D तदादित्यादि M तदादित्यादिष्टेत्यादि।

३ C D M om. इति।

४. यादृशौ गवामयनस्य प्रथमोत्तमौ मासौ तादृशावत्रापि भवतः।

५. चशब्दात् गवामयनवत्।

६. गवामयनवत्[१]।

७. तदेतत्संवत्सरसत्त्रं चतुरो मासानित्यत आरभ्य क्षुल्लकतापश्चितमित्याचक्षते। प्रसिद्धा ह्येयमस्य संज्ञेत्यभिप्रायः।

---

## २६.

१. तापश्चितं दीक्षासंवत्सरमिति च कात्यायनः (२४.४.१)।

२. उपसदो ऽपि[२] तापश्चितः संवत्सरमेव भवेयुः।

३. सुत्याभिरपि संवत्सरं व्याप्नुवन्ति। इतिकरणः परिमाणार्थः।

४. तदा सर्वनाम्ना दीक्षादेरुक्तस्य निर्देशः। तदेतत्तापश्चितं नाम प्रसिद्धम्।

---

## २७.

१. दीक्षानियमा महातापश्चिते संवत्सरत्रयं कार्याः।

२. संवत्सरानेव प्रकृतत्वात्।

३. त्रीन् संवत्सरान् सुत्याभिर्व्याप्नुवन्ति।

---

१ In A the words विद्युत्वाय form one Sutra and are explained by गवामयनवत्। This is probably more correct than the reading of C D which unites both words with the following Sutra

२ C D उपचितो ऽपि।

द्देशः। सत्त्रयायेवं[1] वहुवचनं। तेषु षट्‌चिंशत्क्रमेषु आहवनीयमभ्यादधाति स्थापयतीत्यर्थः।

७. सदो यज्ञागारं चक्रीवदाकारं भवति[2]।

८. आग्नीध्रमप्यागारं तथैव चक्रीवदाकारं[3] भवति।

९. उलूखलबुध्नाकारो यूपो भवति।

१०. अखातानुपरवान् कुर्वन्ति।

११. योयो ऽस्वापूर्यमाणपक्षस्तमेतममावास्येन कर्मणा गम्यापाते ऽभ्ययन्तो[4] यन्ति।

१२. तेषामेवं गच्छतां क्रमप्राप्तायां पौर्णमास्यां गौःसंज्ञक[5] उक्थ्यसंस्थो बृहत्सामा भवति।

१३. योयो ऽस्वापचीयमाणपक्षस्तमेतं पौर्णमास्येन कर्मणा यन्ति सत्त्रिणः।

१४. तेषां सत्त्रिणाममावास्यायां क्रमेणागतायामायुःसंज्ञक उक्थ्यसंस्थो रथन्तरसामा भवति।

१५. प्रतीपमनार्जवं[6] पूर्वेण पथा सह यजमाना यन्ति।

१६. अपोनप्त्रा देवता। अस्य सो ऽयमपोनप्त्रियस्तरुः। तं निरुप्य वक्ष्यमाणदृषदत्ययये।

१७. तद्स्यानीकमुत चारु नामेति पुरोनुवाक्या। अस्मिन्पदे परमे तस्थिवांसमिति याज्या। अपोनप्त्रियस्येति वचनात्। केषांचिच्छाखिनामपांनप्त्रियस्तचैते न भवतः[7]।

१ C D सत्त्रया॰। २ C D सचक्रीवदाधान। ३ C D चक्रीवदाधानं।
४ A ॰ऽभ्ययन्तो। ५ A C D गौ, M om. ६ C चानार्ज॰ A चनार्जवपूर्व॰
७ A ॰नामपांनप्त्रीयस्तचैते।

१८. दृषद्वती प्रसिद्धा। तदप्ययो देशविशेषः। तस्मिन्नपो-नप्त्रियश्चरुः।

१९. निरुप्येति क्रमार्थः प्रत्ययो ऽनुवर्तते। अपोनप्त्रिययागाद्-नन्तरं दृषद्वत्यप्ययात् सरस्वतीमपि यन्ति। सरस्वतीमप्येते यन्ति[१]। अपिशब्दाप्रतिषिद्धामप्यवभृथे। तथा च कात्यायनः। नावभृथं सरस्वत्यामित्याह (२४. ६. २२)।

२०. शतसङ्ख्यासु गोषु गर्भिणीषु शाखान्तरात्। ऋषभमप्यु-त्सृजन्ति। गोमण्डल एवोत्सृजेयुर्दीक्षाकाले।

२१. यदैवैतच्छतं गोरूपाणां सहस्रं संपद्यते तदैवोत्थानमथ-शब्दात्।

२२. तेषु गोरूपेषु मृतेषु वा सत्त्रोत्थानं भवति। वाशब्दो विकल्पार्थः।

२३. सत्त्रोत्थानं वा[२] भवति।

२४. अथमपर उत्थानपक्षः। गम्याप्रास्रेन गच्छन्तः प्लाक्षं प्रस्रवणं प्राप्य तस्मिन्नेवाग्नये कामायेष्टिं निर्वपेयुः। प्लाक्ष.[३] प्रस्रवणो लोकप्रसिद्धः।

२५. या अग्नये कामायेष्टिस्तस्यां समाप्तायां सत्त्रां न तु तदर्थं ते[४]। अतश्चान्यस्या अनूलिजे दानम्। अश्वां च वडवां। पौरुषीं च मानुषीं। धेनुके प्रत्यग्रप्रसवे। केन[५] प्रयोगादनुकम्पिते

---

१ A om these four words  २ C D om वा।  ३ C om. : ।
४ C D (?) M om समाप्तायां।  ५ A क प्रयोगादनुकम्पिते प्रियतम।

अप्रियत्वेन। कारपचवं नाम प्रसिद्धं। तं प्रति यमुनामवभृथमभ्यवयन्ति।

२६. यदेतदुक्तं सारस्वतमेतन्मित्रावरुणयोरयनं नाम सत्रम्।

२७. आद्यन्तयोरिहातिरात्रवचनात्। पूर्वस्मिन्नेतौ स्तः। अभिजिद्विश्वजितौ व्यस्तौ संवत्सरं भवतः। शुक्ले ऽभिजित् कृष्णे विश्वजित्। इन्द्रकुक्षी उत्तरे पौर्णमास्यामावास्ये उच्येते। तत्र गोआयुषी व्यस्ते भवतः। एकस्यां गौरपरस्यामायुः। उभा कुक्षी पृणतां वार्त्रघ्नं च माघोनं चेन्द्रकुक्ष्योः प्रैषलिङ्गम्[1]।

२८. इत्येतत्सत्रं सारस्वतमिन्द्राग्न्योरित्येवंसंज्ञकम्।

२९. आद्यन्तयोरतिरात्रौ मध्ये ज्योतिर्गौरायुरित्येतान्यहानि दण्डकलितवदावर्तेरन्। विश्वजिदभिजिताविन्द्रकुक्षी। विश्वजिदेकस्यामभिजिदपरस्याम्। एतत्सारस्वतमर्यम्णः समाख्यातम्।

३०. संवत्सरं दृषद्वत्या एव समीपे ब्राह्मणस्य गा रक्षेत्। स्थलिज आचार्यस्य चेति च्छन्दोगानाम्। तेन यत्रैव तेषां वासस्तत्रैव गा रक्षेत्।

३१. व्यर्णो नैतंधवो लोकप्रसिद्धः। तस्मिन्प्रज्वलितमग्निं धारयेदपरं संवत्सरम्।

३२. तृतीये संवत्सरे एतत्कर्म। अग्न्यन्वाधानं परीणहि स्थाने दर्शपूर्णमासान्तं कृत्वा सरस्वतीदृषद्वतीसंगमात्प्रत्तो दृषद्वत्या दक्षिणेन तीरेणाग्नेयेनाष्टाकपालेन पुरोडाशेन ग्रम्यापरासेग्रम्यापरासे यजमानो ऽवभृथप्रदेशमेति।

---

१ A प्रैषे।

२३. [[1]प्लचान् जनपदं प्राप्य तत्रैव यमुनायामवभृथार्थं गच्छन्तीत्यर्थः] प्लचाख्यं तीर्थं यमुनां प्रति तामवभृथमभ्यवैति।

२४. दार्षद्वतं दृषद्वत्यां भवं[1]। संवत्सरं ब्राह्मणस्य गा रक्षेदित्येवमारभ्य यदुक्तं संवत्सरत्रयमेतत् दार्षद्वतं नाम सत्त्रं एकाकिनो ऽप्येतद्भवति। यजमानशब्दात्।

२५. आदावतिरात्रस्ततस्त्रिवृत्स्तोमकाः संवत्सराः सहस्रसङ्ख्याकास्तेषां रूपं पूर्वकारिवशात् ज्ञेयम्। अभ्यासो बहुसंवत्सरे गवामयनस्येति (१२. २७. ५) स्वशाखोक्तं। तेन वा संवत्सरसहस्रपूरणं। ततो ऽतिरात्रः। एतत् प्रजापतेः सहस्रसंवत्सरसत्त्रम्[२]। द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति।

इति शाङ्खायनश्रौतसूत्रभाष्ये त्रयोदशो
ऽध्यायः समाप्तः॥

---

M have only त्रि प्लचाख्यं तीर्थं। यमुनां प्रति तामवभृथमभ्यवैति M त्रिप्ल) and om. the words from प्लचान् to र्थः A om both, text and Comm, and gives the reading quoted above in marg. In the text of the Sūtra I beg to read त्रिप्ल॰। १ C (orig.) D दार्षद्वतं three times (once in the text and twice in the Comm); we should expect दार्षद्वतं A om text and Comm.

२ C D M ॰संवत्सरं।

## अथ चतुर्दशोऽध्यायः[1]।

१.

१. व्याख्यातो द्वादशाहः प्रकृतिः सत्त्राहीनानामित्युक्तम्। उद्देशक्रमेण सत्त्राण्युक्तानि। अथेदानीमहीनानामवसरस्तथैकोत्तराणां धर्मविशेषात्पृथग्भूतानामुत्तरत्र वचनमितरेषां केषांचिदेकाहैः सह[2] धर्मसामान्याद्विधानुक्रमणं[3] न्याय्यं। तदर्थमाह। एकाहेषु एकसुत्येषु क्रतुषु अहीनेषु द्व्यहप्रभृतिषु यो विकार उच्यते स प्रकृतेरग्निष्टोमस्य विकारः प्रत्येतव्यः। न त्वेकाहा अग्निष्टोमधर्मका एव। तेषां हि वचनेन अहीनानां द्वादशाहविकाराणामुपदेशविरोधः उच्यते। द्वादशाहिकस्यान्न एकाहेति संदिश्यमानस्य[4] द्वादशाहधर्माः प्राप्नुवन्ति। समुदायकानां धर्माणामवयवे[5] ऽभिसंभवात्। तेन द्वादश दीक्षा द्वादशोपसद आग्निपामनिर्वचनं नामधेयाग्रहणमित्येवमादयः प्राप्नुवन्ति। तन्निवृत्त्यर्थमेकाहेषु प्रकृतेर्विकारवचनम्। यद्येवं व्याख्यातो ऽग्निष्टोमः प्रकृतिर्द्वादशाहस्यैकाहानां चेदेतस्यैकाहवचनस्य किं प्रयोजनमिति। उच्यते। धर्मप्रवृत्त्यर्थमेतद्वचनं षट्त्रिंशदहाप्रभृतादिषु। इतरस्तु द्वादशाहिकानां समुदाय-

---

१ C D ins षष्ठस्योत्तरार्धस्य। २ A सर्वे instead of सह।
३ C D ह्यान्यनु॰। ४ C D ॰द॰। ५ C D कर्माणामवयवेति सभवात्।
in marg भि।

धर्माणामत्रथवे ऽपि संभवात् तन्निवृत्त्यर्थमेकाहेष्विति। अहीनेषु चेत्यहीनानामग्निष्टोमस्य प्रकृतिर्द्वादशाहस्य कथं नाम स्यातां। एकोत्तराणां तु मासापवर्गा अहीना (१६.२०.८) इत्येवमादिकं धर्मजातमुपरिष्टाद्वक्ष्यामः।

२. दशमैकादशयोरध्याययोरुपदेशातिदेशौ प्रायेण परिभाषितत्वात् होतुरेव। द्वादशाध्याये प्रकरणं[1] होत्रकाणामेव। तस्य समुदितस्य प्रदेशार्थां परिभाषा। यस्मिन्नहनि यस्मिन्क्रतौ धनजिदादौ यदहस्तुविशादि प्रदिश्येत[2] सवनं वानुचरप्रभृति यष्ठात्तृतीयसवनमित्येवमादिनातिदेशेन (११.१५.७) सहौत्रं तत्सह होत्रादिभिस्तद्भवतीति वेदितव्यम्।

३. अहीनानामुभयप्रकृतित्वात् विकल्पे प्राप्ते नियमः। ऐकाहिकमेवानादेशे भवति। न विकल्पः।

---

## २.

१. अग्न्याधेयो नाम हविर्यज्ञसोमः। तेन ब्रह्मवर्चसकामो यजेत। अग्न्याधेयसोमयागेन ब्रह्मवर्चसं साधयेदित्यर्थः। अपरे यजेतेत्यतिरेकं मन्यमाना आर्त्विज्यप्रतिषेधमेवमादिषु काम्येषु मन्यन्ते। प्रतिषेधे ऽपि चापकृतस्य पुत्रदारात्यये[3] प्रवृत्तिः।

२. तस्याग्न्याधेयसोमस्य स्तोत्राण्यष्टास्वष्टासु स्तोत्रियासु भवन्ति।

---

१ C D प्रकरणाद्। २ C प्रदिश्यते। ३ च seems doubtful C (orig) पुत्रदारात्ययो।

३. ननु स्वरूपमात्रकथनमेतन्नागमस्य विषयः। उच्यते। अर्थवादो ऽयं विध्यादेशस्य स्तावकः। न त्वाम्नायगतस्य मतिरेषा[1] न पौरुषेयस्य कल्पस्य। एवं तर्ह्यनुब्राह्मणमेतन्महाकौषीतकादाहृतं कल्पकारेणाध्यायत्रयं[2]। कथं नाम[3] नैतद्ब्राह्मणमनुष्ठीयमानं कर्माकर्मविशिष्टफलदानसमर्थं[4] स्यादिति। अष्टाक्षरा गायत्री। अष्टाक्षरेत्युक्ता।

४. भक्तिवादो ऽयम्।

५. तस्याग्न्याधेयसोमस्य रथन्तरं पृष्ठं भवति। तत्रार्थवादः[5]।

६. भक्तिसाहचर्यात्।

७. संस्थानियमार्थं वचनम्।

८. केनचिद्गुणसामान्येन।

९. गायत्रीरथन्तराग्निष्टोमाख्येन त्रिःसमृद्धेन ब्रह्मणा तेजो ब्रह्मवर्चसमाप्नोति। तस्मादेवं कर्त्तव्यम्।

१०. अग्न्याधेयाख्ये हविर्यज्ञसोमे तृचक्लृप्तं शस्त्रं कार्यम्।

११. यथोद्दिष्टस्य त्रिवृतो ऽन्नाद्यस्य प्राप्तये कर्तव्यमेवार्थवादो ऽयं न फलविधिः।

१२. गवामियं सङ्ख्या न्यायात्।

१३. इति स्वरूपमेतत्। संवत्सरस्यैवाप्त्या इति च फलार्थवादः।
*भयमेतत्, स्तुत्यर्थम्*।

१४. तस्येति स्तुत्यर्थो निर्देशः। अग्नये पवमानयेत्येवंदेवत्य

---

१ A om म। २ A त्रयं C D(?) त्रये M त्रय। ३ A om. म।
४ A om ऽकर्म। ५ C D वादाः।

एकः पशुः। तथाग्नये पावकाय तथाग्नये शुचय इत्यग्निपदानु-षङ्गात्। इतिवचनमेवं स्वशाखायां[१]। पूर्वकारिवशात्त्वन्यथापि भवति। सवनीयमन्वालभ्या एते पशवः। नैकेषां[२] पशुपुरोळाशो भवति। ततश्चतसृभिर्ऋग्भिः प्रयोजनं। तत्र हविषो विहिता एव। यदि तु पूर्वकारिवशात् पशुपुरोळाशो भवति ततः षड्भिः प्रयोजनं। अग्निर्ऋषिः पवमान इत्येका। यत्ते पवित्रमर्चिषीति पञ्च। एता अग्नये पवमानाय। अग्नाजरासो दमामरित्रा इत्येका। उशिक् पावको अरतिः सुमेधा इत्येका। वयं ते अग्न उक्थैर्विधेमेत्येका। समिध्यमानः प्रथमानु धर्मेत्येका। स श्वितानास्तन्यतू रोचनस्था इत्येका। विशां कविं विश्पतिं शश्वतीनामित्येका। इत्यग्नये पावकाय। वि ते विष्वग्वातजूतासो अग्न इत्येका। यदीं गणस्य रशनामजीगरित्येका। तिस्रो यदग्ने शरदस्त्वामिदित्येका। विशां कविं विश्पतिं मानुषाणामित्येका। उच्छोचिषा सहसस्पुत्र स्तुत इत्येका। त्रिरस्य ता परमा सन्ति सत्येत्येका। इत्यग्नये शुचये।

१५. अदितिदेवत्या वशा वन्ध्यानूबन्ध्यायाः स्थाने उपालभ्या[३]। एवंविधाशब्दो विधिवचनः। एष एव विधिरित्यर्थः। ततो न पयस्यापत्ते। एवंविधेति वचनात् पयस्यापत्ते पयस्यैव। अस्या याज्यानुवाक्याषट्कः। उत त्वामदिते महीति तिस्रः। महीमू षु मातरं सुव्रतानामित्येका। सुत्रामाणं पृथिवीं द्यामनेहसमित्येका। अदितिर्द्यौरदितिरन्तरिक्षमित्येकेति।

---

१ A ॰शाखायां।    २ C D M om षां C D M पुरोळाशा न भवन्ति।
३ C D उपालभ्या।

१६. तद्यदित्युद्देशप्रतिनिर्देशौ। एवमिति प्रकारवचनं। यदेवं पशवो नियुक्ता भवन्ति तदेतत्करोमि नैवाग्न्याधेयात्कर्मणो ऽयानि अन्यथापगच्छामि। एवंकृते ऽग्न्याधेयादनपगमः कृतः स्यादग्नेत्यभिप्रायः।

१७. तस्याग्न्याधेयसोमस्य[1] प्रातःसवनीयपुरोलाशानन्तरं अग्नये पवमानायाष्टाकपालं पुरोलाशं निर्वपेत्।

१८. अग्नये पावकायाष्टाकपालं पुरोलाशं निर्वपेत्।[2]

१९. तृतीयसवनीयान् सवनीयपुरोलाशानन्वग्नये शुचये ऽष्टाकपालं पुरोलाशं निर्वपेत्।

२०. वैशब्दो हेत्वर्थे। यतः कारणात् सवनीयपुरोलाशहविषामावापोद्दापस्तत एतदुच्यते। आवपनं वै सवनीयाः पुरोलाशाः।

२१. उप्यते एष्वित्यावपनं। दृष्टेष्वेव प्रकृतेषु स्थानेष्वावपन एव[3] तदावपतीति।

२२. अर्थवादार्थः पुनरुपन्यासः।

२३. वैशब्दो हेत्वर्थः। यस्माददितिमनु समाप्यते ऽग्न्याधेयं तस्मात्साम सामान्येनेहापि तथैव करोति।

२४. नु इत्यवधारणे। यैवाग्न्याधेयस्य संस्था तादृशीमेवात्रापि करोति।

---

१ C D M •धेयस्य। २ A M add आवपन वै मेतु। ३ A एवं।

३.

१. एवमिति प्रकारवचनः। एवमनेन प्रकारेण[1] हविर्यज्ञेषु सोमेषु पशवः पुरोळाशाद्याम्नायात्यन्ते हविर्यज्ञाख्येषु सोमेषु।

२. तस्येति प्रक्रान्तस्य प्रतिदेशेषु शस्त्रं। तस्येत्यवधारणार्थः। अतस्तस्य न ज्योतिष्टोमिकं विकल्पेन। शस्त्रं वक्ष्यमाणं। अधिकारश्चायं। तेनैतदुत्तरमतिदेशेषु शस्त्रमेवातिदिश्यते।

३. यद्वाहिष्ठं तदग्नय इत्येतत्तृचमाज्यं भवति।

४. अन्यत्रापि हचक्लृप्तः सकल एव।

५. ऐकाहिकानां यथाप्राप्तानां परिसंख्यानार्थं वचनम्।

६. इन्द्र मरुत्व इह पाहि सोममित्येवमादिकं हचं मरुत्वतीयं भवति। प्राकृतस्य निवृत्तिः परिसंख्यानात्। एकां शस्त्रा निवित्परिभाषितत्वात्।

७. नृणामु त्वेत्येवमादिकं हचं निष्केवल्यं कार्यम्[2]।

८. अध्वर्यो वीरेत्येवमादिकं[3] हचं मैत्रावरुणस्योक्थमुखीयं भवति।

९. अध्वर्यो वीरेत्येतस्मात्पूर्वं हचमिन्द्र तुभ्यमिन्मघवन्नभूमेत्येतद्ब्राह्मणाच्छंसिन उक्थमुखीयं भवति।

१०. उत्तरं हचमिदं त्यत्पात्रमिन्द्रपानमित्येतदुक्थमुखीयमच्छावाकाय भवति।

---

१ C D एतेन A ins एव।   २ A om कार्यम् C D om हच।
३ A वीर प्र मघे सुतानामिति।

११. माहतानां पर्यासानामुत्तमांस्तृचाञ्छंसति[१]।

१२. वक्ष्यति वैश्वदेवाग्निमारुतयोः सूक्तानां स्थान इति। तच्चैतत्प्राविचस्य स्थाने तृचम्। उत्तराण्यपि तृचान्येव वक्ष्यमाणानि।

१३. घृतवती भुवनानामभि श्रियेति द्यावापृथिवीयं तृचम्।

१४. इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमित्यार्भवं तृचम्।

१५. स्वस्ति नो मिमीतामश्विना भग इति वैश्वदेवम्।

१६. वैश्वानरं मनसाग्निं निचाय्येति[२] वैश्वानरीयम्।

१७. प्र यन्तु वाजास्तविषीभिरग्नय इति तृचमाग्निमारुतम्।

१८. समिद्धमग्निमित्येवमादिकं तृचं जातवेदसीयम्।

१९. उदु ष्य देवः सवितेत्येवमादिकानि तृचानि वैश्वदेवाग्निमारुतयोः सूक्तानां स्थाने यथार्थं भवन्ति। संयोगाद्व्यवतिष्ठत इति परिभाषितत्वात्[३]।

२०. तृचक्लृप्तमित्येवमेतस्यामिति वचनान्न व्यामिश्रचोदनायां ततो नैककर्तृके[४]।

२१. वाशब्दो विकल्पार्थः। ऐकाहिकं वा शस्त्रजातं तृचक्लृप्तं भवति। आनोभद्रीयस्य परिधानीयोत्तमेति[५] वचनात्। सा चतुर्थी।

२२. एतेनाग्निहोत्रसंज्ञकौ द्वौ हविर्यज्ञसोमौ व्याख्यातौ भवत इत्यर्थः। ततः स्तोमकामपृष्ठदक्षिणासंस्थादि तुल्यं। यद्याहिष्टमित्यादिकं शस्त्रमेतेनेति वचनात्। द्विरात्रो ऽयमहीनः। विना

---

१ C D M om. तृचान्।
२ RV III, 26, 1 निचाय्या।
३ C D परिभाषणात्।
४ A ॰कर्तृके C नैकर्तृके।
५ C in marg. इ (॰त्तमे इति)।

दक्षिणा[1] इत्ययमहीनधर्मो भवति अविरोधादतश्च प्रत्यहं चतुर्विंशतिश्चतुर्विंशतिर्देया।

२३. अग्निहोत्रसोमे[2] ऊलाग्नेयं पयस्तार्तीयसवनीयपुरोलाशाननु रात्रौ होतुर्यद्य इति लिङ्गात्।

२४. पय एवानुपङ्गात्। प्रातःसवनीयाननु।

२५. पूर्वेणैव न्यायेन[3] चशब्दात्। तत आग्नेयः पूर्वस्मिन्सौर्य उत्तरस्मिन्।

२६. प्राजापत्येति देवतानिर्देशः। वशेति पशुद्रव्यविशेषणम्। अनूबन्ध्याया उपालम्भ्येति स्थाननियमः। एवंविधेत्यनूबन्ध्यासकारातिदेशः। तेन यदि तत्र पयस्या अनूबन्ध्यास्थाने[4] तत उपालम्भ्यास्थाने ऽपि तथैव।

---

४.

१. पुनराधेयसोमो वक्ष्यमाणः। तेन तेजस्कामो यजेतेति चोदना।

२. तस्य सर्वस्यैवाङ्गः पुनराधेयसोमस्य पञ्चसुपञ्चसु स्तोत्राणि भवन्ति।

३. पञ्च पादा अस्या इति।

---

१ A तेन विना दीक्षितेन विना दक्षिणा इत्यस्य॰ M विना दक्षिणा इत्ययमहीन। विना दक्षिणा इत्ययमहीनधर्मो भ॰। २ C D अग्निहोत्रसोमाऊलाग्नेय। ३ A न्यायेन। ४ C M om अनूबन्ध्या।

४. वैशब्दस्यशब्दस्यार्थे पाङ्क्तो यज्ञस्य[1] हविष्पङ्क्त्या।

५. यज्ञस्यैवाप्तये पञ्चकानि स्तोत्राणि[2] कर्तव्यानीत्यर्थवादः।

६. सर्वाग्नेयो यो ऽग्निष्टुत् ततः शस्त्रं होत्रमस्य[3] भवति। शस्त्रमात्रातिदेशाद्धविरन्वायातनमनूबन्ध्यादि[4] यथोक्तमन्यदेवतानूबन्ध्याद्या[5] (१२. ८. ३) सवनीयेति कात्यायने।

---

## ५.

१. दर्शपूर्णमासौ नाम हविर्यज्ञसोमः[6]। अन्नाद्यकामस्य यजमानस्य भवतः। केचिदाहुरन्नकामस्येति वक्तव्यं। तथा च लिङ्गमस्ति। अन्नकामाय चरते क्षयायेति। अन्नाद्यकामस्येत्यनेन[7] च भवति भोज्यं भोजनशक्तिश्चेति कामः। तदेतन्न युज्यते। अविशेषेणान्नं प्राप्नोति। तेनान्नमेवान्नाद्यमिति व्याख्यान्तरं[8]। पर्यायशब्दावेतौ। तथा वसिष्ठो ह्यन्नाद्यकाम इत्येवमादयः प्रयोगा एवं व्याख्यातव्याः। द्विरात्रो ऽयमहीनः। अन्यशस्त्रस्याप्यवचनादैकाहिकशस्त्रः। अन्यस्यातिरात्रभावः पाक्षिकः। हविरन्वायातनं सवनीयान्वायातनं च यथादेवतं। परिभाषितत्वात्।

२. अन्नाद्यकामस्य[9] सर्व एवैते चशब्दात्। सोमेष्टिर्हविर्यज्ञसोमः

---

१ A यज्ञस्य। C पाङ्क्तो वै यज्ञः। २ A स्तोत्रियाणि। ३ A षड्ढोतम्।
४ C D विधिर् instead of हविर्। ५ C M अन्य॰। ६ A ॰सोमैः।
७ C D अन्नाद्यकामो येन भव भवन्ति भोज्यं भोजन॰। ८ C (orig) D ॰ख्यानं C (sec. h) ॰नं। ९ C D M ॰मः।

प्रवर्ग्यैरहितो भवति। द्वात्दधाविति न[१] सुत्यादन्दे नाहीन एक एव क्रतुः। यथा दाचायणयज्ञास्तत्वारः सर्वकामस्य। बहुत्वेनापि[२] भावितत्वात्। आग्रयणो ऽप्येकाहोरात्रः। व्रीहियवाग्रयणदेवताना-मनूबन्ध्या पशवो हवींषि चान्वायात्यानि सोमेष्वाग्नेये[३] हविर्यज्ञ-सोमे एकसुत्यता सौम्यः पशुरुपालम्भ्यो ऽनूबन्ध्या[४] हविरन्वायात-नमेवं पूर्वकारिवशात्सर्वेच नियमः।

३. बहुवचनाभिधान एक एव क्रतुर्दाचायणयज्ञाख्यः सर्वकामस्य यजमानस्य भवति। अत्रापि पशवो हवींषि च यथादेवतं यथा-परिभाषितं च द्रष्टव्याः। पूर्वकारिवशान्नियमः। चतुरहो ऽहीनः।

४. सर्वकामस्यैव चशब्दान्महायज्ञसोमे।

५. तस्मिन्महायज्ञे चातुर्मास्यहवींष्यष्टादश सवनीयहविषाम-न्वायात्यन्ते। पित्र्यानूबन्ध्योपासनकाले।

६. पशवश्च पर्वदेवताभ्यो भवन्ति। वैश्वदेववारुणमारुतमाहेन्द्र-शुनासीरीयाः।

७. चातुर्मास्येषु या एककपालदेवतास्ताभ्यश्चानूबन्ध्याया उपा-लम्भ्याः पशव एवंविधाः। एवंविधा[५] अनूबन्ध्याया उपालम्भ्या द्रव्यकल्पेन समानविधानात्।

८. अयं यज्ञः महायज्ञः। अतिरात्रसंस्थ एकाहः।

---

१ A om न। २ A बाहुल्येन C बहुपरिभाषितत्वात् D बहुभाषित्व०। ३ A om ये। ४ C D M om ऽनूबन्ध्या। ५ C D M om एवंविधा।

# ६.

१. वैश्वदेवाख्यो हविर्यज्ञसोमः। तस्यायं पुरस्तादर्थवादः। प्रजातिशब्देन[1] पुत्रा दुहितरश्चोभयमभिधीयते। तामिच्छन्प्रजापतिरेतं यज्ञक्रतुमपश्यत्। दर्शनं चात्र तदितिकर्तव्यतालोचनं। वैश्वदेवं यज्ञक्रतुमालोचितवान्।

२. तस्य साधनद्रव्यमाहरत्। तदुपाहृतवान् तेनायजत इष्टवानासीत्।

३. प्रजात आसीत्।

४. य कश्चिद्यजमानः प्रजातिकामः स यजेत। यद्यपि समानतन्त्रा भिन्नफलाश्च तथापि हविर्यज्ञियचातुर्मास्यसाख्याच्चातुर्मास्यसोमा एते सोमयागाः। तथा चान्तरालयागचोदना।

५. अथ चातुर्मास्यसोमस्य वैशेषिका धर्मा उच्यन्ते। वैश्वदेवः पशुरुपालभ्य[2] सवनीयानन्तरम्।

६. द्यावापृथिवीयदेवत्यानूबन्ध्याया उपालभ्या एवंविधेत्यनूबन्ध्याविधिनिर्देशः। अयं चापरो विशेषः पुरोलाशान्वायातन परिभाषितत्वात्।

७. त्रिष्टुत्स्तोमसंस्थं शस्त्रं हौत्रं[3] होत्रकाणां स्तुतीकारो विशेषः।

८. वाशब्दो विकल्पार्थं। तृचकॢप्तं वा शस्त्रं भवति।

९. आग्नेयेन हविषाग्नेयी। आग्नावैष्णवेन हविषाग्नावैष्णवी।

---

१ A M प्रजापति॰। २ M ॰लभ्य। ३ A मद्यौत्रं C D M हौत्र।

अनयाग्नेय्या वाग्नावैष्णव्या वाहरहर्यजेत चतुरो मासाननन्तरालेषु। सर्वसोमानाम्।

१०. दीक्षान्तरनिवृत्त्यर्थं वचनम्।

---

७.

१. वरुणप्रघासाख्यो हविर्यज्ञसोमो द्विरात्रो ऽहीनस्तस्यायं पुरस्तादर्थवादो विधिप्ररोचनार्थः। उन्नेयो विधिरर्थवाददर्शनात्। वैश्वदेवेन कर्मणा प्रजापतिर्देवताविशेषः प्रजा असृजत।

२. ताः प्रजाः सृष्टाः प्रजापतिना अप्रसूता अननुज्ञाता[1] वरुणस्य यवान् भक्षितवत्यः[2]।

३. प्रतिपूर्वो मुञ्चतिर्बन्धने। वरुणो नाम देवताविशेषः। ताः प्रजा[3] उदरव्याध्यादिभिः प्रतिमुक्तवान्।

४. ताः प्रजा वरुणगृहीताः सत्यः प्रजापतिं पितरमेत्य यथार्हमुपाधावन् नतिना[4] अब्रुवन् वक्ष्यमाणमर्थं पुरस्कृत्य।

५. उपज्ञा प्रथमा प्रवृत्तिः[5]। उपजानीहि प्रकाशय तं यज्ञक्रतुं येनेष्ट्वा वरुणपाशेभ्यः सकाशात्सर्वस्माच्च पाप्मनः सम्यक् प्रमुच्येमहि विमुच्येमहीत्येतमर्थं[7] प्रजाः प्रजापतिमूचुः।

६. ततस्ताभिः प्रजाभिरभ्यर्थितः प्रजापतिर्वैश्वदेवहविर्यज्ञसो-

---

१ C D om ता। २ C D om अप्रसूता C अननुज्ञाता। ३ M ताः सृष्टाः प्रजापतिर्वक्ष्यमाणमर्थं पूर्वसङ्क्रम। ४ C D M प्रजा वरुणपाशैर्व्याध्या॰। ५ C D उपाधावन्निति न। वक्ष्य॰। ६ A इति। ७ C D M om. विमुच्येमहि।

मादनन्तरं मासचतुष्टयं मुनिमत्त्वेत्यादिकं तपः प्रचर्य चतुर्थे मासि पूर्णे एतं यज्ञक्रतुमपश्यत् साध्यसाधनयोरयं दृष्टवान् क्रतवरुणप्रघासाख्यं[1] द्विरात्रमहीनम्।

७. तं यज्ञं संभारयुक्तमाहरत्संपादितवान्[2] तेन यज्ञेनेष्टवान्।

८. तेन यागेन वरुणं प्रीणितवान्।

९. अनेन द्विरात्रेण क्रतुना वरुणप्रघासाख्येन स वरुणः प्रीतो वरुणपाशेभ्यः सर्वस्माच्च पाप्मनः प्रजाः प्रमुक्तवान्।

१०. प्रशब्द उपसर्गः क्रियापेक्षी। यस्य योग्यतालक्षणमुच्यते इति क्रियाविशेषो ऽध्याहार्यः। हशब्दो विनिग्रहार्थीयः। वैशब्दो वाक्यपूरणः। प्रमुच्यत एव प्रजा वरुणपाशेभ्यः। अयं च यजमानः[3] सर्वस्माच्च पाप्मनः संप्रमुच्यते। य एवंरूपं पुराकल्पं विद्वान् जानानः वरुणप्रघासैर्यजते। तस्मादेवंविद्वान्वरुणप्रघासैर्यजेत। अर्थवादादेव परिकल्प्यमस्य फलं। रात्रिसत्त्रप्रतिष्ठान्यायेन।

११. द्वावप्येतौ दिवसौ उक्थ्यसंस्थौ भवतः। संस्थानियमार्थं वचनम्।

१२. वरुणदेवताकः पशुः सवनीयसंविधान आलभ्यः पूर्वस्मिन्नहनि। वरुणप्रघासहविषामन्वायातनं परिभाषितत्वात्। केचित्तु प्रविभज्य त्रिष्वपि सवनीयपुरोलाशेषु पुरोलाशहविषामन्वायातनमिच्छन्ति। तत्र पूर्वकारिवशाच्चिश्चयः। तथा चोक्तम्। आनुपूर्व्यं हविषां दैवत उच्चैरुपांशुतायां चेति (१२.१.२)।

---

१ C ऋतवरुण॰ D यज्ञक्रतु॰ M च रु प्र॰। २ C D om. संपादितवान्। ३ A om. अयं च यजमान।

१३. आलभ्यव्य इति वाक्यशेषः।

१४. को देवता अस्या इति कार्यौ। कार्यौ वशा गौरनूबन्ध्याया उपालभ्यव्या। एवंविधा एवंप्रकारा। पयस्यापचे अनूबन्ध्यादेवतायै पयस्येत्यर्थः।

---

८.

१. अर्थवादेन प्रयोगवचनैरैक्यं दर्शयति।

२. तत आभिः प्रजाभिरुक्तः प्रजापतिः क्षतपुरश्चरणश्चतुर्थे मासि चिरात्रं यज्ञकर्तुं दृष्टवान्साकमेधाख्यम्।

३. तमिति क्रतोराहरणासंभवात् साधनान्याहरत्।

४. तेन क्रतुनेष्टवान्।

५. प्राप्तवान्।

६. प्रयोगवचनाच्चोदनैषा।

७. क्रमनियमः संख्यानियमश्च।

८. अग्नये ऽनीकवहुणाय प्रथमे ऽहनि पशुः सवनीयस्योपालभ्यव्यः। तस्य वृद्धैः पक्षो लिख्यते[1]। यत्ते मनुर्यदनीकं सुमित्रः। भद्रं ते अग्ने सहसिन्ननीकं। भद्रा ते अग्ने स्वनीकसंदृक्। अग्नलित्ते आहवनानि भूरि। अग्निं मन्ये पितरमग्निमापिम्। अस्य देवस्य संसद्यनीके। इत्यग्नेरनीकवतः।

९. द्वितीये ऽहनि पशुः सवनीयस्योपालभ्यो सांतपनगुणेभ्यः[2]।

---

१ C D वृद्धैः कल्पितः पक्षो। २ C D M मरुद्भ्यः सांतपनगुणकेभ्यः।

सो ऽपि पक्षः पूर्वसंप्रदायात् उच्यते। आ वो यन्तूदवाहासो अद्य। सं यद्धनन्त मन्युभिर्जनासः। युष्मोतो विप्रो मरुतः शतस्वी। अरा इवेदचरमा अहेव। अज्येष्ठासो अकनिष्ठास एते। मिमातु द्यौर-दितिर्वीतये नः। इति मरुद्भ्यः सांतपनेभ्यः।

१०. सवनीयस्योपालम्भ्यो माहेन्द्रस्तृतीये ऽहनि पशुः कार्यः। अस्य पूर्वाचार्योक्तः पक्षः। सचाहणं दाधृषिं तुम्रमिन्द्रं। त्वं महाँ इन्द्र तुभ्यं ह चाः। महो महानि पनयन्त्यस्य। महाँ उग्रो वावृधे वीर्याय। युध्मस्य ते वृषभस्य स्वराजः। महः उग्राय तवसे सुवृ-क्तिमिति।

११. विश्वकर्मा देवता अस्या इति।

१२. प्रथमे रथन्तरं द्वितीये बृहत्तृतीये बृहद्रथन्तरे। यादृशं [१]बृहद्रथन्तरपृष्ठ्यादेशेन शस्त्रं विहितं तादृशमत्रातिदिश्यते। एवं यथापृष्ठ्य[२] शस्त्रमैकाहिकं।

१३. वाशब्दो नानार्थः अन्यस्मादन्यस्माच्च पार्ष्ठिकादङ्गः स्तोत्रा-णीह व्यहे छन्दोगवशादाह्रियन्ते। तथैव शस्त्राण्यपि भविष्यन्ति।

१४. वाशब्दो विकल्पार्थः। यो विश्वजिद्बृहत्पृष्ठ उक्तस्तत-स्तृतीये ऽहनि सर्वेषु कल्पेषु विशेषशस्त्रं भवति।

१५. विश्वजितो वा बृहत्पृष्ठादित्येतत्सौत्रामणे च भवति। पक्षे वैकाहिकं वाशब्दात्।

१६. सर्वकामस्य महायज्ञ उक्तः। प्रतिप्रयोगं च कामभेदो नैकेन प्रयोगेण कामा इति। स यस्मिन् पक्षे आयुष्कामयज्ञो भवति

१ CD बृहद्रथन्तरपृष्ठ। २ CD ० पृष्ठ्य।

तस्मिन्पक्षे विश्वजितो वा बृहत्पृष्ठाच्छस्त्रं भवति। ऐकाहिकं वा परिभाषितत्वात्।

१७. स एतौ यज्ञक्रतू अपश्यद्वितुत्त्यभिभूती इति[1]। तयोर्वितुत्त्यभिभूत्योर्विश्वजितो वा बृहत्पृष्ठाच्छस्त्रं भवति[2]। ननु च यद्विश्वजितो बृहत्पृष्ठस्य तदेनयोः शस्त्रमिति (१४.३८.८) वक्ष्यत एव। ऐकाहिकस्य पक्षे विधानार्थं वचनम्।

१८. उत्सन्नयज्ञ इव वा एष यः स्वर्जिदिति (१४.४७.२) वक्ष्यति। तस्मिन्स्वर्जिति विश्वजितो वा बृहत्पृष्ठाच्छस्त्रं भवत्यैकाहिकं वा।

१९. इषुवज्रौ श्येनाजिराविन्द्रवज्रं च वक्ष्यति (१४.२२.४)। स एवेन्द्रवज्र इहोक्तः। तस्मिन्निन्द्रवज्रे विश्वजितो वा बृहत्पृष्ठाच्छस्त्रं भवत्यैकाहिकं वा।

---

८.

१. शुनासीरीयो हविर्यज्ञसोमो वक्ष्यमाणस्तस्यायं पुराकल्परूपो[1] ऽर्थवादः।

२. हविर्यज्ञं शुनासीरीयं काममिव[2] विशेषवचनात् बहूनां यज्ञक्रतूनां मध्यस्थितमेतं[3] कामसंपत्तियोग्यं[4] पर्यालोचनया दृष्टवान्।

---

१ A ins वक्ष्यति। २ A om शस्त्र। ३ A om रूपो। ४ C (orig) M कामसेव. D not quite legible. ५ C मध्या°। ६ C D कामसंपत्ति° A संपत्ति।

३. तस्य संभारानाहरत्[१]। तेनेष्टवान्।

४. तेन वर्तितयागः प्रतिष्ठां प्राप्तः।

५. यत एवं पुराकल्पो ऽतस्तेन प्रतिष्ठाकामो यजमानो यागेन प्रतिष्ठां भावयेत्।

६. शुनासीरीयः पशुः सवनीयस्योपालम्भ्यः।

७. सूर्या देवता अस्या इति सौरी।

८. गवामियं संख्या न्यायात्।

९. ददातीत्यनुषङ्गः। विंशच्छब्दो द्वितीयान्तो गवां कर्मभूतत्वात्। प्रतिविभज्य दानयोगो ऽन्वहं दक्षिणा इति वचनात्।

१०. चिम्यग्रहःसु प्रतिविभज्य दानं पूर्ववदहीनत्वात्।

११. ददातीत्यनुषङ्गः सर्वत्र।

१२. भवतीति वाक्यशेषः। अर्थवादार्थः[२] संख्योपन्यासः[३]।

१३. फलार्थं संपाद्यम्। तत्राहोरात्रविभागे[४] विंशतिशतमहोरात्राणि भवन्ति।

१४. तदनया गोसंख्यया[५] दैविकाहोरात्रपरिच्छिन्नमृतुं कामोपभोगमाप्नोति।

१५. प्रणाडिकाद्वारेण संवत्सरमाप्नोति। दैवमेव संवत्सरं कामफलमुपभुङ्क्ते[६]।

---

१ समाहरत् ought to have been marked with 3 in the edition of the text and the numeration of the other Sūtras altered accordingly.

२ C चर्थवादः (?)। ३ M संचपन्यास। ४ C D ०भागो।

५ A C D घोगसं०। ६ C D दैवं A संवत्सर०।

१६. न ह वा संवत्सरात्कश्चन बहिर्धा कामो ऽस्तीति। अयं दक्षिणादानविधिविशेष उक्तः। प्रवृत्त्युपरोचनाय।

---

## १०.

१. स्मृतौ द्वाविंशतिकानि चातुर्मास्यान्युक्तानि। तेषामेव पशुगुणविशिष्टानामिदानीं विधानं। महाकौषीतकिब्राह्मणाभिप्रायेण नाम्ना धर्मातिदेश इति तद्धर्मप्रवृत्तिः।

२. गुणभूतस्यापि पशोरिहाग्नावैष्णवी च (६. १. २२) वक्ष्यमाणस्त्येतद्भवति।

३. अपरेद्युः अपरे ऽहनि वैश्वदेवः पशुर्भवति।

४. पशुपुरोलाशानन्तरं याः यस्मिन्पर्वणि चातुर्मास्यदेवतास्ताः सर्वा भवन्ति।

५. पशोरयं पाशुकः। पशुपुरोलाशकः समासार्थः। तदीयस्विष्टकृद्भवति। ननु च पश्वर्थानि विभवादयं साधयन्तीति वचनाद्वाच्यमेतत्। नेत्युच्यते। पशुपुरोलाशार्थानामसाधकत्वात्। पश्वर्थानीति विशेषणात् स्विष्टकृतस्य संसर्गित्वात्। कुतो विभवः। पुरोलाशस्विष्टकृत्समवाये ऽपीति (५.१८.३) चेत्सिद्धेरवाच्यम्। पशुपुरोलाशस्याचायात्यानां चानङ्गत्वे ऽपि विशेषस्यानापत्तेः[1] पशुपुरोलाशतन्त्रं न्याय्यम्। इह [2]चातुर्मास्यानां प्राधान्याद्विराजः[3] स्यात्। अध्वर्यवश्च यजप्रैषं कुर्वन्ति। तेषां स्विष्टकृद्यस्मादिति हि (५.११.

---

१ A विशेष। २ A ins तु। ३ A विराज।

२४) कात्यायनस्य। तस्मादारम्भः। ननु चैवमन्यायः स्यात्। नेत्युच्यते। नियमपरत्वात्। पूर्वकार्यनुविधानात् प्रैषाभावः[१]। सद-दर्ययारम्भः। ननु चैवं पशोराज्यभागयोः क्षतलाम्नायविरोधः। द्रव्यसामान्याच्च पशोर्हविर्धनन्तौ। श्रुतौ हि चातुर्मास्येषु सामान्यात् न्यायतः श्रुतेर्बलवत्त्वं। पूर्वकार्यनुविधानात् तु प्रैषाभावः। न चान्यायो नियमपरत्वाद्भूयसां लङ्गानां करणादेव[२] एकादशप्रयाजा-दिविकारः। अयमग्निरग्निरिस्यादिपश्यः। अत्र पूर्वकारिवशात्प्रैषाभाव इत्यन्यायः[३] वचनपूर्वकत्वात्पाशुकः स्विष्टकृदित्यस्य सूत्रस्य[४] सददा-ज्यभागयोश्च पूर्वकार्यनुविधानात् प्रैषाभाव इत्येतदप्ययुक्तमुक्तं। कुतः। यथोक्तमविरुद्धमिति (५.११.२५) कात्यायनवचनाद्यथैव प्रस्तरं बर्हिः प्रस्तरो वा प्रथमजश्च[५] गौरित्येवमादिकं धर्मजातं पशुधर्मान्न विरुणद्धि। एवं सददाज्यभागावप्यविरुद्धौ तस्मात्सप्रैषावेव।

६. न पशुतन्त्रे हवींषि चोद्यमानानि निगमान् लभन्त इत्ये-तदुक्तं यत्र प्रधानः पशुः। इह तु गुणभूतेऽपि पशौ तन्त्रवाक्य-स्यात्तत्त्वात्[६]। चातुर्मास्यहविषां प्रधानानामपि तत्रानुप्रवेशः[७]। निग-मस्थानवर्जं। तेन निगमस्थानानां प्राप्तानां वाचनिकः प्रतिषेधः।

७. पशुपुरोडाशमनु प्राप्तस्यायं प्रतिप्रसवः।

८. हृदयशूलोपस्थानान्तं कर्म परिसमाप्यते। येषां शाखिनां सकृद्धुतेष्वग्निषु साकमेधास्तेषां मैत्रश्चरुरदितये वेति कृत्वा हृदय-शूलोपस्थानं। येषां प्रतीष्टिविहारस्तेषां शाखिनां महाहविषोऽन्ते।

---

१ C D om. नु। २ C D om एव। ३ C D अन्याय्य। ४ A om. सूत्रस्य। ५ C om. ज। ६ A तस्य instead of तत्त्वात्। ७ C D M अनुविशेष।

९. वारुणमारुतौ पशू वरुणप्रघासेषु भवतः ।

१०. उत्तरे विहारे वारुणः पशुः । दक्षिणे मारुतः । तत्रोत्तरे यूपमुच्छ्रयन्ति पूर्वकारिणः । तथैवानुविधेयं । समानयूपौ[१] वा विशेषोपदेशादिति काठके ।

११. उत्तरयोर्द्वयोः पर्वणोः साकमेधशुनासीरीययोर्यथासंख्येन माहेन्द्रशुनासीरीयौ पशू भवतः । इन्द्रश्च नः शुनासीराविति पक्षो ऽन्यस्याभावात् ।

१२. पूर्वाह्णादिषु कालविशेषेषु स्थानशब्दः । चातुर्मास्येषु यद्यदिष्टीनां स्थानं तत्तदेवात्रापि ।

१३. यथास्थानेव । इष्टित्वात्पूर्वेण प्राप्ते परिभाषार्थं वचनम् । तेन महायज्ञसौमिकादिषु च पित्र्या यथास्थानेव ।

१४. वाशब्दो विकल्पार्थः । याया देवता चातुर्मास्येषु तस्यैतस्यै पशवो भवन्ति ।

१५. तत्कर्म व्याख्यातमेकादशिन्या । तया तुल्यमित्यर्थः । तेन प्रतिपशु यूपा भवन्ति ।

१६. आनीकवतादयश्च पशवो महाहविषि भवन्ति । आग्नेयादयश्च यथोक्तदेवताः[२] ।

१७. अयमपरः पाशुकचातुर्मास्यप्रकारः ।

१८. ऐष्टिकैश्चातुर्मास्यैरुत्क्रममन्यत् । तेन पशुपुरोळाशान्वक्ष्यश्चातुर्मास्यदेवता न भवन्ति ।

---

१ A ॰यूपो । १ A चक्षो यथोक्ता ।

१८. अथशब्दः सांवत्सरिकचातुर्मास्याद्युपसंग्रहार्थः[१]। वाशब्दो विकल्पार्थः। अपिशब्दो यदि सांवत्सरिकाणि न शक्नुयादेतमर्थं प्रतिपादयति। एकशब्दः संख्यावाची। पर्वशब्दो वैश्वदेवादिकर्मवचनः। *मुख्यकल्पाशक्तौ नित्ये ऽवश्यकर्तव्ये एतमपि पक्षं[२] कुर्यात्।* एकस्मिन्पर्वणि तन्त्राधिके अनाहृत्तानि हवींषि समानतन्त्रतया कुर्यात्। ऐन्द्राग्ने वा पशावेकस्मिन्पशुपुरोळाशानन्वञ्चि सर्वाणि चातुर्मास्यहवींषि कुर्यादयं पक्षः।

२०. इळोपह्वानादनन्तरं स्वतन्त्रैव पित्र्या भवति।

२१. त्र्यम्बकात्कर्मण ऊर्ध्वमनुयाजप्रभृति कर्म भवत्यैष्टिके। पशुना वा समानतन्त्रत्वे क्रियमाणे मनोतादि कर्म भवति।

२२. यथादेवतं वा पशव इति सर्वपशूनि चातुर्मास्यान्युक्तानि। तेष्वय दक्षिणाकल्पः। सौमिकैश्चातुर्मास्यैस्तुल्यदक्षिणानि भवन्ति।

२३. याश्चातुर्मास्यदक्षिणा याश्च पशुदक्षिणास्ताभिः समानदक्षिणानि पाशुकानि[२] चातुर्मास्यानि भवन्ति।

---

## ११.

१. प्रत्यवरोहणीयो नामैकाहः प्रतिष्ठाकामस्य यजमानस्य भवति।

---

१ C (orig) •संग्रहार्थ, C (sec h) D •संहारार्थ। २ A स C D om पाशुकानि।

२. संकल्पेन विकृतः संकल्पविकृतः। ज्योतिष्टोमधर्मयाही ज्योतिष्टोम एव। केचिदिदं चातुर्मास्यसोमोत्सर्गार्थं मन्यन्ते।

३. पशुबन्धो नामैकाहः पशुकामस्य यजमानस्य भवति।

४. पशुबन्धो विशिष्यते बकुभीहिणा।

५. एकादशसंख्याकस्तोमस्यार्थवादो ऽयम्।

६. गुर्वचराणां गुरुवृत्ति सर्वं गुर्वचरं त्रैष्टुभमेव विद्यादिति भक्त्या[१]। त्रैष्टुभाः पशवः।

७. पशुप्राप्तये एवंरूपः स्तोमः क्रियते।

८. ऐन्द्रत्वात्त्रैष्टुभत्वात् द्वित्वाच्च निष्केवल्यमरुत्वतीययोः।

९. गव्यन्त इति लिङ्गेन गोसंस्तुतिः। तदेतस्याह्नो लिङ्गम्। पशुकामस्यैतदहः पशवश्च गावः।

१०. एते एव निविद्धाने पशुकामसामान्यात्।

---

## १२.

१. अथशब्दो विशेषाधिकारार्थः। हविर्यज्ञसंस्थासामान्यात् सुराद्रव्यविशेषाद्यविशेषः। अतःशब्दो हेत्वर्थे। यस्मात्किल तुल्यता तैः पूर्वैः सह तस्मादुच्यते। सौत्रामण इति वक्ष्यमाणस्यैकाहस्य नामधेयम्।

२. पुराकल्पो ऽर्थवादार्थः। इन्द्रः किलायुष्कामस्तपस्तप्तवान्।

३. स ध्यानं कृत्वा एतं सौत्रामणं यज्ञक्रतुमालोचितवान्।

१ प्राति० १८ २१।

४. तस्य साधनद्रव्याण्याहरत्।

५. तेनेष्टवान्।

६. तेन यागं कृत्वा दीर्घायुत्वं प्राप्तवान्।

७. उहेति निपातौ वाक्यपूरणौ। तं सौत्रामणमैन्द्रं भरद्वाजाय ऋषये जीर्णाय प्रोक्तवान्।

८. वैशब्दो निपातो यस्मादर्थे। अनेन सौत्रामणेनाहमिष्ट्वा दीर्घायुत्वं प्राप्तवान् त्वमप्यनेन यज येन दीर्घायुर्भवसीत्येवमुवाचेन्द्रो भरद्वाजम्।

९. हशब्दो विनियहार्थीयः। तेनैव सौत्रामणेनेष्ट्वा भरद्वाजः सर्वमायुः प्राप्तः। षोडशोत्तरवर्षशतं पुरुषायुरिति।

१०. वर्षशतं सायं जीवति यः सौत्रामणं वेद यथोक्तेन पुरुषकल्पेन विदित्वा यजते।

११. तस्य सौत्रामणस्य रथंतरं पृष्ठं भवति।

१२. संज्ञानियमार्थं वचनम्।

१३. श्रद्धानुसारेण दक्षिणा देयेत्यभिप्रायः।

१४. तस्य सौत्रामणस्य त्रिवृत्स्तोमकानि त्रीणि स्तोत्राणि भवन्ति।

१५. चतुर्थपञ्चमषष्ठानि त्रिवृत्स्तोमकेभ्यः प्रथमेभ्यस्त्रिभ्यो ऽनन्तराणि।

१६. सप्तमाष्टमनवमानि त्रीणि सप्तदशस्तोमकानि।

१७. दशमैकादशद्वादशानि।

१८. पूर्वस्मादुत्कृततर उत्तरः। स चाधिक्येनोत्तरौ। उत्त-

रयामायुत्तरी चेत्युत्तरोत्तरी। तस्य भाव उत्तरोत्तरिता। तस्यै उत्तरोत्तरितायाः इति[1] तादर्थ्ये चतुर्थी।

१८. उत्तरोत्तरोत्सृष्टं दीर्घमायुः माप्नुयामित्याशिषि प्रत्ययः।

---

## १३.

१. तस्य सौचामण्यामाश्विनः पशुर्लोहितेन वर्णेन विशिष्टः सारस्वती च मेषी इत्येतौ पशू उपालम्भ्यौ सवनीयस्य।

२. इन्द्रसुत्रामदेवत्या वशा वन्ध्या गौः। अनूबन्ध्यायाः संनिधावाम्नाया। एवंविधा अनूबन्ध्यापचतुल्या। इमा मह्मिन्द्र तुभ्यं शषि। त्रातारमिन्द्रमवितारमिन्द्रम्। इन्द्रः सुत्रामा स्ववाँ अवोभिः। उयो जज्ञे वीर्याय स्वधावान्। अध स्मा ते चर्षणयो यदेजान्। तस्य वयं सुमतौ यज्ञियस्येति प्रथमा। एता इन्द्रस्य सुत्राम्णः पङ्क्तः।

३. अनूबन्ध्या सौचामणी पशुभिस्तुल्यदेवत्या। नैर्ऋतः[2] सौचामण्या अपगतो न भवामीति।

४. तस्य सौचामण्यायं क्रियाविशेषः। प्रातःसवनीयस्य पुरोळाशानन्तरं बाह्यतः परिधित आहवनीयमपनीयोपसमाधायाग्निं[3] तस्मिन्नेवाग्नौ सुरासोमेन प्रचरन्ति। सुरया प्रचरन्तीत्यर्थः। साग्निद्-देवत्येभ्यः खिष्टकृद्देन[4]।

---

१ A तस्मै उत्तरोत्तरितायैमुत्तरोत्तरितायाः M तस्यैव उत्तरोत्तरितायमुत्त॰।
२ congect A नैष्कृत C नैर्ऋतै M नैर्ऋतै। ३ A om अग्नि। ४ A॰स्वदभेदेन।

५. सावित्रं द्वादशकपालं पुरोळाशं निर्वपेत्तृतीयसवनीयान्पुरोळाशाननु ।

६. पूर्वं निर्वपेत् ।

७. पूर्वयोरनन्तरम्[1] ।

८. कृतव्याख्यानं पूर्वमेवैतत्[2] ।

९. हेतुत्वेनार्थवादोपन्यासः ।

१०. वैशब्दो निपातः। इन्द्रं सुत्रामाणं प्रति सौत्रामणी संतिष्ठते यतः ।

११. हविर्यज्ञसंस्था सौत्रामणी । सोमयागः[3] सौत्रामणः । हविर्यज्ञसोमप्रकरणे सौत्रामणिकः संस्था[4] प्राप्तुमिष्यते । तामेवार्थवादेन योजयति ।

१२. पूर्वमग्निष्टोम उक्तस्तमेव सौत्रामणं केचिदतिरात्रसंस्थं कुर्वन्ति । एक इति विकल्पार्थम् ।

१३. एकविंशतिस्तोमं तं सौत्रामणं सर्वमेवेति । बृहत्पृष्ठमिति नियमार्थम् । उभयसामानमिति छान्दोग्यकृतो विशेषः ।

१४. तस्यानन्तरोक्तधर्मस्य यद्विश्वजितो बृहत्पृष्ठविशेषणस्य शस्त्रं तच्छस्त्रं भवति । तस्य बृहद्रथन्तरं पृष्ठमित्यर्थः । स्वस्ति नो मिमीतामिति यत्सूचो[5] न भवति ।

१५. अत्र अस्मिन्सौत्रामणे हविर्यज्ञाः सोमाः समाप्यन्ते ।

---

१ C has in marg. the gloss यदि मध्य . माभिप्रायमेतत् । २ A पूर्ववत् ।
३ C सोमयागश्चो॰ । ४ C D सस्था । ५ A यत्सूचो ।

यदुक्तमेवं पशवः पुरोलाशश्चान्वायात्यन्ते हविर्यज्ञेषु सोमेष्विति तत्सौत्रामण्यन्तं भवति[१]।

---

## १४.

१. देवाः पशुकामाः। ह शब्दो निपातो वाक्यपूरणः। चतुरो मासान् व्रतं चरित्वा प्रकरणाद्वीचाव्रतम्। एतमुद्भिदाख्यं यज्ञक्रतुं दृष्टवन्तः।

२. तेनोद्भिदा कृतयागाः पशून्प्राप्ताः।

३. एतदुच विधिवाक्यम्।

४. उद्भिदा कृतयागो यदि मन्येत चिरेण मे पशवो भविष्यन्तीति तदा[२] मासचतुष्टयं व्रतं चरित्वा बलभिदा यजेत। अनेनार्थवादेनैतत् ज्ञायते। पूर्वेणोत्तरेणावश्यमिति।

५. एनं यजमानं चिप्रमभिलषिताः पशव आगच्छन्ति।

---

## १५.

१. गोसवेन यागेनैकाहेन पशुकामो यजेत।

२. एवंधर्मकेण गोसवेन। तत्रार्थवादः।

३. स्वरूपतः।

४. चतुष्पात्सामान्यात्।

---

१ M adds येन सौत्रामण्या सञ्जेति लिङ्गात् सौत्रामण्यपि हविर्यज्ञसंस्थानां मध्ये भवतीति सापि भवति। २ C D om तदा।

५. प्राप्त्यर्थम् ।

६. षट्त्रिंशत्सहस्राणि यासां ताः षट्त्रिंशत्सहस्रा बहुव्रीहिणा विशेष्यन्ते । गोसवस्येति पुनर्वचनादस्यैतच्छाखान्तरे दक्षिणाकल्पान्तरमस्ति ।

७. गोसवस्य दक्षिणात्वेन [1]गवां संख्यान्यायतः ।

८. उक्थ्यसंस्थ इत्यर्थः ।

---

## १९.

१. घृतपेयो नामैकाहस्तेन तेजस्कामो यजेत ।

२. दीक्षाणां परिमाणानियमे प्राप्ते नियमः । उपसदां तु द्वादशत्वं विधीयते ।

३. अङ्गुष्ठमध्यमपर्वणेति विवक्षितम् । तदेतेन मध्यमेनाङ्गुष्ठपर्वणा प्रमितमौदुम्बरं चमसं दारवं घृतस्य प्रतयेत्[2] ।

४. अयुजासु दीक्षासु क्षीरौदनं प्रतयेद्यथाक्रमम् ।

५. अत्रापि सोमस्याभिषुतस्य चमसो दक्षिणेति विवक्षा । उदुम्बर एव प्रकृतत्वात् । वचनात् प्राकृतस्य [3]दक्षिणादानस्य निवृत्तिः । चतुरो मासान् व्रतं चरित्वा वलभिदा यजेतेति निवृत्तिः ।

६. तं चमसमृत्विजो गृहीत्वा घृतं सत्यमित्येवं ब्रुवन्तो भक्षयेयुः ।

---

१ C D M गाव· C D भख्यामन्यायन । २ C प्रतयेत्याप्रमितं D •प्रतयेत्याप्रमितं । ३ A दानस्य प्राकृतस्य दक्षिणानिवृ• ।

७. भूर्भुवः स्वरिति वानेन मन्त्रेण भक्षयेयुः।

८. समानं गोत्रं यस्यासौ सगोत्रः। स च ब्राह्मणत्वेन विशिष्यते। तस्मै सगोत्राय ब्रह्मणे। ब्रह्मब्राह्मणयोरैक्यात्सगोत्राय ब्राह्मणायेत्यभिप्रायः।

९. निष्केवल्यमरुत्वतीययोः।

१०. ऋतपेयाख्यमेतदहः। ऋतलिङ्गे चैते सूक्ते।

१७.

१. [1]भूर्णामैकाहः। तस्यायमर्थवादः। प्रजापतिरिमं लोकमीप्सन्नित्येवमादिकः।

१८.

१. भुवमन्तरिक्षलोकमीप्सन्यजेतैकाहिकेनेति विधिस्तस्यायमर्थवादः। प्रजापतिरन्तरिक्षलोकमित्येवमादिकः।

१९.

१. स्वर्णामैकाहः[2]। तस्यायमर्थवादः। प्रजापतिरमुं लोकमीप्सन्नित्येवमादिकः।

२. सप्तदशस्तोमाः स्वरसामान (११.११.१) इत्युक्तम्।

१ C D भूर्नो०। २ C D स्वर्नो०।

तेभ्यो व्याहृतियज्ञानां यथासंख्येन शस्त्राणि भवन्ति। यथास्तोमं च यथासंख्येन। केषां चिच्छाखिनां स्तोमान्यत्वं तदपीष्यत एव।

३. आनुष्टुभानि निविद्धानानि न त्रैष्टुभानि[१]।

---

## २०.

१. शुक्रस्तोमो नामैकाहस्तेन तेजस्कामो यजेत। तत्रार्थवादः। सूर्यो ह तेजस्काम इत्येवमादिको ऽनुष्ठानप्ररोचनार्थः।

२. प्राकृतदक्षिणानिवृत्तिः श्रूयमाणं प्राकृतं नामधेयमन्यस्मिन्न्रव्ये प्रकृत्तिं निवर्तयतीत्युक्तत्वात्।

३. सप्रातरनुवाकमेतदहर्दिवाकीर्त्यं भवतीत्येवमादिधर्मजातमहर्वचनात्[२]।

---

## २१.

१. तीव्रसवो नामैकाहः स भवति प्रजया पशुभिस्तीव्रस्य भवितुमिच्छतः।

२. अयं तीव्र इत्येवमादिका कल्पजा त्रिष्टुप् पुरस्तान्मरुत्वतीयस्य।

३. तीव्रस्याभिवयसो अस्य पाहि निविद्धानमित्येतावाचिष्के वल्पे विकारः।

---

१ C D त्रैष्टुभानि। २ C D ह •पत्त instead of •चनात्।

## २२.

१. सूतसवो नामैकाहस्तत्र यज्ञो ज्योतिरग्निष्टोमः प्रथममाभिप्लविकमहर्भवति।

२. स्थपतेः कुड्यकारस्यायं भवति। स्थपतिसवो नामैकाहः। गोसंज्ञकमाभिप्लविकमहर्भवति[1]।

३. ग्रामणीर्वैश्यस्तस्य ग्रामणीसवो नामैकाहः। स आयुःसंज्ञकमाभिप्लविकमहर्भवति।

४. संदंशस्य अनुस्तोमस्य संदंशानुस्तोमौ द्वन्द्वनिर्दिष्टौ। पूर्वैणैवोत्तरेणावश्यमित्येवमादि शाखान्तरीयान्धर्मानपेक्ष्य द्वन्द्वनिर्देशः। इषुस्य वज्रस्य इषुवज्रौ। श्येनस्याजिरस्य श्येनाजिरौ। मृत्योरान्तकस्य मृत्य्वन्तकौ। क्षुरवपिस्य शीर्षच्छिच्च क्षुरवपिशीर्षच्छिदौ। सहरेककः। श्येन एककः। इत्यभिचरणीयाः। अभिचरणकार्यधर्मा इत्यर्थः। एतेषां सामान्यविशेषधर्मा इदानीमुच्यन्ते।

५. निविद्धीयते ययोस्ते निविद्धाने। यस्ते मन्यो त्वया मन्यो इत्येते मन्युसूक्ते निष्केवल्यमरुत्वतीययोर्निविद्धाने भवतो लिङ्गक्लृप्ते इत्यर्थवादात्। त्वया मन्यो इति मरुत्वतीये हर्षमाणासो धृषिता मरुत्व इति मरुत्वलिङ्गात्। यस्ते मन्यो इति निष्केवल्ये मन्युरिन्द्र इतीन्द्रलिङ्गात्।

६. आत्मसंरक्षणार्थमभिचर्यमाणस्य प्राकृतो ऽग्निष्टोमो भवति। किं तु यदेव पृष्ठमभिचारे यज्ञे शत्रवः कुर्युस्तदेवेतरेणापि कर्तव्यम्।

---

1 C D om अहर्।

७. इषुसंज्ञे ब्रह्मसाम बृहत्पृष्ठं भवति । तत्र योन्यनुशंसनं कार्यम् ।

८. इतरेष्वभिचारयज्ञेषु अभीवर्तो ब्रह्मसाम भवति ।

९. शिखरैरिषुफलतोमरकर्णिकादिभिरायुधैः[1] सदश्छन्नं यथा भवति तथा कुर्यात् ।

१०. कार्मुकाणि धनूंष्यारोपितानि संग्रामकर्मयोग्यानि[2] तानि शयाना अपि न मुञ्चन्तीत्यभिप्रायः । तत्कर्तृणामयमुपदेशो[3] रक्षणार्थे ऽपि तुल्य एव ।

११. बाणाः शरास्तदग्निः शिखरैः[4] संग्रामयोग्यैराग्नीध्रमागारं छन्नं कुर्युः ।

१२. धन्वनामा वृक्षस्तन्मयानि धनूंषि आग्नीध्रशायिन उपशेरते । संग्रामयोग्यानि तानि शयाना अपि न मुञ्चन्तीत्यभिप्रायः । तत्कर्तृणामुपदेशो रक्षणार्थे ऽपि तुल्य एव ।

१३. सौत्ये ऽहनि प्राधान्यात् । मयट्वचनात् शरपत्त्राणि[5] ।

१४. सुवर्णसेफालिकावाचक इत्ये(?) गिरिमालक इति प्रसिद्धवृक्षो[6] बाधकस्तदवयव इध्मो भवति परिधयश्च ।

१५. वैभीदकः प्रसिद्ध एव । तदवयवो यूपः कार्यः ।

---

१ C शिखरैश्शष्टफल, in marg ष्टै instead of शं, om. घायुधैः D शिखरै ष्टष्टक॰ om घायुधे । २ A om संग्राम॰ग्यानि । ३ C तत्कष्टकाणा D om घय । ४ C D शरास्तै संग्रामयोग्यैराग्नी॰ । ५ C D ॰शरपत्राणि M शरस्ताणि । ६ C सुवर्णसेफालिका नावक्तिकनियाकनियाकनियाकत्तियाकति [वा] प्रसिद्धा । स इचो बाधक । D like C (with exception of the last कत्तियाकति [वा]) M corrupt Read ॰सेफा॰ ।

१६. उपतापो रोगः। स यासामस्ति ता उपतापिन्यस्तासां यदाज्यं तद्ग्राह्यम्।

१७. अनुस्तरणी गौः। कस्यचिद्दहनक्रियायां[1] नियुक्ता या तदीयचर्म अधिषवणम्। अनुस्तरणीचर्म सोमाभिषवाधारो भवति।

१८. यजमानशवशरीर[2] येन उह्यते अनसा तस्य नभ्ये फलके ये अधिषवणफलके ते भवतः।

१९. चमूशब्दः सेनावचनः। इह लक्षणया समुदाये श्मशाने या आपः संस्तुताः संस्यन्दिन्य आसते ताभिरद्भिर्वसतीवरीरामिश्रयन्ति।

२०. परुषा इषवस्ते उताः सच्छिद्रा येषु ते उतपरुषा इषुधय उच्यन्ते। संपूर्णशराः। उपसमीपे पृष्ठे बद्धा येषां पुरुषाणां त उपोतपरुषाः कर्तारः। अधिज्यधन्वान आरोपितधनुष्काः। लोहितोष्णीषाः कुसुमादिरक्तोष्णीषाः। असिबद्धाः असयो बद्धाः यैस्त उच्यन्ते। एवंरूपाः प्रचरेयुः।

२१. नेति निषेधः। ह इति निपातो विनिग्रहार्थीयः। एतमित्यभिचर्यमाणनिर्देशः। कश्चनेति निपातसमुदायः कश्चिदर्थीयस्य वाचकः। ईशीतेति प्रार्थनायां लिङ्। इयदित्यल्पपरिमाणाभिप्रायम्[3]। स इत्यभिचर्यमाणनिर्देशः। अकारो निपात आश्चर्ये[4]। एतदुक्तं भवति। [5]नैवैतमभिचर्यमाणं कश्चनाशासन्नपि इयत्परिमाणमल्पकालं द्वादशाहं मापयितुं न कश्चित्पारयति।

---

१ A मदहन॰। २ C D om शव। ३ C D इयदित्यपरि। ४ C D चाश्चर्ये। ५ C D न वैतम्।

२२. नेति प्रतिषेधः। ह वा इति वाक्यपूरणे। न वैव[1] तं कश्चन स्तृणुते हिनस्ति य एतैः संदंशादिभिः प्रत्यभिचरति। प्रत्यभिचार उच्यते। यो ऽस्माकं नाशाय[2] विहितं विदधाति तत्तस्यैव भवत्वित्यनेन[3] कामसंयोगेन।

२३. सद्यो नामैकाहः। प्रत्यभिचारतः[4] स[5] भवति। पापगृहीतस्य च तदपनुत्तये।

२४. अन्तसमीपवर्तिन्यः[6] उपोत्तमा इति। शस्त्रबहुत्वाद्बहुवचनं। चशब्दादुभयकामसंयोगे ऽपि[7]।

२५. उपसद्यो नामैकाहः। स प्रजाकामस्य यजमानस्य भवति। पशुकामस्य च प्रयोगान्तरेण युक्तः।

२६. उपजायन्त इत्ययमस्य विशेषको धर्मः। शस्त्राणां या उपोत्तमास्तासामनन्तरमभ्यधिकास्तद्देवत्यास्तच्छन्दस्का उपजायन्ते।

---

## २३.

१. ऋषभो नाम वक्ष्यमाणक एकाहस्तस्यायं पुरस्तात्पुराकल्पो ऽर्थवादत्वेनाभिधीयते। देवासुराः समयतन्तेति देवाश्चासुराश्च ते देवासुराः। ते परस्परं संग्रामं प्रति यत्नं कृतवन्तः।

---

१ C नैवै॰ D नैवैव तं। २ A नाशयति हितं विदधाति C नाशाय विहि॰। ३ C भवत्यनेन। ४ A ॰चर॰ I prefer the subst. ५ C D स च। ६ C D उपोत्तमा, समीपवर्तिन्य, उपोत्तमा इति शस्त्र॰। ७ C D संयोगो ऽपि।

१. ते देवा यत्ता बृहस्पतिं पुरोहितमुपाधावन्त उपगतवन्तः[१]। किमर्थं पुरस्कृत्य। उपजानीहि तं यज्ञक्रतुम्। उपज्ञा प्रथमत उपलब्धिरभिधीयते। तदर्थं देवा बृहस्पतिमुक्तवन्तः। तमुपजानीहि यज्ञक्रतुं येनेष्ट्वा वयमसुरानभिभवेमहीति।

२. स बृहस्पतिर्वक्ष्यमाणकमृषभाख्यं यज्ञक्रतुं दृष्टवानुपलब्धवानित्यर्थः।

४. तेन ऋषभेणेष्ट्वा देवा असुरानभ्यभवन् जितवन्तः।

५. तेन ऋषभाख्येन यागेन द्विषतो भ्रातृव्यान् शत्रूनभिभवितुमिच्छन्यजेत।

६. पञ्चदशस्तोमस्त्र्यहः सप्तदशो माध्यन्दिनः पवमानो भवति। तदस्याह्न ऋषभरूपं ककुदमिव सप्तदशो माध्यन्दिनः पवमानोऽभ्यधिकत्वेन।

७. निष्केवल्यमरुत्वतीययोर्यथासंख्यमेते निविद्धाने भवतः।

८. ऋषभवृषभशब्दयोरेकार्थत्वात्।

## २४.

१. व्योम[२] नामैकाहस्तस्यायं पुराकल्पो ऽर्थवादः।

२. तेन व्योमाख्येनैकाहेनेष्ट्वा सूर्यस्तेज आप्तवान् पुराकल्पः। सांप्रतमपि तेजस्कामस्तेन यजेतेत्यभिप्रायः।

---

१ C D स्पधं A omits from. तं यज्ञक्रतुं to उपजानीहि। २ C (sec. m.) व्योमा।

३. सप्तदशस्तोमस्याह्न एकविंश आर्भवः पवमानो भवति। तत्रार्थवादः।

४. द्वादश वै मासाः संवत्सरस्य पञ्चर्तवस्त्रयो लोका एष एवैकविंशो य एष तपतीत्येवमेकेन विंशस्तदेनमादित्यं स्वेनैकविंशेन रूपेण समर्धयति[१]।

५. इमा उ त्वा पुरुतमस्य कारोः। इन्द्रं स्तवा नृतमं यस्य मह्नेति निष्केवल्यमरुत्वतीययोर्निविद्धाने भवतः।

६. नैधण्डुकेन[२] सूर्याभिव्याहारेण लिङ्गेनैवाह्नो रूपसंपत्तिः। स सूर्यः पर्युरू वरांसीति इकारान्तः पादः।

---

## २५.

१. विराण् नामैकाहो ऽन्नाद्यकामस्य। तस्यायं पुराकल्पसरूपो ऽर्थवादः।

२. *प्रजावानन्नाद्यं वसिष्ठः।*

३. वसिष्ठानुष्ठानात् प्रशस्तेन।

४. बहिष्पवमानो माध्यन्दिनश्च पवमानः पञ्चदशभिःपञ्चदशभिः[३] स्तोत्रियाभिः। इतराणि दश स्तोत्राणि त्रिवृत्स्तोमभितानि[४]। एताः स्तोत्रियाः संख्यया विंशतिशतम्।

---

१ The Comm. on 4 is om in A C D एकैवविंशस्तदे०। M एकैव।
२ A om. न। ३ once om. in A. ४ A ० स्तोमक० C (orig) D स्तोत्रियाणि instead of स्तोत्राणि।

५ स एकाहो विरालाख्यो दशत्वेन सामान्येन विराजमभिसंपद्यते।

६. फलार्थवादो ऽयम् । न फलविधिरकल्पात्फलान्तरस्य ।

७. अक्षरवैराजे इति संज्ञाकरणं शास्त्रसंव्यवहारार्थम्।

२६.

१. अत्रैव स्वराड् नामैकाहः स्वाराज्यकामस्य। तस्यायं पुराकल्पस्वरूपो ऽर्थवादः ।

२. तत्स्वाराज्यं माघवानिन्द्रः ।

३. फलविधिरयं । स्वाराज्यमुच्यते ज्ञातिश्रैष्ठ्यं वा[1] ।

४. एवमेतच्चतुर्विंशतिशतं स्तोत्रियाणाम् ।

५. पूर्वोक्तां विराजं चतस्रो ऽतियन्त्यतिरेचयन्ति ।

६. चतसृभिरतिरिक्ताभिः ।

७. पूर्ववद्चाप्यक्षरवैराजे निविद्धाने भवतः ।

२७.

१. उशनस्तोमो नामैकाहस्तस्यायं पुराकल्पेन सरूपो ऽर्थवादः। उशनाः शुक्रः कवेः पुत्रः काव्यः । स किलासुराणां पुरोहितो बभूव ।

---

१ C D सुश्रैष्ठ्यं वा।

२. ईच दर्शनांकनयोः। एवं[१] पर्यालोचितवान्। कथं पुनस्तेन यज्ञक्रतुनेष्ट्वा पाप्मानमपहन्यामित्येतच्चित्ते कृतवान्।

३. साध्यसाधनसंबन्धेन[२] परिदृष्टत्वात्।

४. तेन यागेनेष्ट्वा पाप्मानमपहतवान्[३]।

५. अथ विधिः। उशना ह काव्य इत्येवमादिकः सर्व एव शेषः।

६. अनेनैव यजेतेति वाक्यशेषः। उदरं जलोदरमिति प्रसिद्धम्। इतिकर्तव्यतामिदानीमाह।

७. अस्य त्रिवृत्स्तोमकं प्रातःसवनं भवति।

८. ब्रह्म त्रिवृद्वह्निसाहचर्यादित्युक्तम्।

९. सह दशभिः सदशः। दशकाः स्तोमा इत्यर्थः। माध्यन्दिनः सवनाभिधानम्।

१०. दशसामान्येन विराट्संपदो ऽर्थवादः।

११. त्रिवृत्स्तोमकं तृतीयसवनम्[४]।

१२. अपहतवान्।

१३. एते निष्केवल्यमरुत्वतीययोर्यथासंख्यं निविद्धाने भवतः।

१४. उशनवती सूक्ते द्वे अप्युक्ताभ्यां लिङ्गाभ्याम्।

---

१ A °नयोरिव पर्या°। २ 3 and 4 are om in A.
३ C D पाप्म A पाप्मे। ४ A om 10 11

## २८.

१. उत्तरो ऽयमुशनस्तोमो वक्तव्यस्तस्यायमर्थवादः। पूर्वेणेष्टो-त्तरेणावश्यमिति नियमादुत्तरमुत्तरमुशनस्तोमं यज्ञक्रतुमुशना-पश्यत्[1]।

२. माप्तवानित्यर्थः।

३. विधिवाक्यमेतत्।

४. त्रिवृत्स्तोमकं प्रातःसवनमत्र। तत्रार्थवादः।

५. भक्तिसाहचर्यात्।

६. सदशको माध्यन्दिने सवने स्तोम[2] इत्यर्थः।

७. दशत्वसामान्येन विराट्। विराट्त्वसामान्येनान्नाद्यम्। विविधदीप्तिहेतुत्वादन्नाद्यस्य।

८. त्रिवृत्स्तोमकं तृतीयसवनम्।

९. उक्तार्थमेतत्।

१०. माध्यन्दिने सवने विराट्संबद्धमन्नाद्यं तदुभयतस्त्रिवृता ब्रह्मणा [3]संदंशवत्परिगृह्यात्मनि स्थापितवान्।

११. माध्यन्दिने सवने विराट्संबद्धमन्नाद्यं तदुभयतस्त्रिवृता ब्रह्मणा [4]संदंशवत्परिगृह्यात्मनि स्थापयति[5]।

१२. इह सूक्ते निष्केवल्यमरुत्वतीये भवतः। उशना यत्सहस्यै-रयातं वरिवस्युशने काव्यायेति।

---

१ A om in A  २ A ins माध्यन्दिने स्तोम दशको। ३ C D सदृशवत्।
४ C D संदशपरिगृह्य। ५ A om 11.

१३. विविधो नामैकाहो ऽप्येवंस्तोम एव। एवंशब्देनोशन-स्तोमस्य निर्देशः। अन्नाद्यकामस्येति फलसंबन्धनिर्देशः।

१४. निविद्धाने विविधस्य।

१५. विविधस्यायं दक्षिणाविशेषः। सहस्रं गवां अश्वशतं च दक्षिणा भवति।

---

२९.

१. कुलायो नामैकाहस्तस्यायं पुरस्तादर्थवादः। देवेषु देवानां मध्य इन्द्राग्नी अहंश्रेयसे विवदेयाताम्। अहं श्रेयानहं श्रेयानित्यहंश्रेयसम्। तस्मिन्नहंश्रेयसे।

२. ते देवा एवमुक्तवन्तो यद्येताविन्द्राग्नी एवं विवदिष्येते क्षतयत्नचोभं दृष्ट्वाभिभविष्यन्ति नो ऽसुराः।

३. उपजानीम उपलभामहे[1] तं यज्ञक्रतुं येन कृतेनैताविन्द्राग्नी संशमयेमहि। संशमं[2] सांगत्यमुच्यते। परस्परसंवित्।

४. ते देवा एतं यज्ञक्रतुमुपलब्धवन्तः। इन्द्राग्न्योः कुलायाख्यम्।

५. तेनेन्द्राग्न्योः कुलायाख्येनैकाहेन संशमनं संविदं कृतवन्तः।

६. यं वा क्षत्रियं पुरोधास्यमानो ब्राह्मणः स्यात् यं वा ब्राह्मणं क्षत्रियः पुरोधास्यमानः स्यात् स च ब्राह्मणश्च कुलायेन संयजेयाताम्।

---

१ A ०हे। २ A संशयं।

७. सह यजमानावेकेन क्रतुना।

८. व्यत्यासेन भवतः।

९. भक्तिवादेनैवमुच्यते।

१०. तस्मात्त्रिष्टुप्छन्दसौ कर्तव्यौ।

११. तिष्ठा हरी रथ आ युज्यमानेति मरुत्वतीयम्। तमु ष्टुहि यो अभिभूत्योजा इति निष्केवल्यम्।

१२. ऐन्द्रे सूक्ते। अग्नेः पिबेति अग्निर्न शुष्कमित्यग्निमती।

---

## ३०.

१. विराट्स्वराजं वदन्पुराकल्पमाह। मित्रावरुणयोरेको वैराज्यमैच्छदन्यः स्वराज्यम्।

२. मैत्रावरुणौ दृष्टवन्तौ।

३. भिन्नकामयोरेक एव क्रतुर्वचनसामर्थ्यात्।

४. निविद्धाने भवत इति वाक्यशेषः।

---

## ३१.

१. ज्येष्ठस्तोमो नामैकाहो भवति कनिष्ठकुलीनस्य। कनिष्ठकुले जातस्य ज्यैष्ठ्यमिच्छत इत्यभिप्रायः।

२. सप्तदशभिः स्तोत्रियाभिर्बहिष्पवमानः कार्यः।

३. एष एकप्रभृतीनां स्तोमानां सप्तदशो ऽध्यधिकत्वाज्ज्येष्ठः।

४. यज्ञमुखे बहिष्पवमाने।

५. एते ज्येष्ठ्याभिव्याहारे जनिष्ठा उग्र इत्यवरसामान्यात् प्र वः सतामिति ज्येष्ठशब्दात् निविद्धाने भवतस्तदेतस्याह्नो रूपम् ।

---

## ३२.

१. दुराशनामैकाहः शाखान्तरे द्विनामा वज्रहिरण्यो दूणाशश्चेति । आत्मलाभं शत्रुपराभवं चेच्छतो भवतीत्यर्थः । अर्थवादाद्विधिमुन्नीयमाना (!) व्याख्या[१] कर्तव्या । समयतन्नेति संपूर्वो यतिः सग्रामार्थे यत्ने वर्तते । तस्मिन्सति ते देवा बृहस्पतिं पुरोहितमुपाधावन्निति[२] । बृहस्पतेरुपाधावनक्रियायाः कर्म[३] । बृहस्पतिशरणमुपागता[४] इत्यभिप्राय.[५] ।

२. उपजानीहि तं यज्ञक्रतुं यज्ञकर्म । येनेह्रासुरा नान्ववेयुर्नाभिभवेयुरित्येवं वदन्त उपाधावन् ।

३. स बृहस्पतिर्देवानुग्रहाय दुराशनामानं शाखान्तरे वज्रहिरण्यनामानं दूणाशनामानं चैतं यज्ञक्रतुमपश्यत् ।

४. परावरयोगे चेति क्त्वाप्रत्ययः ।

५. ततो ऽनन्तरं वै देवा अभवन्परासुराः । पराहता असुरा यैस्ते तथा[६] ।

---

१ A अर्थवादादुद्दिश्यति शेषो बोध्य' विधि॰ C (orig.) D om व्या ।
२ C D repeat बृहस्पतिमुपाधावन्निति । ३ C (orig ) A बृहस्पतिरुपाधावन॰ C (sec. b) D रू । ४ A C D बृहस्पतिं । ५ C D इत्यर्थे । ६ the comm. on this Sutra is om in C D M

६. अनेन यजमानः स्वात्मना परास्य द्वेष्यो भवति। भवनं भावः प्राधान्यमुच्यते न सत्तामात्रम्। पराभवन्ति शत्रवः पराभवन्ति यजमानशत्रवो य एवं वेद।

७. कृष्णपक्षे सूर्यदेवत्येष्टिः पूर्वाह्णे कार्या। प्राप्तस्य पूर्वस्यानुवाद उत्तरार्थः। [शत्रुपराभवकामस्य मासं सौर्याचन्द्रमसीभ्यामिष्टिभ्यां यजेतेत्याश्वलायनः[१]]। प्राग्दीक्षणीयाया[२] इयमिष्टिः। साग्निके प्रागिष्टकापक्षः। समुदायाङ्गत्वादस्या स्खलिस्वरणं कल्पङ्गत्वात्।

८. इष्टिश्चान्द्रमसी तस्मिन्नेवाहनि रात्रौ।

९. याज्यानुवाक्ये प्रधानस्य चन्द्रमसः। विधुं दद्राणं समने बहूनामिति पुरोनुवाक्या। नवोनवो भवति जायमान इति याज्या। चन्द्रमसमावह। स्वाहा चन्द्रमसम्। अयाड् चन्द्रमसः। चन्द्रमा हविरजुषतेति।

१०. सौवर्णः सौर्याकारो[३] दक्षिणा पूर्वस्यामिष्टौ सौर्याम्। शतवलिरिति प्राप्ते यष्टकृतवल इति वचनं तस्य केवलमाकृतिमात्रं शाखान्तराम्नानसंख्यापि ज्ञातव्या।

११. उत्तरस्यां चान्द्रमस्यामिष्टौ चन्द्राकारो राजतः शतवलो दक्षिणा[४]।

१२. दृहत्पृष्ठं भवति। भारद्वाजमिति श्रुत्यर्थं वचनम्।

---

१ The words in brackets are not given by C D M.   २ C D °णीया।
३ C D सूर्याकारो।   ४ C D राजतः शतवलश्चन्द्राकारो दक्षिणा चान्द्रमस्यां।

१३. भारद्वाजे एव। पिबा सोममभि तमु ष्टुहीति। पूर्वस्थोत्तमामुत्सृजेत्।

१४. पूर्वोक्तानां शतवलानां त्रिंशतंत्रिंशतं प्रतिस्तोत्रं दद्यात्।

१५. अयं विकल्पस्तावच्छतवलीयुक्तां स्तोत्रेस्तोत्रे स्तुते त्रिंशतंत्रिंशतं दद्यादित्यनेनैव। दक्षिणाकाले तु द्वादशशतं[1] देयमेव। यावद्वा यजमानो हिरण्यमिच्छेदिति यजमानवचनान्न प्रतिग्रहीता। हिरण्यवचनमविकारार्थम्।

---

## ३३.

१. अपचितिः पूजा। तेनापचितिकामो यजेतेति विधिः। शेषो ऽर्थवादः।

२. बहिष्पवमानो माध्यन्दिनस्य।

३. व्यत्यासं भवन्ति।

४. व्यत्यासमेव।

५. त्रिणवस्तोमक आर्भवः पवमानो भवति।

६. आग्निमारुतं स्तोत्रम्।

७. तस्यापचितेर्गायत्रीमभि स्तोत्रियासंख्याभिः प्रातःसवनं संतिष्ठते। अपचितिकामस्य अपचिती राजयज्ञ इत्येक इति। अपचितेरेवं स्तोमविधिः। बहिष्पवमाने चतुर्विंशतिस्तोमसंख्या[2] गायत्री। द्वयोराज्ययोस्त्रिवृत्पञ्चदशयोश्चतुर्विंशतिः। सापि संपद्यते। अपरयोरपि द्वयोरेवमेव।

---

[1] C (orig.) D द्वादश। [2] C M •स्तोमं।

८. प्रातःसवनभाक्त्वसामान्येन ।

९. तेन गायत्रीसंपद्विशेषेण वसुष्वपचितिं कुर्वन् । स प्राप्तवानपचितिम् ।

१०. गायत्रच्छन्दसो ब्राह्मणा भक्तिवादचर्यात्[1] । तेनायमिति प्रत्यक्षमेवेन्द्रं पूज्यमानं ब्राह्मणैर्दर्शयति। तथा चायं पूज्यत एव ।

११. चतुर्विंशो माध्यन्दिनः पवमानः । सप्तदशैकविंशानि पृष्ठानि । तत्र त्रिष्टुप्संख्या परिकल्प्या[2] एकातिरिच्यते[3] । नह्येकेनान्यच्छन्दो भवतीति त्रिष्टुबेव ।

१२. सवनभाज इति कृत्वा ।

१३. रुद्रेष्वपि पूजां प्राप्तवानिन्द्रः ।

१४. यथा पूर्वं भक्तिवादचर्याद्ब्राह्मणा गायत्रच्छन्दस एवं क्षत्रियास्त्रिष्टुप्छन्दस इति इहापि भक्तिवादेन द्रष्टव्यम् ।

१५. तेनायमिन्द्रो भक्तिसंपत्तिविशेषेण क्षत्रियेष्वपि पूजां लभते ।

१६. त्रिणव आर्भवः पवमान एकविंशमग्निष्टोमसाम । तत्र जगतीसंख्या परिकल्प्या ।

१७. सवनभाक्त्वात् ।

१८. तेन जगतीसंपद्विशेषेण आदित्यापचितिं कुर्वन्नादित्येष्वपीन्द्रो ऽपचितिं प्राप्तवान् ।

---

१ A भक्तिवादचर्याद्ब्राह्मणा गायत्रच्छन्दस । तेनाय॰ is the beginning of a Sûtra in A. २ A C M परिकल्प्य । ३ A एकातिरि॰ ।

१९. भक्तिवादेन।

२०. तेन भक्तिसाहचर्येणेन्द्रो विक्ष्वपि पूजां लभते।

२१. इति ब्राह्मणम्।

२२. संपत्त्या।

२३. तेन संपद्विशेषेण विश्वेषु देवेष्विन्द्रः पूजां प्राप्तवान्।

२४. तुर्यत्वसामान्यात्।

२५. तेन सामान्येनायमिन्द्र. शूद्रेष्वपचितिं लभते।

२६. अश्वयुक्तो रथो ऽश्वरथः। खङ्गस्य विकारः खाङ्गः स चासौ[1] कवचश्च खाङ्गकवचः। एवं वैयाघ्रपरिष्कृद आर्चीपाधङ्गो द्वैपधन्वधिः श्यावाश्व एषा दक्षिणा भवति।

२७. इति यजमानस्य कामः। अपचितिमता पूजावता रूपेणापचितिं पूजां प्राप्तवानिति पूजाकामस्यायमपचितिनामा यज्ञः।

२८. एते इन्द्रशब्दाभिव्याहारे निविद्धाने भवतः। तदेत स्याक्षो रूपम्।

---

# ३४.

१. तेन लिपिकामो यजेतेति विधिः। शेषो ऽर्थवादः।

२. एषा दक्षिणा अग्निंस्त्रिपिनाम्नि एकाहे।

३. लिपिर्दीप्तिस्तामाप्नवानीतिकामस्त्रियिना यागेन यज इत्यर्थः।

---

१ CD स चासौ कव॰ A not quite legible

४. इमा उ त्वा पुरुतमस्येन्द्रं स्तवा नूतमं यस्य मङ्क्षेत्येते नैघण्टुकेन नाम्ना सूर्याभिव्याहारे निविद्धाने भवतः।

५. तत्सूर्याभिव्याहाररूपमेतदहरित्यर्थः।

---

३५.

१. दृष्टिनामैकाहस्तेन दृष्टिकामो यजेतेति विधिः। शेषो ऽर्थवादः।

२. अवगतार्थम्।

---

३६.

१. आदित्यनामैकाहस्तेन तेजस्कामो यजेतेति विधिः। विधिशेषत्वेनान्यो विधिस्तावक एवार्थवादः।

२.[1] एते आदित्याभिव्याहारे निविद्धाने भवतः। एतदेवाख्याक्षो रूपम्।

---

३७.

१. स्वर्गनामैकाहस्तेन स्वर्गकामो यजेतेति चोदना। शेषो ऽर्थवादः।

---

१ The Comm on 36,2 and on 37 is om. in A. M om. the Comm. from 33-38

९. इन्द्र सोमं सोमपत इन्द्रं स्तवेत्येते निविद्धाने भवतः। तदेतदिन्द्राभिव्याहारलक्षणमेतस्याह्नो रूपम्।

---

## ३८.

१. देवाश्चासुराश्च देवासुराः। ते संग्रामार्थं यत्नं कृतवन्तः। ततः।

२. ते देवा असुराणां जयसाधनमिच्छन्तो बृहस्पतिं पुरोहितमुपगतवन्तः। उपगम्यैतदुक्तवन्तः।

३. भगवन्बृहस्पते नौ यज्ञक्रतू उपजानीहि प्रकाशय याभ्यां साधनाभ्यामसुरान्विवृत्त्याभिभवेमहि जयेमेत्यर्थः।

४. स बृहस्पतिरेतौ विवृत्त्यभिभूतिनामानौ संघयज्ञौ[1] अपश्यत्।

५. तानसुरान्विवृत्तिना यागेन विवृत्त्य अभिभूतिना देवा अभ्यभवन्।

६. तस्य विवृत्तिनाम्नो यागस्य षट्संख्याका ऊर्ध्वास्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः पृष्ठ्यस्तोमाः। षट्संख्याका आवृत्तास्त्रयस्त्रिंशत्रिणवएकविंशसप्तदशपञ्चदशत्रिवृतो विष्वञ्चो व्यस्ता भवन्ति। यतो विष्वञ्चो वै भूत्वा विवृदन्ति तदस्य विवृत्ते रूपम्।

७. अत्रापि शास्त्रोपदेशात्। पूर्ववदेवार्थवादार्थं स्तोमवचनम्।

---

१ C संघ D सघ (सद्य?)।

८. बृहत्पृष्ठस्य विश्वजितो यच्छस्त्रं तदेनयोर्विनुत्यभिभूत्योः शस्त्रं होतुर्होत्रकाणां च भवति ।

---

## ३९.

१. राशिश्च मरायश्च द्वावेकाहौ संघातयज्ञौ नाहीनः[1]। यज्ञो ऽयमहीनः । अन्नाद्यकामस्यान्नाद्यकामयोर्वा भवतः ।

२. समूल्हे यावुत्तमौ छन्दोमौ ताविह भवतः ।

३. दक्षिणे देवयजने स्त्रीणां गवां सहस्रं दद्यात् ।

४. पुंसां गवामुत्तरे सहस्रं ददाति देवयजने ।

५. प्रायणीया क्रयश्चार्थात् । अदीक्षितेष्टिश्च विभवात् । दशकापग्रवश्च द्विगुणाश्रयनदित्वात् ।

६ एवमेव तथाग्रहणात् ।

७. वैमाचयोरनूचीनगर्भता न संभवति ।

८. विघनो नामैकाहः । स पाप्मानमपजिघांसमानस्य द्विषन्तो ऽसूयवस्तांश्चापजिघांसमानस्य भवति ।

९. वाशब्दो विकल्पार्थः । प्राकृताभ्यां सह विकल्पो भवति ।

१०. अयमेवैकाहो भ्रातृव्यमपहन्तुमिच्छतः ।

---

१ C संघातयज्ञौ माहीन D सघातयज्ञौ —हीन । यज्ञो हीनो ऽयम्० ।

४०.

१. साद्यःक्रस्यार्थवादो ऽयम्। आदित्याश्चाङ्गिरसश्च वै किल स्पर्धां कृतवन्तः।

२. स्वर्गगमने ऽहंपूर्विका स्पर्धा।

३. तेऽङ्गिरस आदित्येभ्यः स्पर्धमाना आदित्येभ्यः प्रोचुः। प्रोक्तवन्तः। कथम्। श्वः सुत्या नो ऽस्माकं याजयत न इति। तेषामङ्गिरसामग्निर्दूतो ऽभवत्।

४. त आदित्या एवमुक्तवन्तो यद्येतेऽङ्गिरसः पूर्वं यक्ष्यन्ति तत एते पूर्वं स्वर्गलोकं गमिष्यन्ति। किमत इत्यत आह।

५. ततो ऽस्मानसुरा अभिभविष्यन्ति इति पूर्वस्वर्गगमनोपायाकाङ्क्षिणो बभूवुः।

६. तं यज्ञक्रतुमुपलभामहे येनाङ्गिरोभ्यः प्रकान्तयज्ञेभ्यो ऽपि वयं पूर्वं यजेमहीत्येवमादित्या ऊचुः।

७. त आदित्या एतं साद्यःक्रसंज्ञमेकाहं यज्ञक्रतुमपश्यन् दृष्टवन्तः।

८. तेन साद्यःक्रेण कृतयागा आदित्या अङ्गिरोभ्यः पूर्वं स्वर्गं लोकं गतवन्तः।

९. एष एव प्रयोगविधिः। शेषो ऽर्थवादः।

१०. अस्याङ्गः।

११. नियमार्थं वचनम्।

१२. उक्तं पूर्वंच।

१३. मंप्यानियमार्थं वचनम्।

१४. यवभूमिकायां तत्संस्थायां वेदिः कर्तव्या[1] प्राकृतेनैव प्रमाणेन। तथा च कात्यायनः। औदुम्बर्या वनस्पतीनिति (२२. २. ४२)।

१५. यत्र यवान्मृद्नन्ति[2] सा उत्तरवेदिः कार्या। यत्र चोत्तरवेदिस्तत्र यवमर्दनं। ये वेदिमभितस्तामुत्तरवेदिदेशे मृद्नन्तीति तन्त्रान्तरात्।

१६. लाङ्गलयष्टिर्यूपः कार्यो भवति।

१७. यवकलापैः सत्यपूनधन्नपाललेन[3] कार्यः।

१८. तस्यैव यजमानस्य गृहाद्दक्षिणौवर्यौ याह्याः।

१९. सोमप्रवाकरथेषु दृतयो दधिपूर्णा आरोप्यन्ते। तेष्वारोपितेषु रथा वनीवाह्यन्ते।

२०. वनीवाहितेषु दृतिषु यदुत्पद्यते नवनीतं तत्परिपक्वं सर्पिर्भूतमाज्यं कार्यं। तेन प्रचरन्तीति[4] सहार्थे तृतीया प्राप्तानुवादश्चायम्।

२१. अश्वयुक्तो रथ इत्यश्वरथः। सोमं प्रवक्तीति सोमप्रवाकः। तदारूढाः मार्षपकानामन्तर्येषु।[5]

२२. सर्वे विमद्ध्यान्योजनावरात्पूर्वयोजनात्[6]।

२३. प्राकृताया निवृत्तिर्दक्षिणायाः।

---

१ C ॰भूमिकायां (क over the line) मन्स्सस्थायां (over the line षा) वेदि॰ In marg. मत्स्यपक्षा भूमिवर्बैरेस्तुव्यते D ॰मिकायां तत्पृथक्षायां वेदि॰। २ C यव मृद्नन्ति, D यत्र यवान्मृदन्ति। ३ A पून कद॰। ४ C प्रचरिष्यतीति। ५ A om. the comm on this Sutra. ६ A ॰रात्पूर्वे CD ॰वरा पर्वयो॰ Doubtful.

२४. अपराह्ने प्राप्ताया अपवादः ।

२५. स्वस्याःस्वस्या वृत्तेरौपदस्थ्यगता सभ्या[1] सद्यःकल्याः कर्तव्याः ।

२६. असंभाव्यमानत्वात्प्रवर्ग्यस्याभावः[2] ।

२७. तिस्र उपसदो ऽत्र पराचीरनावृत्ताः कर्तव्या इत्यभिप्रायः ।

२८. अग्नीषोमीयस्य पशोः स्थाने ऽग्नीषोमीयदेवताकः पुरोडाशः कार्यः ।

२९. सवनीयस्य पशोः काले स्थाने चयो ऽपि पशवो ऽग्नीषोमीयसवनीयानूबन्ध्याः समानतन्त्राः कर्तव्याः[3] ।

३०. आश्विनदेवताका वशा प्राकृताया अनूबन्ध्यायाः स्थाने कार्या ।

३१. वाशब्दो विकल्पार्थः । मैत्रावरुण्याः पयस्यायाः प्रकृतिवत्त्वात्तया यजेत ।

३२. अथो अपि च पूर्वप्रक्रान्तमनुप्राप्त एवं कुर्यात् ।

---

## ४१.

१. एषैव उत्तरस्यापि साद्यःक्रस्य पूर्वोक्ता एव विधा विधिः प्रकार इत्यर्थः[4] ।

---

१ A सभ्यां C सद्यकल्प कर्तव्या । D सकल्पा कर्तव्या M सद्य कल्पाः कर्तव्याः ।
२ C (in marg) सभाव्या । ३ Comm. or 29 is om in A and partly in M. ४ C विधिः विधा प्रकार D om. प्रकार इत्यर्थः ।

२. अपवादार्थं वचनम्। तेन त्रिवृत्स्तोमा न भवन्ति सर्वस्मिन्नहनि।

३ बहिष्पवमानमाध्यन्दिनार्भवा।

४. यान्यन्यानि स्तोत्राणि तानि त्रिवृत्स्तोमकानि भवन्ति।

५ सङ्ख्याविशेषमाह।

६ कामार्थं वचनम्।

७ वेदिर्भवतीति वाक्यशेष।

८ उत्तरवेदिर्भवतीति वाक्यशेष।

९. यवकलापिवत्।

१० ईशानकुलीना एव।

११ नाश्वरथो विशेषवचनात्।

१२ पदशब्दो विभागवचन। पूर्वाह्णस्याह्नो योजनस्य भागत्रय सोमप्रवाको गच्छेत्।

१३. वडवास्थैको ऽर्थ[१]। माहताया दक्षिणाया निरत्ति।

---

## ४२.

१ एषैवोत्तरस्यापि साद्यस्कस्य। प्रथमस्य साद्यस्कस्य यद्विधान तदिष्यते।

२ यवोर्वरा वेदिरित्येवमादिक पूर्वयोर्यदुक्त तद्विकल्प्यते।

३ पयो ऽपि पवमानायतुर्विधा।

---

१ A ऽर्थवाद।

४. इतराणि स्तोत्राणि त्रिवृत्स्तोमकानि।

५. संस्थाविशेषः।

६. षोलशं शस्त्रं भवतीत्यभिप्रायः।

७. प्रथमो ऽनुक्रीः। द्वितीयः परिक्रीः। तृतीय उत्क्रीः। एवमेते त्रयः साद्यःक्राः। तद्यदि कस्यचिद्यजमानस्य द्विषन् भ्रातृव्यः शक्तो ऽनुक्रमेण[1] यजेत तत इतरः परिक्रिया यजेत। परिक्रिया चेच्छत्रुः तत इतर उत्क्रिया यजेत।

८. एकत्रिकस्य त्रिकैकस्य एकत्रिकत्रिकैकौ। ताभ्यां ब्रह्मवर्चसकामो यजेत। द्वन्द्वयज्ञौ चोदनैक्यात्।

९. एकस्यामृचि स्तोत्रं गीयते[2]। ततस्तिसृष्वन्यत्। एवं द्वादश व्यत्यासं। एवं प्रथमस्य स्तोत्राणि भवन्ति।

१०. तिसृषु स्तोत्रम्। तत एकस्याम्। एवं द्वादशविपर्ययेण[3] स्तोत्रविन्यासः।

११. षट्सु स्तोत्रेष्वष्टादश। इतरेषु षट्सु षट्। एवं चतुर्विंशतिः स्तोत्रियास्तत्रार्थवादः।

१२. अष्टाक्षरैस्त्रिभिः पादैः।

१३. जपात्फलावाप्तिदर्शनात्।

१४. तदाभ्यामेकत्रिकत्रिकैकाभ्यां साधनाभ्यां तेजो ब्रह्मवर्चसमाप्नोति।

---

१ I propose अनुक्रिया. C M D अनुक्रयेण A •क्रमेण A C शक्तो।
२ C •स्तोत्रं गीक्रियते M स्तोत्रं गीक्रियते। ३ A विपर्ययेणस्तो•।

१५. द्वावप्येतौ द्व्यक्लृप्तमखौ भवतः। द्व्यक्लृप्तमित्येतस्यां चोदनायामेतच्छस्त्रं प्रतीयेतैकाहिकं वा द्व्यक्लृप्तमित्येतदुक्तम्।

१६. अभिजिदेकाहः अभिमुख्यस्यं जेतुमिच्छतो भवेत्।

१७. विश्वजिदेकाहो विश्वं जेतुमिच्छतो भवति।

१८. अतिरात्रसंस्थावित्यभिप्रायः। द्वन्द्वयज्ञो द्विवचननिर्देशात्।

१९. अवयुत्यवादः स्तुत्यर्थः[१]।

२०. उक्थ्यस्तोत्रशस्त्रसंपन्नौ भूत्वेत्युक्थ्यसंस्थस्तुतिरवयवद्वारेण।

२१. प्रत्यतिष्ठतामित्यनुषङ्गः।

---

## ४३.

१.[२] नृजिन्नामैकाहः।

२. तेन यागेन नृञ्जितवान्[३]।

३. तेन नृञ्जेतुमिच्छन् यजेतेति प्रयोगवाक्यं विधिः। शेषोऽर्थवादः।

---

## ४४.

१. पृतनाजिन्नामैकाहः। पृतनेति संग्राम उच्यते। तमाचिपति यः स पृतनाजः। अज गतिक्षेपणयोरिति स्मरणात्। पृतनाजः शूरः।

---

१ C अवयुत्यकवादस्तुत्यर्थः (वा in marg) M अवयुत्यवाद स्तु॰ D अवकृत्यवादः स्तुत्यर्थः। २ The Comm. on these Sūtras is given here according to the division of A, which makes three Sūtras while C D give it without interruption. ३ om in D

## ४५.

१. सत्राजिन्नामैकाहः। तेन सत्राजं जेतुमिच्छन्यजेतेति चोदना। शेषो ऽर्थवादः। सत्राजः सद्योजेता। सत्रा त्वं पुरुष्टुतेति लिङ्गात्। सत्येन वा जेता। सत्राशब्दस्य सत्यनामसु पाठात्।

२. प्रथमात्पार्ष्ठिकात् त्र्यहान्माध्यन्दिनेषु सवनेषु। यथासंख्येन त्रिष्वपि नृजित्पृतनाजित्सत्राजित्सु निविद्धानानि कार्याणि निविद्धानानीति वचनात्। नाहं भुवं तत्र निविदो ऽभावात्।

---

## ४६.

१. धनजिन्नामैकाहः। तेन धनं जेतुमिच्छन्यजेतेति चोदना। वाक्यशेषो ऽर्थवादः।

२. अहर्वचनं[१] सांघातिकधर्मशङ्कानिवृत्त्यर्थम्।

---

## ४७.

१. स्वर्जिन्नामैकाहः। तेन स्वर्जेतुमिच्छन्यजेत। स्वरिति स्वर्ग उच्यते। तत्प्राप्तिर्जयः।

२. उत्सन्नः स उच्यते येनोपरि[२] सता प्राप्यते राज्यं श्रैष्ठ्यं वा। श्रेष्ठयज्ञः स्वर्जिदित्यभिप्रायः। उता न महीदंर्षिन इति (?) प्राधान्येन दर्शनात्[३]। उत्सन्नयज्ञ इव वा एष यदश्वमेध इति महत्यश्वमेधे दर्शनात्।

---

१ C M स्वजिषां०। २ C D M येनोपरि सत्यप्रा० A च। ३ C D M उत्तानमद्यो दर्षिन।

## ४८.

१. महाव्रतीयमहः सर्वजिन्नामैकाहः। तेन सर्वं जेतुमिच्छ-न्यजेतेति विधिः। शेषो ऽर्थवादो विध्युद्देशस्य स्तावकः।

२. अहर्ग्रहणं सांघातिकधर्मशङ्कानिवृत्त्यर्थम्[1]।

---

## ४९.

१. उज्जिन्नामैकाहः। तेन सर्वमुज्जिगीषन्यजेतेति विध्युद्देशः। शेषो ऽर्थवादो ऽस्यैव स्तावकः।

२. एकं मरुत्वतीयमपरं निष्केवल्यम्।

३. उदरन्त उत्तूर्वयाणमित्येताभ्यामुदन्तौ सूक्ते। तदेतदस्याह्नो रूपम्।

---

## ५०.

१. उपहव्यो नामैकाहः। तस्यायं पुराकल्पमरूपो ऽर्थवादः कर्तव्यताविध्युद्देशस्य स्तावकः।

२. अरवो ऽसुराः। एवंनामानो ऽसुराः मखसंज्ञका यति-मशकाय। तान्सालावृकेभ्यो मर्कटेभ्यः प्रायच्छत्। अर्पितवान्। न केवलं चिकीर्षाणं त्वाद्रमदनत्।

३. तमिन्द्रं ब्रह्महेति कृत्वा सर्वाणि भूतान्यभ्याक्रोशन्। तदा-क्रोशपराणि बभूवुरिन्द्रं प्रति।

---

[1] 1. 2 form one Sutra in A. C D om. the comm. on 2.

४. स इन्द्रो देवेभ्यः पार्श्वतो बहिःकृत इव चचार।

५. ते देवा एवमूचुर्यद्ययमिन्द्र[1] एवं पार्श्वतश्चरिष्यत्यभिभविष्यन्ति नो ऽसुराः।

६. उपजानीम तं यज्ञक्रतुं येनैनमिन्द्रमुपाक्रयेमहि। उपाक्रानं संसर्गः। संसृजेमहीत्यर्थः।

७. ते देवा एतमुपहव्याख्यमेकाहं यज्ञक्रतुं यज्ञकर्म अपश्यन्। दृष्टवन्तः। तेनैनमुपाक्रयन्त समसृजन्त।

८. तेन यज्ञक्रतुना उपहव्याख्येनावरुद्धो राजा राज्यभ्रष्टो यजेत राष्ट्रमवजिगीषन् राज्यं कर्तुमिच्छन्नित्यर्थः।

९. अवगच्छति हैव[2] प्राप्नोत्येवेत्यभिप्रायः।

१०. यथोक्तलिङ्गाभ्यां हुतशब्दाभ्यां तद्वती सूक्ते निष्केवल्यमरुत्वतीययोर्निविद्धाने[3]।

११. उपहव्यसंज्ञस्य तद्भूतवद्रूपम्।

## ५१.

१. हुते ऽप्युपहव्ये भूतानि तमिन्द्रमभ्याक्रोशन्नेव।

२. अग्निष्टुतो ऽयमुपक्रमः। अनहर्जातता मूलनक्षत्रे जन्म। तेन वा। पापरूपा अलक्ष्मीस्तया वाऽसाधुवादः[4]। एताभ्यां निमित्ताभ्यामग्निष्टुत्कार्यः। अभिशस्यमानं याजयेदिति च श्रुत्यन्तरात्। अनिष्टता[5] च निमित्तम्।

---

१ CD इन्द्र। २ CD हे प्रा॰। ३ CD om यीद्। ४ CD वाद। ५ A चभिहिता।

३. स इन्द्रो ऽग्नये सर्वाणि सवनानि प्रदत्तवान् ।

४. तस्मैन्द्रस्याग्निः सर्वामनद्दर्जातितां मूलनचत्रजातितां सर्वां च पापीमलक्ष्मीमसाधुवादहेतुं दत्तवान् ।

५. सो ऽग्निष्टुता यजेतेति विधिः । शेषो ऽर्थवादः । आस्तां तावद्यजनम् । य एवं वेद तस्यापि श्रद्धावतो ऽग्निः पापीमलक्ष्मीमनद्दर्जातितां च निर्दहति ।

६. यस्मैतेन — the Commentary from this Sūtra up to XIV 52, 3 is wanting in all M SS.

---

## ५२.

३. विनियुक्तानन्तरा उत्तरास्ततो ऽच्छावाकसूक्तस्य स्थाने भवन्ति ।

४. अग्ने दिवः सूनुरसि प्रचेता इति याज्याच्यस्य । प्राकृताया निवृत्तिः परिभाषितत्वात् ।

५. उप त्वा जामयो गिर इति वायव्यस्य स्थाने तृचः । ऐभिरग्ने दुवो गिर इत्यैन्द्रवायवस्य । कस्ते जामिर्जनानामिति मैत्रावरुणस्य । न योरुपब्दिरश्व्य इत्याश्विनस्य । अग्निर्वृत्राणि जङ्घनदित्यैन्द्रस्य । अग्ने सुतस्य पीतय इति वैश्वदेवस्य । अग्ने घृतमता-येति सारस्वतस्य । इत्येतानि प्रउगतृचानि ।

६. अग्ने विश्वेभिरग्निभिरिति याज्यया प्रउगशस्त्रान्ते यजति । प्राकृताया निवृत्तिः परिभाषितत्वात् ।

७. कस्ते जामिर्जनानामिति स्तोत्रियः। कया ते अग्ने अङ्गिर इत्यनुरूपः।

८. मैत्रावरुणस्यैव माध्यन्दिने सवने एतावेव स्तोत्रियानुरूपौ विपर्यस्तौ भवतः।

९. अग्निर्वृत्राणि जङ्घनदित्येतौ स्तोत्रियानुरूपौ ब्राह्मणाच्छंसिनो भवतः।

१०. अग्निर्मूर्धा दिवः ककुदित्येतौ स्तोत्रियानुरूपौ अच्छावाकस्य भवतः।

११. अर्चन्तस्त्वा हवामह इत्येतत्सूक्तं मैत्रावरुणस्य भवति।

१२. अर्चन्तस्त्वेत्येतस्योत्तरं सूक्तं ब्राह्मणाच्छंसिनो भवति।

१३. अग्ने एतमताय त इत्येता पलच्छावाकस्य भवन्ति।

१४. मैत्रावरुणादयः स्वाभिःस्वाभिरन्याभिर्यजन्ति।

---

## ५३.

१. अग्निं वो देवमग्निभिः सजोषा इत्येता दश उन्नीयमानेभ्यो ऽनुब्रूयात्।

२. प्र वः शुक्राय भानवे भरध्वमित्येताः सप्त प्रस्थितानां याज्या भवन्ति।

३. उत्तरे मरुत्वतीयस्य याज्यानुवाक्ये भवतः।

४. विश्वोविश्वो वो अतिथिमिति प्रातिपदस्तृचः। त्वमग्ने यज्ञानामित्यनुरूपः। एतौ मरुत्वतीयस्य प्रतिपदनुचरौ।

५. इन्द्रनेदीयब्राह्मणसत्ययोः स्थाने।

६. अग्निं न मा मथितं सं दिदीपः। त्वमग्ने प्रथमो ऽङ्गिरा ऋषिः। प्रहत्यैव पूर्वा इत्येता एकपातिनीनां स्थाने।

७. अग्ने स क्षेषदृतपा ऋतेजा इत्येतन्निविद्धानं भवति मरुत्वतीये शस्त्रे।

८. पूर्वाक्रमणोत्तमा याज्या भवति।

---

## ५४.

१. पाहि नो अग्न एकयेति स्तोत्रियः प्रगाथः। पाहि नो अग्ने रक्षस इत्यनुरूपः प्रगाथः। एवं निष्केवल्यस्य तौ भवतः।

२. प्र ते अग्ने हविष्मतीमियमिति धाय्या कर्तव्या।

३. एना वो अग्निं नमसेति धाय्यानन्तरः प्रगाथो भवति।

४. यथा होतर्मनुषो देवतातेति निविद्धानं कार्यम्।

५. अग्निं नरो दीधितिभिररण्योरिति याज्या भवति।

---

## ५५.

१. अग्निमग्निं वो अध्रिगुमिति स्तोत्रियः प्रगाथः। अग्ने जरितर्विश्पतिरित्यनुरूपः प्रगाथः। एतौ ब्राह्मणाच्छंसिनो भवतः।

२. स्तोत्रियानुरूपौ प्रगाथौ क्रमेणाच्छावाकस्य भवतः।

३. एते मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां क्रमेण प्रगाथा भवन्ति।

४. तेषामेव क्रमेण यजस्व होतरित्यादीनि भवन्ति।

५. त एव मित्रावरुणादयस्तेषामेव सूक्तानामुत्तमाभिरुत्तमाभिः क्रमेण यजन्ति। याज्या उत्तमाः कुर्वन्तीत्यर्थः।

---

## ५६.

१. एते आदित्यग्रहस्य पुरोनुवाक्यायाज्ये भवतः।

२. एता उन्नीयमानेभ्यो ऽनुब्रूयात्।

३. नवभ्यो द्वे उत्तरे हारियोजनस्य स्थाने भवतः।

४. त्वामग्न ऋतायव इत्याद्याः सप्त प्रस्थितानां याज्या भवन्ति।

५. एति प्र होतेति पुरोनुवाक्या। अस्या एवोत्तरा याज्या सावित्रग्रहस्य।

६. भवत इति वाक्यशेषः[१]।

७. स्थाने भवन्तीति वाक्यशेषः।

८. पूर्वाक्राभ्य[२] एव उत्तरास्तिस्र आर्भवस्य।

९. आर्भवीभ्यस्तिसृभ्य उत्तरायतस्य ऋचो द्यावापृथिवीयस्थानायकमेण।

१०. त्वमग्ने द्रविणोदा इत्यस्याः पूर्वाः षड्वैश्वदेवस्य भवन्ति।

११. स्थाने भवतीति वाक्यशेष.।

१२. स्थाने भवतीति वाक्यशेषः।

१३. समिद्धो अग्निर्दिवि शोचिरश्रेदिति तिस्रो भवन्त्येकपातिनीनां स्थाने।

---

१ C—10 om. in A - M om 55 56 57. 1—5. २ C पूर्वोपाक्राभ्य एवमु॰ D पूर्वोपाताभ्य ।

१४. पङ्क्तिशनीयायाः स्थाने तदद्य वाच इति भवति।

१५. यज्ञेन वर्धत जातवेदसमिति याज्या। अनया यजति होता परिभाषितत्वात्।

---

## ५७.

१. स्थाने भवतीति वाक्यशेषः।

२. पाठक्रमेणैवोत्तरा सौम्यस्य स्थाने भवतीति।

३. एषा रौद्र्याः स्थाने भवति।

४. एतन्मारुतस्य स्थाने।

५. आ नो यज्ञं दिविस्पृशमिति स्तोत्रियः। आ नो वायो महे तन इत्यनुरूपः प्रगाथः। एतौ अग्निष्टोमसाम्नः स्थाने भवतः।

६. वाशब्दो विकल्पार्थः। नित्यौ वा स्तोत्रियानुरूपौ भवतः। नित्यौ माहतावुच्येते।

७. अस्तमे वधिष्टवेत्येतास्तिस्र आपोहिष्ठीयास्थाने भवन्ति।

८. तं देवा बुध्ने रजसः सुदंससमिति वैश्वदेव्याः स्थाने। उत नो ऽहिर्बुध्न्य इत्येतस्याः।

९. इममू षु वो अतिथिमुषर्बुधमित्येतास्तिस्रः। तत्र द्वे देवानां पत्नीनां स्थाने[१]। उत्तरे द्वे राकायाः स्थाने[२]।

१०. ऊर्वे वः सुद्योत्मानमित्येतास्तिस्रो ऽध्वरपङ्क्तीनां स्थाने।

११. त्रिमूर्धानं सप्तरश्मिं गृणीष इत्येतास्तिस्रः पैत्रीणां स्थाने।

---

१ A has only पत्नीनां पत्नीनां स्थाने।   २ C D om. उत्तरे स्थाने।

१२. कथा ते अग्ने शुचयन्त आयोरित्याद्यास्तिस्रो यामीनां स्थाने भवन्ति।

१३. मथीयदीं विष्टो मातरिश्वेत्येतास्तिस्रः स्वादुष्किलीयानां स्थाने।

१४. मथीयदीमिति तिसृभ्य उत्तरे उत्तरयोः स्थाने।

१५. एवाग्निर्गोतमेभिर्ऋतावेति परिधानीया कार्या।

१६. ग्रहाणां विकारपक्षे उक्तो धर्मः। तस्याग्नेया ग्रहा भवन्ति। आग्नेय्यः पुरोरुचः सर्वमाग्नेयमहरिति[१]। एतस्मिन्पक्षे अविकृतेषु ग्रहेषु यः प्रकृतेर्विकारः स उच्यते। तिष्ठा हरी रथ आयुज्यमानेति मरुत्वतीयम्। तमु ष्टुहि यो अभिभूत्योजा इति निष्केवल्यम्। नियमत एते निविद्धाने भवतः।

१७. वाशब्दो विकल्पार्थः। अनड्वान्दक्षिणा हिरण्यं वा दक्षिणा।

१८. अनड्वानग्निरेतसो वै हिरण्यमित्यर्थवादात्।

१९. परिसमाप्याग्निष्टुतं ततो ऽग्निष्टोमः कर्तव्यः।

२०. उत्थाय चाग्निष्टोम इत्यस्यावश्यकर्तव्यतार्थो ऽर्थवादः। ओमस्चू छेदन इत्यस्याङ्पूर्वस्य लटि रूपम्। आवृश्च्यते सर्वाभ्यो देवताभ्य उच्छिद्यत इत्यभिप्रायः[२]। अग्निष्टुता यजेत सर्वाग्नेयेन तस्मादवश्यं तेनाग्निष्टोमः कार्यः।

---

१ All MSS चपदिति। cf. Comm. on 59, 2. २ C D ins यः।

## ५८.

१. इन्द्रस्तुत्नामैकाहस्तेन बलकामो यजेतेति विधिः। शेषो ऽर्थवादो ऽस्यैव स्तुत्यर्थः।

२. इन्द्र सोमं सोमपत इन्द्रस्तवेत्येते। यद्दविकारे[1] ऽपि वचनादेवमेव विकाराभावात्।

---

## ५९.

१. सूर्यस्तुत्नामैकाहस्तेन तेजस्कामो यजेतेति चोदना। शेषः पुराकल्परूपो ऽर्थवादो विधिशेषत्वेनार्थवान्[2]।

२. इमा उ त्वा पुरुतममित्येन्द्रस्तवेत्येते। तस्य सौर्या ग्रहा भवन्ति। सौर्यः पुरोरुचः सर्वं सौर्यमहरिति[3] शतपथवचनात्। तेषामेवार्थविकारो[4] नास्माकं शस्त्रेषु वचनाभावात्।

---

## ६०.

१. वैश्वदेवस्तुत्नामैकाहः। तेन प्रजातिकामो यजेतेति विध्युद्देशः। शेषो ऽस्यैव स्तावको ऽर्थवादः।

२. यद्दविकारे ऽपि न शस्त्रे उत्तरकल्पनावचनाभावात्।

---

१ C यद्दो(॰) विकारे D यद्दोविकारे। २ A ॰रूपो ऽर्थवादो विधिशेषत्वेनार्थवान् D ॰वादो विधिशेषत्वेनार्थवात् C शेष। पुराकल्परूपार्थवादो विधि। शेषत्वेनार्थवात्। ३ M ॰मपदिति C om See 57, 10 ४ C D M तेषामेवार्थ वि।

## ६१.

१. तेन ब्रह्मवर्चसकामो यजेतेति विधिः। शेषो ऽर्थवादः।

२. चतसृषु स्तोत्रियासु बहिष्पवमानो भवति।

३. होतुर्होत्रकाणां च अष्टास्वष्टासु स्तोत्रियास्वाज्यानि भवन्ति।

४. द्वादशसु स्तोत्रियासु माध्यन्दिनः पवमानो भवति।

५. होतुर्होत्रकाणां च पृष्ठानि षोडशसुषोडशसु भवन्ति।

६. विंशतिसंख्यासु स्तोत्रियास्वार्भवः पवमानो भवति।

७. चतुर्विंशतिस्तोत्रियाकमग्निष्टोम साम भवति।

८. सामान्तरुक्थ्यो यो[1] विकारः स पूर्वोक्तः।

---

## ६२.

१. इदानीं वक्ष्यत इति वाक्यशेषः।

२. मरुतः पुरा अनपिसोमपीथा अकृतसोमपाना इत्यर्थः। एवंरूपा आसुः। ते यत्रेन्द्रं मरुतः पुपुवुस्तेनानिन्द्रः सोमपीथे अन्वाभेजे अन्वाभक्तवान्। पुपुवुरिति पवमानमिन्द्रस्य कृतवन्तो निमित्ते।

३. स य इति वाक्यपूरणौ उद्देश्यप्रतिनिर्देशौ। अनपिसोमपीथः पिता पितामहो वा यस्य सोम न पिबेत् यश्च मरुतां सलोकतां सायुज्यं चेच्छुः सोमेन यजेत।

---

१ C M D सा वि०।

४. पञ्चशारदीये धर्मविशेषः। पञ्चौचाणः प्रजनने समर्थाः अनड्वाहः पञ्च शरदः पञ्च वर्षाणि मरुद्भ्यः प्रोक्षिताश्चरन्ति। तत्तकपवमानान्यच(?) नियुञ्जते[१]। षष्ठे शरदि सवनीयस्योपालम्भ्याः कर्तव्याः।

---

## ६३.

१. वक्ष्यमाणा उच्यन्त इति वाक्यशेषः।

२. ऋषिस्तोमसंज्ञर्षिणानुष्ठितत्वात्। प्रशस्ततास्तोष्यते।

३. तेन क्रतयागो गोतम ऋषिर्ब्रह्मवर्चसं प्राप्तवान्।

४. उपरितनैः पञ्चभिः संबन्धेषु प्रत्येकफलश्रवणेष्विति।

---

## ६४.

१. भरद्वाज ऋषिः किल यशार्थी तप उपसदादिकं क्रत्वा एतं यज्ञक्रतुं दृष्टवान्।

२. प्राप्तवान्।

३. विधिरयम्। शेषा फलश्रुतिः।

---

१ The reading of A is given above C D तक्ष (or तम) कपवमानान्यच M तत्तकपवमाना• The passage is doubtful.

७१.

१. वक्ष्यमाणं उत्क्रान्तिर्नाम क्रतुः। सो ऽतिरात्रसंस्थो भवति। तच्छेषत्वेनायं वक्ष्यमाणवादः।

२. इन्द्राविष्णू महता तपसा त्वं यज्ञक्रतुमुत्क्रान्तिसंज्ञकमपश्यताम्।

३. तेनोत्क्रान्तिनेष्ट्वा ताविन्द्राविष्णू स्वर्गं लोकमुत्सृत्याक्रमताम्।

४. एवं फलसंबन्धेन[1] कार्यः। फलश्रवणात्। इतरे तु फलाश्रुतेरौचिता शुद्धये[2]।

५. इमा उ त्वा पुरुतमस्य कारोरिति मरुत्वतीयम्। द्यौर्न य इन्द्राभिभूमार्य इति निष्केवल्यमेते निविद्धाने भवतः।

६. विष्णुन्यङ्गे विष्णुलिङ्गे। इन्द्राविष्णू वै स्वर्गकामावित्येकदेशलिङ्गितमेतस्याङ्गो[3] रूपम्।

---

७२.

१. मित्रावरुणयोरश्विनोर्व्रात्यस्तोमः। वसूनां व्रात्यस्तोमः। मरुतां व्रात्यस्तोमः। साध्यानां व्रात्यस्तोमः। आप्यानां व्रात्यस्तोमः। विश्वसृजां व्रात्यस्तोमः। भूतक्षतां व्रात्यस्तोमः। ज्येष्ठानां व्रात्यस्तोमः। मध्यमानां व्रात्यस्तोमः। कनिष्ठानां व्रात्यस्तोमः। एवमेते दश व्रात्यस्तोमाः। प्रायश्चित्तार्थं प्रत्येकं कर्तव्याः।

---

१ A अथ फलसंबन्धि। २ Doubtful C तैवचिता शुद्धये।

३ C (orig.) ०ङ्गिवेवत० alt. to ०ङ्गितमेत०।

२. चतुर्दशस्तोचियाकः स्तोम एतेषां भवति।

३. विष्टुरिति विलम्बयन्त्व[1] उग्रदामाजीर्णचिचक्रः। सप्रतोदः सह प्रतोदेन सप्रतोद उच्यते। प्राणकेनैतावता विशिष्टो रथः। अन्यद्रज्ज्वादिकं[2] न भवति। सेषुधन्वा। सह इषुणा धन्व यस्मिन्नसौ सेषुधन्वा रथः। धन्वशब्दो नकारान्तो धनुःपर्यायः[3]।

४. एतेषां देवगणानां पूर्वपदानां ब्रात्यस्तोमानां समूल्हादशरात्राच्छस्त्रं भवति। समूल्हग्रहणं व्यूल्हनिवृत्त्यर्थम्।

---

## ७३.

१. एवमेव स्तोमदक्षिणाशस्त्रं यत्पूर्वमुक्तं भवति।

२. पूर्वोक्तमेव स्तोत्रदक्षिणाशस्त्रं च। नाकसदो ऽपरे नव ज्ञाः। न तेषु ब्रात्यस्तोमशब्दः। [तेषामपीदमेव स्तोत्रदक्षिणाशस्त्र] च शाखान्तरीयाः[4]।

३. चषालमुखतर[5] एकः प्रथमः। अनन्तरं सपुरोलाशो द्वितीयः। निष्टुमवन्तृतीयः। ब्रह्मसवश्चतुर्थः। क्षत्रसवः पञ्चम। भूमिसवः ३ः। ओषधिसवः सप्तमः। ओदनसवो[6] ऽष्टमः। वनस्पतिसवो

---

१ Corrected A विलंबयचसुप्रवामा॰ M विलषयचसुप्रवामा॰ C D विलषयच त्वामा। २ A ॰द्रज्ज्वा॰ C D (?) द्रज्ज्वादिकं M द्रख्वा॰। ३ C D धनुष्य। A om the words from तेषाम् to शस्त्रं and has only एते शाखान्तरीया। C D चषालमुख एक'। ६ C ओदनि।

नवमः। केनचिद्योगेन शाखान्तरीयाण्येतानि। एतेषामपि क्रतूनां पूर्ववत्सोमदक्षिणाग्रहणम्।

---

७४.

१. स्तुतिरूपो[1] ऽयमर्थवादः। प्रजापतिः किल परमेष्ठी प्रतिष्ठाकामस्तपःक्रियानन्तरमेतं यज्ञक्रतुमपश्यद्गणमह्नः।

२. प्रजापतिः प्रतिष्ठां प्राप्तवान्।

३. यः कश्चिदधिकारी।

---

७५.

१. ऋतुस्तोमा अनन्तरमुच्यन्ते।

२. ऋतुस्तोमानां नामानि वचनाधारेण। स्तुत्यर्थो ऽर्थवाद एते भवन्तीति प्रदर्शनार्थम्।

३. विध्यर्थो ऽर्थवादः।

४. प्रत्येकमहःशब्दवचनात्। एवमुत्तरेष्वपि द्रष्टव्यम्।

---

७६.

१. वक्ष्यमाणा अन्नाद्यकामस्य। तत्रायमर्थवादः।

२. उक्तो ऽर्थवादः।

---

१ M परक्रति C (orig) पक्षति, in marg परक्र. D परक्ररूपो।

३. फलार्थिनः प्रवृत्तिवाक्यमेतत् ।

---

७७.

१. उत्तरे ।

२. स्तुत्यर्थो ऽर्थवादः ।

३. एवंसंख्याका अर्धमासस्तोमाः[१] ।

४. अर्थवादो ऽयं स्तुत्यर्थः ।

५. फलार्थिनः प्रवृत्तिवाक्यम् ।

---

७८.

१. उच्यन्त इति वाक्यशेषः ।

२. तैर्नक्षत्रस्तोमैस्तेजस्कामो[१] यजेतेति विधिः। शेषो ऽर्थवादः।

---

७९.

१. उच्यन्त इति वाक्यशेषः ।

२. अर्थवादो ऽयं विधिस्तावकः ।

३. विधिरयम् ।

---

८०.

१. वक्तव्या इति वाक्यशेषः ।

---

A om. 3 4   १ C in marg ब्रह्मवर्चसोपेतैः।

२. एतावन्तः संवत्सरे मुहूर्ता भवन्ति। तावत्संख्याकास्तेषां स्तोमाः।

३. विधिप्ररोचनार्था फलश्रुतिः।

४. एतावान्विधिः। शेषो ऽर्थवादः।

---

## ८१.

१. अनन्तरा एव वक्ष्यमाणा उच्यन्ते।

२. नैरचितिकामो यजेतेति विधिः। शेषः स्तुतिरूपो ऽर्थवादः[1]। संवत्सर एतावन्तो निमेषा भवन्ति। मुहूर्ता एव दशभिर्गण्यन्ते।

---

## ८२.

१. उच्यन्त इति वाक्यशेषः।

२. निमेषा एव दशभिर्गण्यन्ते। एषां संवत्सरध्वंसीनां संख्या भवति।

३. अर्थवादो ऽयम्।

४. विधिरेषः। शेषो ऽर्थवादः स्तावको ऽस्य।

---

## ८३.

१. उत्तरे।

---

१ C D शेषो ऽर्थवाद स्तावको ऽस्य।

२. चतुर्णां दिशां चत्वारः स्तोमास्तैरन्नकामो यजेतेति विधिः। अन्यो ऽर्थवादः।

---

## ८४.

१. दिक्स्तोमव्याख्या।

२. ते सर्वे वृहद्रथन्तरपृष्ठा भवन्ति।

३. ऐकाहिकं शस्त्र येषु ते तथोक्ताः।

४. एते वा निविद्धाने विशेषरूपे भवतः।

५. देशनियमो ऽयम्।

दिरभ्यासो वृद्धसमाचारस्तदनुष्ठानमायुष्यं भवतीति।

### इति शाङ्खायनसूत्रभाष्ये चतुर्दशो ऽध्यायः समाप्तः[1]।

---

१ C omits the Comm. on XV. 1. 2. 3 and adds after XIV: श्री कल-भावे किंचिन्मूल किंचित् परिदर्शितं(1) मत्प्रभदीपिकया पूरितमस्ति अर्थप्रदार्थविषय प्रकारणोयम। मङ्गलमस्तु। श्री। D has the same remark and gives first the text of the Sutras (from XV. 1. 1 to 3. 12) without any Commentary adding at the end the words सोपपत्तान्। तेनात्र पञ्चदश-वर्गोक्ते ?) पु सोत्रफेषु प्रतिवचन मन्दम। एवमेवे पञ्च मन्दगारेषा। चनेन विशेषार्थं कृतवाक्यपि इत्युच्यते। Then it repeats the Sutras with their respective commentaries.

# अथ पञ्चदशोऽध्यायः ।



एकाहानुक्त्वा वाजपेयमाह ।



१.

१. सप्तानां सोमसंस्थानां मध्ये पञ्चमः सोमयागो वाजपेयः । स शरदि शरत्संज्ञके ऋतौ भवति । वचनाच्च वसन्ते । प्रौष्ठपदीमारभ्य कार्त्तिकी[१] यावत् शरत्प्रसिद्धा । अथवा कन्यासंक्रान्तिमारभ्य वृश्चिकसंक्रान्तिं यावत् । अथवा तुलामारभ्य धनुःसंक्रान्तिं यावत् ।

२. स वाजपेयो नित्यो ऽपि फलश्रवणात् अन्नाद्यकामस्य यजमानस्य भवति । वाजपेयशब्दस्य निर्विवचयाह ।

३. अनेन वाजेन क्रतुना यक्ष्यमाणो यजमानः पुरस्तात्पूर्वं संवत्सरम् । अत्यन्तसंयोगे द्वितीया । पेयसंज्ञकैर्यज्ञैर्यजते ।

४. पीयन्त इति पेयाः पानम् । अद्यत इत्यन्नं वाज इत्यनर्थान्तरम् । अन्धः वाजः पाज इत्यन्ननामसु पाठात् वाजो ऽन्नम् ।

५. पानपूर्वं भोजनमिति पेयसंज्ञकाः पूर्वमनुष्ठेयाः । ततो वाजसञ्ज्ञको यागः ।

---

१ A कार्त्तिकी C, कार्त्तिकं O, indicates the reading of MS Chambers 449b

६. तयोः पानान्नयोः प्राप्तये। पूर्वं पेयाः पश्चाद्वाजः[१]। एवं वाजपेयस्य वाजपेयनामधेयता। के ते पेया इत्यपेक्षायामाह।

७. एते द्वादशाग्निष्टोमाः प्राकृता भिन्नतन्त्राः। प्रतिमासं संवत्सरं भवन्ति। विकल्पमाह।

८. गोतमो ह ब्रह्मवर्चसकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्गोतमस्य चतुरुत्तरस्तोममिति प्रसिद्धः। अश्वमेधे च प्रथममहर्भवति। प्राकृतेनाग्निष्टोमेन व्यत्यासम्। अग्निष्टोमो गोतमस्य चतुरुत्तरस्तोम इत्येवं षडग्निष्टोमाः षड्गोतमस्य चतुरुत्तरस्तोमा व्यत्यासेन भवन्ति।

९. अयं यज्ञक्रतुरपरियज्ञः। परियज्ञाः पेयसंज्ञकाः। तद्गर्हितो भवति[२]। एक इति वचनाद्विकल्पः परियज्ञानाम्। अन्नाद्यफले पुराकल्पमाह।

१०. इन्द्राबृहस्पती अपि अनेन क्रतुनेष्ट्वान्नाद्यं प्राप्तवन्तावित्यन्नाद्यप्रापको यज्ञः।

११. तेन क्रतुनान्नाद्यकामो ऽन्नाद्य प्राप्नोतीति काम्यो ऽयं यज्ञो भवतीति गम्यते। प्रकारान्तरेण[३] निर्वचनमाह।

१२. अथो अपर्य्य। हेति प्रसिद्धः। एतेन यज्ञेन वाजो नाम लोकस्तापत्यं[४] सो ऽपीष्ट्वा सर्वान्कामानाप्तवान्। पेयसंज्ञानिरपेक्षयाप्यनया व्युत्पत्त्या वाजपेयनामधेयता। एवं वाजपेययागस्य नामधेयमुद्भिदादिवत्। न गुणविधानम्। तथा च जैमिनिः। पूर्वपक्षं

१ D पश्चाद्यागो वाज•। २ C, तद्गोहितो। ३ A निवर्तनमाह।
४ C, लोक्य•।

सूत्रयामास। नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् तुल्यत्वात् क्रिययोर्न। तस्मान्नामधेयं वाजपेयः[१]। एकशब्दे परार्थवद्गुणविधाने दोषस्तस्मान्नामधेयता। विशेषमाह।

१३. स्त्र्यर्थे।

१४. षोडश कलाः। पञ्च बुद्धीन्द्रियाणि। पञ्च कर्मेन्द्रियाणि। पञ्च विषयाः। षोडशं मनः। सप्तदशः पुरुषः प्रजापतिः। तस्य पूरणे डट् (५.२.४८) इति डट्प्रत्ययान्तः। स प्रजापतिरेव वाजपेयः।

१५. तस्मात्सप्तदशसंख्यात्मकेन स्वेन रूपेणैनं प्रजापतिर्वाजपेयं समर्धयति समर्धं करोतीत्यर्थः[२]।

१६. श्रुतौ प्राकृतो यूपो ऽष्टाश्रिर्भवति[३]। अत्र तु बैल्वश्चतुरश्रिः सप्तदशारत्निप्रमाणको गोधूमचषालश्च।

१७. कृतव्याख्यानमेतत्।

१८. अग्नीषोमीयेणोपवसथे पशुना यजत (५.१५.१) इत्येक एवाग्नीषोमीयो ऽन्येषु यागेषु। वाजपेये सप्तदश वचनाद्भवन्ति।

१९. मनोताया अपनादन्तिरेकप्रदानत्वात्।

२०. आग्नेयादयः सारस्वतपर्यन्ताः[४] क्रतुपशवो ऽतिरात्रे। वाजपेये तु मरुद्भ्य उग्रेभ्यो वशा पृश्निः पञ्चमी भवति। वृष्णिः[५] प्रजननसमर्थः। वशा वन्ध्या पृश्निश्चित्रवर्णा गौः।

---

१ D om. the text from वाजपेय' to तस्मात्।. २ D समर्धयतीत्यर्थः।
. C, °शारत्नि। ४ A सेषोप°। ५ A हष्णिप्रज°।

२१. श्यामा श्यामवर्णा। तूपरा अविषाणा। लपुदिन[1] कूर्चेला। तस्मिन्नेव यूपे क्रतुपशुसमीपे आलम्भ्या।

२२ प्राजापत्याना पर्यग्निकरण प्रसिद्धम्। तदन्त सवनीयाना तन्त्र भवति। उत्तरत्र विशेषविधानात् भिन्नतन्त्रता[1] भविष्यतीति विशेषवचनम्। विशेषमाह।

२३ ब्रह्मसाम सामवेदे प्रसिद्धम्। तेन सप्तदश प्राजापत्या पशव आलभ्यन्त इति सवनीयेभ्यो विशेष। विशेषान्तरमाह।

२४ क्रतुपशूना यथाप्रासमभिगुमच प्राजापत्यानामेकदेवत्यैकपशुधर्मक[2] प्रतिपशुमावर्तते। आवृत्त्या पठनीयमित्यर्थ। यत्राभिगोरावृत्तिस्तत्राजैदग्निरित्युपप्रैषस्याप्यावृत्ति। उक्त उपप्रैष इति वचनात्। जुषस्व सप्रथस्तममित्याद्या षड्च स्तोक्या। ता क्रतुपशूना प्रैषादनन्तरमुक्त्वा प्राजापत्याना सप्तदशकृत्व आवर्तन्ते। आवृत्त्या सप्रैषनिरपेक्षेण[3] वक्तव्या। तत्राभिगौ विशेष।

२५ सवनीयानामभिगौ प्रैभ्यो अग्नि भरतेत्येतावान्। ऊवध्यगोह पार्थिव खनतादिति च तत्र पठितम् अभिगोरावृत्तावुपतिष्ठते अत्र[4] न पठनीय वचनात्। उभे ऽप्यभिगौ नवोच्छ्वासा भवन्ति। नवकृत्वो ऽभिगाववानितीति श्रुते। तत्र षष्ठे उच्छ्वासे षड्विंशतिरित्यस्मिन् मध्ये ऽवसान कुर्यात्। उत्तम प्रयाज[5] स्वाहाकृतिप्रैषादनन्तरमाप्रीणामुत्तमा याज्येत्ययमपि तन्त्रेण भवति।

---

१ C •तन्त्रभ• D भिन्नतन्त्रा। २ D om पशुधर्मक प्रति। ३ C D om ॰। ४ C तत्र। ५ D •ह्रतप्रयाजादनन्तर।

परिवाप्यौ च। परिपणव्याहृती अध्वर्युवेदे प्रसिद्धे स्वाहा देवेभ्य[1] स्वाहेति ते अपि तन्त्रेण भवत । सवनीयाना तन्त्रमिति वचना- दन्यत्पृथक् प्राप्नोतीति वचनम्।

२६ प्राजापत्याना हविषा प्रदान हारियोजनादनन्तर भवति वचनात्।

२७ तस्मिन्पक्षे वनस्पत्यादीनामङ्गानामुत्कर्षो ज्ञेय। न्याया- नुगृहीतवचनात्[2]।

२८ अनुयाजेषु वा इष्टेषु प्राजापत्याना हविषा प्रदान भव- तीति पक्षान्तरम्। अस्मिन्नपि पक्षे ऽङ्गानामुत्कर्ष।

२९ य एवैतरेषा पशूना वपादिभि प्रचारकाल स एवै- तेषा[3] प्राजापत्यानां वपादिभि प्रचारकाल। अयमेव पक्ष कात्यायने। विशेषमाह।

३०. स्तोत्रेषुस्तोत्रेषु[4] सप्तदश स्तोमो भवति। वचनात् ज्योति- ष्टोमस्तोमनिवृत्ति। विशेषमभिधाय होतु शस्त्राण्याह।

३१. अग्नि नरो दीधितिभिररण्योरिति वैराजमाज्य होतु- र्भवतीति। पञ्चविंशत्यृचम्। अष्टादशार्धर्चश। शिष्टा पच्छ। पच्छस्त्रिष्टुप्जगतीनामिति न्यायात्।

३२ एतत्स्तोमीय समुद्रादूर्मिरित्येतदाज्य भवति।

३३ माधुच्छन्दस प्रउगो नाम वायवा याहि दर्शतेति सूक्त-

---

१ D in॰ देवेभ्य। २ A न्यायानुगृ॰। ३ D म एवैतरेषां। ४ स्तोत्रेषु।

द्वये सप्त ढचा तत्प्रउगशस्त्रं प्रात सवने द्वितीयं होतुर्भवति।
अत्रार्थवादमाह।

२४ विराजयन्न एतमप्यन्नम्। अद्यत इति व्युत्पत्त्या।

२५ माधुच्छन्दस प्रउगो रस सारभूत। इमे सोमा अरङ्कृता सोमपीतय इति रससारत्वदर्शनात्।

२६ यद्वैराज एतस्तोमीयं वाच्य कृत्वा माधुच्छन्दस प्रउगं करोति तदन्नेन रसविशेष दधाति।

२७ ऐकाहिक वा होतु प्रात सवनं भवतीति। प्र वो देवायेत्याज्यम्। प्रउगस्तु स एव। तत्रार्थवादमाह।

२८ एकाहो ऽग्निष्टोम सर्वक्रतुप्रतिष्ठानमिति। प्रतिष्ठित्यै प्रतिष्ठानायैव ऐकाहिकं प्रात सवनमिति।

---

## २.

१ माध्यन्दिने सवने मरुत्वतीयशस्त्रस्य विकद्रुकीयातिच्छन्दस्का प्रतिपद्भवति। तुविशुष्म तुविक्रतो इत्युत्तरे। इत्येष प्रातिपदस्तृच। एतच्छन्द प्राजापत्य। अतिच्छन्दा वै प्रजापतिरिति साम्यात्[१] प्राजापत्या अतिच्छन्दा इति वचनाच्च अतिच्छन्द[२] प्राजापत्यम्।

२ अतिच्छन्दा वै प्रजापति। प्रजापतिर्वाजपेय। यज्ञ उ वै प्रजापतिरिति वचनात्।

---

१ A सोम्यात्। २ C, ०च्छन्दसः।

३. आ त्वा रथं यथोतय इत्येव प्राकृतं प्रातिपदं तृचं वाजपेये भवति।

४. प्राजापत्यं वै छन्दो ऽनुष्टुप्[१] प्रजापतेर्मुखनिःसृतत्वादनुष्टुभो वाचः। वागनुष्टुप्। तस्मादनुष्टुप्छन्दः प्राजापत्यम्। व्याख्यातः शेषः।

५. कयेति कद्वदिति श्रुतेः। कयाशुभीयं कद्वत्। को वै प्रजापतिर्वाजपेयः। तदेनं कयाशुभीयेन स्वेन रूपेण समर्धयति।

६. बृहस्पतिदेवताकः सप्तदशशरावश्चरुर्भवति वाजपेये। शेषं कृतव्याख्यानम्।

७. निष्केवल्यमरुत्वतीययोरन्तरेण मध्ये स चरुर्भवति। न केवलं वाजपेये। बृहस्पतिसवे च। तत्रैव भवतीत्यर्थः।

८. तस्य चरोः प्रधानावदाने कृते तत्रैव यजमानो ऽभिषिच्यते।

९. परिसंख्यार्थमुक्तम्। एतत्त्रितयमेव भवति। नान्यत्। तथा च सूत्रम्[२]। परिसंख्या प्रकृतिं निवर्तयति। तस्य याज्यानुवाक्ये शुचिमर्कैर्नूनं शग्मास इति। चरुत्वसामान्यादिराजौ स्विष्टकृतः। रथन्तरं पृष्ठं भवति। तस्मिन्नथन्तरे स्तुते[२]।

१०. नवर्चं सूक्तं निष्केवल्यं निविद्धानीयं भवति। रथन्तरस्य निवृत्तिः।

---

१ D om the first three words  २ C, D om from परि॰ to ॰सूत्रं। A D शस्ते instead of स्तुते।

११. त्रिषु भुवनेषु यज्ञः प्रजापतिर्ज्येष्ठः श्रेष्ठः स[1] एव वाजपेयस्तदेनं ज्येष्ठं प्रजापतिं वाजपेयं स्वेन रूपेण ज्येष्ठेन समर्धयति।

१२. षष्ठे ऽहन्यभि त्वा देवेत्यनुचरः। उदु ष्य देवः सविता सवाय कतरा पूर्वा किमु श्रेष्ठ इत्यादि तृतीयसवनं होतुः षष्ठाहस्तामूल्हिकाङ्गवति।

१३. [2]अथ पुरुष एव षष्ठमहः स वै पुरुषः प्रजापतिरिति श्रुतेः। अनेन कृतव्याख्यानम्।

१४. विषुवतस्तृतीयसवनं वा होतुर्भवति।

१५. दूरोहणादिषुवाम् रोहः।

१६. वाजपेये रोहो भवति। तस्माद्वाजपेयो रोहः। तदेनं कृतव्याख्यानम्।

१७. पूर्वेण सह विकल्पः।

---

## ३.

१. तत्रैकाहिकतृतीयसवनपक्षे, मधुनाडीसंज्ञके सूक्ते विहरेदिति पैङ्ग्यं। न कौषीतकेः। ऐकाहिकतृतीयसवनपक्षे वाजपेये[3] मधुनाडीसंज्ञके[4] कथं विहरेदित्याह[5]।

२. इमे मधुनाडीसंज्ञके द्वाविंशके सूक्ते षकृच्छो विहरेत्[6]।

---

[1] C, ins अनुचरप्रभृति D त्रिभुवनेषु। [2] C, adds प्राजापत्यं षष्ठमहः स वै पुरुष प्रजापतिर्वाजपेयस्तदेन स्वेन रूपेण समर्धयति। [3] A ins के ते। [4] C, वि कथं। [5] D has instead तत्रैकाहिकतृतीयसवनपक्षो वाजपेये। के ते मधुनाडीसंज्ञके कथं विहरेदित्याह। [6] A ins इत्याह।

पूर्वां पूर्वस्य सूक्तस्य पच्छः शंसेत्। तत उत्तरस्य सूक्तस्य प्रथमां। एवं क्रमेण द्वे अपि सूक्ते शंसेत्।

३. ते यदि छन्दोगा यदि। चित्रशब्दो विद्यते यासु तास्विचवत्यः। तासु यदग्निष्टोमसाम यज्ञा यज्ञा व इत्यत्र यद्गीयते तत्कुर्युस्तदा।

४. पूर्वः प्रगाथः स्तोत्रियः ककुप्कारम्[१]। द्वितीयोऽनुरूपः[२]। अनुचरप्रभृति पञ्चात्तृतीयसवनमिति वचनादस्य कृत्स्नं प्रयज्य इमं स्तोममित्याग्निमारुते। यज्ञा यज्ञा व इत्येतयोः प्राकृतयोर्निवृत्तिः[३]। आपोहिष्ठीयादि समानम्।

५. वाजपेये उक्थेभ्य ऊर्ध्वं षोलशी[४] भवति। उक्थानि तु द्वितीयादह्नो भवन्ति। अथ यदि षष्ठाह्निकं तृतीयसवनमसर्वपृष्ठेऽहनि प्रदिष्टं स्याद्वितीयादह्न उक्थानीति वचनात् (१२.७.२)। षोलशिशस्त्रमुक्तम्। षोलशिन ऊर्ध्वमतिरिक्तोक्थ्यं होतुः शस्त्रं भवति। तदाह।

६. छन्दोगवशात्। किमित्ते प्र तत्ते वषट् ते विष्णवित्ययं क्रमः। आद्यावपूर्वाविमौ तृचौ पच्छः शस्तातः।

७. आहय ब्रह्म जज्ञानं इयं पित्रे धीती वा ये। एताः पच्छः शंसेत्।

८. [५]एताः पञ्च ऋचः[६] शंसेत्। स्वशाखायामुत्सन्नत्वात्तत्स्थाने सूत्रकारो विकल्पमाह।

---

१ Āśv. IX, 9, 9 २ C, D द्वितीयोऽनुचरः। ३ C, D om प्राकृतयोः। ४ C, षोलशी शस्त्रम्। ५ C, in marg वेमत्सत्यप्रविद्वितं etc. (Vāj Samh 32, 8). ६ A ins पञ्च. D पञ्चः।

६. पञ्च पञ्चो वा[1] ग्रसेत्।

१०. [2]तं प्रत्नथेत्यारभ्य[3] द्वादश ऋचः पच्छः शस्त्वा आह्वावं करोति। ततो दूरोहणं हंसः शुचिषदिति। यथा विषुवति शंसनमस्यास्तथा तत्रापि शंसति[4]।

११. तं प्रत्नथेति प्रकृतः। तस्योत्तमामृचमुपसंशस्य चयोदशीमित्यर्थः। सुतंभरो यजमानस्येत्येतां शस्त्वाहूय।

१२. यज्ञो बभूव स आ बभूवेत्येषा परिधानीया। प्रजापते न त्वदिति याज्या[5]।

१३. गवां सप्तदश शतानि दद्यात्। सप्तदश वाससां सप्तदश यानानि युक्तानि रथानपि सप्तदश दद्यात्। न तु शतानि रथानां सप्तदशैव। हस्तिनः सप्तदशैव। निष्कान्। चतुःसुवर्णमितान् सप्तदश निष्कान् दद्यात्। दुन्दुभीन् सप्तदश दद्यात्[6]।

---

१ A D om वा। २ om in A ३ C, ins उक्तामुक्ता। ४ D हंसः शुचिषदिति। तं प्रत्नथेत्यारभ्य द्वादश ऋच पच्छ शस्त्वाहूय हंस शुचिषदिति यथा विषुवति शस्ता। ५ A यज्ञो बभूवेति कल्पोक्तया पच्छस्ति परिधाय प्रजापते-इति याज्यां कुर्यात् D om ६ A सप्तदश गवां शतानि ददाति। वाजपेये च्यास्ते गवां सप्तदश शतानि दद्यात्। सप्तदश वाससाम। सप्तदश वस्त्राणि दद्यात्। सप्तदश यानानि युक्तानि। बलीवर्दादिवाहनयुक्तान सप्तदश गवामसा शकटान दद्यात्। रथान। चतु सुवर्णमितान सप्तदश निष्कान दद्यात्। दुन्दुभीन। नैजसान् दुन्दुभीन् सप्तदश दद्यात्। D सप्तदश गवां शतानि द०। गवां सप्तदश शतानि दद्यात्। सप्तदश वाससां। सप्तदश यानानि युक्तानि रथान। रथानपि सप्तदश दद्यात् यानं तु शतानि रथानां। सप्तदशैव। हस्तिन। सप्तदशैव। निष्कान। चतु सुवर्णमितान् सप्तदश निष्कान् दद्यात्। दुन्दुभीन। नैजमान् etc It appears that both MSS divide the text into more and shorter Sutras than C,.

१४. दक्षिणाभेदाच्च आप्तोवाजपेयः कथ्यते। को दक्षिणाभेदः। तानि गवादीनि सप्त सप्तदशानि भवन्ति यस्मिन्।

१५. सप्तदश गवामिति गोवचनात्[1] पञ्चवयोवस्थाभेदभिन्ना गावो ऽभिधीयन्ते। तेन पञ्चवयोवस्थारूपासु गोषु सप्तदशसप्तदश देया इति। एवं पञ्चाशीतिर्गावो भवन्ति। स कुरुवाजपेय तमित्याचक्षते याज्ञिकाः। अन्या दक्षिणा निवर्तन्ते। दक्षिणाभेदाच्चामभेदः। अन्यत्सर्वं समानमिति।

---

## ४.

१. वाजपेयेनेष्ट्वेत्यन्नाद्यलक्षणः[3] कामत्ययः।

२. भेदेनानुष्ठाने[4] फलश्रवणात्।

३. रोहात्प्रत्यवरोहः सर्वत्राभीष्टः।

४. यद्बृहस्पतिसवेन यजते।

५. अस्मिन्नहनि।

६. विकल्पे प्राप्ते नियमः।

७. उक्तस्वरूपं तत्।

८. संख्यानियमार्थं वचनम्।

९. यस्तस्तम्भ सहसा वि ज्मो अन्तानित्येतासां चतसृणां निष्केवल्यप्रभृतिषु शस्त्रेषु पुरस्तात्सूक्तानामनुपूर्वश एकैकां शंसेयुः[5]।

---

१ C, om गो। २ C, भेदाभिन्ना गवा॰। ३ A ॰त्यन्नादिलक्षणः।
४ A ॰न। ५ Partly om in A

१०. दक्षिणाग्रहणं प्राकृतनिवृत्त्यर्थम् ।

११. प्रतिविभज्य देया इत्यभिप्रायः ।

१२. अनूबन्ध्यस्य पशोर्वपायां परिसमाप्तायां बडवां ब्राह्मणे दद्यात्[1] । अनुशिश्रं सकिशोरामित्यर्थः ।

---

## ५.

१. आप्तोर्यामसंज्ञकः क्रतुर्वक्ष्यमाणः[2] । तस्य [3]महाभाग्यभागाख्यापनेन स्तुतिरभिधीयते । प्रजापतिः किल देवान् सृष्ट्वा तेभ्य एतदन्नपानं ससृजे । तदर्थमन्नपानं सृष्टवान् इत्यभिप्रायः[4] । किं पुनस्तत् । एतान्वक्ष्यमाणान् यज्ञान् । तानाह ।

२. तेषामग्निष्टोमं प्रथमं सृष्टवानित्यभिप्रायः[5] ।

३. सो ऽग्निष्टोमो देवाननुपोषणाय न समर्थः । कर्मप्रवचनीयो नुर्हीनार्थः[6] ।

४. ससृज इति वर्तते ।

५. सो ऽप्यत्यग्निष्टोम एतान्परिपोषयितुं न क्षमः ।

६. अत्यग्निष्टोमादनन्तरमुक्थ्य सृष्टवान् ।

७. सो ऽप्युक्थ्यो देवाननुपोषणाय न समर्थः ।

८. प्रजापतिः ससृजे ऽनन्तरमुक्थ्यात् ।

---

१ A om from अनूब॰ to परिसमाप्तायां — C D अनुशिश्रं instead of अनु॰ । C D om वक्ष्यमाण । ३ C D माहा॰ । ४ C D इत्यर्थं । ५ C D प्रथम- ग्निष्टोमं ससृजे । ६ C D नुर्हीना॰ ।

९. सो ऽपि षोडशी एतान्देवाननुपोषणाय न क्षमः।

१०. षोडश्यनन्तरं प्रजापतिर्वाजपेयं संसृजे।

११. सो ऽपि वाजपेय एतान्देवाशान्नभवत्।

१२. वाजपेयादनन्तरमतिरात्रं प्रजापतिः ससृजे[१]।

१३. सो ऽप्यतिरात्र एतान्देवान्परिपोषयितुं न क्षमः।

१४. अतिरात्रादनन्तरमाप्तोर्यामाणं सृष्टवान्।

१५. स एतान्देवाननुपोषणाय प्राभवत् समर्थो ऽभवत्।

१६. तस्याप्तोर्यामस्य त्रयस्त्रिंशत्स्तोत्राणि भवन्ति।

१७. तस्याप्तोर्यामस्य शस्त्राण्यपि त्रयस्त्रिंशत्संख्याकानि भवन्ति।

१८. उक्थ्याहुतयो ऽपि त्रयस्त्रिंशद्भवन्ति।

१९. संख्यासामान्यं स्तोत्रादिभिर्देवानाम्।

२०. तस्मात्संख्यासामान्यात् स्तोत्रैः शस्त्रैरुक्थ्याहुतिभिः सर्वान्देवाग्प्रीणाति। स आप्तोर्यामः। एकैकं प्रत्येकम्।

२१. तस्याप्तोर्यामस्य स्तोमा नव भवन्ति।

२२. पृष्ठानि च आप्तोर्यामस्य नव भवन्ति।

२३. संस्था अग्निष्टोमादिकाः षड् भवन्ति।

२४. एतानि स्तोमादीनि सामस्त्येनैकत्र गृह्यमाणानि चतुर्विंशतिसंख्याकानि भवन्ति।

२५. संवत्सरार्धमाससंख्यासामान्यात् संपत्त्या स आप्तोर्यामः संवत्सरस्यैवाप्त्यै प्राप्तये भवतीति।

---

१ C D om. the first three words.

१६. वैशब्दो यस्मादर्थे। यतो ऽयं सर्वं प्राप्तो यामः सारो यो देवांस्त्रयस्त्रिंशत्सामान्येन संवत्सरं च चतुर्विंशत्यर्धमाससामान्येन अन्वभवत् प्रीणाति स्मेति तस्मान्निर्वचनादाप्तोर्याम इत्यर्थवादो विधिस्तुत्यर्थः।

---

## ६.

१. बहिष्पवमानमाध्यन्दिनार्भवाः पवमानाश्छान्दोमा भवन्ति।

२. एतान्याज्यानि भवन्ति।

३. भवन्तीति वाक्यशेषः।

४. यज्ञायज्ञीयमग्निष्टोमसाम चयस्त्रिंशं भवति[१]।

५. आज्यानां ये स्तोमा उक्तास्ते एवातिरिक्तोक्थानां स्तोमा भवन्ति।

६. प्रजापतिरेतैरग्निष्टोमस्तोमैस्त्रिवृदादिभिरभयतः सर्वान् कामान् गृहीत्वा आत्मनि निहितवान्। अर्थवादो ऽयं चोदनारोचनार्थः।

७. यथा पुराकल्पे प्रजापतिः सर्वान् कामानदधत तथाधुना यः कश्चिदाप्तोर्याम्णा यजते स सर्वान्कामानुभयतः क्रोडीकृत्यात्मनि दधाति।

८. आप्तोर्याम्णि कर्तव्यमिति वाक्यशेषः।

---

१ CD om यज्ञायज्ञीयम्।

१३. एषो उषा अपूर्व्येति होतुर्नवर्चम्। दूरादिहेव यत्सतीति मैत्रावरुणस्य नवर्चम्। उदीराथामृतायत इति ब्राह्मणाच्छंसिनो नवर्चम्। आ मे हवं नासत्येत्यच्छावाकस्य नवर्चम्।

१४. आ भात्यग्निरुषसामनीकमित्येतत्सूक्तं नवर्चादनन्तरं होतुर्भवति।

१५. प्रातर्यावणेत्येतत्।

१६. आ गोमता नासत्या रथेनेत्येतत्सूक्तं ब्राह्मणाच्छंसिनो भवति।

१७. अतारिष्म तमसस्पारमस्येत्येतत्।

१८. येचस्य पतिना वयमित्येतास्तिस्त्रस्त्रयाणां होत्रादीनां परिधानीया भवन्ति।

१९. शं नो देव इत्येवमादिकाच्छावाकस्य परिधानीया भवति। येचवत्याः[1] परिधानीयाः कुर्वत इतीयं श्रुतिर्बाह्यस्यात्।

२०. इमे सोमासस्तिरोअह्न्यास इति प्रैषेषु पठिता। इमे मन्द्रासो अश्विनेति सौपर्णी। अत्या यातं निवत उद्वतस्येति सौपर्ण्येव। आ नो गच्छतं हवनोप यज्ञमिति सौपर्ण्येव। एतास्तत्स्रो यथोद्दिष्टा होत्रादीनां याज्या भवन्ति।

२१. पुराणमोक इत्येवमादिका वा अनुपूर्वं चतस्रो होत्रादीनां याज्या भवन्ति। अथ यत्तिरोअह्न्यवत्यस्त्रिष्टुभो याज्या भवन्तीत्यन्यत्रापि न्यायेन लिङ्गं विहित एव।

---

१ C D चेचपत्याः। M चैचव॰ I propose चैचपत्याः

९.

१. अनन्तर उच्यते।

२. यमस्तोमो नामैकाहः स्वर्गकामस्य भवति। तस्यायं प्रकृतिरूपो ऽर्थवादः। यमः किल स्वर्गकामः पूर्वं तपस्तप्त्वा एतं यज्ञक्रतुं यमस्तोमाख्यं दृष्टवान्।

३. तमाहरत्संभारद्वारेण। आहृत्य च तेनेष्टवान्।

४. प्राप्तवान्।

५. प्रयोगचोदना वाक्यमेतत्।

६. ऐकाहिकानां शस्त्राणां स्तोत्रियानुरूपानुद्धृत्य सामातानांश्च। सामाताना इति सामप्रगाथा उच्यन्ते।

७. यावत्यस्ता देवता[१] भवन्ति तावत्य एव तद्दैवतास्ताश्छन्दस उपजायन्ते व्याक्रियन्त इत्यर्थः। प्रगाथस्थाने ऽपि तथैव च्छन्दो ऽनुसर्तव्यम्।

८. परेयिवांसं प्रवतो महीरन्वित्येतासां पञ्चानां मरुत्वतीयनिष्केवल्यहोत्रकशस्त्रेषु यानि सूक्तानि तेषां पुरस्तादेकैकां शंसेयुर्माध्यन्दिने।

---

१०.

१. सर्वस्वारो नामैकाहः। स सर्वगायत्रो मरणकामस्य यजमानस्य भवति। प्रयोगान्तरे च स्वर्गकामस्य।

---

१ A स्त्वो C तद्देवता।

२. सर्वनिधन इति गुणयोगादुच्यते। स च गुणश्छान्दोग्ये प्रसिद्धः। सर्वत्रैष्टुभो ऽयं भवति।

३. सर्वत्व इति गुणयोगादुच्यते। स च प्रसिद्धो गुणश्छान्दोग्ये। स सर्वजागतो भवति। पशुकामस्य[1] फलचोदना।

४. सर्ववाङ्निधन इति गुणयोगादुच्यते। श्रुतकामस्य कीर्तिमिच्छतः। सर्वानुष्टुभो ऽयं भवति।

५. गायत्रत्रैष्टुभजागतानुष्टुभेषु प्रत्यचमेवैतानि छन्दांसि प्राकृतानुद्धृत्य[2] कर्तव्यानि। नानाछन्दस्केषु वा प्राकृतेष्वेतेषु संपदा यथाश्रुति संपादयितव्यम्[3]।

६. नृजित्पृतनाजित्सत्त्रजिद्धः।

---

## ११.

१. वाचस्तोमस्यायमर्थवादेनोपक्रमः[4]। वाक्किलाकामयत सर्वभूतानामस्य प्रशस्ता स्यां श्रैष्ठ्यस्वाराज्याधिपत्ययुक्ताहं भवामीति[5]।

२. वक्ष्यमाणविधिकं दृष्टवती।

३. तस्य संभारानाहरत्। आहृत्य चेष्टवती।

४. परिगता आसीत्।

५. तस्माच्छ्रैष्ठ्यादिकामो वाचःस्तोमेन यजेतेति।

६. स्तोत्रियास्वेवंसंख्यासु बहिष्पवमानस्तोत्रगानं कर्तव्यम्।

७. सहस्रे[6] स्तोत्रियाणामाज्यस्तोत्रगानं भवति।

---

१ C D ins इति। २ D प्राकृता अनुद्धृत्य A C प्राकृतानुद्धृत्य। ३ C D यथाश्रुति A C D संपादयितव्या। ४ A °स्तोमोस्य C D °स्तोमे ऽस्या°। ५ मी instead of मी all MSS ६ C D सहस्र°।

८. दश स्तोत्राणि यथाक्रमेण स्तोत्रियाणामेतासु संख्यासु गेयानि।

९. सर्वा ऋचो ऽभ्यावर्तन्ते[१]। स्तोमसंख्यां निरूप्य प्रयोक्तव्याः स्तोमातिशंसनायायुतादिषु स्तोमेषु[२]।

१०. एवं सर्वाणि सामानि प्रयुज्यन्ते सर्वाणि यजूंषि च।

११. उत्थाय परिसमाप्य वाचःस्तोमं ततोऽग्निष्टोमः कार्यः। प्राकृतार्थमग्निष्टोमवचनम्।

१२. गवामेव न्यायात्।

१३. महायज्ञः पूर्वसुक्तो हविर्यज्ञसोमेषु। तत्रापि सहस्रं दक्षिणा।

१४. स एतौ यज्ञक्रतू अपश्यदित्युत्थभिभूती इति पूर्वसुक्तौ। तयोरपि सहस्रं दक्षिणा।

१५. सहस्रं दक्षिणेत्यनुवर्तते।

१६. प्रक्रान्तैव दक्षिणासंख्या।

१७. सहस्रं दक्षिणा।

१८. सहस्रं दक्षिणा। महायज्ञादिषु सप्तमीनिर्देशाच्छाखान्तरीया अपि दक्षिणाकल्पा अनुवर्तव्याः।

१९. शास्त्रमेवैतदुच्यते शाखान्तरीये ऽप्यनादेशे यथा स्यात्।

---

१ C D ऽभ्यावर्तन। २ A om. from सर्वा to प्रयोक्तव्या।

## १२.

१. राजसूयो वक्तव्यः। तस्यार्थवादेनोपक्रमः। वरुणः किला-कामयत सर्वेषां राज्ञानां दिव्यान्तरिचभौमानां श्रैष्ठ्यं स्वाराज्य-माधिपत्यं परीयाम्। मान्यता श्रैष्ठ्यमानुकूल्यं[1] स्वाराज्यमाधिपत्यं प्रसिद्धमेव।

२. स वरुणो राजसूयाख्यं यज्ञक्रतुं साध्यसाधनभावेनोप-लब्धवान्।

३. तं राजसूयोपकरणमाहरत्। आहृतवान्। तेनेष्टवान्।

४. परिप्राप्त आसीद्वरुणः।

५. तस्मादेवंकामो राजसूयेन यजेत।

६. अत्र भार्गवो भृगुसमानगोत्रो होता भवति[2]।

७. माघ्या अमावास्याया उपरिष्टादेकाहे फाल्गुनप्रथमाहे ऐन्द्रापौष्णेन बस्तेनेष्ट्वा दीक्षेत[3]।

८. पवित्रो नामाभ्यारोहणीयो ऽग्निष्टोमः। तस्मै दीक्षेतेति पूर्वेण संबन्धः।

९. स एव पवित्रश्चतुष्टोमो भवति।

१०. रथन्तरं पृष्ठं यस्मिन्स्स तथोक्तः।

११. एवंसंस्थः[4]।

---

१ C आनुकूल्यं। २ M has विशिष्टो जातीयो होता यथमात् instead. ३ M om the beginning 7. 8 seem to form one Sūtra in this MS., it reads ... प्रतिपदि दीक्षा। मस्मिन्पवित्राय दीक्षेत। ४ M एवसंस्थानियमार्थ नव अग्निष्टोमाद्रूपानुकीर्तनमनुवादः।

१२. एषो ऽग्निष्टोम एव पवित्रः। एतेनाग्निष्टोमेन किल पूतः पवित्रीकृतः सर्वमश्नुते प्राप्नोति[१]।

१३ चतुर्दीक्षस्त्र्युपसत्को ऽष्टम्यां सुत्यमहर्भवति[२]।

१४. पञ्चशेषं तमिष्टिभिः परिसमापयेत्ता इष्टयः स्वकल्पे-ऽभिहिताः। पूर्वकारिवशाद्व्यवस्थिता द्रष्टव्याः[३]।

१५. प्रयुज्येति सकलस्य प्रयोगस्य[४] चोदना तन्त्रमेवानुवृत्ते[५]। ततो वैश्वानरपार्जन्या उत्सर्गश्च भवतः(?)।

१६. नित्यादन्यो ऽयमिति नियमात्।

१७. साकमेधैरिष्टान्वचं शुनासीर्यं माघ्यां वा पौर्णमास्यामिति विकल्पे प्राप्ते माघ्यामेवेति नियमार्थं वचनम्।

१८. समापयेत्पूर्वकारिवशात्।

१९. पूर्वफाल्गुन्यामभिषेचनीयदशपेयाभ्यामर्थाय दीक्षते।

२०. २१. अर्थवादार्थं वचनं संख्यामात्रविध्यर्थं च[६]।

२२. दीक्षाभिः षोडशभिरिदं सर्वं[७] च षोलशकलमिति संपत्त्या[८]। अत्रैव सर्वस्मिन्भवत इमौ अभिषेचनीयदशपेयौ।

---

१ M Sutra: एष एव पवित्र· Comm पावन इत्यर्थ·। Sutra एतेन॰ अश्नुते Comm अनेनाऽभिषेकस्तस्य योग्यो भवतीत्यभिप्राय। २ C D अष्टौ M .. दीक्षोपसन्नियमार्थं वचनं। ३ A व्यवस्था। ४ A नाणस्य instead of प्रयोगस्य। ५ C D एतानुवृत्ते। ६ M Sutra द्वादश॰ उपसद· Comm दीक्षाणामुपसदां च नियमार्थं वचनम्। Sutra सुत्य अह· Comm अर्थवादोपन्यासार्थम्। 20 21 are one Sutra in A C (D?) ७ A पूर्वं C (in marg) सोपसत् and इत्येभि। ८ C D सपत्त्यास्यैव (D ॰त्या॰)।

१२. नवमीमिष्टिं नवमे ऽहनि निर्वपेत् सोमाय राज्ञे। सोमो देवता। राजेति गुणः[१]।

१३. दशमे ऽहनि दशमीमिष्टिं निर्वपेत्। विष्णवे देवतायै। शिपिविष्टायेति विशेषणम्। देवयजनान्तरमेकैकेनोत्सर्पतोत्येवमादिकः[२] शाखान्तरीयो धर्म इतिकरणाल्लभ्यते।

१४. दशमी चन्द्रतिथिर्गृह्यते। तस्यां दशपेयः कार्यः। सौत्यमहरिह दशपेयाख्यम्।

१५. अपि वेति मारुतो विष्णवे शिपिविष्टायेत्यन्तेन[३] सह विकल्पसमुच्चयः। एताभिर्दशभिर्देवताभिः सहोच्चारणेन सदः प्रसर्पयुर्भक्षान्वा भक्षयेयुः।

१६. प्रयोगगतस्य प्रतीकवचनम्[४]।

१७. एवमन्तो भक्षमन्त्रः।

१८. ऋत्विजो ऽनेन विशेषणेन विशिष्टा याजयेयुः येषां मातृतः पितृतश्च दशदश पुरुषाः श्रोत्रिया भवन्ति[५]।

१९. शतसंख्याका ब्राह्मणाः सोमं भक्षयन्ति।

२०. यजमानचमसे ऽपि ब्राह्मणा एव। शतसंख्यायोगात्। दशदशैकैकं चमसमनुसर्पन्तीति श्रुतिः शाखान्तरात्।

२१. तस्मात् दशदशैकैकं चमसमनुसर्पन्ति। तस्माद्दशपेय इति निर्वचनेनेह स्तुतिः[६]।

---

१ C D M देवता। तेन गुणेन। २ C D •केनातः सर्प• A om शाखान्तरीयो। ३ C D M om इत्यन्तेन। ४ C प्रयोगसवंस्थ प्रतीक• M प्रयोगमन्तस्य प्र• D योगमवयप्रतीक•। ५ A adds श्रोत्रियश्छन्दोऽधीत इति वेदपाठपारगाः। C D श्रुति C (orig.) इति वचने• D इति ववचने• A उपसर्पन्ति।

२२. परिसमाप्य दशपेयमनन्तरं पञ्चबिलश्चरुर्भवति। यागो ऽयं द्रव्यनिर्देशात्।

२३. परिसमाप्ते पञ्चबिलयागे श्येनीपृषतीभ्याम्। श्येनी लोहिता। पृषती शुक्लाञ्चनादियोग्यलक्षणा[1]। श्येनीपृषतीभ्यामिति पञ्चमी। पष्ठौही चतुर्वर्षा निगमेषु प्रसिद्धा। गर्भिणीभ्यामन्तर्वतीभ्यां[2] पूर्वा अदितिदेवत्या वैश्वदेवी वा मारुत्युत्तरा।

---

## १५.

१. अथशब्दादियं सौत्रामणी चरकाणां राजसूयाद्बहिरपि वर्णत्रयस्यापि भवति। काम्येष्टीनां च मध्ये पाठात्। तस्याः संस्कारमध्ये च पाठात्। स्मृतौ संस्कारार्था भवति। कौकिला तु सौत्रामणी येषामध्वर्यूणां पठिता तदधीनमेव बाह्वृच्यम्[3]।

२. आश्विनदेवत्यो लोहितवर्णो ऽज आलब्धव्यः।

३. सरस्वतीदेवताका मेषी कर्तव्या।

४. इन्द्राय सुत्रामणाय ऋषभ आलब्धव्यः।

५. पर्यग्निकृतेष्वेतेषु सुरासोमेन प्रचरन्ति। सुराया एव सुरासोमाभिधानम्।

६. पवित्रेण पुनीहि मेत्येवमादिना कल्पपठितेन[4] मन्त्रेण सुरां स्रवन्तीमुपतिष्ठन्ते प्रयजमाना ऋत्विजो वक्ष्यमाणविशेषात्[5]।

---

१ C ॰दियोग्य॰। २ A ॰मन्तर्वती॰, C ॰र्वतीभ्यां, D ॰र्वती॰, M ॰वर्वी॰। ३ C D बाह्वृचं। ४ C D कल्पे। ५ M ऽवक्ष्यमाण।

७. पिद्याभिर्वेति नोक्तम्। कथं नाम सोमवतां बर्हिषदामग्निष्वात्तानां च या उक्तास्ताः स्युरिति।

८. युवं सुराममित्येषा सुरासोमानां पुरोनुवाक्या भवति।

९. होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाणं सोमानामिति प्रैषो भवति।

१०. सर्वान्प्रैषानेक आचार्या विकृतानूहितानामनन्ति।

११. तदूहितमाम्नातं तथा न कुर्यात्। आसुरं तत्।

१२. पुत्रमिव पितरावश्विनोभेत्येषा याज्या कर्तव्या। सोमस्याग्ने वीहीत्यनुवषट्कारः। सुरायाः सोमशब्दात्।

१३. यमश्विनेत्येवमादिकः सुराभक्षणमन्त्रः।

१४. ब्राह्मणं सुरापं परिक्रीणीयादित्येवं ज्ञात्वा तस्मै भक्ष उपनीयते। परिक्रीणीयादिति ब्राह्मणवचनं स्मृतिविरोधाशंकानिवृत्त्यर्थम्।

---

## १६.

१. सौत्रामण्यनन्तरं केशवपनीयो नामैकाहः। यद्यस्मिन्नवसरे सौत्रामणी क्रियते ततो ऽयं क्रमः। ऽतःशब्दादन्यत्रापि भवतीति विज्ञायते।

२. त्रैधातवी नामोदवसानीया कार्या।

३. पुरोलाशः शाखान्तरात्। आग्नावैष्णवस्य याज्यापुरोनुवाक्ये पूर्वोपदिष्टे[१]। इन्द्राविष्णू दृंहिताः शम्बरस्य उभा जिग्यथुर्न परा

[१] C D om. from आग्ना॰ to ॰दिष्टे।

जयेथे इति याज्यानुवाक्ये भवतः[१]। सं वां कर्मणेति द्वितीयासप्तम्यौ वा[२]।

४. चैधातव्यनन्तरं व्युष्टिद्विरात्रः कार्यः।

५. अग्निष्टोमसंस्थमेकमहर्द्वितीयमतिरात्रसंस्थम्।

६. अग्निष्टोमसंस्थस्य ब्राह्मणसंस्तवः। व्युच्छत्यस्मै ब्राह्मणाय सुप्रभातमहर्भवति यो वेदमनुब्रूते श्रियेभ्यः।

७. अतिरात्रसंस्थस्य क्षत्रियसंस्तवः। क्षत्रियस्यापि तस्य सुप्रभातं यो ऽभिषिच्यते। तस्मा अमृधा उषसो व्युच्छान्य इन्द्राय सुनवामेत्याहेति मन्त्रवर्णवचनात्।

८. व्युष्टिद्विरात्रादनन्तरं चत्रधृतिनमैकाहस्तेन[३] यजते।

९. चत्रधृतेर्विशेषणान्येतानि पदार्थानि प्राकृतान्येवानूयन्ते[४]।

१०. उहेति *निपातो वाक्यपूरणार्थः।* तेन त्रिष्टोमेन वृद्धद्युम्नो नामाभिप्रतारण इष्टवान्।

११. तं वृद्धद्युम्नं ब्राह्मणः कश्चिदनुव्याजहार। अनुव्याजहारो *नामाभिशापः*[५]।

१२. एवं ब्राह्मणो ऽनुव्याजहार। नायमयष्ट चत्रधृतिना वृद्धद्युम्नः। अत एतस्माद्यज्ञापचारादिममेव समरं संग्रामं प्रति कुरवो राजानः कुरुक्षेत्राद्भ्रंशिष्यन्त इति।

१३. यथैवैतेन ब्राह्मणेनोक्त तथैवाभूत्।

१४. न त्रिष्टोमेन।

---

१ C D om भवत।  २ C D om वा।  ३ C D ०धृतिनामै०।
४ C वतूयन्ते, M ०वाभूयन्ते, D ०न्येवाभ्यूयन्ते।  ५ A ०शाय।

१५. प्रतिष्ठा यज्ञानां चतुष्टोमः प्राथम्यात्[१]।

१६. अयुतं दश सहस्राणि दक्षिणा देया। गवामियं संख्या न्यायप्राप्तेः।

१७.[२] न वै तस्माद्राष्ट्रात् यस्याधिपतिः। तस्मान्न युवते प्रजा। तस्मै वा विशो राजा। तस्या न युवते न पृथग्भावं गच्छतीत्यर्थः। यो ऽयुतं ददाति।

१८. अयुतमित्यस्य निर्वचनम्।

१९. लक्षं वा दद्यादित्यभिप्रायः।

उक्तमाध्वर्यवे। शौनःशेपं च प्रेष्यति[३] द्यूतान्ते वेति। ततः प्रेषितेन होत्रा ख्यातव्यम्। तदिह सूत्रकारः पठति।

---

## १७.

p 187, l 22 हरिश्चन्द्रो नाम राजा। वेधाः प्रजापतिः। तस्यायं वैधसः। ऐक्ष्वाक इति वंशाख्या। स किल राजापुत्र आस आसीत्[४]।

p. 188, l. ५ तस्य ह राज्ञः शतंपरिमाणा जाया बभूवुः।

अनेकास्वपि पत्नीषु सतीष्वप्यपुत्र एव। साधनसंपन्नो ऽपि पुत्रं न लब्धवानित्यर्थः।

2. तस्य राज्ञो हरिश्चन्द्रस्य गृहे कथंचित्पर्वतनारदावृषी सहोपितौ।

---

१ C D प्राधान्यात्। २ om. in A. ३ C D प्रेष्यतिद्यूतान्तेवेति। ४ cf Streiter, De Sunahsepo, fabula Indica, Berolini 1861. ५ the numerals indicate here page and line of the text in vol I.

स राजा नारदं पृष्टवान्।

3 4 यदेतदयं पृच्छामस्त्वं भगवन्नारदास्माकं प्रब्रूहि। इदमिति वितर्के। इममित्यभिप्रेतस्य प्रत्यच एव निर्देशात्। सर्व एव जना विद्वांसो ऽविद्वांसश्च पुत्रफलं पुत्रमिच्छन्ति। किं पुनस्तत्पुत्रफलं यत्पुत्रेण पिता विन्दत इति।

5 स नारद एकयर्चा पृष्टो दशभिर्वक्ष्यमाणाभिः प्रत्युवाच।

6 7 पुत्रेण जातेन पिता पितॄणामनृणो भवतीत्युच्यते। ऋणमस्मिन्संनयतीति। अमृतत्वं च विन्दते[१]। नैवासौ म्रियते यस्य पुत्रः। पिता पुत्रस्य जातस्य कर्मयोग्यस्य[२] निष्पन्नस्य पश्येच्चेज्जीवतो मुखं संप्रतिकाले[३]।

8 9 सर्वेषां प्राणिनां पृथिव्यां यावन्तो भोगाः चुदुपशमादयः। यावन्तो जातवेदसि आलोकप्रकाशरूपोपलब्ध्यादयः। अप्सु च यावन्तो भोगास्तृडुपशमादयस्तेभ्यो भोगेभ्यः पितुः पुत्रे भूयान्भोगः।

10 11 पितरो नरकपातलक्षणं सान्द्रं तमः पुत्रेणात्यायन्। किं चान्यत्। आत्मा हि स आत्मनः सकाशाज्जातो अपृथग्भूत एवेत्यर्थः। स इरावत्यतितारिणी[४]। इरावत्यन्नवति श्राद्धोदकदानादौ कर्मणि अतिता(?)। सांतत्येन[५] प्रापयिता। अवश्यकर्तव्यस्य च श्रद्धादेर्दर्शी।

12 13 हे ब्राह्मणाः। ब्रह्मब्राह्मणयोरविशेषात्। हे ब्राह्मणा

१ C D ति। २ C M पुत्रयोग्यस्य। ३ Streiter proposes संप्रतिकाले।
४ C ॰ऋ॰, D त्र। ५ C D सातत्यन।

इत्यामन्त्रिताः[1] किं नु मलं धारयथ नखलोमादिकं। किमजिनं धारयथ कृष्णाजिनं मुमुक्षवः सन्तः। किमु श्मश्रूणि धारयथ वैखानसाः सन्तः। किं तपो धारयथ कृच्छ्रचान्द्रायणादिकं। विष्णुलोकप्राप्त्यर्थं किं तर्हि कुर्मः। पुत्रमिच्छध्वं स वै लोको ऽवदावद इति। वद स्थैर्ये। [2]चिरविष्णुलोकप्राप्तिहेतुः पुत्र एवेत्यर्थः।

14. 15. अन्नं ह प्राण इत्येवमादीनां दृष्टान्तत्वेनोपादानम्। यथानिश्चितमन्नमेव[3] प्राणः। शरणं वस्त्रं सर्वतः परित्राणम्। हशब्दो ऽवधारणार्थः। रूपं हिरण्यं सर्वद्रव्येभ्यः शोभनद्रव्यम्। पशवो ऽविवाहा विवाहरहिताः। सखा ह जाया इहलोकपरलोकसुखधर्मसाधनरूपत्वात्। दुहिता कृपणं। सर्वदादीनैव शोककरी। यथैतानि यथायथं निश्चितानि एवं ज्योतिः पुत्रः परमे व्योमन् परमे स्थाने।

16 17. पतिर्जायां सर्वाङ्गीकृत्य रेतसा प्रविशति। तच गर्भो भूत्वा मातरमिवाश्रित्य तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ऽभिव्यज्यते।

18. 19. जायाशब्दस्य निर्वचनार्थं पुनरुक्तं। यस्मादस्यां पुनर्जायते तस्माज्जाया जाया[4]। आसंसारमेषाभूतिर्भवनं यदस्यामेवैतद्बीजं निधीयते।

20 21. देवा ऋषयश्च एतां जायां महत्तेजः संभारं कृत्वा

---

१ CD ॰चित्त। २ A चिरं। ३ CD यथैतन्निश्चित। ४ CD om तस्माज्जाया जाया।

देवा मनुष्यानब्रुवन्नेषा पुनर्युष्माकं जननी भविष्यति। जायास्तुतिरपत्योत्पत्तिस्तुत्यर्था।

l. 22 and p. 189, l. एष इति प्रकृतसंनिहितपरामर्शकः। पन्था मार्गः। विततो विस्तीर्णो देवयानो[1] न पितृयानो येनाक्रमन्ते पुत्रिणः। येन गच्छन्ति पुत्रिणः ये विगतशोकाः। तं पश्यन्ति पशवो वयांसि च पक्षिणश्च। तस्मात्ते मातर्यपि मिथुनं चरन्ति। एवं नाम पुत्रोत्पत्तिः प्रशस्यते येन विरुद्धमप्यभिधीयते। यथा लोके ... शौला[2] निष्पादयितव्यं किमपीति।

23. अर्थवादो ऽयं पुत्रोत्पत्तिप्रशंसार्थः। गावो वा एतत् सत्त्रमासतेति यथा।

---

## १८.

4. अर्थवादो ऽयं पुत्रोत्पत्त्यभिमुखीकरणाय। हशब्दो निपातो वाक्यपूरणार्थः। तमुपायं कथय येन पुत्रो जायेतेति।

5. स नारदस्तं हरिश्चन्द्रमुवाच वरुणं राजानमुपधाव। उपधावनं श्रयणं। उपधावित्वा तं देवं ब्रूहि[3] पुत्रो मे जायतां तेन हे वरुण त्वा यजे। एवं वरुणं ब्रूहि[4]।

6. हरिश्चन्द्रेण नारदवचोऽभ्युपगतम्।

6. हरिश्चन्द्रो वरुणं राजानमुपससार। कथं तदाह।

---

१ C D ०स्तीर्णो देवयान', देवयानः पितृयाणो। २ A मस्त्वादशौला, C स्त्वादशौला M स्तुत्वादशौला, D सत्वादशौ च। ३ C D प्रब्रूहि। ४ C D प्रब्रूहि।

6. 7. पुत्रो मे जायतां तेन त्वा यजा इति। स हरिश्चन्द्र एवं वरुणमुक्तवान्।

7. तथेति वरुणो ऽभ्युपगतवान्।
तस्य हरिश्चन्द्रस्य पुत्रो जातो वरुणप्रसादात्।
तस्मै तत्पिता नाम दत्तं रोहित इति।

8. तं हरिश्चन्द्रं वरुण उवाच। अजनि वै ते पुत्र इति। अजनीति लुङि चिणि रूपं। जातस्ते पुत्र इति यावत्। यजस्व मानेनेति।

9. 10. स राजा हरिश्चन्द्रः पुत्रस्नेहाद्वरुणं प्रत्येतदुत्तरं कृतवान्। यदनतिक्रान्तदशाहो ऽयं पशुस्ततो ऽमेध्यो ऽतिक्रान्तदशाहो मेध्यो भवति पूर्णदशाहो ऽस्त्वथ त्वां यजा इति।

10. राज्ञोक्तं वरुणो ऽङ्गीचकार।
स रोहितो निर्दशो ऽभूत्।

11. तं हरिश्चन्द्रं वरुण उवाच निर्दशो ऽयमभूद्यजस्व मानेन।

12. दन्तैर्विना पशुरमेध्यो भवति। नु अस्य भवन्तु दन्ता अस्य। अथ त्वा यजा इति।

13. हरिश्चन्द्रोक्तमभ्युपगतं राजा वरुणेन।
तस्य रोहितस्य दन्ता जाताः।

14 तं हरिश्चन्द्रं वरुण उक्तवान्। दन्ता अस्य रोहितस्य जाताः। अनेन मां यजस्व।

14. 15. पन्नैर्दन्तैः[1] पशुर्मेध्यो भवति। दन्ता न्वस्य पतन्तु अनन्तरं तव यागमनेन करवै।

---

१ C D पतितै॰।

16 तथैव वरुणो मेनिरे[१]।

तस्य दन्ताः पतिताः।

16 17. तं वरुण उक्तवान् दन्ता अस्य मेतुः यजस्व मानेनेति।

18 पुनर्दन्तजन्मोत्तरं श्रुतवान् हरिश्चन्द्रः।

19 अस्त्वेवम्।

पुनर्दन्ता अभवन्।

20 वरुण उक्तवान्।

21 संनाहप्राप्त्यनन्तरं क्षत्रियः पशुर्मेध्यो भवति। इत्येवं हरिश्चन्द्र उक्तवान्।

22 भवत्वेवमिति वरुण उवाच।

स रोहितः संनाहं प्राप्तवान्।

p 190, 1 1 वरुणेनोक्तम्।

स हरिश्चन्द्रस्तथेत्यङ्गीकृत्य पुत्रं रोहितमामन्त्रितवान्।

किम्।

2. ततेति[२] पुत्रमभिधाय संबोधनं कृतम्। अयं भगवान्वरुणस्त्वा अनेन समयेनाददाद्यत्तथा[३] परशुना इमं यजा इति। स समयः संप्राप्तः। हन्त इति खेदे। परमखेदं प्राप्तवान् हरिश्चन्द्रः। एवमुक्तो रोहितः किं कृतवान्।

2 3 स रोहितः पितुः खेदं वरुणस्य चेतिकर्तव्यतां

१ All MSS केनिरे। २ C (sec h) ततेति C D read also in the text of the Sutra तात॰। ३ C D अददाद्यत्त्वया instead of ॰यत्त्वया।

आत्मनश्च मरणं दुष्करमालोच्य नेत्युक्त्वा न करिष्यामीत्यभिधाय चापं गृहीत्वा पितुरप्यविधेयो भूत्वा वनं गत्वा स्थितः।

3. स रोहितो धनुष्पाणिः सन्नेकं संवत्सरं यावदरण्ये निर्जने देशे चचार।

4. *अथानन्तर्ये।* रोहितवनगमनानन्तरं इक्ष्वाकुवंश्यं[१] राजानं हरिश्चन्द्रं वरुणो गृहीतवान्।
तस्य हरिश्चन्द्रस्य उदरं जलोदरनामानं व्याधिं कृतवान्।

5. तत्पितुर्वरुणकोपात्क्षिप्यन्तमुदरं रोहितो वनस्थः श्रुतवान्।
स रोहितो ऽरण्याराममागतः।

6. तं रोहितमुपगम्य ब्राह्मणवेषपुरुषरूपेणेन्द्रो वक्ष्यमाण-मुक्तवान्।

---

## १९.

7, 8. हे रोहित नीतिनिपुणानां मितिवाक्यं[२] वयं श्रुतवन्तो यद्*श्रान्तायानलसाय नानाप्रकारा श्रीरस्ति तथा निषद्वरो*[३] *ऽलसो जनः पापो दुःखी।* चरत उद्यमवत इन्द्रो देवराजो मित्रं। तस्मात्[४]।

9. हे रोहित चरैव उद्यममेव कुरु इति ब्राह्मण उवाच।
स रोहितो ब्राह्मणवचस्तथ्यं पथ्यं दुःखान्तकरं मत्वा पुन-श्चरैवेति मां यदयमवोचत्तदवश्यं कर्तव्यं मया। इति कृत्वा

---

१ C ॰कुं। २ C प्रधानामिति वा॰। ३ C ॰द्वरो। ४ C D तस्मात्तं।

द्वितीयं संवत्सरमरण्ये चचार। स रोहितः पितुर्दुःखं मनसि निधाय पुनर्ग्राममेयाय द्वितीयसंवत्सरान्ते।

11. तं रोहितं तथैव पुनरिन्द्र उवाच।

12. 13. भगो भाग्यं पुण्यं संपदिति यावत्। स आसी-नस्योपविष्टस्यास्ते उपविशति न वर्तते[१]। स एव भगस्तिष्ठत ऊर्ध्व-स्थितस्य पुरुषस्योर्ध्वस्तिष्ठति वृद्ध्यभिमुखो भवति। स एव निपद्य-मानस्य पततो ऽधः पतति। स भगश्चरत उद्यमवतश्चराति वर्धते इष्टप्राप्तिं करोति। तस्मात्।

14. उक्तार्थम्।

15. तृतीयमपि संवत्सरमरण्ये[२] बभ्राम॥

पूर्ववद्व्याख्यानम्।

16. कृतव्याख्यानम्।

17 18 19. हे रोहित तस्माच्चरैव। एवशब्दो ऽन्यव्यवच्छे-दार्थः। यतः स्वपन् पुरुषः कलिः पापी भवति। संजिहानो निद्रां परित्यजन् द्वापरो ऽपापो भवति। उत्थित ऊर्ध्वः स्थितः त्रिपाद्धर्मस्त्रेता भवति। चरन् चलन् चतुष्पाद्धर्मः कृतयुगं संपद्यते इति मन्त्रोक्तबोधपूर्वं संबोध्योवाचेन्द्रः।

20. गतार्थम्॥

चतुर्थं संवत्सरं वने चरित्वा तदन्ते पुनररण्याद्ग्राममागाद्रोहितः।

21. वक्ष्यमाणं वाक्यम्।

---

१ C चर्मवे। २ C D वर्ष।

22; p. 191, 1. चरत उपायपूर्वमुद्यमं कुर्वतो जङ्घे पुष्पफलवत्यौ अनन्तरफलकारिण्यौ। चरतः पुंस आत्मा सुखदुःखफलभोक्ता फलेग्रहिर्द्दस्तस्येष्टफलो भूष्णुर्भवनशीलः। अस्य पुरुषस्य चरत[1] उद्यमवतः पाप्मान इष्टफलहन्तारो ऽनिष्टफलदातारः विषादात्मकास्तमोगुणोद्भवा हताः उद्यमेन नाशं नीताः प्रपथे दूरमार्गे श्रमेण ग्लानिना शेरते भयादिव लीयन्ते उद्यमवन्तं न स्पृशन्तीत्यर्थः। तस्मात्।

2. पुनः संबोध्येन्द्रेण वनं प्रहितो रोहितः।

3. ब्राह्मणवाक्यं तच्च पुनःपुनर्मन्त्रवर्णपूर्वं महोदयकारि मन्यमानः पञ्चममपि संवत्सरमरण्ये दुःखान्तमिच्छन् रोहितश्चचार॥ मदर्थं मत्पिता वरुणेन महाव्याधिं घोरमुदरमुत्पाद्य पीड्यते किं मया पुत्रेण जीवतेति ज्ञात्वा स रोहितः पुनर्ग्राममागतः।

4. उक्तार्थम्।

5 6 चरन्नुद्यमं कुर्वन् मधु अमृतं मोक्षं विन्दति। स निश्चयेन योक्तव्यो[2] योगो ऽनिर्विण्णचेतसेति स्मरणात्। यथा पक्वं पच्यते स्म कर्मफलं उदुम्बरं फलकाल एव व्यक्तं भोगरूपं चरन्नुद्यमवान् प्राप्नोति। अनिर्वेदः श्रियो मूलमित्यादेशागमेन संबोध्य सांप्रत प्रत्यक्षेण प्रमाणेन बोधयन्नाह। सूर्यस्येति। हे रोहित पश्य प्रत्यक्षां सूर्यस्य श्रीमत्तां यो न तन्द्रयते चरन्न कदा चनालस्यं करोतीत्यभिप्रायः।

---

१ A om. पुंस to चरतः and has सर्वे instead.　　२ C D यो यक्तव्यो instead of योक्तव्यो।

7 पुनरिन्द्रेण प्रेरितः।

8. पूर्ववत् षष्ठमपि संवत्सरम्।

9. कृतव्याख्यानमेतत्।

10. 11. यतो वनेचरो वने चरन्मधुकरो वा मधु विन्दति न निषण्णः। अपचिन्वन्पक्कफलं विन्दति। य एवावचिनोति[१] वने स एव पक्कफलाख्यं फलं विन्दति। न तु निषण्णो निरुद्यमः। उत्तिष्ठन्विन्दति श्रियम्। उद्यमं कुर्वन् श्रियं लभते। निषण्णस्तु किमपि न लभते। तस्मात्।

12 पुनः प्रेरितः।

13 चरैवेति वै ब्राह्मणो ऽवोचदिति मन्वानः स सप्तमं संवत्सरमरण्ये चचार प्रयतः।

14. स रोहितः सप्तमे संवत्सरे ऽरण्ये बम्भ्रम्यमाणो ऽजीगर्तं सौयवसिमृषिमशनायापरीतं बुभुक्षया परीतं सर्वतो व्याप्तं पुत्रं भक्ष्यमाणं भक्षार्थमुपस्थितमरण्ये[२] उपेयाय उपगम्य दृष्टवान्[३]।

---

## २०.

15 तस्याजीगर्तस्य सौयवसेस्त्रयः पुत्रा वक्ष्यमाणका आसुः। किंनामानः पुनस्त इत्यत आह॥

एते त्रयः।

---

१ A॰ पचिनोति। २ C D॰ ण्यं। ३ C D om. उपगम्य दृष्टवान्।

16. 17 तमजीगर्तं सौयवसिं रोहित उवाच। हे ऋषे। हन्त हन्तेत्ययं निपातः सम्प्रश्ने वर्तते। अहमेषां त्वदीयानां[1] पुत्राणामेकेनात्मानं निष्क्रीणा इति। कं विक्रीणासीत्यर्थः। तुभ्यमहं गवां शतं ददानीत्येवमुवाच रोहितः।

17. स सौयवसिरजीगर्तो ज्येष्ठं पुत्रं पितृणामर्थे निगृह्णान उक्तवान्।

18. नेति प्रतिषेधे। न्वित्यवधारणे। इमं तावज्ज्येष्ठं नाहं विक्रीणामि।

नो इति निषेधार्थः। एवेति निषेधावधारणार्थौ निपातः। कनिष्ठं पुत्रं माता नितरां विक्रेतुं नेच्छति।

19 तौ पितरौ मध्यमे द्वावपि विक्रयमिच्छतः।

20. तस्य क्रयार्थं रोहितः शतं गवां दत्त्वा स रोहितो गृहीत्वा शुनःशेपमरण्याद्ग्राममेयाय पितरं हरिश्चन्द्रमागत्योक्तवान्। तत इति पितुश्चाभिधानम्। हे भगवंस्तत हन्ताहमनेन शुनःशेपेनात्मानं निष्क्रीणा इति।

21. स हरिश्चन्द्रस्तथेत्युक्त्वा वरुणं राजानं सत्कारपूर्वमामन्त्रयां बभूव। अनेनेत्येव मामौपमिकं[2] पशुनानेन त्वा यजा इति।

वरुणस्तथेत्युक्तवान् प्रशस्ततरो ब्राह्मणः क्षत्रियादिति परितोषेणोक्तवान्।

---

1 C D भवदीयानां। 2 A अनेनेत्येवममौपमिक् C अनेनेत्येम मौपमिकं प्रति पशुरामैव in marg. ना M corrupt.

p 192, 1. तस्मै हरिश्चन्द्राय वरुणो राजा एतं राजसूयाख्यं यज्ञक्रतुं प्रोक्तवान्।

2. स हरिश्चन्द्र एतं शुनःशेपं पुरुषं पशुं राजसूये आलब्धवान्। यद्यपि राजसूये पुरुषस्यालम्भो न चोदितस्तथाप्याख्यानकवशादेवं ग्रहीतव्यम्।

---

## २१.

3. तस्य क्रतोर्विश्वामित्रो होता बभूव॥ अयास्य आङ्गिरस उद्गातासीत्॥ जमदग्निर्नामर्षिः सो ऽध्वर्युरासीत्।

4. तदानीं बभूव॥
तस्मै शुनःशेपायोपाकृताय नियोक्तारं न लब्धवन्तः। को हि ब्राह्मणं यूपे नियुञ्ज्यात्।

5. एवं सौयवसिरुक्तवान्।

6 तस्मै अजीगर्ताय यजमाना ऋत्विजो ऽपरमपि शतं नियोजनाय परिकल्पितवन्तः॥
तं शुनःशेपं सो ऽजीगर्तो यूपे नियुयोज।

7. विशस्तात्र हिंसिता[१] ऽभिप्रेतः।

8 अपरेण शतेन तृतीयेन दत्तेन विशसनमप्यहं करिष्यामीति सौयवसिरुवाच।

---

१ A विशंसिता instead of हिंसिता। om च

9. सौयवसये ॥ स गृहीतवृतीयशतो ऽसिं तीक्ष्णं[1] कुर्वन्नुसेयाय ।

10. चित्तेन पर्यालोचितवान् ।

11. अमानुषमिवात्मत्राणासमर्थं छागादिकं पशुं यथा तथा मां विशसिष्यन्ति ऋत्विजो यजमानस्य । हन्त हन्तेति निपातो ऽभिप्रेतकामप्राप्तीच्छाविजिज्ञासायां[2] वर्तते । देवताः प्रजापत्यग्न्यादिका उपधावानि । स्तुतिभिरुपगच्छानीत्येवं शुनःशेप ईर्ता बभूव ।

---

## २२.

12. स शुनःशेपः प्रजापतिमेव प्रथममर्य्यं देवतानां मध्ये श्रेष्ठमुपससार । उपसरणं चात्र भक्तिमाचेष्ट मनसा स्तुतिकरणम् ।

13. प्रजापतिमुपससार ।

नेदिष्ठो ऽत्यन्तसंनिकृष्टः ।

14 पूर्वस्या ऽयमृगनन्तराग्नेरुपसरणाय ॥

अग्निः[3] स्तुत्या सवितुरुपधावनमुपदिष्टवान् ।

16. स सवितारमुपससारानन्तरेण तृचेन । अभि त्वा देव सवितरित्येवमादिकेन ।

17. अहं तावत्तुष्ट एवेत्यभिप्रायः ।

18 स शुनःशेपो वरुणं राजानमुपससारात उत्तराभिरात्मायत्तमेणैकचिंशता ।

---

१ C कुर्वन्नु । २ C D ॰काम. । ३ C D अग्निस्तुत्या ।

19. सुहृदयः कारुणिकः।

20. शुनःशेपो ऽग्निं स्तुतवान् द्वाविंशतिसंख्ययानन्तरया।

21. अग्निः परितुष्टो विश्वान्देवान् स्तोतव्येनोपदिदेश[1]।

22. नमो महद्भ्य इत्येतयर्चा विश्वान्देवां स्तुतवान्। विश्वे देवा स्तुताः परितुष्टा इन्द्रं स्तोतव्येनोपदिष्टवन्तः।

p. 193, 2. इन्द्रं शुनःशेपः स्तुतवान्।

3 तस्मै शुनःशेपायेन्द्रः स्तूयमानो मनसा हिरण्यरथं दत्तवान्। अनेन दत्तवानयं ज्ञायते॥

तं हिरण्यरथं शुनःशेपश्चाश्वदिन्द्रः· पोमुथद्भिर्जिगायेतयर्चा प्रतीयाय प्रतिगृहीतवान्। स्तोतेव देवताहृदये जानाति[2] इति।

4. स्तोतव्याविन्द्र उपदिदेश।

5. स शुनःशेपो ऽश्विनौ स्तुतवानुत्तरेण तृचेन।

6. अश्विनौ द्विवचनेनोत्सृष्याव इत्यूचतुरुषसं स्तुहीति चोपदिष्टवन्तौ॥

स शुनःशेप उषसं तुष्टावात आश्विनात्तृचादुत्तरेण तृचेनैव।

7. तस्येति शुनःशेपस्य प्रतिनिर्देशः। ह स्मेति निपातौ विस्मयार्थः। ऋचिऋचि उक्तायां पाशो मुमुचे। नितरां ऋचिऋचि पाशो विस्रस्त इत्यर्थः॥

ऐक्ष्वाकस्य हरिश्चन्द्रस्योदरं कनीयो बभूव।

8 उत्तमायामृच्युक्तायां पाशो विमोकं गतः॥

---

१ C D स्तौतव्यान् See 22    २ C D जानातीति।

अगदो रोगनिवर्तित ऐक्ष्वाको बभूव।

9. अथानन्तरमेनं शुनःशेपमृत्विज ऊचुः। हे शुनःशेप त्वमेवै-तस्याहः संस्थां जानीहीत्यभिप्रायः।

## २३.

10. आख्यानमेतन्मानुष्येयत्ते द्रष्टव्यम्।

11. तं सोमं यच्चिद्धि त्वं गृहेगृह इत्येताभिश्चतसृभिरुलूखले ऽभिषुत्य।

12. उच्छिष्टं चम्वोर्भरेत्येतयर्चा द्रोणकलशे सोमं समवनिनाय।

13. अथानन्तरं[1] अग्निमन्वारब्धे सोमे एतस्यैव सूक्तस्य याः प्रथमाश्चतस्र ऋचस्ताभिर्जुहवां चकार।

14. अथ हैनं यजमाने अवभृथमभ्यवनिनाय स त्वं नो अग्ने ऽवमो भवोती त्वं नो अग्ने वरुणस्य विद्वानित्येताभ्यामृग्भ्याम्।

15. अथानन्तरमेनं यजमानमग्निमुपस्थापयामास शुनश्चिच्छेपं निदितं सहस्रादित्येतयर्चा।

## २४.

1. अथानन्तरं शुनःशेपो विश्वामित्रस्य होतुरुपस्थमाससा-दाजगाम।

---

१ C D om. ऋत्विज्।

17 तं विश्वामित्रमजीगर्त उवाच ।

18. विश्वामित्रो ऽजीगर्तेन याचितो नेत्युवाच । वै । यतो देवा इमं शुनःशेपं मह्यं दत्तवन्तः ।

18 स शुनःशेपो देवरातो नाम्ना वैश्वामित्रो गोत्रेणासीत् ।

19. तं विश्वामित्रमजीगर्त उवाच । त्वं च अहं च विक्रयामहे(!) । विवदावहे । यस्य वचो ऽयं शुनःशेपो मन्यते तस्यायमित्यस्मिन्नर्थे प्रमाणं स एव भवत्विति ॥

20 तथेत्येवं विश्वामित्र उक्तवान् ।

21 22 अजीगर्त उवाच । आङ्गिरसो जन्मनासि हे शुनःशेप आजीगर्तः । श्रुतो विख्यातः । कविर्मेधावी यतो ऽतः कारणात् स्वपे पैतामहात्तन्तोः पैतामहात्संतानान्मापगाः पुनरेहि मामित्युवाच ।

p 194, 1-3. शुन.शेपो ऽजीगर्तमुवाच । अद्राक्षुस्त्वां शासहस्तं सर्वे जनाः । न यच्छूद्रेष्वलप्सत । शूद्रेष्वपि ब्राह्मणवधकर्म न लब्धवन्तः । गवां त्रीणि शतानि त्वमवृणीथा मद्वधकर्मणि । हे अङ्गिरसोप... ...न[१] ।

4—6 शिष्टसरणमस्ति । पाप कृत्वाभिसंतप्य तस्मात्पापात्प्रमुच्यत इति । तत्ते वदामि हे [२]तात दुश्चरितं मां तपति यत्पापं कर्म मया कृतं तदहं निह्नुवे तुभ्यं । तुभ्यं क्षमापयामि प्रतियन्तु गवां त्रीणि शतानि ।

---

१ A •योपततिमेति स C D •योपगातसेति न M •यो भवथवेमेति । २ A तावद्• ।

7—9 शुनःशेपो ऽसंधेयमित्यवोचदेतदेवमवधार्याजीगर्तं पापमसंधानार्हमित्यभिप्रायः। किं कारणम्। अविश्वसनीयत्वात्। कथमविश्वसनीयता। यः सकृत्पातकं कुर्यात् कुर्यादेनत्पातकं ततो ऽपरं ततो ऽभ्यधिकमित्यर्थः। शौद्रस्यायं न्यायो यदपत्यविक्रयः। ततश्चैतस्मान्न्यायान्नापगाः सकृत्प्रवृत्तो यः किमपरं धनेनेति[१] यजमानाय यजनाय प्रदात्।

10 अयं शुनःशेपो असंधेयमित्यवोचदेवमवधार्याजीगर्तं चोपालभ्य विश्वामित्र उपपपाद शुनःशेपमुपपत्तिभिरात्मीयं चकार।

## २५.

11. 12 भयानक एवासौ सौयवसिः शासेन विशसनं कर्तुमिष्टवान् एतमस्मात्[२] तस्मान्मारणात् एतस्य पुत्रो मा भूर्ममैवोपेहि पुत्रतां सुहृदयस्य।

13—15. शुनःशेप उवाच। हे राजपुत्र विश्वामित्र तव पुत्रतामुपेयामिति।

16—18. विश्वामित्रः शुनःशेपमुवाच। ज्येष्ठो मे त्वं पुत्राणां स्याः। किं चान्यत्। तव श्रेष्ठा प्रजा स्यात् मत्प्रसादादुपेया दैवं मे दायं। मे दायो दैवो विद्यारूपः[३] धनदायो मानुषः। तेनैतेनैव ज्येष्ठत्वेन सुप्रजास्त्वदैवदायोपायनेन निमित्तेन त्वामुपमन्त्रये ऽहमिति *विश्वामित्र उवाच।*

---

१ C (orig.) D किमपरमनेनेति C प in marg (D धन॰)। २ C एतमाख्यात् तस्मान्मारणात् माध रतस्य D एवमस्मात्। तस्मान्मारणान्याय। ३ C D दायं। मे दायो दैवो धनदायो मानुष।

19—21. शुनःशेप उवाच विश्वामित्रं यत्तु लयाभिहित[1] तत्संज्ञानानेषु ब्रूयाः। संजानानेषु भ्रातृष्ववबुध्यमानेषु सौहार्दाय च नः प्रीतये श्रियै च विद्यादायलक्षणायै च[2] यथाहं[3] भरतवंश-प्रधान तव पुत्रतामुपेयामिति।

22 अथानन्तरं शुनःशेपेनोक्तो विश्वामित्रः पुत्रानामन्त्रयितवान्। आमन्त्रणमुच्यते। सत्कारपूर्वकं प्रयोजनेषु व्यापारणम्[4]।

---

## २६.

p 195, 1-2 क आमन्त्रितो। मधुच्छन्दा नाम। तथा ऋषभः। अपरो रेणुः। अन्यो ऽष्टकः। एवमादयो ऽत उच्यन्ते। हे भ्रातरः शृणोतन अस्मै शुनःशेपाय ज्यैष्ठ्याय तिष्ठध्वं ये के च भ्रातरः स्थ ते सर्वे उच्यन्ते।

3 तस्य विश्वामित्रस्य एकाधिकं शतं पुत्रा आसन्।

4 मधुच्छन्दसः सकाशात् पञ्चाशज्जन्मना वृद्धाः पञ्चाशत् कनीयांसो मध्ये मधुच्छन्दा एकपञ्चाशत्तमः॥

तद्विश्वामित्रवाक्यमस्मै ज्यैष्ठ्याय तिष्ठध्वमिति मधुच्छन्दसः सकाशाद्ये वृद्धाः पञ्चाशत्ते कुशलं शोभनं नाङ्गीचक्रुः।

5 तान्पञ्चाशत्संख्याकान् ज्यायसो ऽनुव्याजहार विश्वामित्रः। कथं शशाप। [5]अन्तं वः प्रजा भक्षीष्ट [6]प्रत्यन्तदेशवासिनी युष्माकं प्रजा भविष्यति।

---

१ C D ins च। २ A च। ३ C D भर्त्त। ४ M ०पूर्वंप्रयोजनव्यापारेष
५ A अन्तम्। ६ A प्रत्य०।

6. एतद्देशवासिन एवंनामानो बभूवुरिति।

7. तानेवं नामभिरुदाहरन्ति लोका इतिशब्देनोक्तार्थत्वात् न द्वितीया।

8. ये मधुच्छन्दसः पूर्वा एकपञ्चाशत्संख्याकास्ते विश्वामित्रवचो ऽङ्गीचक्रिरे। एवमुक्तवन्तः।

9—10 स मधुच्छन्दाः पञ्चाशत्कनीयांसो ज्येष्ठं विश्वामित्रं अगौ। यन्नो ऽस्माकं पिता संजानीते तस्मिन्नादेशे वयं तिष्ठामहे। पुरस्ताज्ज्येष्ठं शुनःशेपं कुर्महे त्वामन्वञ्चो वयं स्मेति शुनःशेपं प्रति पितुरादेशादुक्तवन्तः।

11. पुत्रैरादेशे ऽङ्गीकृते तान्पुत्रान् विश्वामित्रः प्रीतस्तुष्टाव।

---

## २७.

12 13 ये पुत्रा मम मानमनुरक्षन्तः प्रजा[१] वर्धयन्तो मां वीरवन्तं पुत्रवन्तं कृतवन्तः ते यूयं प्रजावन्तः पशुमन्तो भविष्यथ मत्प्रसादात्।

14. 15 हे पुत्रा देवरातेन पुरएत्रा पुरोगामिना ज्येष्ठेन सर्वे वीरवन्तो गाथिना राध्याः पूज्याः स्थ। एष वः सत्पूजनो ऽस्ति।

16. 17 हे कुशिका एष देवरातो युष्माकं मध्ये वीरो ज्येष्ठस्तमनुगच्छत युष्मांश्चानुगच्छतो ऽयं च दायमुपेतां विद्यां यामुत वेदसि उपगमसाधुकारी सर्वमेतन्मयास्मै प्रतिपादितमित्यभिप्रायः।

---

१ C D पूर्णा।

18 19. ते वैश्वामित्रा मधुच्छन्दःप्रभृतयः सम्यञ्च एकचित्ता भक्तिप्रवणहृदया देवराताय तस्थिरे। तदनुयायिनः सर्वकार्येषु स्थिता इत्यर्थः। ज्यैष्ठ्ये श्रैष्ठ्ये च गाथिनाः। संज्ञा।

20. 21. रिक्थं दायो वेद इत्येकार्थाः[1]। उभयो रिक्थयोर्देवरातो द्रष्टा स्वपिरधीयते जह्नूनां च मध्ये गाथिना अधितस्थिरे। द्वे विद्यायां[2] वेदे धने वेद इति धननामाच।

22. हरिश्चन्द्रो ह वैधस इत्येवमादिकम्॥

परःशतमितमृचां गाथानां च रचितं[3] पुनर्यस्मिंस्तत्परःशतग्गाथम्। अभ्यधिकशतगर्गाथमित्यर्थः। कियत्परिमाणं पुनस्तत्। अपरिमितं। बहुवृत्तान्तमित्यर्थः।

P. 196, 1. तदाख्यानमभिषिक्ताय राज्ञे होताचष्टे॥

2 कशिपुरासनं हिरण्यस्य कशिपुः हिरण्यकशिपुस्तस्मिन्हिरण्यकशिपौ होतासीन उपविष्ट आचष्टे। हिरण्यकशिपावासीनः प्रतिगृणात्यध्वर्युः प्रतिगरं ददाति॥

ऋक् प्रसिद्धैव। यथार्थवादो न पाद्यवस्था॥ सो ऽन्ते एवमिति तथेत्येवम्।

3. अर्थवादार्थ उपन्यासः।

4. उभयरूपेण प्रतिगरेणेत्यर्थ.।

5 यस्मादाख्यानप्रतिगरेण[4] सर्वस्मादेनसः संप्रमुच्यते तस्माद्यो

---

१ A व्य। २ C D वेद्यायां। ३ C D चरितं। ४ C D यस्मात् प्रतिगरेण।

राजा अविजितो विजयासमर्थो ऽप्ययजमानो राजसूयेन बहिरपि क्रतोराख्यापयेतैवैतच्छौनःशेपमाख्यानं किमस्य भवतीत्यत आह।

6. चनशब्दो ऽप्यर्थे[1]। न ह्यस्मिन्राजनि स्तोकमथेनः परिम्रियते॥

सहस्रं गवामाख्यात्रे दद्यात्। शतं गवां प्रतिगरित्रे दद्यात्॥ हिरण्मयौ कशिपू यथाख्यं दद्यात्।

7. पुत्रकामाः श्रद्दधाना आख्यापयन्ते॥

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारः। तदाचरणं चायुष्यमिति।

इति शाङ्खायनश्रौतसूत्रभाष्ये पञ्चदशो ऽध्यायः समाप्तः॥

---

१ C D om चनशब्दो ऽप्यर्थे।

## अथ षोडशोऽध्यायः ।



इदानीमश्वमेधपुरुषमेधसर्वमेधैकोत्तरा अशीता वक्तव्यास्तत्राश्व-मेधस्य तावदर्थवादेनोपक्रमः ।



१.

१. एवं कामितवान् । तदवाप्तये ।

२. स प्रजापतिरेतं त्रिरात्रं त्रिसुत्यकं[1] । यज्ञक्रतुमिति सूत्यार्थं वचनम् । अपश्यत् दृष्टवान् साध्यसाधनसंबन्धेन विज्ञातवान् । अश्व-मेधाख्यम् ।

३. संभारादिना द्रव्यजातेन ।

४. निर्ज्ञातस्वरूपेण[2] फलसंपत्तिप्रक्रियुक्तेन ।

५. यथाभिलषितं प्राप्तवानित्यभिप्रायः ।

६. प्रजापतिवन्मनुष्ययजमानो ऽपि ।

७. ब्रह्मोद्गातृहोत्रध्वर्युभ्यो महर्त्विग्भ्यश्चतुरः पात्रान् कांस्या-दीन् चतुरश्चाञ्जलीन् । उभयहस्तयोगो ऽञ्जलिः । प्रसृतांश्चतुर एव । प्रसृतिरेकहस्तो ऽङ्गुलिकोशः[3] ।

८. द्वादशप्रकारम् ।

---

१ A °सुत्याकर्मं C °सुत्याकं । २ A D कार्यं । ३ A ऽङ्गुलिकोश ।

९. पाचाञ्जलिप्रसृतैश्चतुष्कैस्त्रिभिर्द्वादशसङ्ख्यया संवत्सरो व्याप्यते।

१०. ब्रह्मौदनदानादनन्तरमध्वर्युर्यजमानाय निष्कं प्रतिमुच्य त्यावध्नाति[१]।

११. सायमाहुतौ नित्यहोमायां हुतायां पश्चाद्गार्हपत्यस्योदक्शिरा यजमानः संविशति वावातया प्रियतमया पत्न्या सह।

१२. वावाताया ऊर्वन्तरे अप्रसंवर्तमानो अक्षुभ्यमानः शयीत।

१३. अनेन वावातासंवेशनेन तपसा इमं स्वस्ति कल्याणं संवत्सरमाप्नवामहा इति प्रार्थना। सावित्र्युत्तरमन्द्रागानपारिप्लवप्रभृतीः संवत्सरमर्धमासमासचैमाख्यथणाख्यानि चैके इति (का० २०. २.७; ३.५) यद्यपि तन्त्रान्तरे पचपञ्चकमाम्नातं तथाप्यत्र वावातासंवेशनं संवत्सरं भवतीत्ययमेव पचः।

१४. तं निष्कं प्रातर्होमे निवृत्ते ददाति।

१५. अथशब्दः आनन्तर्यार्थः। निष्कदानादनन्तरमाग्नेयमष्टाकपालं पुरोलाशं निर्वपति।

१६. मुखतो ऽश्वमेधस्यादितः।

१७. तस्मिन्नेवाहनि अथशब्दात्।

१८. यत्पूष्णे पथिकृते चरुं निर्वपति।

१९. शुक्लकृष्णनीलपीतादीनि सर्वाणि रूपाणि यस्मिन् स सर्वरूपः। तमश्वं जवेन वेगेन संपन्नं संवत्सरायोत्सृजन्ति। संवत्सरब्रह्मचर्यनियमाय वा[२]। सर्वकामिनं स्वेच्छाप्रवृत्तम्। अब्रह्मचर्येच्छां वर्जयित्वा।

---

१ A ins. कण्ठे। २ A om. वा।

२०. शतसंख्याका राजपुत्राः। राजपुत्रा इत्यभिषेकाद्याधिपत्ययुक्तस्य राज्ञः पुत्राः। कवचिनः संनद्धाः। राजन्याः क्षत्रियजातयो निषङ्गिणो बहुतीरिणः[१]। शतसंख्याका एव। सूतग्रामणीनां पुत्रा उपवीतिनः। उपवीतमिति संनाहविशेषः। सूतः प्रतिलोमजो ब्राह्मण्यां क्षत्रियात्। ग्रामणीर्महत्तरः। शतमेवैतदुभाभ्यां[२]। क्षत्तसंग्रहीतॄणां[३] पुत्रा दण्डिनः। क्षत्ता सारथिः संग्रहीता मन्त्री। दण्डिनो दण्डहस्ताः। शतसंख्याका एव। अनावर्तयन्तो ऽश्वं रक्षन्ति। अनेन नियमेन।

२१. अथानन्तरं सवित्रे प्रसवित्रे प्रथमा एकहविष्का इष्टिः। सवित्र आसवित्रे द्वितीया एकहविष्कैव। सवित्रे सत्यप्रसवायेति तृतीयाप्येकहविष्कैव। एतानि हवींषि संवत्सरं भवन्ति।

२२. कथं नाम सविता। यतः प्रसविता महान् स मम इमं यज्ञं प्रसुवे।

२३. आङ्पूर्वः सव आभिमुख्येनाभ्यनुज्ञा।

२४. तस्मात्सवित्रे सत्यप्रसवायेति।

२५. य इमा विश्वा जातान्या देवो यातु सविता सुरत्न इत्येते याज्यानुवाक्ये प्रथमस्य हविषः। विश्वानि देव सवितः स घा नो देवः सविता सहावेति द्वितीयस्य। आ विश्वदेवं सत्पतिं न प्रमिये सवितुर्दैव्यस्य तदिति तृतीयस्य।

२६. संवत्सरमेव पराग्दात्।

---

१ C बहवीरवीरा ; sec. h णो ; M बहतूबराः ; D बहतूवीरा (by alt.), not quite legible. २ C शतमेवैतमाभ्यां, D शतमेवैतदाभ्यां। ३ C (orig.) क्षत्रि sec. h. क्षत्तृ D क्षत्त।

१७. उक्तार्थम्।

१८. अश्वाणुक्त एवार्थवादो दशमे ऽहनि।

१९. अथशब्द आनन्तर्ये वीणानां गणा वीणागणाः। वीणागणैर्गायन्तीति वीणागणगिनः। तानध्वर्युः संप्रेष्यति। पुराणै राजभिः पुण्यकृद्भिः सगरदिलीपादिभिरेनं राजानं संगायत। समानं कृत्वा गायतेत्यभिप्रायः।

---

## २.

१. मनुर्वैवस्वतो राजेत्येवमादिकमाख्यानं पारिप्लवाख्यं प्रथमे ऽहन्याचष्टे।

२. तस्य राज्ञो मनुष्या विशः प्रजास्त इम आसते ऽद्यापि स्वधर्मान्न चलन्ति।

३. पञ्चमहायज्ञानुष्ठानकारिणो गृहमेधिनो गृहस्थाः। ताननुपदिशति।

४. ऋचोवेदः ऋग्वेदः सो ऽयमिति वदन् सूक्तं निगदेत्। सूक्तं किंचिदाचचाण इवानुवदेत्।

५. यमो वैवस्वतो राजेत्याहेति द्वितीय एवाहनि शतपथे दर्शनात्।

६. पूर्वोक्तं ब्रुवन् स्थविरान्वयोऽधिकान् प्रदर्शयति।

७. आश्वमेधिकमेव प्रकरणात्।

८. वरुण आदित्यो राजेत्याह पारिप्लवं तृतीये ऽहनि।

९. शोभनानव्यङ्गान् यूनः प्रदर्शयति।

१०. या ओषधीरित्येतत्सूक्तं केचिदाहुः। तदयुक्तम्। समाख्यानात्[1] भेषजग्रन्थस्याथर्वणिकानाम्।

११. सोमो वैष्णवो राजेति शतपथश्रुतेः। प्रतीकग्रहणान्येतानि।

१२. तस्यैताः सभायामन्यासामप्रवेशात्।

१३. घोरमाथर्वणो ग्रन्थः।

१४. अर्बुदः काद्रवेयो राजेत्याहेति श्रुतेः।

१५. सर्पान्वा प्रदर्शयति सर्पविदो वा जनान्।

१६. सर्पविद्यां गारुडां[2] कद्रूतीयं वा।

१७. कुबेरो वै श्रवणो राजेत्याहेति श्रुतेः।

१८. सेलगायन्याः[3] (?) पापकृतो वा म्लेच्छानुपदिशेत्।

१९. रक्षोविद्या[4] रक्षोहणं सर्वान्वेदानाचष्ट इति वचनात्तस्मात्प्रसिद्धैव [5]कुहकरूपा रक्षोविद्येति।

२०. २१. कुसीदिनो वार्धुषिकप्रयोगजीविनः।

२२. असुरविद्येन्द्रजालादिना तन्निर्देशात्सभायामपि कांचित्कुर्यात् अङ्गुलिन्यासरूपाम्।

२३. मत्स्यः सांमदो राजेति श्रुतेः प्रतीकग्रहणमेतत्।

२४. मत्स्यानुपदिशति जातिसंबन्धेन मत्स्यविदो वा मैनिकान्पाठीनादिविशेषविकल्पान्विदन्ति पताम्बा[6]।

---

१ C ०ख्यानाद्। २ A गारुडी। ३ C सेलगाञ्ज्र सेल यायन्या (ल in marg) D सेलगा सैलगायन्या M शैलगायनो वा cf Comm Sat. Br 13, 4, 3, 9
४ C ins म M विद्या नाम रक्षोहण छन्न। ५ C D कुहक। ६ A पैताम्बा D पैताम्बा।

२५. इतिहासवेदस्य पृथग्भावेन दर्शनात्।

२६. तार्क्ष्यो वैपश्यतो राजेत्याहेति प्रतीकश्रुतेः।

२७. वयांसि पक्षिणो ब्रह्मचारिण उपकुर्वाणका नैष्ठिका वा।

२८. पुराणं वायुप्रोक्तमचाख्येयम्। न तु यो यज्ञो विश्वतस्तन्तुभिस्तत इति सूक्तमस्य वेदैकदेशत्वात्।

२९. धर्म इन्द्रो राजेत्याहेति शतपथे प्रतीकदर्शनात्।

३०. मनुष्यदेवा हि त[1] इत्यभिप्रायेण।

३१. यत्किंचिदनित्यं[2] वाश्वमेधिकं वा प्रकरणात्।

३२. परिप्लवाख्यानेन दशभिरहोभिर्यथानुक्रमणम्।

३३. मनुर्वैवस्वतो राजा यमो वैवस्वतो राजेत्येवमादीनि।

३४. तस्य मनुष्या विशस्तस्य पितरो विश इत्येवमाद्याः। अर्थवादार्थ उपन्यासः।

३५. सर्वं वा अश्वमेध इत्युच्यते। पुण्यमस्मात्परं नास्तीति कृत्वा।

३६. यदेतद्दशभिरहोभिराख्यानजातमुक्तमेतदेकादशाहे पुनरावर्तते एवमेकविंशाहे। अनेन प्रकारेण संवत्सरमाचष्टे। तस्मात्पारिप्लवमाहेतत्पारिप्लवं। तथा च शतपथश्रुतिः। षट्त्रिंशतं दशाहानाचष्ट इति।

---

१ C मुदेवाहित D मनुदेवाहित। २ A ०न्त्य० C ऋनित्यवे M ऋनित्यमेवा।

## ३.

१. एकविंशतिरिति संख्यानियमः। एकविंशत्यरत्नय इति प्रमाणनियमः।

२. अष्टौ यूपा बैल्वा भवन्ति। दश खादिरा भवन्ति।

३. पैतुद्रवौ दैवदारवौ[1]। उपस्थावानौ [2]अग्निष्ठयूपपार्श्ववर्तिनौ।

४. राज्जुदालः श्लेष्मातकः[3] सो ऽग्निष्ठः कार्यः।

५. एकविंशतिसंख्याकां यूपपङ्क्तिं प्रकृत्य तस्मिन्नेकविंशतिमग्नीषोमीयान् पशूनालभन्त इति श्रुतेः।

६. समानप्रचार इत्यभिप्रायः।

७. अथ प्रातर्गौतमस्य चतुरुत्तरस्तोमो भवतीति (१३.५.१.१) श्रुतेः। तिसृणां सुत्यानां प्रथममेतदहर्भवति।

८. तेन गौतमस्य चतुरुत्तरस्तोमेनेमं लोकमाप्नोतीत्यर्थवादः पूर्वस्य विधेः शेषः।

९. एकविंशः स्तोमो यस्य तदिदमेकविंशस्तोमं द्वितीयमहर्भङ्गीश्विणोच्यते।

१०. द्वादश वै मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंश इति। यो ऽयमादित्य एकविंशस्तदेनं स्वेन रूपेणैकविंशतिलक्षणेन समर्धयति।

११. एतस्मादादित्यादश्वो निस्तष्टस्तत्पूर्वमुत्पन्न.[4]।

---

१ A D M दैवदा॰। २ C D M om यूप। ३ C D श्लेषातक।
४ C एतस्मादादित्यो निष्टष्टः। तत्पूर्वमुत्पन्न C (in marg) नि D निष्टष्ट।

१२. अश्वस्तोमीयेयस्त्वगात्मनो दीर्घतमस[1] आर्षं । यमेन दत्तमेनमश्वं त्रिस्थाने चित एनं युनक्ति युक्तं च सन्तमेनम्[2] इन्द्रः प्रथमो अध्यतिष्ठत् अधिष्ठितवान्। गां धारयतीति गन्धर्वः। सो ऽस्य रशनां गृहीतवान्। ईदृशं महाभागमश्वं हे वसवः सूरात् सूर्यात् निरतष्ट यूयं निष्पादितवन्त[3] इत्यर्थः।

१३. प्रजापतिदेवत्या यथोद्दिष्टा अश्वादयः।

१४. स्तृह[4] हिंसायां अनुहिंसना इत्यर्थः।

१५. चातुर्मास्यदेवताभ्य एकविंशतये एकविंशतिसंख्याभ्यः प्रत्येकमेकविंशतिरेकविंशति. पशवो भवन्ति। एवमेकचत्वारिंशानि चत्वारि शतानि। एकविंशतिः चातुर्मास्यदेवताः पितृत्र्यम्बकपुनरुक्तवर्जं वैश्वानरपार्जन्ययोरवभृथदेवताया मित्रस्योत्सर्गदेवतायाश्च वर्जनम्।

१६. अर्थवादो ऽयं पूर्वस्य विधेः[5] प्रबोधनार्थः।

१७. अश्वं विविधैरलंकारैरलंकृतमध्वर्य्वादय आस्तवं वहिष्पवमानस्थानमाप्रापयन्ति।

१८. सुगव्यं नो वाजी स्वश्व्यं पुंस इत्येवमादिकयर्चावघ्रापयन्ति।

१९. अनवजिघ्रत्यास्तवमश्वे सुगव्यं न इति यजमानं वाचयेत्।

---

१ A श्वाम मनो ही M ०श्वान्त्रा० –A श्वार्ष C श्वस्तोमीये इयस्त्विगात्मनो० यार्षं D दीर्घतमसमाष। २ A सतमेन M सतापन। ३ C उत्पादि०। ४ A ६ ] स्तृह (?) D स्तृह। ५ A विधे C M विधिः।

२०. होताभिष्टौतीति वाक्यशेषः। तमेकादशभिर्होता अभिष्टौति। यदक्रन्दः प्रथमं जायमान इति शतपथश्रुतेः।

२१. समिद्धो अञ्जन्कृदरं मतीनामित्येवमादिका आप्रियो ऽस्य भवन्ति।

२२. अध्रिगो शमीध्वमित्येव निर्वचनं परिशिष्य मा नो मित्रो वरुणो अर्यमायुरित्येतत्सूक्तमावपेत्।

२३. उप प्रागाच्छसनं वाज्यर्वा उप प्रागात्परमं यत्सधस्थमित्येते उत्तमे उत्तमस्य सूक्तस्यान्ते चामणुवचावपेत्।

२४. वह्नीणां निगमादावचावपेत्[२]।

२५. अश्वायेति तादर्थ्ये चतुर्थी। वासो वस्त्रम्। अधीवासः कम्बलः। हिरण्यं सुवर्णम्।

२६. घृताभ्युदितमिति दृढीकरणार्थमुक्तम्।

२७. अथानन्तरमश्वं मेध्यं यथार्हमध्यगमालभन्ते[३]।

२८. पञ्चदश [४]पर्यङ्ग्यास्तानालभन्ते। आरण्यांश्च वसन्ताय कपिञ्जलानित्येवमादीन्।

२९. पूषा देवताविशेषः। तस्य पूष्णो ऽश्वललाटे नियोजनं पौरुषेयोपायेन[५]।

३०. अथाश्वमेधे पूष्णः प्रथमो भागः [६]प्राप्नोति।

३१. अथास्य नाभ्यामैन्द्रापौष्णः श्यामवर्ण आलभ्यः।

---

१ A ०नव। २ A निगममावपेत् C निगमस्यादावपेत्, alt to निगमादावचा० D निगमदावुपेत् M निगमवान्। ३ A दक्षमध्य। ४ C पर्यन्त्यास्तान् (in the Sutra पर्यङ्ग्यान्) D (sûtra) पर्यङ्ग्यान् Com. पर्यङ्ग्यास्तान्)। ५ C पौरुषेयेय। ६ A ins. पश्च।

२२. पायो ऽन्नं तस्मिन्नश्वमेधे इन्द्रापूष्णोः प्रियमस्येति।

३३. संज्ञप्तायाश्वाय सोपस्तेषां महिषीमुपनिपातयन्ति।

३४. अश्वं च महिषीं च। महिषी यजमानस्य प्रथमपत्नी। तथैव प्रथमा वित्ता सा महिषीति (६.५.३.१) दर्शनात्।

३५. अश्वं च महिषीं च यजमानो ऽभिमेथति।

३६. अभिमेथनमश्लीलभाषणेन मर्मयुक्तः परीहासः। आक्रोशो वा। हे अश्व सक्थ्योरूर्वोर्जङ्घयोर्वा[1] भद्रमस्या गुदमवधेहि उपरि स्थापयेत्यर्थः। अर्वाञ्चमभिमुखाञ्चितम्। अञ्जिं प्रजननं शिश्नं[2] आभराभिमुखेनानयोः ऊर्वोः[3]। यः कीदृशः स्त्रीणां जीवभोजनः। यमुपभुञ्जत्यः स्त्रियो जीवन्ति।

३७. तं यजमानं न कश्चन प्रत्यभिमेथति। न यजमानं प्रतिप्रतिः कश्चिद्वदिति[4] (१३. ५. २. ३) शतपथे।

---

४.

१. एनां महिषीं होताभिमेथति। अनयाभिमेथिन्या[5] आक्रोशतीत्यर्थः। हे महिषि माता च पिता च ते वृक्षस्य वृक्षविकारस्य मञ्चकस्याग्रे उपरि क्रीलतो विहरतः। प्र तिलामीति ते पिता। तिल स्नेहने। प्रस्नेहयाम्येनामिति मन्यमानस्त्वदीयः पिता गर्भे वर्ण-

---

१ C D M om. ऊर्वो and वा। २ C D M om. शिश्नं। ३ C D M om. :। ४ A न य० प्रति कश्चनावदिति C यजमान प्रतिप्रति D ०यजमानं ०। ५ C D ०मेथन्याह महिषी।

विपर्ययं कृत्वा भग इत्यर्थः। किं भगे मुष्टिमतंसयत् मुष्टिरङ्गुलिसंनिवेशस्तं गभोपरि[1] चिपयतीत्यभिप्रायः[2]।

२. ब्रह्मा वावातामभिमेथति। ऊर्ध्वामेनामुच्छ्रयतात्। लोण्मध्यमपुरुषस्यैकवचनं। उच्छ्रयतादित्यनाशिष्यपि च्छान्दसत्वात्[3]। गिरौ भारं हरन्निव यथा गिरौ भारमारोपयन् ऊर्ध्वमुच्छ्रयति। एवमेनामुच्छ्रयतात्। अथास्या एवमवस्थायै मध्यं कायस्य[4] गुह्यमेजति चलति शीते वाते पुनन्निवेति पुंस्प्रजननमुच्यते।

३. यदस्या अंहुभेद्या इत्यनया आहनस्ययोद्गाता[5] परिवृक्तामभिमेथति।

४. पालागली नाम पत्नी। तामध्वर्युरभिमेथति। यद्धरिण इत्येवमादिकया। परकीयं यवं हरिणः शूद्र्ये[6] भक्षयति। तत्पुष्टमात्मानं न बहु मन्यते। भूयो ऽपि तदश्नाति। एवं शूद्रा भवत्यर्यजारा। अर्यं जरयतीति अर्यजारा। न तस्मै पोषाय[8] धनायति तदेव कामयत इत्यर्थः।

५. अश्वपालानां राजपुत्रादीनां प्रत्येकं शतसंख्याका अनुचर्यस्ता एता क्षत्तिजः प्रत्यभिमेथन्ति।

६. राजपुत्र्यो महिष्या अनुचर्यो होतारं प्रत्यभिमेथन्ति। यियस्युत इव ते मन इत्यादिकया। क्वचिदुहितरो वावातानुचर्यो ब्रह्माणं प्रत्यभिमेथन्ति[9] ऊर्ध्वमेनमुच्छ्रयताद्गिरौ भारं हरन्निवेत्येव-

१ A गभीपरि C D M भगुज। २ A चप॰। ३ C चनाशिष्यप्यपि इत्यावशत्वात् D चनादिष्यपीत्यावमत्वात्। ४ C मध्यकायगु॰ प्रजनगु॰ D कायस्य ॰पुंप्रजननेन। ५ C प्रहस्यनयोद्गाता D प्रहसनया। ६ C सूर्ये। ७ C लन्य। ८ C M पोषाय धना (M धनं) कामयत इ॰। ९ C D om. from यियस्युत to ऊर्ध्वं।

मादिकया। अथास्य मध्यमेजत्विति च विकारः। सूतग्रामण्यः परिवृक्ताया अनुचर्य[1] उद्गातारं प्रत्यभिमेथन्ति यद्देवासो ललामगु-मित्येवमादिकया। चत्वारंग्रहीतॄणां दुहितरो पालागल्या अनुचर्या ऽध्वर्युं प्रत्यभिमेथन्ति यद्धरिणो यवमत्तीत्येवमादिकया शूद्रो यदर्यजाया[:]पतिरित्यस्या[2] विकारः।

७. सदस्युपविष्टा ब्रह्मोद्यं वदन्ति[3]। वक्ष्यमाणमनया संज्ञयोच्यते। होताध्वर्युं पृच्छति किं स्वित्सूर्यसममिति। द्वितीयया प्रत्याहाध्वर्युः ब्रह्म सूर्यसममिति। तृतीयया पृच्छत्यध्वर्युः कः स्विदेकाकीति। चतुर्थ्या प्रत्याह होता सूर्य एकाकीति।

---

## ५.

१. प्रश्नचतुष्टयमस्याम्।

२. यथासंख्यं प्रतिवचनानि।

३. अस्यामपि प्रश्नचतुष्टयमेव।

४. यथासंख्यं प्रतिवचनानि।

५. पूर्ववत्[4]।

---

१ C D om. परिवृक्ताया अनुचर्यं। २ M यदर्यायापति। ३ A ins ब्रह्मा-ध्वतिभिश्चरित्वे इति छान्दोग्ये सद प्रपद्य ब्रह्माध्वतिभिश्चरित्वा ब्रह्मोद्यं वदन्तीत्याश्वला-यने। A वक्ष्यमाणैर्मन्त्रैः प्रश्नोत्तररूपेण यद्वदनं तदेवं। ४ C om.

## ६.

१. प्रश्नद्वयं ब्रह्मोद्गातारं पृच्छति।

२. इति प्रतिवचनद्वयम्। अथोद्गाता ब्रह्माणं पृच्छति।

३. ब्रह्मा पृष्ट उद्गात्रोत्तरया प्रत्याह।

४. प्रतिवचनम्[१]।

५. पृच्छामि त्वा परमन्तं पृथिव्या इत्येवमादिकया यजमान-ऋत्विजः पृच्छन्ति।

६. इयं वेदिरित्येवमादिकया।

---

## ७.

१. सुभूः स्वयंभूरित्येवमादिका महिम्नः ग्रहस्य[२] पुरोनुवाक्या।

२. होता यक्षत्प्रजापतिमित्येवमादिकः प्रैषो भवति।

३. प्रजापते न त्वदेतान्यन्य इत्येषा याज्या भवति।

४. अश्वमेधं कुर्वन्प्रीणातीत्येवं मन्यमानाः।

५. वपया चरित्वा तदन्वन्या वपा जुहुयुरिति केचित्।

६. वपया चरित्वा तदन्वन्या वपा इति वा।

७. इन्द्रोतो नाम शौनकः। स एवमाह। किमुत त्वरेरन्किं पुनः कारणं प्रवृत्तास्त्वरां कुर्युः न त्वरमाणो विधिर्युक्त[३]।

८. पृथक् पृथग्देवताभिर्वपाभिः। पृथक्पृथगेव प्रचरेयुरित्यभिप्रायः।

---

१ C om. २ C D M om. ग्रहस्य। ३ A त्वरमाणो विधिर्यु॰ C ॰त्वरा मूल मूयमाणो वि॰ D त्वरां मूलत्वर॰ I propose to read त्वरमाणविधि॰।

९. याः समानदेवता वपास्ताभिः सह तन्त्रेण प्रयोग इत्यर्थः। अव्यवस्ताभिरव्यवहिताभिः॥

१०. समानदेवताभिरूपाभिरपि व्यवहिताभिर्नानैवेति[1] सूत्रारम्भः।

११. याया देवता तां तां यथानुपूर्व्येण।

१२. यादृशः पूर्वो महिमा तादृशो ऽयमप्युत्तरः संप्रैष एव। अस्योत्तरस्य याज्यानुवाक्ये विपर्यस्येदिति एतावान्विकारः।

१३. उभे इति वचनात्त्वशब्दाच्च पक्षे पूर्वं पाङ्क्तमुत्तरमैकाहिकम्। तथा च शतपथश्रुतिः। अग्निं तं मन्ये यो वसुरिति होता पाङ्क्तमाज्यंशस्त्वैकाहिकमुपसंशंसतीति (१३.५.१.८) समानेनाहावेनोप संशंसनम्[2]।

१४. ऐकाहिकपाङ्क्तयोराज्ययोरन्यत्र श्रुतस्य फलार्थवादस्याग्निवचनादर्थवादार्थम्[3]।

१५. ऐकाहिको माधुच्छन्दसो बार्हतः पाङ्क्तमाङ्क्तिक उभाविति वचनात्। [4]द्विश्चकारकारणात्पक्षे पूर्वो बार्हतः प्रउगः। तथा च शतपथे। बार्हतं च प्रउगं माधुच्छन्दसं च तृचग् उभे संशंसतीति (१३.५.१.८)।

१६. पूर्ववदुक्तार्थमेतत्।

---

१ C D om from ह्यपि to एव। २ C D om. उपम। ३ C ॰त्रिवचनाद D ॰त्रिनचनवादार्थ A ॰त्रिवचनवादा॰। ४ A द्विकाधकार इति करणात् पक्षे C M om. पूर्वो।

८.

१. तदुक्तं महानाम्न्यः स्तोत्रियो यथा तिस्रो ऽनुष्टुभस्तथैकै-केत्येवमादिना ग्रन्थेन (१०.६.१०)।

२. सर्वे वै कामा महानाम्नीष्वित्यर्थवाददर्शनात्।

३. सर्वेषां फलानां साधनत्वात्।

४. मानुरूपाः सप्रगाथाः शंसतीति श्रुत्यन्तरात्।

५. इन्द्रो मदाय मेदं ब्रह्मेति तत ऐकाहिकम्[1]। तस्मिन्न-वित् मरुत्वतीये। निष्केवल्ये ऽप्येवमेव।

६. अर्थवादो ऽप्यैकाहिकयोः [2]क्रमस्तुत्यर्थः।

७. वाशब्दः पूर्वेण सह विकल्पार्थः। मध्यन्दिनशब्दो निष्के-वल्यमरुत्वतीययोर्वाचकः।

८. गायत्र्यादिच्छन्दसो[3] गायत्र्युष्णिगनुष्टुब्बृहत्यौ पङ्क्तिश्च त्रि-ष्टुब्जगत्यौ इत्यनेन क्रमेणैकैकशश्चत्वारिंशतंचत्वारिंशतं मरुत्वतीये शंसेत्।

९. नित्या अपि गण्याः सूक्तारम्भात्। नित्या मरुत्वतीये पञ्च-दश। मरुत्वन्तं हवामह इति तिस्रः। वयमिन्द्र त्वायवो हविष्मन्त इति षट्। इयं त इन्द्र अनुष्टुभिरि चतस्रः। इमं नु मायिनं हुव इति द्वादशैता गायत्र्यः। य इन्द्र सोमपातम इति चयस्त्रिंशत्। इन्द्र त्वमवितेदसीति तिस्रः। नित्याभिः सह एताश्चत्वारिंश-दुष्णिहः[4]। पूषण्वते मरुत्वत इति द्वे। किं न इन्द्र जिघांससीति

१ A इन्द्रा दिमो मरुत्वी इन्द्र चर्षणे इति तत। २ A M क्रम। ३ C आद्य दुष्णिहदासनु०। ४ C in marg चत्वारिंशत् प्रतिपदादिभिः महाव्रतपास्ताम...।

तिस्रः। आ नस्ते गन्तु मत्सर इति तृतीयामुद्धृत्य तिस्रः। मक्षि न इति प्रथमा चतुर्थी पञ्चमी च। *अर्वाञ्चो न आ गहीत्यष्टौ।* य इमे रोदसी उभे पाईँ नाम। क ईमं दशभिर्मम। एतद्वेदुत वीर्यं। यस्ते मदो वरेण्य य इति वशस्यार्धम्[१]। यत्पाञ्चजन्यया विशा। सोम इद्धः सुतो अस्तु। कुविच्छकदिति चतस्रः। प्र नूनं धावता पृथगिति तिस्रः। प्रेतो मुञ्चामि नामुतः। इमां त्वमिन्द्र मीढ्वः। प्रेता जयता नरः। आ यस्मिन्सप्त कन्यजा[२]। यद्ध प्राचीरजगन्त[३]। येनेन्द्रो हविषा कृत्वी। यदिन्द्र ब्रह्मणस्पते। अहमस्मि सहमानेति द्वे। ध्रुवं ध्रुवेण हविषा। येनेन्द्रो हविषा कृत्वीत्यनुष्टुभश्चत्वारिंशत्।

त्वमङ्ग प्र शंसिषः। बलं धेहि तनूषु नः। यः सत्राहा विचर्षणिः। युजानो हरिता रथे। वशाँ इन्द्रासि मे पितुरिति चयोविंशतिः पिबा त्वस्येत्युद्धृत्य। विश्वे त इन्द्र वीर्यमिति चतस्रः। प्र वो मह्ने मतयो यन्तु विष्णव इति चतस्रः[४]। तवेदिन्द्राहमाशसेति। इदिन्द्रायेयि प्रथमा तृतीया च पञ्चमी च। इति चत्वारिंशद्बृहत्यः।

इत्था हि सोम इन्मदे यदुदञ्चो वृषाकपे द्वितीयस्यामुद्धृत्य पङ्क्तयश्चत्वारिंशत्।

शनिष्ठा उग्र इति निविद्धानम्। इन्द्र सोमं सोमपत इति द्वादशीं परिहाप्य। तिष्ठा हरी रथ आ युज्यमानेत्येताश्चत्वारिंशत्त्रिष्टुभः।

---

१ C दशस्याचर्ध D दशस्यार्धे। २ A C कर्तव्यम् D om। ३ M द्वे। ४ C om.

त्वं सु मेषं महया स्वर्विदमिति चयोदशीं चोत्तमां चोद्धृत्य। प्र मन्दिने पितुमदर्चता वच इति चतस्रः। षष्ठीसप्तम्यौ च। उत स्य न इन्द्रो विश्वचर्षणिः। तुभ्यं हिन्वान इत्येका। आ इद्राश इन्द्रवन्तः सजोषस इत्येका। प्र सु ग्मन्तेति चतस्रः। मह्यं त्वष्टा वज्रमतक्षदायसं कष्टचरः कष्टमुद्धातन तमस्य द्यावापृथिवी सचेतसेति नवेति मरुत्वतीयम्।

१०. विंशत्यधिकानि सप्तशतानि निष्केवल्ये शंसेत्। छन्दसश्छन्दसस्त्र्यधिकंत्र्यधिकं[1] शतं द्व्यधिकमानुष्टुभम्। सह नित्याभिर्मरुत्वतीयवत्। चतुर्दशानुष्टुभो महानाम्न्यः[2]। एकां च पङ्क्तिमनुपुरीषम्[3].... एव केवलेति च व्यपदेशात्। शाक्वरं प्रगाथं शस्त्वाह्वय सुरूपकृत्नुमिति सूक्ते। इन्द्रमिद्गाथिन इति च चीणि। अथा ते अन्तमानाम्। पुरूतमं पुरूणाम्। य एक इद्धव्यश्चर्षणीनामित्युद्धृत्य वार्चघ्नाय शवस इति दश। इन्द्र क्रतुं नेति चीणि। अषानो नु शतक्रतुरिति नव। गिरा च इन्द्रेत्यधिका। बृहती चेदनुरूपाभ्यां। य एक इद्विदयत इति तिस्रः। आ याह्यद्रिभिरिति तिस्रः। यस्य त्यच्छम्बरं मद इति चतस्रः। यूयं हि ष्ठा सुदानव इति भारद्वाजी अनुष्टुभेति (?) पञ्चविंशतिः।

इमा अस्य प्रतूर्तय इति षड्। तम्वभि प्र गायतेति दशमीमुद्धृत्य। वयमु त्वा तदिदर्थाः। आ याहीम इन्दवः। मौदन्तस्ते

---

१ A ०धिकमानुभां सह—तीयवत्तुर्दं०। २ C ०म्न्यः। ३ A पङ्क्तिमनुपुरीषमनु पः, ऋन्दः, एव केवलेति. C एका, च पङ्क्तिमनुमनुत्रिपरीममनुष्ठा, तृष्टो, अत्र D एका, च पङ्क्तिमनुपुरीषमतिशानुषो ऋच एव। See कौ० ब्रा० २९ २

वयो यथा। नूनं त इदिन्द्र ते वयम्। यो न इदमिदं पुरा। त्वया ह स्विद्युजा वयम्। अभ्रातृव्यो अना त्वम्। मा ते अमाजुरो यथा। सखाय आ शिषामहीति तिस्रः। न ते सव्यं न दक्षिण-मिति नव। नह्यङ्ग पुरा चनेति द्वे। एतो न्विन्द्रं स्तवाम सखायः स्तोम्यं नरमिति पञ्च। तदिन्द्राव आ भरेति तिस्रः। दधानो गोमदश्ववत्। सखायः क्रतुमिच्छतः। कर्णगृह्या मघवा शौरदेव्यः। इन्द्राय सामेति चतुर्थीमुद्धृत्य। सचायोरिन्द्र इति षट् चतुर्थीमुद्धृत्येत्युष्णिहः।

गायन्ति त्वा गायत्रिण इति द्वे सूक्ते तृतीयामुद्धृत्य। उत स्म ते वनस्पते अधावि सोम इन्द्र त इति पञ्चमी द्वितीयामुद्धृत्य। यस्ते साधिष्ठो ऽवस इति द्वितीयामुद्धृत्य। उरोष्ट इन्द्र राधस इति सप्तमी तृतीयामुद्धृत्य। एन्द्र याहि हरिभिरिति त्रयोदश तृतीया-पञ्चम्यावुद्धृत्य। स प्रत्नथा कविवृध इति द्वे। तं त्वा यज्ञेभिरीमह इति। प्रप्र वस्त्रिष्टुभमिषमित्येका। उदप्रुतस्य विष्टपं। अव स्वराति गर्गर इति द्वे। यो व्यतींरफाणयदिति तिस्रः। यन्नायथा अपूर्व्येति द्वे। आ त्वा गिरो रथीरिवेति सप्तमीमुद्धृत्य। त्वं त्या चिदात-स्याश्वागाः त्व न इन्द्र शूर शूरैः। ग्रास इत्या। उत्तिष्ठतेत्येका। अयं ते अस्त्विति सूक्ते। अस्मा इति गायत्री चेदनुरूपाभ्यां। त्वामिद्धि हवामह इत्येका। इन्द्र त्रिधातु शरणं। अध स्मा नो वृधे भव। यदिन्द्र सर्गे अर्वतः। मो षु त्वा वाघतश्चनेत्येका। इम इन्द्राय सुन्विरे। स वीरो अप्रतिष्कुतः। उदिन्न्वस्य रिच्यते। त्वेदिन्द्रावमं वसु। यदिन्द्र यावतस्त्वं तरणिरित्सिषासति। अभि

त्वा शूर नोनुम । अभी षतस्तदा भर। इन्द्र क्रतुं न आ भर। मा चिदन्यद्वि शंसतेत्येका। यच्चिद्धि त्वा जना इमे। पिबा सुतस्य रसिन इत्येका। इमा उ त्वा पुरूवसो। इन्द्रमिद्देवतातये। अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरिति। तत्त्वा यामि सुवीर्यम्। शग्धी न इन्द्र यत्त्वा। उदु त्ये मधुमत्तमा। एयुन्ना हि वृत्रहन्तम। निरिन्द्र बृहतीभ्य। यदिन्द्र प्रागपागुदगित्येका। यथा गौरो अपा कृतम्। प्र चक्रे सहसा सह। अश्वी रथी सुरूप इत्। अध्वर्यो द्रावया त्वम्। स्थेष्ठायाध्वर्यव। वयं घ त्वा सुतावन्त इति पञ्चदश। तस्मिन्हि सन्त्यूतय। अभि प्र व सुराधसमित्येका। प्र सु श्रुतं सुराधसमित्येका। उभयं शृणवच्च न इत्येका। आ वृषस्व पुरूवसो। शग्धू षु शचीपते। त्वं ह्येहि चेरवे। अविप्रो वा यदविधत्। न पापासो मनामहे। यत इन्द्र भयामहे। इन्द्र स्तुत वृत्रहा। अश्वाश्वा श्व श्व। वयमेनमिदा ह्य। वयं घा ते त्वे इदु। न घेमित्या नमस्विन प्रथमेव। नकिष्ट कर्मणा नशद्यश्चकार। यद्द्याव इन्द्र ते शतं। विश्वेत्ता विष्णुराभरत्। तं वो दस्ममृतीषहम्। आ नो विश्वासु हव्य इत्येतयोरयुग्मयो। इन्द्रे भुज शशमानास आशतेति च। समी रेभासो अस्वरन्निति द्वे। त्वामिदा ह्यो नर इत्येतस्या अयुग्माया[1]। स मा तपन्त्यभित इति कवषस्यार्षां। प्र ते रथं मिथूकृतमित्येका। अन्तर्धच्छ जिघांसत। त्वं विश्वस्य जगत। यच्चिद्धि सत्य सोमपा इति द्वितीयामुद्धृत्य। इन्द्रो मदायेति

१ A इतस्यायुग्मया M ०तस्यायुग्माया C D ०नस्यायुग्माया।

चतुर्दश। स्वादोरित्था विषूवत इति तिस्रः। मा ते राधांसि मा त ऊतयो वसो। अस्माकमिन्द्रेहि नः। असा इत्काव्य वचः। वि पिप्रोरहिमायस्य दृल्हाः। स त्वं नश्चित्र वज्रहस्त धृष्णुया। बाधसे जनान्वृषभेव मन्युना। त्वामुग्रमवसे चर्षणीसहम्। ये गव्यता मनसा शत्रुमादभुः। सिन्धोरिव। इमे हि ते ब्रह्मकृतः सुते सचा। मा स्रेधत सोमिनो दक्षता महे। मन्त्रमखर्वं सुधितं सुपेशसम्। त्वं विश्वस्य धनदा असि श्रुतः। शिक्षेयमिन्महयते दिवेदिवे। न दुष्टुती मर्त्यो विन्दते वसु। न त्वावाँ अन्यो दिव्यो न पार्थिवो। मा नो अज्ञाता वृजना दुराध्यः। वि तर्तूर्यन्ते मघवन्विपश्चितः। भूयाम ते सुमतौ वाजिनो वयम्। अयं सहस्रमृषिभिः सहस्कृतः। इन्द्रो मह्ना रोदसी पप्रथच्छवः। अभ्येदिन्द्रो वावृधे वृष्ण्यं शवः। येना समुद्रमसृजो महीरपः। शग्धी नो अस्य यद्ध पौरमाविथ। कण्वा इव भृगवः सूर्या इव। इमे हि ते कारवो वावशुर्धिया। निरग्नयो रुरुचुर्निरु सूर्यः। यद्वा रुमे रुशमे श्यावके कृपे। मन्दन्तु त्वा मघवन्निन्द्रेन्दवः। सहस्रेणेव सचते यवीयुधा। सध्यामनु स्फिग्यं वावसे वृषा। क्रत्वा न तृष्यन्नवपानमा गहि। स्वयं चित्स मन्यते दाशुरिर्जनः। उप ब्रह्म वावाता वृषणा हरी। वृदाकुमानुर्यशतो गवेषणः। उप त्वा कर्मन्नूतये स नो युवा। अच्छा च त्वैना नमसा वदामसि। विद्मा सखित्वमुत शूर भोज्यम्। हर्यश्वं सत्पतिं चर्षणी-सहम्। जयेम कारे पुरुहूत कारिणः। नकी रेवन्तं सख्याय विन्दसे। मा ते गोदत्र निरराम राधसः। य ऋष्वः श्रावयत्सखा। तं हि स्वराजं वृषभं तमोजसे। अप्रामिसत्य मघवन्तथेदसत्।

पीवो अन्नं पुरुहूतमावसि। उपवाकस्यैतस्य पुरंदरः। उग्रं युयुज्म पृतनासु सासहिम्। त्वं हि राधसस्पते राधसो महः। प्रमङ्गी शूरो मघवा तुवीमघः। अयुजो असमो नृभिरिति पञ्च। उज्जातमिन्द्र ते शव इति तिस्रः। निखातं चिद्यः पुरुसंभृतं वसु। यद्वा सोमेषु पुरुहूत वज्रिवः। इन्द्रश्चिदस्य वारण उरामथिः। पूर्वीश्चिद्धि त्वे तुविकूर्मिन्नाशस। त्वं नो अस्या अमतेरुत क्षुध। आ तू सुशिप्र दम्पते। इन्द्रं तं शुम्भ पुरुहन्मन्नवसे। अषाळ्हमुग्रं पृतनासु सासहिम्। आ पप्राथ। तं वो दस्ममृतीषहम्। आ नो विश्वासु हव्य इत्यन-योर्युग्मा। कन्या वारवायतीति द्वे। मन्ये त्वा यज्ञियं यज्ञियानाम्[१]। इन्द्र सोममिमं पिब। एवा तदिन्द्र इन्दुना। मन्ये त्वा यज्ञियं यज्ञियानाम्। इन्द्रस्य नु वीर्याणि प्र वोचमिति निविद्धानम्। एतायामेति त्रयोदश। तत्त इन्द्रियं परमं पराचैरित्यष्टौ। यो जात एव प्रथमो मनस्वानिति पञ्चमीमुद्धृत्य नवमीं च। अध्वर्यवो भरतेन्द्राय सोममिति पञ्च उत्तमामुद्धृत्य। प्र घा न्वस्य महतो महानि। आ सत्यो यातु मघवाँ ऋजीषी। इन्द्रं कामा वसूयन्तो अग्मन् अनुष्टुभ[२] इत्युद्धृत्य। आ न इन्द्रो हरिभिरित्यष्टौ। अभि त्यं मेषमिति त्रयोदश। शचीव इन्द्रेति सप्त। मा नो अस्मिन्मघवन्निति पञ्च। अव स्रेदा इति त्रीणि। अच्छावतीं पञ्च। इमां ते धियमिति दश। प्र वः सतां ज्येष्ठतमायेत्यष्टौ। तदस्मै नव्यमिति षट्। विश्वजित इति पञ्च। अजातशत्रुमिति सप्त।

---

१ M has मन्यो शीलचविवाणां instead २ C om

अस्मिन् इन्द्र वृक्तुतौ यजस्वतीति । प्र ते महे विदथे शंसिषं हरी इति।

११. मह महत्वतीयेन ।

१२. परिपूर्णत्वात् ।

१३. परिपूर्णकामत्वात्[1] ।

१४. सहस्रेण सर्वेण सर्वमश्वमेधम् ।

१५. पञ्चमे ऽहनि भवानि पाञ्चमाह्निकानि सामूह्निकानि परिगृह्यन्ते । आज्यप्रउगमाहचर्यात् । न स्वस्तिनोमिमीतीयं पूर्वाणीति वचनात् ।

१६. अर्थवादो ऽयमेकाह्निकानां निविद्धानानां प्रशंसार्थः ।

१७. उक्थ्यसंस्थमेतदहः समाप्यते ।

१८. अर्थवादो ऽयमुक्थ्यसंस्थस्य अग्निष्टोमादुच्छ्रितत्वसामान्येन।

१९. अश्वमेधस्य त्रिरात्रस्य तृतीयमहः। सर्वस्तोमो ऽतिरात्रो भवति ।

२०. अर्थवादो ऽयम् ।

२१. एवं सामान्यम् ।

२२. प्रार्थना ।

२३. अर्थवादो ऽयमतिरात्रसंस्थस्याश्वमेधस्य ।

२४. *आभिप्लविकाद्द्वितीयादह्नः शस्त्रं कर्तव्यम् ।*

२५. पुराकल्पो ऽर्थवादः परकृतिरूपं वा[2] ।

---

१ C संपूर्ण॰ । २ D पराकृतिरूपं वा च ।

१६ तदेतदिन्द्रोतायाजनां[1] (?) प्रति एषा यज्ञगाथा प्रचिह्नैव शब्दयते[2]। उतान्यापि।

---

## ८

१ आसन्दीवत्यधिष्ठाने देशे वा। धान्य भक्षमाणमश्व रुक्मवन्त हरितस्रज सर्वालकारालङ्कृत देवेभ्यो जनमेजय आलम्भवान् इति यज्ञगाथा यज्ञस्तुति। यज्ञप्रयोगाद्राजस्तुति।

२ एते एव द्वे यथोक्ते अहनी। तृतीय ज्योति सञ्ज्ञको ऽतिरात्रस्तेन उग्रसेन शौनको याजया चकार।

३ पूर्वोक्ते द्वे अहनी। तृतीय गोसञ्ज्ञकमहस्तेन भीमसेन याजया चकार शौनक।

४ एते एव पूर्वे अहनी। आयु सञ्ज्ञो ऽतिरात्रस्तृतीयम्। तेन श्रुतसेन याजयां चकार इन्द्रोत शौनक।

५ उग्रसेनादय।

६ वक्ष्यमाणिका।

७ पारिक्षिता परोवरम्। पुत्रपौत्रादिभिरश्वमेधयाजिभि पुण्या पापकमपुण्यकर्म तत्यजु[3] प्रायश्चित्तार्थम्। तेनाश्वमेधयाजिनो भवन्ति[4]।

---

१ A इन्द्रतायाजनां प्रति M इन्द्रो वाज्यानां C इन्द्रोवाज्यानां D तदेतदिन्द्रो नां।
२ D षिष्ठ्यते C शष्यते। ३ A C पुण्यकर्म instead of अपुण्य॰ D पुण्या पापकर्म तत्यजु M पुण्य पुण्यकम। ४ C om भवन्ति।

८. उक्ते एव पूर्वे अहनी। अभिजिदतिरात्रस्तृतीयः। तेनेष्ट्वा वानृषभो याज्ञतुरः।

९. उतैषाप्यन्या।

१०. ऋषभाख्ये राजनि पुरा याज्ञतुरे ऽश्वमेधेन यजति सति तत्र इन्द्रः सोमेनासीत्। ब्राह्मणाश्चाभिलषितैर्धनैः।

११. एते एव पूर्वे अहनी। तृतीयो विश्वजिदतिरात्रः। तेन ह वैदेहः पर आह्लार ईजे।

१२. अपिषा अप्यन्या शाखान्तरात्।

१३. आह्लारो धनस्य पूर्णा अश्वमेधे दिशो दत्तवान्।

१४. गोतमस्य चतुरुत्तरस्तोम इत्येवमादिके पूर्वे अहनी उक्ते एव। महाव्रतमतिरात्रस्तृतीयम्। तेन तादृशेनाश्वमेधेन मरुत्तो नामाविचित ईजे।

१५. स सर्वस्यार्थस्य[1] स्तुत्यर्थः।

१६. इयं विभूतिरश्वमेधयाजिनो मरुत्तस्यासीत्।

१७. विशिष्टस्य श्रद्दधानस्य कर्मोपासकस्य फलार्थवादो ऽयम्।

१८. दानेन दिक्सम्बन्धो ऽस्य क्रियते। विजयमध्यात् दिग्विभागाः[2]।

१९. दिग्ग्रहणमनुवर्तते।

२०. दिग्भवति।

---

१ A D om. स C श्रुत्यर्थे। २ A मध्यात् विजयदिग्विभागाः C D (?) M विजयमेध्या दिग्विभागाः cf 24।

२१. षष्ठीनिर्देशादन्यत्रापि दिक्संबन्धः।

२२. भूमिपुरुषब्राह्मणस्ववर्जं दिग्दानमिति तन्त्रान्तरे।

२३. तदेव होत्रका अन्वाभक्ता इति (१३.५.४.२४) शतपथश्रुतेः।

२४. विजयमध्ये। तुशब्दः समविभागार्थः[१]।

२५. विशाखो विविधशाखो यूपस्तत्र पञ्च पशव उक्ता आग्नेयाः। आध्वर्यवविहिता देवता इह स्वरूपादर्शनात्[२]।

२६. ऋतुपशवो वक्ष्यमाणाः। वसन्तादारभ्य प्रत्यृतु कर्तव्याः।

२७. पलाग्नेया एकतन्त्राश्चोदनैक्यादेकप्रदानाच्च विभवात्।

२८. षलेव पूर्ववत्।

२९. अत्रापि च देवताविकल्पः। कालविशेषश्च सूचोपात्तः। शेषं पूर्ववत्।

३०. अत्रापि देवता ऋतुश्च। शेषं समानम्।

३१. पूर्ववद्व्याख्याताः।

३२. षलेव पशव ऐन्द्रावैष्णवाः शिशिर ऋतौ पूर्ववदेकतन्त्राः।

---

## १०.

१. उक्तो ऽश्वमेधः। पुरुषमेधो वक्तव्यः। तस्यार्थं पुरस्तात्पुराकल्परूपो ऽर्थवाद उच्यते। प्रजापतिः किलाश्वमेधयागं निर्वर्त्य[३] पुरुषमेधाख्यं यागं साध्यसाधनसंबन्धद्वारेण वेदादपलब्धवान्।

२. महाभाग्यस्याख्यापनार्थो[४] ऽर्थवादः।

---

१ C D om अर्थे। २ A om the text from उक्ता to स्वरूपादर्शनात्।
३ A निवर्त्य C निर्वर्त्य M निर्वपत्य। ४ C D om था।

३. यथा प्रजापतिस्तथैव वर्तमानिको[1] ऽपि यजमानः पुरुषमेधेनाभिलषितं फलमाप्नोति ।

४. महर्लिंग्भ्यो निर्वपतीत्येवमादिकमिति कर्तव्यताजातं[2] पुरुषमेधे ऽप्याश्वमेधिकं भवति ।

५. उपजनस्य पञ्चविंशतिर्यूपा इत्येवमादिकं[3] आश्वमेधिकस्य निवर्तको भवति । किमुपजन एवायं न भवति । विकारो ऽयं । पुरुषालम्भादिप्रातिपदो विधिरिहोपजनशब्देनाभिप्रेतः ।

६. तिस्र इष्टयस्त्रीणि हवींषि । एकहविष्का[4] ।

७. अग्नये कामायेत्यस्यार्थवादः ।

८. अग्नये दात्रे हविर्यत् कर्तव्यं तस्यायमर्थवादः ।

९. अग्नये पथिकृते कर्तव्यमिति यदुक्तं तस्यायमर्थवादः ।

१०. पूर्ववदश्वस्योत्सर्गं कृत्वा ततः पुरुषं ब्राह्मणजातीयं क्षत्रियजातीयं वा सहस्रेण गवां शताश्वाभ्यधिकेनावक्रीय संवत्सरायोत्सृजन्ति । अश्वरक्षणा इवास्यापि तत्संख्याका एव रक्षिणः[5] ।

११. अनावर्तयन्तो ऽन्यत्र देव्यादिग्रहात्तथा चैवेत्येवशब्दप्रयोगादयमप्यधिको ऽर्थो लभ्यते ।

१२. एतानि त्रीणि हवींषि संवत्सरं कार्याणि ।

१३. आश्वमेधिकैः सावित्रैरहरहर्विपर्यासमनुष्ठेयानि ।

१४. पारिप्लवैर्विपर्यासं तान्याप्रांशानि कार्याणि ।

१५. अनुमतय इति यदुक्तं तस्यायमर्थवादः ।

---

१ M वर्तमानानि को ऽपि । २ C om जा । ३ A ॰का ॰धिकं ।
४ M एष ह॰ । ५ C इवस्यापि, C D om का एव ।

१६. पथ्याये स्वस्तय इति यदुक्तमिति तस्यायमर्थवादः[1]।

१७. अदितय इति यदुक्तं तस्यायमर्थवादः।

---

११.

१. शौनःशेपमाख्यानं पौरुषमेधिकानां प्रथममाचष्टे।

२. एतदाचष्टे।

३. शुनःशेपस्य प्रथमे कस्य नूनमित्येवमादिके निगदेत्। व्याचचाण इवानुद्रवेदित्यर्थः।

४. काचीवतमाख्यानं द्वितीयमाचष्टे। एकान्तरिते ऽह्नि।

५. कचीवानुशिजः पुत्रः स्वनये भावयव्ये[2] राजनि यज्ञं यजान दक्षिणां लब्धवानित्यर्थः।

६. प्राता रत्नमित्येतत्[3]।

७. श्यावाश्वमाख्यानं तृतीयमाचष्टे।

८. तथा तद्वृत्तकमिवाचष्टे यथा श्यावाश्व ऋषिरार्चनानसो वैददश्वौ राजनि यज्ञं यजान दक्षिणां लब्धवान्।

९. निगदेदिति प्राकृतमनुवर्तते।

१०. चतुर्थमाख्यानं भारद्वाजं क्रमप्राप्ते ऽहन्याचष्टे।

११. तथा तद् वृत्तकमिवाचष्टे यथा दवौ राजनि मद्दिवर्णापवदे प्रस्तोके च राजनि सार्ञ्जये भरद्वाजः यज्ञं यजान दक्षिणां लब्धवान्[4]।

---

१ D om the second इति C यदुक्त तस्यायमर्थवादः। २ C भावे D भावये।
३ A रत्ने। ४ C इत्यर्थः।

१२. अधि द्वयुः पणीनामिति तिस्रः। प्रस्तोक इन्नु राधसस्त इन्द्रेति चतस्रः। एताः सप्त निगदेत्। व्याचचाण इवानुद्रवेत्।

१३. पञ्चममाख्यानं क्रमप्राप्ते ऽहनि वासिष्ठमाख्यानमाचष्टे।

१४. तथा वृत्तकमिवाचष्टे यथा वसिष्ठ ऋषिः। सुदासो नाम राजा पिजवनस्य[1] पुत्रस्तस्य सुदासः पैजवनस्य वसिष्ठः पुरोहितो बभूवेति।

१५. द्वे नप्तुर्देववतः शते गोरित्येतत्सूक्तशेषमेव[2] सूक्तमित्याह। देवतासूक्तमिति प्रसिद्धा।

१६. मैधातिथमाख्यानं षष्ठं क्रमेणाचष्टे।

१७. तथा[3] तद्वृत्तकमिवाचष्टे यथा आसङ्गो नाम राजा पुमान्बभूव स्त्रीत्वमनुभूय।

१८. स्तुहि स्तुहीदेते घा त इति सूक्तशेषं व्याचचाण इवानुद्रवेत्। निगदेदित्यनुवृत्तेः।

१९. [4]वात्समाख्यानं तेन क्रमेणाचष्टे येन सप्तमं भवति।

२०. तथा वृत्तकमिवाचष्टे यथा कण्वपुत्रो वत्स ऋषिस्तिरिन्दिरे राजनि पारशव्ये सनिं सषान दक्षिणां लब्धवान्।

२१. निगदेत्।

२२. वाशमाख्यानकमष्टममाचष्टे।

२३. तथा तद् वृत्तकमिवाचष्टे यथा वश ऋषिरश्वपुत्र[?]।

---

१ C सुदासनामराजा पिजवनस्य पुत्र। २ C गोरिति च सूक्तशेषमेव सूक्तमित्याह। ३ D यथावृत्तमिवाचष्टे। ४ C D here end in the Sutra वात्स।

पृथुश्रवा नाम राजा कानीतः। तस्मिन् सनिं ससान। दानं प्राप्तवानित्यर्थः।

२४. आ स एतु य ईवदेत्येवमादिकं सूक्तशेषं च निगदेत्।

२५. प्रस्कण्वमाख्यानं नवम यथाप्राप्तक्रमेण नवममाचष्टे।

२६. तथा तद्वृत्तकमिवाचष्टे यथा प्रस्कण्व ऋषिः पृषध्रे मेध्ये मातरिश्वे राजनि मातरिश्वनि वा समन्त्रलिङ्गात्। सनिं ससान दक्षिणां लब्धवान्।

२७. भूरीदिन्द्रस्य वीर्यमिति सूक्ते निगदेत्।

२८. नाभानेदिष्ठमाख्यानं क्रमप्राप्तं दशममाचष्टे।

२९. तथा तद्वृत्तकमिवाचष्टे यथा अङ्गिरःसु सत्त्रिषु नाभानेदिष्ठ ऋषिर्दक्षिणां प्राप्तवान्।

३०. न केवलमाख्यानकमाचष्टे सूक्तं च ये यज्ञेनेत्येवमादिकं निगदेत्।

३१. सर्वाण्येतानि आख्यानानि नराणां पुरुषाणां दक्षिणाप्रशंसकानीत्येतेन रूपेण भवन्ति।

३२. पुरुषरूपः पुमाक्षररूपेण प्रशस्त इति नाराशंसः। नरैर्वा परमात्मदर्शिभिः श्रद्धाभिर्दर्शनमयैः प्रशस्त इति नाराशंसः।

३३. [1]यथाराशंसान्याख्यानान्याचष्टे।

---

## १२.

१. पञ्चविंशतिसंख्याका यूपाः पुरुषमेधे भवन्ति।

---

१ C यथा ना॰ M यथा।

२. एकैकः पञ्चविंशत्यरत्निः।

३. दश बिल्वजातीया[1] द्वादश खदिरजातीयाः।

४. पैतुद्रवौ देवदारुप्रसिद्धौ। उपस्थावानौ पार्श्ववर्तिनावग्निष्ठस्य।

५. राज्जुदालः श्लेष्मान्तकः[2] सो ऽग्निष्ठो भवति।

६. पशवो भवन्ति।

७. समानदेवतत्वात्।

८. यान्याश्वमेधिकानि[3] सौत्याहान्युक्तानि गोतमस्य चतुरुत्तरस्तोम इत्येवमादीनि तेषां प्रथमे च[4] उत्तमं चैतद्विहातिदिश्यते।

९. अहर्भवतीति शेषः[5]।

१०. दश हस्ताङ्गुलयो दश पादाङ्गुलयर्थङ्गान्यात्मा पञ्चविंश इत्यनेन पञ्चविंशो वै पुरुष इत्युक्तम्।

११. पुरुषमेधं पुरुषरूपेण।

१२. पुरुषः पूर्वमुक्तो ब्राह्मणः क्षत्रियो वा परिक्रीतः। अपरः पशुर्गोमृगः। तृतीयो ऽजस्तूपरः। एते प्रजापतिदेवत्याः कर्तव्याः।

१३. गौरादयः पञ्च पुरुषस्यानुस्तरणाः कार्याः।

१४. पञ्चविंशतिः पशवस्ताश्चातुर्मास्यदेवताः पञ्चविंशतिरनुपहीतव्याः। अश्वमेधे पितृचैयम्बकपुनरुक्तवर्जमिह[6] तु पितरस्त्रैयम्बकदेवता इत्येवं पञ्चविंशतिः। पुनरुक्तानि तु वर्जनीयानि।

---

१ A बैल्वजाती। २ C श्लेष्मातक.। ३ C om यानि C M D सौत्यानि।
४ C D ins दे। ५ C adds तृतीयमहः पञ्चविंशस्तोमकं भवति।
६ C °वक्ता A चाश्वमेधपितृत्र्य।

१५. चातुर्मास्यदेवतानां [1]सर्वदेवताप्रीत्यर्थं पशव आलभ्यन्त इत्यर्थवादः ।

१६. अलंकृतं पुरुषं पौरुषैरलंकारैराश्वमवघ्राप्य उदीरतामवर उत्पराम इत्येकादशभिः । प्रणवो गणधर्मात्प्राप्तो वार्यते ।

१७. अग्निर्मृत्युरित्येवमादिकाः [2]शाखान्तरोक्ता आप्रियो भवन्ति ।

१८. अग्निगो इति (१६.२.२२) परिश्रिष्य मैनमग्ने वि दहो माभि शोच इत्येतत्सूक्तमावपेत् । तथैव । यथाश्वमेधे ।

१९. कौशं कुशमयम्[3] । तार्प्यं घृताक्तं[4] चौमं तृपार्णं वा । अरुणं पीतांशुकम् । आंशवं पट्टसूत्रमयम् ।

२०. संज्ञप्तं पुरुषं यामेन साम्ना यामाख्येन साम्ना उद्गाता उपतिष्ठते ।

## १३.

१. सहस्रशीर्षा पुरुष इत्यनेन पुरुषेण नारायणेन षोलशकेन होताभिष्टुयात् ।

२. होत्रादयो यथोद्दिष्टायतनार ऋत्विजः परैयिवांसं प्रवतो महीरनित्येवमाद्यारभ्य द्वाभ्यांद्वाभ्यामेकैक उपस्थानं कुर्यात् ।

३. अथानन्तरमृत्विजो यजमानं भिषज्यन्ति । अगदं कुर्वन्तीत्यर्थः । तृणाभ्यामुपमार्जयन्ति सर्पदष्टादौ दर्शनात् ।

---

१ O (orig) सर्वे । २ C M शाखाना॰ । ३ A को॰ C D कुशमय (D क) ।
४ C घृताक्त M घृतोक्त D घृताक्तं ।

४. उत देवा अवहितमित्यनेन होता। मुञ्चामि त्वा हविषा जीवनाय कमित्यनेन ब्रह्मा। अक्षीभ्यां ते नासिकाभ्यामित्यनेनोद्गाता। वात आ वातु भेषजमित्यनेनाध्वर्युः।

५. प्र तार्यायुः प्रतरं नवीय इत्येतासां नैर्ऋतीनां[१] होत्रादय ऋत्विजो यजमानमेकैकयाभिपद्यन्ति।

६. शं न इन्द्राग्नी भवतामवोभिरित्येताः शंतातीयाः। एतासामाम्नायक्रमेण तिसृभिस्तिसृभिर्होत्रादयो यथोद्दिष्टा यजमानं भिपद्यन्ति।

७. संज्ञप्ताय पुरुषाय महिषीं यजमानस्य प्रथमविन्नामुपनिपातयन्ति।

८. पुरुषं च महिषीं च।

९. तौ पुरुषमहिष्यौ तथैव यथाश्वमेधेऽश्वमहिष्यावुत्सक्थ्योरव गुदं धेहीति।

१०. होता महिषीं परिहृष्का च महिषीत्यनया। ब्रह्मा वावातां अग्रपाणा च वेशन्त्येत्यनया। उद्गाता परिहृक्तां यो ऽनाक्ताचो इत्यनया। अध्वर्युः पालागलीं न सेगे यस्य रोमग्रमित्यनया। तथैवेत्यधिकारात्।

११. उक्ताभ्यो ऽभिमेथिनीभ्यो या उत्तरास्ताभिरश्वमेधवत् प्रत्यभिमेथन्ति। वावाता च महिषी। सुप्रपाणा च वेशन्ता। य आकाचः स्वभ्यक्त इति।

---

१ C ०तानां।

१२. न सेमे यस्य रम्यत इति।

१३. उदीर्ष्व नार्यभि जीवलोकम्। उदीर्ष्वातः पतिवती ह्येषा। उदीर्ष्वातो विश्वावसो। अश्मन्वती रीयते संरभध्वमित्येता उत्थापिन्यः। आभिर्होत्रादयो महिषीमुत्थापयन्ति।

१४. होत्रादयो महिषीम्। मनो न्वा हुवामह इति तृचेन होता। असुनीते मन इति तृचेन ब्रह्मा। यत्ते यम वैवस्वतमिति तृचेनोद्गाता। यथा युगं वरत्रयेति तृचेनाध्वर्युः।

१५. ब्रह्मा महिषीं वाचयति[1]। तुग्रब्दात्मानुमन्त्रयते।

१६. ऋत्विजः सदसि ब्रह्मवद्यं वदन्ति वक्ष्यमाणकम्।

१७. गावो यवं प्रयुता अर्यो अचक्रितिहोताध्वर्यु पृच्छत्यनयर्चा।

१८. स यद्वय यवसादो जनानामित्येतया।

१९. होताध्वर्युमन्वेदु मे मसमे सत्यमुक्तमित्येतया।

२०. अध्वर्युश्चतुर्थ्या प्रत्याह। यस्यानचा दुहिता जात्वामित्यनया।

२१. द्वे स्रुती इत्येवमादिकया ब्रह्मोद्गातारं पृच्छति। द्वे समीची बिभृतश्चरन्तमित्येतयोद्गाता प्रत्याह।

२२. कत्यग्नयः कति सूर्यास इत्येतया।

२३. एक एवाग्निर्बहुधा समिद्ध इत्येतया।

---

१४.

१. आश्वमेधिकं कर्म ब्रह्मवचानन्तरं प्रागाज्यात्भवति।

---

1 A om the first three words. In the text of the Sutra I ought to have written ब्रह्मा तु वाचयति

२. [1]ऐकाहिकं च प्र वो देवाय माहाव्रतिकं च विशोविशो वः। एते उभे शंसेत्।

३. फलार्थवादो ऽयं न फलविधिः।

४. [2]ऐकाहिकं च माधुच्छन्दसं माहाव्रतिकं च कुविदङ्गेत्यादिकं प्रउगौ संग्रथयेत्। द्व्यगः[2]। षिलेतरमणिवत्।

५. फलार्थवादो ऽयं। द्वितीयादाभिप्लविकात्प्रातःसवने होत्रकाः।

६. अस्याह्नो महाव्रतान्माध्यन्दिनो निष्केवल्यमरुत्वतीये भवतः [3]षष्ठाधाह्नो होत्रकाः।

७. राजनाख्यमस्याह्नः पृष्ठं भवति।

८. पुरुषविधं पुरुषप्रकारमेतत्सामार्थवाददर्शनात्।

९. वैश्वदेवानुचरादारभ्य षष्ठादह्नस्तृतीयसवनं भवति।

१०. ये यज्ञेनेति शंसनादर्थवादो ऽयम्।

११. नरैः प्रस्तुत इति कृत्वा।

१२. यत्षष्ठाह्निकं तृतीयसवनं करोति।

१३. अर्थवादार्थ उपन्यासः।

१४. महादिवाकीर्त्यप्रशंसार्थो ऽर्थवादः।

१५. षोलश्यन्तमेतदहः समाप्यते स्वशाखाभिप्रायेण।

१६. उक्तार्थो ऽयमर्थवादः।

१७. पुरुषमेधे चतुर्थमहः पृष्ठ्यस्य यत्पञ्चमं तद्भवति। सकलस्याह्नो ऽतिदेशः।

---

[1] A om [2] Com. द्व्यगः। [3] A षष्ठा चाह्नो होत्रका।

१८. स्वमण्डलं पुरुषमेधे सहपुरुषं दीयते। पुरुषाः किल ब्राह्मणवर्जं संवत्सरमङ्गच्छिष्टिं कुर्युः। तेषां च राजैवाशनं ददाति।

१९. विविधशाखो यूपस्तस्मिन्दश पशव आलभ्यन्ते शाखान्तरात्।

२०. द्वादशद्वादश[2] क्रमेण ऋतुषु पशव भवन्ति। पलाशैया (१६.९.२८) वसन्त इत्यनेनैव क्रमेणाश्वमेधवत्।

---

## १५.

१. सर्वमेधो वक्तव्यः। तस्यायं पुरस्तात्पुराकल्परूपो[3] ऽर्थवाद उच्यते। ब्रह्म किल स्वयम्भु तपो ऽतप्यत।

२. वैशब्दो निपातः। न आनन्त्यमपवर्गाख्यं तपसः फलमस्ति। हन्त तर्हि सर्वेषु भूतेष्वात्मानमेकात्म्येन सर्वक्रतुविशिष्टदर्शनेन जुहवानीत्येवमैक्षत।

३. तद्ब्रह्म स्वयम्भु सर्वेषु भूतेषु स्थावरजङ्गमेष्वात्मानमद्वैतदर्शनेन कृत्वा सर्वाणि भूतानि सर्वमेधाख्ये क्रतौ जुहवां चकार।

४. श्रैष्ठ्यं प्राधान्यं स्वाराज्यं मानसी सिद्धिः। आधिपत्यं प्रभुता। एतत्सर्वं ब्रह्मणा प्राप्तम्।

५. यथैवैतद्ब्रह्म स्वयम्भु तथैवाद्यापि यजमान[4] सर्वभूतशरण्यो ऽद्वैती[5] सर्वमेधयाजी सम्यग्दर्शनसम्पन्नः। सर्वेषु भूतेष्वात्मानं सर्वाणि भूतानि चात्मनि जुहोति। जुहवां करोतीति छन्दोऽनुकरणम्।

---

१ M मेधां वरायिवा मन। २ A has only once द्वादश। ३ C कल्पो। ४ C ins तद्। ५ C M द्वितीय।

६. ततो ऽनेन दर्शनेन समं पञ्चशात्मयाजी श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति। सर्वतः प्राप्नोति।

७. प्रागग्नीषोमीयात्।

८. सर्व एव सर्वमेधो दशरात्रो यज्ञक्रतुर्भवतीति। तस्याग्निष्टुदग्निष्टोमः प्रथममहर्भवति। इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति। वैश्वदेवस्तुत्तृतीयम्। चतुर्थं सूर्यस्तुति अश्वमालभन्ते।

९. पौरुषमेधिकं मध्यमं पञ्चममहर्भवतीति शतपथश्रुतेः।

१०.[१] तस्मिन्नेव पौरुषमेधिके पञ्चमे ऽहनि पुरुषमालभन्ते।

११. अपरियज्ञो[२] वाजपेयः षष्ठमहर्भवति।

१२. आप्तोर्यामः सप्तममहर्भवतीति च शतपथश्रुतेः।

१३. तत्र तस्मिन्नाप्तोर्यामे सर्वान्मेधानालभन्ते। मेधान्वन्यशून्[३]। ये के च प्राणिमन्तान्। प्रजापतिरेकैकस्य। नेति केचित्[४]। देवतास्तु नानाप्रकारा आध्वर्यवे सर्वस्मै जुहोतीति (१३.७.१.९) शतपथे।

१४. ये वपावन्तः पशवस्तेषां वपाहोमः।

१५. अवपाकानां त्वचो जुह्वति।

१६. ओषधिवनस्पतीनां संक्षेदं प्रक्षिपेयुः।

१७. त्रिणवमष्टममहर्भवति। त्रयस्त्रिंशं नवममहर्भवति।

१८. सर्वमेधस्योत्तममहर्विश्वजित्सर्वस्तोमः सर्वपृष्ठो ऽतिरात्रो भवति।

---

१ om C २ C D उपरियज्ञो। ३ Doubtful. A om तत्र–पशून् but in a repetition of this passage after xvi, 29, 16, it reads मेधानाप्त्वान्पशून्।

४ M केचित्। केचित् D केचित्। केचिद्देव वास्तु नाना॰ C केचित्। केचिद्देवतास्तु नाना॰।

१८. फलार्थवादो ऽयम्।

२०. विंशतिः पशवो यस्मिन्नालभ्यन्ते स विंशतिपशुः विविधशाखो यूपो भवति।

२१. वसन्तादिष्वृतुष्वाग्नेयादीन् प्रत्यृतु चतुर्विंशतिं चतुर्विंशतिमालभन्ते।

२२. वक्ष्यमाणा[1] दक्षिणा विकल्प्यते[2]। अत्र संतिष्ठत इति वचनात्।

२३. सहभूमि सपुरुषं[3]। प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुस्तदेव होत्रका अन्वाभक्ता इति श्रुतेः।

---

## १६.

१. अरण्यं प्रव्रजेदिति सूत्रान्तः। गार्हपत्ये ऽधरारणिम्।

२. आहवनीये ऽप्युत्तरारणिं प्रक्षिप्य।

३. दक्षिणाग्निमपि यज्ञवचनात्।

४. न ग्रामं प्रविशेदित्यर्थः।

५. विश्वकर्मा नाम भौवनो ऽन्तत ईजे। अन्तेनेष्टवान्[4]।

६. तं विश्वकर्माणं भूमिः किल विशिष्टेन स्त्रीरूपेण साक्षादुवाच।

७. हे विश्वकर्मन्भौवन मां दिदासिथ[5] त्वं चान्ये च युष्मदीया अन्ये च भ्रातरः कश्यपाय दातुमिच्छतः(?)। स ईदृशः संगर आरभो

---

१ C D ॰त्र।　२ C D विकल्पते।　३ C ॰भूमिपुरुषम्॰ D सपुरुषा॰।
४ A चान्ते॰ C M इष्टवान्।　५ C D दिदासिथ C also in the text.

भवतो मृषा। किं कारणम्। येन मां सलिलमध्ये मज्जन्तीं क उद्धर्तुं शक्नोति यच स्वर्गे वर्तते तद्दीयत इति।

८. विश्वकर्माणमाचिप्य सतन्तां मज्जन्तीमुदके काश्यप ऋषिरुद्धृतवान्। विश्वकर्मा भौवन इत्येवमादिको ऽर्थवादस्तस्यायं संचेपार्थः। ज्ञानकर्मसमुच्चयकारिणा यजमानेन परमात्मदर्शनसम्पन्नेन सर्वमेधः कर्तव्यः। स एव यथाचोदितं भूमिदानाद्यपि सर्वं कर्तुं पारयति। ऋत्विग्भिरप्यचेत्थम्भूतैर्भवितव्यं ये भूमेः प्रलये ऽप्युद्धरणचमाः।

## १७.

१. वाजपेयः षष्ठमित्युक्तम्। तचायं विधिरनित्यः वाजपेयप्रकरणेऽ पठितत्वात्।

२. वाजस्याहमित्येवमादिकेन मन्त्रेण ब्रह्मौदुम्बरं रथचक्रमारोहेत्।

३. बृहस्पतेरित्यस्य स्थाने पथ्यन्तमेवेन्द्रस्येति।

४. वैश्ये यजमाने बृहस्पतेरित्यस्य पदस्य स्थाने प्रचेपः[१]।

५. तस्मिन्नथचक्रे ब्रह्मासनमन्त्रेणोपविश्य अविद्धे नाभिदघ्न उद्धिते[२] असंप्रेषितो ब्रह्मा चिराविर्मर्या इति ऋचि साम गायात्[३]।

६. पचान्तरं वाग्ब्दात्। तस्यैव साम्नो योनिं वक्ष्यमाणिकां विजेपेत्।

---

१ C पदस्य चेप D एतस्य चेप। २ A उत्थिते C अविद्धेनाभिदघ्नवुद्धृत D उच्छ्रिते। ३ C D om. from आविर to ऋचि।

७. एतच्च जपेद्गायेद्वा।

८. वाजस्याहमित्येवमादिकेन।

९. आरोहणमन्त्रस्य प्रत्यवरोहणे उत्तमं नाकं रोहेयमिति स्थाने अरुहमिति[1] विकारः।

१०. अह्नोत्येतत्प्रकृतमेवानुवर्तते। वाजपेय इति च[2]। मधुग्रहाध्वर्युणा समर्पितस्य हिरण्मयेन पात्रेण प्राणभक्षं भक्षयित्वा। हिरण्मयपात्र एव मधुग्रहः केषांचित्। उपयच्छते पात्रं प्रतिगृह्णातीत्यर्थः[3]। अथैतं[4] सहिरण्यपात्रमेव मधुग्रहं ब्रह्मणे ददद्मृतमायुरात्मन्धत्ते ऽमृतं ह्यायुर्हिरण्यं। तेन स यं भोगं कामयते तं कुरुते।

११. पत्नीयजमानयोर्यूपारोहणकाले ब्रह्मा सौत्रं मन्त्रं पठेत्[5]। मन्त्रविकल्पः।

१२. वाजपेयाधिकारः। प्रकृत एव[6] वाजपेये पत्नीयजमानौ यूपमारोहतः। तत्र यजमानविशो यजमानमूषपुटैराघ्नन्ति।

---

१८.

१. प्राक् शौनःशेपात् राजसूये ऽभिषिक्तो यजमानो ब्रह्मन्नित्येवं पञ्चकृत्वो ब्रह्माणमामन्त्रयते।

२. प्रतिवचन[7] ब्रह्मा करोतीत्यर्थः।

३. त्वं ब्रह्मासीत्येवमुक्त्वा[8] सवितासि सत्यसवः इति प्रति-

---

१ A अवरोहमिति C D om. from स्थाने to विकार।　२ C वा।
३ D प्रतिगृह्णीयात्।　४ A सहिरण्यपा०।　५ C M om. from पत्नी० to पठेत्।　६ C M प्रकृत। प्रकृत एव वा० D ०धिकार। प्रकृत एव। A वा०।
७ C repeats त्वं ब्रह्मासीत्येव ब्रह्मा सर्वंच प्रतिवचनानि।　८ C उक्तः।

वृणुयात्[1]। स ब्रह्मन्नित्येवं प्रथममामन्त्रयते। तथा त्वं ब्रह्मासि इतीतरः प्रत्याह सवितासि सत्यप्रसव इति श्रुतेः।

४. द्वितीये आमन्त्रणे ब्रह्मा प्रत्याह त्वं ब्रह्मासि इन्द्रो ऽसि विश्वौजा इति।

५. तृतीय आमन्त्रणे ब्रह्मा प्रत्याह त्वं ब्रह्मासि वरुणो ऽसि धर्मपतिरिति।

६. चतुर्थ आमन्त्रणे ब्रह्मा प्रत्याह त्वं ब्रह्मासि रुद्रो सुशेव इति।

७. पञ्चम आमन्त्रणे ब्रह्मा प्रत्याह त्वं ब्रह्मासीत्येवमादिकम्।

८. अस्मै ब्रह्मणे यजमानो मनसा हिरण्मयौ [2]प्रवृत्तावलंकारौ ददाति।

९. दक्षिणामन्त्रं मनसा पठतीत्यर्थः।

१०. अश्वमेधक्रतौ होता ब्रह्मोद्गाताध्वर्युरित्येतदृत्विजो ऽश्वबन्धनानि धारयन्तः। अश्वं हृदयोः किंविशिष्टयोः संस्यन्दिनोः परस्परं स्यन्दिनोः स्नापयन्ति।

११. अनेनायमित्येवमादिना मन्त्रेण गृहीताश्वरशना ऋत्विजो ऽश्वं हृदयोः संस्नापयेयुः।

१२. यदि च[3] केचिच्छाखिन इतमश्वं यजमानेन पृष्ठे ऽभिमर्शयेयुः ततो यजमानो ऽहं च त्वं च वृत्रहन्नित्येतामृचं जपेत्।

१३. अश्वमेध इति वर्तते। आश्वमेधिके मध्यमे ऽहनि संस्थिते यजमानपुरुषा आहवनीयमभितः सर्वासु दिक्षु प्रासादान्कुर्वन्ति।

---

१ A inserts त्व ब्रह्मासि सवितासि सत्यप्रसव इति यजमानं प्रतिगृणाति।

२ C D प्रवृत्ताव (D व)। ३ A वा।

१४. तान्प्रासादानुपरिष्टात्प्राकारशिखरैः सगवाक्षैः परिघ्नन्ति परिवेष्टयन्ति।

१५. ऋत्विजो ब्रह्मादयः प्रासादानारुह्य सर्वौषधिमाध्वर्यवविहितमाध्वर्यवैरेव मन्त्रैर्जुह्वति तैर्गवाक्षैः।

१६. सर्वरात्रं कृत्वा प्रातरनुवाकवेलायामृत्विजः प्रत्यवरोहन्ति।

१७. परिकर्मिणस्तत्पुरुषाः प्रासादानारोहन्ति। आरुह्य च जुह्वत्योदयात् पूर्ववत्।

१८. अथशब्दादश्वमेधावभृथ एव। अवभृथमेत्ता आत्रेयं सहस्रेण गवावक्रीय। किंविशिष्टो। य आत्रेयः शुक्लः पिङ्गाक्षः वलिनः। तिलकाश्चावलीषु यस्य। विक्लिधः कुष्ठी। खण्डो हीनाङ्गः। षण्डः प्रजननासमर्थः। खलतिः प्रसिद्ध एव। तमादाय नदीं यन्ति।

१९. अथैनमवक्रीतमुदके प्रगाह्य समाप्तायामवभृथेष्टौ प्रागभ्युदयणात् यदास्यावक्रीतस्यावगाढस्योदकं मुखमास्यन्देत मुखं प्रविशेत् अथास्मा अध्वर्युर्मस्तके यलोहितं जुहोति भ्रूणहत्यायै स्वाहा इत्यनेन मन्त्रेण।

२०. अथानन्तरं तं पुरुषं निःषेधन्ति निर्गमयन्ति। निःशब्दाद्दूरं नयन्तीत्यर्थः।

२१. तस्मिन्नवसरे स्नाता निर्गतपाप्मान अपग्रामा महापातकिनः ये ग्रामाद्वन्धुभिः परित्यक्तास्ते पूता भवन्ति। इतिकरणो ऽधिकारपरिच्छेदार्थः।

---

## १९.

१. अथशब्दो धर्मविशेषाधिकारार्थः। एकोत्तरा अहीना इति संज्ञा। अनेकोत्तराश्च पूर्वोक्ताः।

२. अवयवार्थवादो ऽयम्। यदेकविधमधिदैवतमग्निरध्यात्मं[1] मन इत्येवमादिकं तदेकरात्रेणाप्नोति।

## २०.

१. अथशब्दादियमप्यवयवस्तुतिः।

२. द्वे इमे प्रतिष्ठे इति पूर्वयोर्व्याख्यानम्। प्रतिष्ठे द्वे द्यावापृथिवी इति श्रुतेः[2]। अधिदैवतमश्विनौ अध्यात्मं चक्षुषी।

३. यत्र यत्राव्यक्तो ऽहःसंघातश्चोद्यमानो दशरात्रमधिकुर्वीत।

४. यत्र यत्रावच्छेदो न संपूर्णो दशरात्रस्तत्रात्यानां[3] ग्रहणे प्राप्ते नियमः क्रियते। अवच्छेदो निर्दिश्यमान आदितो निर्दिश्यमानो भवति।

५. अन्यथाज्ञो ऽतिरात्रभावो भवति। अबुध्यमानो दाशरात्रिक एवाहर्योगः स्यात्।

६. क्लृप्तेक्लृप्ते ऽपि प्रत्यहं दक्षिणादानम्।

७. अदीक्षिता ऋत्विजो दीक्षितं यजमानं याजयेयुः। केषां[4] चिच्छाखिनामहीनैर्यजेरन्निति बहवो ऽपि यजमानाः स्युः। अन्येषामेकयजमानका अहीना इति। स पक्षः सूचितः।

१ A श्चाध्यात्ममात्मा मन इ॰ M श्चात्म C श्चधिदैवतमग्निरात्ममन इ॰ D श्चधिदैवतमग्निरात्मा मन। २ C D M om. from द्वे to श्रुते। ३ A ins श्चन्त्यानां वा। ४ A केषांश्चिच्छाखिनां श्चहीनां श्चहीनैर्यज्ञैर्ऋत्विग्भिर्बहवो ऽपि।

८. मासपरिसमाप्तिका अहीना भवन्ति। उभयरूपा अप्यहीनवचनात्।

९. मासस्य यत्तुल्याभिर्न व्याप्यते तद्दीचावृत्त्या व्याप्नुयुः।

१०. असंवत्सरदीक्षिताय यजमानाय महदुक्थं न शंसेत्।

११. येन संवत्सरमुख्याधारणं न कृतं तस्मै महाव्रतं न शंसेत्।

१२. [1]अस्य द्विरात्रस्य प्रथममहर्नित्यमाग्निष्टोमिकं प्रथममहः स्यादिति हैक आहुः।

१३. स्वरूपेण चायं(!) स्तुतिः।

१४. अपरिहारायेत्यभिप्रायः।

१५. निष्केवल्यमरुत्वतीययोर्निविद्धाने संपातसूक्ते भवतः। आ यात्विन्द्रो ऽवस इति मरुत्वतीयमा न इन्द्रो दूरादिति निष्केवल्यम्।

१६. ततं मे अपस्तदु तायते पुनरित्यार्भवम्। यज्ञेन वर्धत जातवेदसमिति जातवेदसीयम्। इत्येते द्वितीयस्याह्नो भवतः।

१७. त्रिरात्रे च वक्ष्यमाणे द्वितीयस्याह्न एते एवार्भवजातवेदसीये भवतः।

१८. द्विरात्रस्याहर्योगः।

१९. वक्ष्यमाणेन वाग्रब्देन विकल्पो ऽत्रापि द्रष्टव्यः।

२०. गौश्च आयुश्च।

२१. अधिदैवतमध्यात्ममित्युक्तम्।

---

१ om. A.

२१.

१. अथ यत्त्रिविधं त्रिप्रकारं तत् त्रिरात्रेण वक्ष्यमाणेन प्राप्यत इति।

२. [1]अधिदैवतं चन्द्रमःप्रजापतिरुद्रा अध्यात्मम् मनोबुद्ध्यहंकाराः[2]।

३. प्रथमस्याह्नस्त्रयस्त्रिष्टप्रभृतयः स्तोमा भवन्ति त्रिवृत्पञ्चदशसप्तदशा इति।

४. पञ्चदशः सप्तदश एकविंश इति।

५. षोलशस्तोत्रियकं ब्राह्मणाच्छंसिन आज्यं भवति।

६. एकविंशः त्रिणवः त्रयस्त्रिंश इति तृतीयस्याह्नः स्तोमा भवन्ति।

७. अस्य त्रिरात्रस्य प्रथममहरग्निष्टोमसंस्थं भवति।

८. उक्थ्यसंस्थं द्वितीयमहः।

९. अतिरात्रसंस्थं तृतीयमहर्भवति।

१०. स्वमतेन।

११. छन्दोगवशादन्यथापि भवति।

१२. तृतीयस्याह्नो बृहत्पृष्ठं भवति। अर्थवादार्थं पृष्ठानां वचनम्। पूर्वकारिवशाद्व्यवस्था।

१३. भक्तिसाहचर्यात्।

१४. भक्तिसाहचर्यादेव।

१५. पूर्ववद्व्याख्या।

---

१ om C M D २ Corrected, Mss: मनोबुध्य०।

१६. आग्नये।

१७. सामूह्विकात् पलहादाज्यानि भवन्ति।

१८. मध्यमाच्छन्दोमात्त्रैष्टुभ इत्यनेन विशेषेण प्रउगो भवति द्वितीयस्याह्नः।

१९. द्वितीयस्याह्नः। प्रकृतत्वात्।

२०. यद्द्वितीयस्याह्नः पार्ष्ठिकस्य मरुत्वतीयं तत्तृतीये ऽहनि करोति।

२१. अन्योऽन्योपभोग. परस्परेण पालनमभिप्रेतम्।

२२. द्वितीयतृतीये। अधिकारात्। [1]चिवृत्स्तोमं प्रथमं सप्तदशस्तोमं द्वितीयं पञ्चदशस्तोमं तृतीयम्। एवमहर्योगो वा कर्तव्य इत्यर्थः।

२३. *कस्तमिन्द्र त्वावसुमित्ययं साम्प्रगाथो निष्केवल्यस्य भवति।* स्तोत्रकाणामनन्तरेषु सदेशो मा भूत् इत्यारम्भः।

२४. मो षु त्वा वाघतश्चनेत्येतौ स्तोत्रियानुरूपौ प्रगाथौ द्विपदां व्यवधायिकामुद्धृत्य मैत्रावरुणस्य भवतः।

२५. कं नव्यो अतसीनामित्ययं काद्रप्रगाथः। कद्वचनं प्रगाथादेशार्थम्[2]।

२६. द्वितीयात्पार्ष्ठिकादह्नः सूक्ते भवतः।

२७. अस्तावि मन्म पूर्व्यमिति स्तोत्रियः प्रगाथः। उभय ग्रहणवचन इत्यनुरूपः प्रगाथग्रहणानुवृत्तेः।

२८. ब्राह्मणाच्छंसिन एव।

---

१ C D M om from चिवृत्स्तोम to इत्यर्थ। २ C D कनिर्देशा०।

१९. आयन्त इव सूर्यमिति स्तोत्रियः। शग्ध्यू ष्वित्यनुरूपः।

२०. प्रगाथग्रहणमनुवर्तत एव।

२१. यथाप्राप्ते एव।

२२. होतुः पश्चात् होत्रकाणां द्वितीयादह्न उक्थानि।

---

## २२.

१. एष त्रिरात्रः सहस्रस्तोत्रियो येन प्रजापतिरिष्टवान्। स्मा इति निपातसमाहारः।

२. एतमेव त्रिरात्रमपरे गर्गत्रिरात्र इत्येवं वदन्ति।

३. द्वितीयो ऽपि त्रिरात्रो ऽश्वत्रिरात्र इत्येवंनामा।

४. अश्वत्रिरात्रे ऽयं विशेषः।

५. यदक्रन्द इत्येतदश्विगावावपेत्।

६. तृतीयस्त्रिरात्रश्छन्दोमपवमानो[1] भवति।

७. चतुर्थस्त्रिरात्रः पराकाख्यः।

८. एवंस्तोमकान्यहानि त्रीणि भवन्ति।

९. यथोक्तलक्षणः।

१०. लोकान्तरप्राप्तिमिच्छन्।

११. विशिष्टया वक्ष्यमाणया।

*१२. पूर्वौ गायत्रीसंपन्नः पूर्वतरश्च। अयं तु जगतीसंपन्नः।* तत्र आधिक्येन प्रशस्यते। अतो ऽयं जगतीसंपन्नः कर्तव्यः। इतरौ गायत्रीसंपन्नौ।

---

१ A छन्दोमः पव० C छान्दोमपव० D छान्दोमः पव० See xv, 6, I

१३. सम्यक्प्रशंसार्थं वचनम्।

१४. वक्ष्यमाणकल्विराचो ज्योतिर्गौरायुरित्यहर्योगेन कुसुरु-बिन्दुत्रिराचनामा[१]।

१५. प्रथमे ऽहनि गवां त्रीणि शतानि ददाति।

१६. त्रयस्त्रिंशतं गवां गोः कलाश्च पञ्च[२]।

१७. ददातीत्यनुवर्तते।

१८. या सहस्रतमी गौस्तस्याः सहस्रतम्या गोरेका कलादत्ता परिशिष्यते। किं तस्या इत्यत आह।

१९. तां कलामन्यया गवा सकलया निष्क्रीयामाकुर्वीत। ततो ऽमा यजमानस्य गृहे कुर्वीत।

२०. अमाकार्येत्येवमाहुराचार्या यजमानस्यैव संभूत्या इति। संभूतिविशेषप्रादुर्भावः। अमाकुर्वीतेत्यस्यायमर्थवादः।

२१. यायन्तीनां दक्षिणाकाले गच्छन्तीनां प्रथमोपरमेत् सा सहस्रतमी देयेत्याहुः।

२२. प्रथमोपरमणं गोर्बह्वीनां गच्छन्तीनां यत्कस्या अपि चेद्भवति[३] तदप्रच्यवनरूपम्।

२३. या संतिष्ठन्तीनां घनप्रचयच्छायाश्रितानां[४] या प्रथमोपविशेत् सा सहस्रतमी कार्येति।

२४. संस्थायिनीनां[५] प्रथमोपवेशनम्।

२५. अद्य वा श्वो वा विजनिष्यत[६] इत्यदश्वीना।

---

१ C ०बिन्दुस्त्रिरात्रनाम। २ C कलापच। ३ A C (orig) कस्यापि।
४ C घनप्रचयस्त्रि० M छाश०। ५ Corr, C संस्थायिन्यां प्र० A ०स्थायिनीनां।
६ ल om C M

२६. संनिकृष्टप्रभवः प्रजात्ये रूपमिति ।

२७. सत्तमा शोभनतमा अत्यन्ता वङ्कचौरा नवप्रनेत्यादिगुणा ।

२८. कथं नाम यद्यत्[१] शोभनं तत्तदृष्टे स्यादित्यर्थवादः ।

२९. सर्ववेदत्रिरात्रो नाम अहीनस्तस्मिन् त्रिवेदाध्यायी ब्रह्मा भवति यस्य चोभयतः पितृतश्च मातृतश्च त्रिपुरुषं श्रोत्रिया भवन्ति । एवंविधो ब्रह्मा सर्ववेदत्रिरात्रे कार्यः ।

३०. पूर्वोक्तानां त्रिरात्राणामर्थवादः ।

---

## २३.

१. वक्ष्यमाणेन प्राप्यत इत्यर्थः ।

२. मेदोऽसृङ्मांसमज्जावयवाः ।

३. अपि च चतुष्पादाः पशवः ।

४. ऋग्यजुःसामाथर्वणमधिदैवतं ब्रह्म चतुर्विधम् । अध्यातां चत्वार्यङ्गानि ।

५. एवंस्तोमकान्येव चत्वारि ।

६. पूर्वस्य स्तोमविधेः[२] स्तुत्यर्थः शेषः ।

७. जमदग्नेश्चतूरात्रो ऽयमुच्यते ।

८. वक्ष्यमाणो ऽत्रिश्चतुर्वीरसंज्ञकश्चतूरात्रः ।

९. एष प्रथमस्याङ्गः स्तोमसमाहारः ।

---

१ C नव॰ गुण । २ C यत्-तत् । ३ C पूर्वस्य ॰विधि ।

१०. एष प्रथमस्याह्नस्त्रिवृदुत्सृज्यते। एकविंशं प्रजन्यते[1]।

११. सर्वस्मिन्नहनि पञ्चदशो दृष्टः। स उत्सृज्यते। त्रिणवः प्रजन्यते।

१२. अत्रापि सप्तदश उत्सृज्यते। त्रयस्त्रिंशः प्रजन्यते।

१३. उक्तेन न्यायेन।

१४. खष्टम्[2]। वीरसाधनः स्तोमो वीर इत्युच्यते।

१५. तस्य [3]चतूरात्रस्य शस्त्रं वक्ष्यत इति शेषः।

१६. तदभिप्रायेण शस्त्रमपि भवति।

१७. यो जात इति।

१८. वा यथयोक्ते।

१९. तृतीयं[4] वैरूपपृष्ठं भवति पक्षेण। तस्मिन्पति वैराजात्तृतीयसवनं। चतुर्थादह्न इत्यर्थः।

२०. आदितो ऽवच्छेद इति परिभाषितत्वात् चतुर्थं वैराजपृष्ठमेव भवति। तस्य पुनर्वचनं विकल्पार्थम्। वैरूपात्तृतीयसवनं तृतीयादह्न इत्यभिप्रायः।

२१. *चतुर्थमश्वमेधवतीयानन्तर्यात्।*

२२. प्राकृतमतिरात्रम्। इह प्रकरणे संव्यवहारार्थं संज्ञाकरणम्।

२३. अयमपरश्चतूरात्रस्तयोर्योगविशेषः। आभिप्लविकानामह्नामभिजिच्चतुर्थो भवति।

२४. पार्ष्ठिकानामह्नां विश्वजिच्चतुर्थः। आभिप्लविकानां पार्ष्ठिकानीतराणि।

---

१ C om स। २ C M om. ३ C M चितारत्रस्य। ४ A तृतीये C तृतीय।

२५. पार्थिकानामेव[1] माहतो ऽतिरात्रश्चतुर्थो भवति महाव्रतं वा।

२६. अर्थवादो यथाविहितानुष्ठानप्ररोचनार्थः।

---

## २४.

१. आप्नोतीति वाक्यशेषः।

२. त्रीणि सवनानि अग्नीषोमीयो ऽनूबन्ध्येति पाङ्क्तो यज्ञः। पञ्च जना[2] इत्यधिदैवतं पञ्चेन्द्रियाण्यध्यात्मम्।

३. तत्रार्थवादः।

४. तदिदमहर्योगरूपमासामेवाङ्गुलीनां रूपेणार्थवादः।

५. कनिष्ठा।

६. उपकनिष्ठिका।

७. मध्यमा।

८. अनामिका।

९. अङ्गुष्ठः।

१०. मध्यमामभिनयेनाह[3]।

११. चतुर्थ्यहःसु[4] व्यस्ताः स्तोमास्त एव चाच[5] समस्तास्तेनाय मङ्गुष्ठः सर्वाङ्गुलीः प्रत्येति[6]।

१२. तस्यैवंविधस्य पञ्चरात्रस्य प्रशस्तमुच्यते।

१३. एवमयं चतूरात्रः। पञ्चममहर्निरूप्यते।

---

१ A शाह्नानाम्। २ C D om इति। ३ A °मयेनानाचा। C °मेभि°
४ C चतुर्थमहस्तु M चतुर्थमहस्तु। ५ C D om. चच। ६ A प्रति ...... येति।

१४. पञ्चमस्य आभिप्लविकस्य द्वे सवने। पृष्ठ्यस्य षष्ठादह्नस्तृतीयसवनमित्येतच्छस्त्रं पञ्चमे।

१५. पञ्च वाभिप्लविकस्य। वाशब्दो विकल्पार्थः।

१६. उत्तमादाभिप्लविकात्पञ्चमे तृतीयसवनं भवति। अत्र द्वे सवने पञ्चमादाभिप्लविकात्।

१७. पञ्चान्तरमेतद्विधानसामर्थ्यात्।

१८. पार्ष्ठिकानां चतुर्थ इत्यर्थः।

१९. उभयोरपि पञ्चयोः पञ्चमत्वेन।

२०. आभिप्लविकपञ्च इतरश्च।

२१. उक्तार्थो ऽर्थवादः।

---

## २५.

१. प्राप्यत इति वाक्यशेषः।

२. द्यौश्च पृथिवी चेत्यादि षण्णोर्वीरिति षड्विधमधिदैवतम्। वागङ्गो ऽयमात्मेत्यध्यात्मम्।

३. एवं युक्तानि[१] पञ्चशानि।

४. वाशब्दो विकल्पार्थः।

५. यस्मिन्पञ्चे अभिजितो ऽनन्तरं महाव्रतम्

६. स एक एव पञ्चे पृष्ठ्यः पञ्चे ऽभिप्लवः।

७. उक्तार्थो ऽर्थवादः।

---

१. A उक्तानि।

## २६.

१. वच्यमाणेन प्राप्यते।

२. सप्तको मरुद्गणो ऽधिदैवतम्। पलङ्गानि विद्या[1] सप्तमीत्यध्यात्मम्।

३. एवमुक्तः सप्तरात्रः।

४. वच्यमाणः सप्तरात्र एवंसंज्ञकः।

५. यथोक्तानि सप्ताहानि।

६. वच्यमाणः सप्तरात्रस्तेनाप्तः।

७. अस्यैव संज्ञान्तरं जनकसप्तरात्र इति।

८. पलाभिप्लविकान्यहानि सप्तमो ऽभिजिदित्ययमहर्योगपचः।

९. इतरेषां पार्ष्ठिकानां विश्वजित्सप्तम इत्ययमपरो ऽहर्योगपचः।

१०. पष्ठां[2] सप्तमो वैश्वानरो महाव्रतं वा विकल्पेन।

११. ज्ञातव्याख्यानमेतत्।

---

## २७.

१. प्राप्यत इति वाक्यशेषः।

२. अष्टावदितेः पुत्रा अधिदैवतम्। अष्टावङ्गानीत्यध्यात्मम्।

३. उक्तार्थमेतत्सूत्रम्।

४. पार्ष्ठिकानामेव सप्तमः।

५. अष्टममहर्विकल्पितम्।

---

१ C विद्यात्। २ C षष्ठों।

६. वाशब्दो विकल्पार्थः। उभयोः पृष्ठ्याभिप्लवयोरभिजिन्नवमो विश्वजिद्दशमः।

७. उक्तार्थो ऽर्थवादः।

## २८.

१. अनुष्ठीयमानेन प्राप्यत इति वाक्यशेषः।

२. अष्टौ वसवः प्रजापतिश्चेति नव इत्यधिदैवतम्। नव प्राणा इत्यध्यात्मम्।

३. अनेन वाहयोगेन नव[1]।

४. ज्योतिःसंज्ञको ऽग्निष्टोमः। गोसंज्ञक उक्थ्यः। आयुःसंज्ञको ऽतिरात्रः। [2]एवं त्रिरूपयन्ति। एवं नवरात्रम्। तं शललीपिशङ्ग इत्याचक्षते।

५. कृतव्याख्यानो विधिशेषः[3]।

## २९.

१. देवलोकं पितृलोकं जीवलोकमित्यादयो ऽधिदैवतम्। दशेन्द्रियाणीत्यध्यात्मम्।

२. दशरात्रस्याहर्योग उच्यते। अध्वर्यो ऽभिप्लवस्तानि नवाहानि भवन्ति। नवाग्निष्टोमा इत्येवं वा नव। वैश्वानरश्चेति दशमं वक्ष्यति।

३. प्राकृतो वा दशरात्रः संख्याविकारेण विकृतः।

१ C या instead of नव। २ A एतस्त्रिरूप०। ३ C विधि।

४. पूर्वोक्तानां नवानां दशम इत्युक्तम्।

५. पुरोधाकामस्यायमहीनश्चोदितः। तत्रायमर्थवाद उच्यते। एतेन दशरात्रेण किल जलो जातूकर्ण्य इष्ट्वा त्रयाणां राज्ञो[१] निगुस्यागोत्रावयववंशजानां जातूकर्ण्यः प्राप। कतमे पुनस्ते[२] निगुस्यागोत्रा इति। अत आह। काश्यवैदेहयोः पुरोहितो बभूव। कौशल्यस्य च राज्ञः।

६. तस्य ह जातूकर्ण्यस्य तां श्रियमभिध्याय[३] मम स्यादिति मन्वानः पितरमभ्यूहे ऽधिशापितवानुपलब्धवानित्यर्थः। पलित यज्ञकामान्यान् जनाञ्छ्रिया यशसा समर्धयितुं जानासि येनान्येभ्य एव एतां विद्यां प्रयच्छसि। आत्मानं समर्धयितुं अस्मत्सम्बद्धिद्वारेण नैवेच्छसि।

७. ततः श्वेतकेतुं पुत्रमुवाच। हे पुत्र श्वेतकेतो मा मैवं वोचः। उपदेशयज्ञक्रतुरेव लोके प्रसिद्धिं यायादित्येतत्फलं[४] ममाभीष्टम्।

८. यदेतन्मयोच्यते यज्ञक्रतोरप्रकाशीकरणे[५] विद्यादानं फलं[६] तत्त्वमेव[७] कृत्स्नके[८] ऽप्येकस्मिंश्चिद्ब्रह्मबन्धौ विज्ञातवानसि। एतदुक्तं भवति। तदेतद्यज्ञक्रतोः फलं श्रूयते। एतत्परिच्छिन्नं। यज्ञशास्त्रप्रकाशने तु फलस्येयत्ता नास्ति।

---

१ A राज्यधिगुस्या॰ गोत्रा॰ C M निगुस्या गोत्रा——वयववंश॰ D निगुस्या गोत्रा॰ set to निगू(?)दस्थान गो॰। २ A (?) धिगुस्यागोत्रा।

३ A मतिध्याय C (orig) मानमस्यादिति M मानस्या॰ D मतिध्याममस्यादिति।

४ A यायात्पित्रा इत्ये॰। ५ A करण। ६ A om फल।

७ A C (orig) D M तत्वम्। ८ C कृत्स्नकारके D कृत्स्नकारे।

८. उशब्दो ऽशब्दस्यार्थे[१]। किलेति विद्यासकर्षे। यथास्य श्वेतकेतोः पित्राभिहितं यज्ञशास्त्रप्रकाशयितुः फलम्।

१०. तथैतद्वेदितव्यम्। श्रद्धा तु कर्तव्येत्यर्थः।

११. स एष दशरात्रः पुरोधाकामस्य ब्राह्मणस्य यज्ञः।

१२. प्राप्नोति पुरोधामेवं विहितानुष्ठानेनेत्यर्थः।

१३. त्रिककुद इति[२] चतुष्टोमो दशरात्रो यज्ञः शाखान्तरे। तत एवं व्याख्यातव्यम्। चतुष्टोमस्त्रिककुदाभिधानस्तस्मादस्य[३] शस्तं भवति।

१४. अयमपि चतुष्टोम एव क्रमान्यत्वविशेषविहितः।

१५. छन्दोमस्तोमैर्विशिष्टश्छन्दोमत्रिककुदित्युच्यते[४]। यथो ऽप्येते छान्दोग्ये विहितास्तथैवास्त्वयोगो दशरात्रतो वा।

१६. अयमपरो ऽस्य दशरात्रस्याहर्योगकल्पः। पूर्वस्मिन्नपि कल्पे वैश्वानर एव[५] दशमस्य शब्दात्।

१७. अयं चापरो दशरात्रकल्पः।

१८. पूर्वस्मिन्कल्पे विशेषः। तेनैव तत्कल्पान्तरम्।

१९. अनुष्ठानप्ररोचनो ऽयं विधिशेषो[६] ऽर्थवादः।

---

१ A उशब्दो ऽशब्द॰ C D तच्छब्दो नशब्दस्यार्थे। २ A त्रिककुप् इति C D M त्रिककुद इति चतुष्टोमस्य शाखान्तरे। ३ A त्रिककुषाभिधान॰ C D त्रिककुदाभिधानः तदस्य शस्तं M त्रिककुदाभिधानस्तद्दशरात्र। ४ A ॰त्रिककुप् इत्युच्यते C D M ॰त्रिककुद् इत्युच्यते। ५ A inserts between एव and दशम the text and comm of xvi, 15, 3 ff beginning with भूतेभ्यस्त्वाम इत्या and ending with ऽतिरात्रः (19)। ६ C ॰रोचनायाय विधि।

THE

# ŚĀṄKHĀYANA ŚRAUTA SŪTRA

TOGETHER

WITH THE COMMENTARY

OF

# VARADATTASUTA ĀNARTĪYA

AND

# GOVINDA

EDITED BY

ALFRED HILLEBRANDT, Ph D,

*Professor of Sanskrit in the University of Breslau*

VOL. IV.

Adh XVII. XVIII.

THE COMMENTARY OF GOVINDA.

New Series, No 938

*FOR BIBLIOTHECA INDICA*

CALCUTTA.

PRINTED AT THE BAPTIST MISSION PRESS

AND PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL

1899

# अथ सप्तदशो ऽध्यायः।

१.

मधुसूदनगुरुं वन्दे देवमातं त्रयीविदम्।
कृष्णं विनायकं रामं हरिरामं हलायुधम्॥१॥
एतान् चैतान् गुरून् नत्वा तेषां वै पादपांसवः।
भाष्यं महाव्रतस्याहं कुर्वे गोविन्दसंज्ञकः॥२॥

व्याख्यातो द्वादशाहः प्रकृतिः सत्राहीनानामित्यनेन वाक्येन शुद्धपक्षस्याष्टम्यां द्वादशाहाय दीक्षन्त इत्येवमाद्युक्तो द्वादशाहः सत्राहीनेषु प्रकृतित्वेनातिदिश्यते। तत्र विकृतौ द्वादशाहो येऽहोभिर्विवर्धते तान्युदाहरिष्याम इति प्रतिज्ञाय[1] एकाहार्थे महाव्रतमाहरन्तीत्यनेन वाक्येन त्रयोदशरात्रसंपत्त्यर्थमाचार्यो महाव्रतं विदधे तस्य चानुष्ठानकाले क्रमापेक्षायामूर्ध्वं तु (१२. १५. ११) दशमादह्नो महाव्रतस्य स्थानमिति स्वकीयानुष्ठानस्थानानुरोधेन सूत्रकारस्य दशमादह्नः परमयातो महाव्रतस्येत्यादि महाव्रतस्य सूत्रणं युज्यते। कथं तर्हि सर्वकर्माभिधानोत्तरकालमथातो महाव्रतस्येत्येवमादिना सूत्रेण महाव्रतं[2] कर्म पृथगेवोपदिश्यते। सत्यम्। उच्यते। न हि पाठक्रमवशेनानुष्ठानक्रमो भवति। सर्वस्वारपराकयोर्मध्ये दर्शनात्। तथा चास्य क्रतोरारण्यकसंबन्धात्पृथगुपदेशः। कथं पुनरारण्यकसंबन्धः। श्रुतेः। ऐकाहिकमेव स्याद्वह्न वा एकाहो

---

[1] A om प्रति। [2] A महाव्रतार्थं।

ब्रह्मैतदहर्ब्रह्मणैव तद्ब्रह्म समर्धयतीति ब्रह्मस्वरूपत्वेनास्य क्रतोः श्रवणात्। उपनिषद्वाक्यान्यपि ब्रह्मनिरूपणपराणि भवन्ति। एवमेकनिरूपत्वेन संबन्धः। श्रुतिक्रमो ऽप्येवमेव। सर्वकर्मविधानानन्तरं प्रजापतिर्वै संवत्सर इत्यादि पृथगेव श्रूयते। तस्मात्सूत्रकारस्यापि सर्वकर्मविधानानन्तरं पृथगुपदेशो युज्यते। अनुष्ठानक्रमानुग्राहकाणि कानि चिदङ्गानि तत्रैवोक्तानि। यथा होत्रकाणां शस्त्रकृप्तौ प्रातःसवने श्वःस्तोत्रियानुरूपत्वं माध्यन्दिने सवने चतुर्विंशे ऽभिजिति विषुवति बृहत्पृष्ठे विश्वजिति महाव्रते च (१२. ६. ७) पश्चादिति। तथा तृतीयसवने। अथ यद्यभिजितं विषुवन्तं बृहत्पृष्ठं विश्वजितं (१२. २७. ४) महाव्रतीयमहरित्युक्थ्यानि कुर्युरिति। एवमनुष्ठानक्रमो ऽप्यनुगृहीतो भवति। होत्रकाणां परिगणितपदार्थत्वादनुष्ठानक्रमानुग्रहाय[1] तत्रैवोपदेशं कृत्वा होतुः कर्मबाहुल्यात्पृथक् [2]सविस्तरान्महाव्रतीयपदार्थान्[3] सूत्रकार उपदिशति।

१. विधिरुच्यत इति वाक्यशेषः। अथशब्दो विशेषाधिकारार्थः। महाव्रतीयकर्मविशेषो ऽधिक्रियत इत्यर्थः[4]। आनन्तर्यार्थो वा। अथ सर्वकर्माभिधानानन्तरं महाव्रतीयं कर्मोच्यत इत्यर्थः। अतःशब्दः क्रमार्थः। सर्वकर्माणि क्रमेणोपदिष्टानि। अतः क्रमप्राप्तं महाव्रतीयं कर्माभिधीयत इत्यर्थः। हेत्वर्थो वा। यतः सर्वाणि कर्माण्युक्तानि अतो हेतोर्महाव्रतीयं कर्म वच्यत इति हेत्वर्थः।

---

१ C om तृपहा। २ C सुवि॰। ३ C महाव्रतीयान्। ४ C ॰व्रतीय कर्म वच्यत इत्यर्थं। विशेषा ऽधिक्रियत इत्यर्थं।

२. महाव्रतीयादह्नः कतिपयाहेनोपलक्षिते पुरस्तादेव काले क्रियद्भ्यो दिवसेभ्यः पूर्वमित्यर्थः। होता प्रेङ्खफलकमुदुम्बरकाष्ठासनं तदर्थमौदुम्बरीं शाखामुत्पाटयति उच्छिनत्तीत्यर्थः। ननु संस्थिते दशमे ऽहनि (१७. ६. २) सदो हविर्धानानि समूहन्तीत्येतस्मिन्नवसरे दशमादह्नः परं महाव्रतीयाहःसंनिधौ प्रेङ्खफलकादि कथं नाम न क्रियत इति चेत्। उच्यते। अपि द्वे वा त्रीणि वा (१७. १. ८) फलकानि संदध्युरिति संतक्षमिति पाठे वक्ष्यते। संतर्दनं संतक्षणं चार्द्रकाष्ठेन कर्तुं न युज्यत इति कतिपयेभ्यो दिवसेभ्यः पूर्वमेव प्रेङ्खफलकाद्यर्थमुदुम्बरोत्पाटनं कर्तव्यमिति।

३. प्रेङ्खफलकोत्पाटनं कर्तव्यमिति शेषः। समयस्य परिवासनं मा-भूदिति तिष्ठन एवेत्युच्यते। दृश्यते च। अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः। तस्य या प्राङ्मुखी शाखा उदीची वोर्द्ध्वगापि वेत्येवमाद्यरणिप्रकरणे ऽपि शाखाया एव छेदनमस्ति। तस्मादत्रापि शाखाया एव छेदनं युज्यते न समयस्येति।

४. होतोदुम्बरस्य प्रेङ्खफलकमुत्पाटयतीति प्रकृतम्। कथमुत्पाटयतीत्यपेक्षायां पुरस्तात्पूर्वस्यां दिश्यादित्योदयनदिगभिमुखीयौदुम्बरी शाखा गतवती सा छेत्तव्या। ननु सर्वदा पूर्वस्यां दिश्येवादित्योदयनं भवतीति। कथं पुरस्तादित्युक्ते आदित्यस्योदयनत इत्युच्यते। सत्यम्। राशिभेदात्पूर्वस्यां दिश्यपि आदित्यस्योदयनं भेदेन संभाव्यते। अतो राशिं विचार्य यस्मिन्राशौ यस्यां दिशि सूर्य उदेति तदभिमुखीमुदुम्बरशाखामुत्पाटयतीति

शास्त्रनियमः। अथवा अयमर्थः। पुरस्तात्पूर्वस्यां दिशि या शाखा सा छेत्तव्या। यतः पूर्वस्यां दिश्यादित्यस्योद्गमनं भवेदिति।

५. पुरस्तादविद्यमानशाखस्योदुम्बरस्य कथमुत्पाटयेदिति यदि उदुम्बरस्य पूर्वभागे तादृशी शाखा न लभ्यते तदोदगाश्रितापि च्छेत्तव्या। अथोत्तरत इति सामान्योक्तेर्न कोणाभिमुखी ग्राह्या। तत्र दिगन्तरत्वश्रवणात्।

६. उदुम्बरस्य पूर्वोक्तयोर्दिशोरविद्यमानशाखत्वे[1] पक्षान्तरमेतत्। यद्युदुम्बरस्य दक्षिणे भागे प्रेङ्खफलककरणसमर्था शाखा कोणाभिमुखत्वरहिता स्यात् सापि ग्राह्या। दक्षिणा दिक् पित्र्यत्वान्न प्रयोज्येति नाशङ्कनीयं वचनात्।

७. जघन्यपक्षान्तरमेतत्। यदि प्रकृतस्योदुम्बरस्य पश्चाद्भागे प्रयोजनसमर्था शाखा भवेत् सापि कोणाभिमुखत्वरहिता पूर्वोक्ताभावे ग्राह्या।

८. ह्रसीयस्युदुम्बरे पक्षान्तरमेतत्। समग्रमप्युदुम्बरं[2] स्वपरिजनैर्मूले छेदयित्वा प्राङ्‌तिष्ठन्नुदङ्‌वा तिष्ठन्नुत्पाटनमात्रं होता कृत्वा प्रेङ्खफलकं कुर्यादिति शेषः।

९. प्रकृतस्योदुम्बरस्य द्वे वा त्रीण्यपि वा फलकानि संदध्युः। संतष्टार इति शेषः। द्वे वा त्रीणि वेतीच्छाविकल्पः। यथा पवित्रकरणे। कुशतरुणे अविषमे अविच्छिन्नाग्रे अनन्तर्गर्भे प्रादेशेन मापयित्वा कुशेन च्छिनत्ति पवित्रे स्थ इति। द्वे त्रीणि वा भव-

---

[1] C om त्व। [2] C ०म्बरस्य परि०।

न्तीति उदुम्बरस्य महत्त्वे फलकद्वयम्। अणुत्वे फलकत्रयमिति कस्य चिद्भ्रवस्थाशंका स्यात्। तन्निवृत्त्यर्थमिदमुक्तम्।

१०. तत्फलकं प्रागलम्बं बाहुमात्रं बाहुप्रमाणं भवतीति।

११. तत्फलकं तिर्यक् पृथुत्वतो ऽरत्निमात्रम्। अरत्निप्रमाणं भवतीति।

१२. होतुः सुखेनोपवेशनार्थं सम्यक्तष्टं सुनिष्पादितं भवतीति।

१३. वक्ष्यति तत्पश्चादुदीचीनाग्रं फलकं (१७. १०. ४) निधायेति। तस्माद्यथा तदग्रं ज्ञायते तथा भवतीति।

१४. तत्फलकमन्तेषु चतुर्षु कोणेषु चतुर्धा चतुःप्रकारं वितर्दयति सच्छिद्रं कारयतीति।

१५. अथ फलककरणानन्तरं यस्योदुम्बरस्य[1] फलकं कृतमेतस्यैवोदुम्बरस्य विशाखीकरणसमर्थविद्यमानशाखस्य[2]। तद्दृष्टित्वे ऽप्यन्यस्य प्रयोजनसमर्थोदुम्बरस्य वा। विशाख्यौ वंशधरणसमर्थशाखे छेदयन्ति स्वपुरुषाः।

१६. किंप्रमाणे ते विशाख्यौ। पुरुषप्रमाणं किंचिदतिक्रान्ते। परःशब्दो निपातः। अत्यादयः क्रान्ताद्यर्थे द्वितीययेति[3] समासः।

१७. एतस्योदुम्बरस्यान्यस्य वा छेदयन्तीति शेषः। वंशं विशाख्योरुपरि रज्जुबन्धनार्थः शाखाविशेषः तदपि परःपुरुषं छेदयन्ति।

---

१ C यस्योदुम्बरस्य तद्दृष्टित्वे ऽप्यन्यस्य प्रयोजनसफलकं कृतम्। २ C ॰शाखस्य समर्थोदुम्बरस्य वा। ३ A क्रान्ताद्यर्थे द्विताये॰।

१८. इति संबन्धः। यदि देशविशेषादुदुम्बरालाभस्तथा सति यो ऽन्यो वृक्षः फलग्रहणशीलो यज्ञियत्वादश्वत्थो बिल्वो वा तस्यै-तस्यैवं फलकादि कुर्यात्।

---

## २.

१. अतःप्रभृति सर्वत्रानन्तर्यार्थो ऽथशब्दः। मुञ्जमयरज्जुद्वयं कारयन्ति स्वपुरुषाः।

२. ते रज्जू दृढे फलकधरणसमर्थे कारयन्ति स्वपुरुषाः।

३. तद्रज्जुद्वयं त्रिवृत्कारयन्तीति।

४. द्विव्यायामं किंचिदतिक्रान्ते परोद्विव्यायामे। प्रमाणतस्ते एवंविधे कारयन्तीति।

५. एतावत्पूर्वोक्तं सर्वं होतारमभितो देवयजनसमीपे उप-कल्पयन्ति स्वपुरुषाः।

६. उदुम्बरविकारामासन्दीमासनविशेषमुद्गात्रर्थं संप्रति सम्य-ग्निष्पादयन्ति।

७. तस्या इति षष्ठ्यर्थे चतुर्थी। तस्या आसन्द्याः प्रादेश-प्रमाणाः पादा भवन्तीति।

८. चत्वार्यपि काष्ठानि अरत्निप्रमाणानि भवन्तीत्यर्थः।

९. तामासन्दीं सम्यग्निष्पाद्य विवयन्तीति संबन्धः।

१०. तामासन्दीं मुञ्जविकाराभिः स्वन्धाभी रज्जुभिर्द्विगुणी-कृताभिः प्रदक्षिणप्रोताभिर्विवयन्ति। वेञ् तन्तुसंतान इत्यस्य

धातो रूपं विवयन्ति विशेषेण अच्छिद्रां वयन्ति [1]वेष्टयन्तीत्यर्थः।

---

३.

१. अथ पूर्वोक्तकरणानन्तरं तन्तुशतयुक्तां वीणामुपकल्पयन्ति कुर्वन्ति स्वपुरुषाः।

२. तस्या वीणायाः पालाशी पलाशविकारा सूना भवति। सा च काष्ठविशेषरूपा[2]।

३. [3]तस्या इत्यनुवर्तते। तस्या वीणाया उदुम्बरविकारो दण्डो भवतीति।

४. विपरीतं वा कर्तव्यमितीच्छाविकल्पः।

५. तां वीणां सर्वप्रदेशरक्षेन[4] आनडुहेन चर्मणा उपरिलोम्नाभिधीयन्ति। सुदृढां कुर्वन्तीति।

६. तस्या वीणाया दण्डं दशप्रकारं विद्धं कुर्वन्तीति।

७. तदिति सप्तम्यर्थे ऽव्ययं तस्मिन् दशधाविद्धे दण्डे प्रति छिद्रं दशदश रज्जूः[5] प्रवयन्ति।

८. ता रज्जूर्वीणाया अपप्रदेशे पृथक्पृथग्बध्नन्तीति।

९. सा वीणा दण्डसमस्तैस्तन्तुभिः शततन्त्री भवतीति।

१०. पर्णयुक्ता वेतसवृक्षशाखा वीणावादनार्थं कर्तव्या।

---

१ C om. वेष्टयन्ति। २ Partly om in A. ३ om in A. ४ C ०प्रदेशेन।
५ Both MSS रज्जु।

११. स्वयंनमीभूता शरस्येषीका वीणावादनार्थं कर्तव्या।

१२. शाखानारोमशलक्षणाश्चतुःप्रकारा वीणाः पत्न्यः कुर्वन्तीति।

१३. पिच्छोराशंज्ञकां वीणामुपमुखेन मुखसमीपेन वादयेत्। पत्नी पूर्वक्लृप्तत्वात्[1]।

१४. या पत्नी काण्डवीणां वादयेत्सा वादनेन वेतसशाखया वादयेदित्यर्थः।

१५. तां काण्डवीणां घाटरीरित्याचक्षते वीणावादिनः।

१६. या घाटरीसंज्ञका वीणा मृदुं शब्दं वादयति सा अरातिरूपा स्यात्। वैरीरूपा स्यात्।

१७. अरातिरूपत्वाद्द्विषां जनयित्री भवति।

---

४.

१. हननं वादनं तेन सहितं दुन्दुभिचतुष्टयमध्वर्युः समीपे करोति।

२. चतुर्णां दुन्दुभीनां मध्ये द्वौ दुन्दुभी सहननौ सवादनौ पूर्वद्वारबाह्वे[2] अभितः सदसो बहिरासञ्जयति। आबध्नाति।

३. चतुर्णां परिशिष्टौ द्वौ दुन्दुभी सहननौ सवादनावपरद्वारबाह्वे[3] अभितः सदसो अन्तर्मध्ये [4]आसञ्जयति आबध्नाति।

---

१ C ॰क्लृप्तत्वात्। २ C पूर्वद्वारद्वार्येषे द्वारबाह्वे। ३ C अपरद्वार्यौ द्वारबाह्वे अभित। ४ C in॰. अभित.।

४. यदि दुन्दुभयः षट् स्युस्तथा सत्येकं दुन्दुभिं सदसो दक्षिणार्धे मैत्रावरुणधिष्ण्यं दक्षिणेनासञ्जयति। एकं सदस उत्तरार्धेऽच्छावाकधिष्ण्यमुत्तरेणासञ्जयति।

५. मुञ्जकुशानां मिश्रितानामध्वर्योरर्थे कूर्चमासनविशेषं संस्कुर्वन्ति स्वपुरुषाः।

६. सदद्युक्थं शंसते होत्रे ऽध्वर्युस्तस्मिन्नेव तिष्ठन्नेव प्रत्यागृणाति। अथाध्वर्युर्माहेन्द्रं ग्रहं गृहीत्वेत्यग्रेण होतुर्धिष्ण्यं प्राङुपविशतीति (१७. ११. २)। तत्रोपवेशनमाचमाहावोत्तरकालं कूर्चे तिष्ठन्नेव प्रतिगृणाति।

७. अथ होतुराध्वर्युभ्य इतरे गृहपतिप्रभृतयो दीक्षिताः प्रतिपुरुषं चतुर्दशापि दीक्षिताश्चतुर्दश वृषीः कुशमयानासनविशेषान्कुर्वते। दीक्षितानां वृषीकरणमत्र विहितमपि प्रातरनुवाकोत्तरकाल एव युज्यते। कतिपयान् कुशभारान् निदधति प्रातर्वृषीभ्य इति (१७. ६. ६) सूत्रारम्भात्।

८. ता वृषीस्तादृशीः कुर्वते यादृश्यो भूमावुच्छ्रिताः प्रादेशप्रमाणा भवेयुः। दीक्षितानां[१] वृषीकरणप्रसङ्गेनान्यदपि करणीयपदार्थजातमुच्यते।

गणनाथ प्रणम्यादौ सुखेनोहादिसिद्धये।

सात्त्विकद्वादशाहस्य पद्धतिः क्रियते मया॥

तत्र सात्त्विकस्य द्वादशाहस्य समाम्नातस्य साग्निचित्यत्वात् प्रथममग्निचयनधर्माः प्रदर्श्यन्ते। सत्रं चिकीर्षवः सर्वे यजमाना आहि-

१ C •नां।

तामेव इष्टप्रथमयज्ञा दीक्षिता गृहपतिसप्तदशाः शुक्लपक्षे पुष्ये मघये पुण्याहे पूर्वाह्णे मातृयागपूर्वकमाभ्युदयिकं श्राद्धं विधायैतां संनिवपनीयामिष्टिं तन्त्रेण इति श्रुतौ बहुवचनात्पृथक्पृथक् संनिवपनीयेष्टिं करिष्यमाणाः संनिवपनीयेष्ट्यर्थं गार्हपत्यादाहवनीयमुद्धरामि संनिवपनीयेष्ट्यर्थं गार्हपत्याद्दक्षिणाग्निमाहरामीत्येवमग्नी[1] विहृत्याग्न्यन्वाधानं कुर्वते। ततो ऽपराह्णे सर्वे यजमानाः पत्न्यश्च यथाकालमयं मत्यमश्नीयुः। रात्रौ भूमौ शेरते। प्रातः संनिवपनीयेष्टिः। तत्र विशेषः। यजमानो ब्रह्मवरणादि सर्वं प्रकृतिवत्करोति। ब्रह्मा चाहं भूपतिरित्यादि आमन्त्रितो होता प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणाद्द्विद्वारं यथासंचरं[2] प्रतिपद्य बर्हिराक्रमणादि करोति। सप्तदश सामिधेन्यः। आवाहने अग्निमग्न आवह सोममावह। अग्निं ब्रह्मण्वन्तमावह। अग्निं क्षत्रवन्तमावह। अग्निं क्षत्रभृतमावह। देवां इत्यादि। इदमहं सप्तदशेन वज्रेण होतृयजमानयोः। उत्तमे प्रयाजे ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं ब्रह्मण्वन्तं स्वाहाग्निं क्षत्रवन्तं स्वाहाग्निं क्षत्रभृतं स्वाहा देवा इत्यादि। वार्त्रघ्नावाज्यभागौ। प्रधानस्य पुरोनुवाक्या। ब्रह्म प्रजावदाभर० दिवो३ ॐ भूर्भुवः ये३ यजामहे ऽग्निं ब्रह्मण्वन्तं ब्रह्म च ते जातवेदो नमश्च० अप्रयुच्छा३न्नौ३षट् ओजः सहः सह ओजः स्वः। द्वितीयस्य प्रधानस्य[3] पुरोनुवाक्या। अर्चन्तस्त्वा हवामहे० तयो३म् भूर्भुवः ये३ ० हे ऽग्निं क्षत्रवन्तमस्याकमग्ने अध्वरं जुषस्व० पाही वौ३षट् ओजः सहः। तृतीयस्य प्रधा-

१ C °ग्नीन्। २ C चरंति ३ A om.

नस्य[1] पुरोनुवाक्या। अग्ने घृतेन जागृवे० ममोऽम् भूर्भुवः ये ०ग्निं चत्रभृतं सदस्व हव्या समिधो[2] दिदीहि० दीदिहि नाऽ वौषट् ओजः सहः। नित्यः स्विष्टकृत्पिमीहि देवान्० इतोऽ भूर्भुवः। ये० ऽ ऽग्निं स्विष्टकृतमयाडग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाडग्नेर्ब्रह्मण्वतः प्रिया धामान्ययाडग्नेः चत्रवतः प्रिया धामान्ययाडग्नेः चत्रभृतः प्रिया धामान्ययाट् देवानामित्यादि। अग्ने यद्येति याज्या। अन्वाहार्यो दक्षिणा। सूक्तवाके। अग्निर्हविरजुषत सोमो हविरजुषत० अग्निर्ब्रह्मण्वान्हवि० अग्निः चत्रवान्हविः अग्निः चत्रभृद्धविः देवा आज्यपा इत्यादि शिष्टं[3] प्रकृतिवत्। अन्य-द्भृता चेयमिष्टिः। अग्निं तु चेष्यमाणस्यादीक्षितस्येष्टिरित्युक्तत्वात्। कर्तृविशेषाश्रामविशेषवती चेयमिष्टिः। तथा हि बहूनां चेष्यमाणानां संनिवपनीयेकस्योखासंभरणीया। अग्निं चिष्यत एकस्य यजमानस्य या इष्टिरुक्ता सा बहूनां सत्रिणां चिन्वतां संनिवपनीयाख्या भवति। एकस्य चिष्यत उखासंभरणीयाख्या भवति। यौगिकी चेयं संज्ञा। संन्युप्यन्ते ऽग्नयो ऽनयेति संनिवपनीया। उखा संभ्रियते ऽनयेत्युखासंभरणीया। संनिवपनमग्न्योरेकत्रकरणम्। कुतः। श्रुतेः। ते वै दीक्षिष्यमाणा अग्नीन् संनिवपन्त[4] एकधैव सहस्व[5] वीर्य-मात्मन् दधते ऽथैतां संनिवपनीयामिष्टिं तन्वत इति (कौ० १८.१)। तत्संनिवपनप्रयोजनेयमिष्टिः। अतश्च संनिवपनात्प्रागेव कर्तव्या। संनिवपनं प्रयोजनं यस्याः सा संनिवपनप्रयोजना। संनिवपनार्थं

१ A om. २ C समिधो दिदीहि दीनाऽ वौ०। ३ C om. शिष्टं। ४ A संनिवपन्त। ५ A सहस्वं।

क्रियते। यदर्थं क्रियते तस्य तस्मात्पूर्वभाव एव युज्यत इति युक्तः संनिवपनादिष्टेः पूर्वभावः। तथा च प्राजापत्यश्च पशुबन्धो वायव्यो वेत्येतस्मिन् सूत्रे सूत्रभाष्यकारेण व्याख्यातम्। आध्वर्यवाधीतेन क्रमेण प्राजापत्यः पशुबन्धो भवतीति। अध्वर्यूणामयं क्रमः। प्रथममग्निसंनिवापः ततः प्राजापत्यः पशुरिति। अस्माकं तु अयं क्रमः। संनिवपनीया संनिवपनं प्राजापत्यः पशुरिति तत्र संनिवपनीया पूर्वमुक्ता संनिवपनमिदानीमुच्यते। स्वशाखायां तु,ते वै दीक्षिष्यमाणा अग्नीन्संनिवपन्त इति सामान्येन संनिवाप उक्तः। कथं संनिवपन्तीति शाखान्तरादुच्यते। तत्र प्रथमं संवादः गृहपतिपुरःसरा[१] ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृपोतृप्रतिहर्त्रच्छावाकनेष्ट्राग्नीध्रसुब्रह्मण्यग्रावस्तुदुन्नेतारो गृहपत्यरणी समुपस्पृश्येमं मन्त्रं पठन्ति। य इतो ऽग्निर्जेनिष्यते स नः सह यदनेन यज्ञेन जेष्यामो ऽनेन पशुबन्धेन तस्य सह नः साधुकृत्या नाना पापकृत्या य एव पापं करवत्तस्यैव तत्। इति गृहपतिर्भूसंस्कारपूर्वकं समारोपार्थमाहवनीयमुद्धृत्य स्वकीयारणी आदाय तयोः स्वाग्नी प्रथमं समारोहयते। ततो ब्रह्मादय उन्नेतृपर्यन्ताः गृहपतिगार्हपत्यमुत्तरेण षोडशाग्न्यायतनानि गोमयोपलिप्तानि कृत्वा तेषु पूर्वोक्तेन क्रमेण यथास्वमग्नीन्स्थापयन्ति। भूसंस्कारपूर्वकं समारोपार्थमाहवनीयमुद्धरन्ति च। द्वितीयो ब्रह्मा गृहपत्यरणी आदाय तयोः स्वावग्नी समारोहयते। तत उद्गाता गृहपत्यरणी आदाय तयोः स्वावग्नी समारोहयते। ततो होता गृह-

---

१ A •सराद्• C •सरा।

पत्यरणी आदाय तयोः स्वाग्नी समारोहयते। ततो ऽध्वर्युर्गृहप त्यरणी आदाय तयोः स्वाग्नी समारोहयते। ततो ब्राह्मणाच्छंसी गृहपत्यरणी आदाय तयोः स्वाग्नी समारोहयते। तत. प्रस्तोता गृहपत्यरणी आदाय तयोः स्वाग्नी समारोहयते। ततो मैत्रावरुणो गृहपत्यरणी आदाय ततोः स्वाग्नी समारोहयते। ततः प्रतिप्रस्थाता गृहपत्यरणी आदाय तयोः स्वाग्नी समारोहयते। ततः पोता गृहपत्यरणी आदाय तयोः स्वाग्नी समारोहयते। ततः प्रतिहर्ता गृहपत्यरणी आदाय तयोः स्वाग्नी समारोहयते। ततो ऽच्छावाको गृहपत्यरणी आदाय तयोः स्वाग्नी समारोहयते। ततो नेष्टा गृहपत्यरणी आदाय तयोः स्वाग्नी समारोहयते। ततो ऽग्नीद्गृहपत्यरणी आदाय तयोः स्वाग्नी समारोहयते। ततः सुब्रह्मण्यो गृहपत्यरणी आदाय तयोः स्वाग्नी समारोहयते। ततो ग्रावस्तुद्गृहपत्यरणी आदाय तयोः स्वाग्नी समारोहयते। तत उन्नेता गृहपत्यरणी आदाय तयोः स्वाग्नी समारोहयते। एवं गृहपतिप्रमुखाः सर्वे सत्रिणो गृहपत्यरण्योरग्नीन्समारोह्य निर्मथ्य अनूबन्ध्यासमाप्तिपर्यन्तं तं सत्रिसाधारणैकाग्निं मथित्वा तत्र प्राजापत्येन पशुना यजन्ते। दीक्षाकाले यथासंप्रकीर्णमग्नि[1] समारोपः संवादसमारोपमन्यनादिवचनाद्भविष्यति। प्रजापत्यपशौ विशेषः[2]। इष्टकापशव्यं गार्हपत्यादाहवनीयमुद्धरामि इष्टकापशव्यं गार्हपत्याद्दक्षिणाग्निमुद्धरामीत्येवमग्नी[3] विहृत्याग्न्यन्वाधानं मुख्यः (१३.१४.४)

---

१ C °सप्रकीर्णमग्नि समारोपस°। २ C om प्रजा° शेष। ३ A C om माद्धरामि।

कुर्यात्परार्थानीति गृहपतिरेवाग्न्यन्वाधानं कुरुते। परार्थात्मार्थभेदिनां पदार्थानां सुखावबोधनार्थं स्वयंकृताः श्लोकाः प्रदर्श्यन्ते।

आज्यावेक्षणं सर्वाः कुर्युरेक एव तु[1]।
अन्वारब्धो गृहपतिः कुरुते ध्रुवा असदन्[2] ॥१॥
कुर्वीरन्पाहि मां सर्वे भिन्नकालतयाग्निमे[3]।
दृष्टिरसीति सर्वेषामग्ने व्रतपते तथा ॥२॥
अग्ने वायो ऽसुपदस्यमेतत्सर्वं सहैव तु।
मयीदं ब्रह्म पिन्वस्व कुर्वीरन्सर्व एव तु ॥३॥
अत्र पितरो ऽमीमदन्नेको मुख्यः परार्थतः।
कुर्युः स्रुग्व्यूहनं सर्वे यं वा गृहपतिस्तथा ॥४॥
एक आप्यायन्तां[4] कुर्यात्समिष्टे ऽन्वारभेत च।
सदसि सन्न इत्यादि कुर्युः सर्वे सहैव तु ॥५॥
पञ्च श्लोका मयाख्याता सात्त्विके द्वादशाहके।
पदार्थानां विवेकाय परार्थात्मार्थभेदिनाम् ॥६॥

तेषु *ब्रह्मवरणाभावः। बृहस्पतिर्ब्रह्मा इत्यत्र द्वियजमानके* यज्ञपती बहुयजमानके यज्ञपतीनित्यूहः। अग्निप्रणयनं। ततो इन्धे-नेत्यादिना सर्वाः पत्न्यः सहैवाज्यावेक्षणं कुर्वते। ततस्तेजो ऽसि शुक्रमित्यादिना गृहपतिर्वेधामासादितमाज्यमवेक्षते। ततो ध्रुवा असदन्नित्यादिना गृहपतिराज्यान्यभिमृशति। द्वियजमानके यज्ञ-

[1] A सर्वस्यतिमद्दविरन्वारम्भे जाते इत्यर्थं सकर्त्वं। [2] C in marg. सर्वोऽभिमृशेनन। [3] C (orig.) भिन्नकाले मयाग्निमे। [4] C °यन्तां।

पत्नी बहुयजमानके यज्ञपतीनित्यूहः। ततो यूपाञ्जनं। अग्निमन्थनम्। ततो प्रतपहरणम्। गृहपतिप्रमुखाः सर्वे सुचिषो वृष्टिरसीत्यादिनाचम्याग्नौ प्रतपत इत्यादिनाहवनीये समिधमादधते। सप्तदश सामिधेन्यः। एकविंशतिर्वा। एकविंशतिपक्षे समिध्यमानो अध्वरे समिद्धो अग्न आहुतेत्येतयोर्मध्ये यजूंषि[1] समाम्नाय इति षट् दध्यात्। [2]इदमहं सप्तदशेन वज्रेण इदमहमेकविंशेन वज्रेणेति वा। सर्वेषां यजमानानां होतुश्च प्रत्यभिव्याहरणे विशेषः। गृहपत्यार्षेयाण्यभिव्याहृत्याथ ब्रह्मणः। अथोद्गातुः। अथ होतुः। अथाध्वर्योः। अथ ब्राह्मणाच्छंसिनः। अथ प्रस्तोतुः। अथ प्रशास्तुः। अथ प्रतिप्रस्थातुः। अथ पोतुः। अथ प्रतिहर्तुः। अथाच्छावाकस्य। अथ नेष्टुः। अथाग्नीध्रस्य। अथ सुब्रह्मण्यस्य। अथ ग्रावस्तुतः। अथोन्नेतुः। एवं सर्वेषां पृथक्पृथक् आर्षेयाण्यभिव्याहृत्य देवेद्ध इत्यादि। आवाहने द्वियजमानके। आवह देवान्यजमानाभ्यां। बहुयजमानके। आवह देवान्यजमानेभ्यः। अग्निमग्न आवह। सोममावह। प्रजापतिं उपांशु आवह। वनस्पतिमावह। देवाँ आज्यपानित्यादि। सुगादापने ऊहः। द्वियजमानके अग्निर्होता वेत्वग्निर्होत्रं वेतु प्रावित्रं साधु वां यजमानौ देवता। यावग्निं होतारमवृषाथां। हुतवतीमित्यादि। बहुयजमानके। अग्निर्होता वेत्वग्नि-

---

१ C मध्ये समाम्नाय। २ The text from इदमहं as far as प्रहृतमनुहराणि is based upon the Msc. Chambers only It was not orginally intended to publish this Paddhati When the editor resolved' for the sake of completeness upon adding this part of the Comm. also, the Alwar Msc had already gone back to India.

होत्रं वेतु प्राविचं साधु वो यजमाना देवता। ये ऽग्निं होतारमवृङ्क्त। घृतवतीमित्यादि। एकादशाभिः प्रयाजयाज्याः। ऊर्ध्वा अस्य समिधो भवन्तीति द्वादशाभियो वा यजुर्वेदप्रसिद्धाः। एकादशान्ते पर्यग्नय इत्यादि० दैव्याः शमितार उत च० मेधपतये मेध। प्रास्मा इत्यादि। स्रुगादापनं पूर्ववत्। ततो वपायां विशेषः। ध्रुवा असदन्नित्यभिमर्शनं० यज्ञपतिशब्दस्योहः पूर्ववत्। वृधन्वन्तावाज्यभागौ सप्रैषौ। मैत्रावरुणस्य सर्वमग्नीषोमीयवत्। विशेषस्तु वपायाः पुरोनुवाक्याः। हिरण्यगर्भः समवर्तताग्रे० विधेम। ओम्। होता यक्षत्प्रजापतिं उपांशु छागस्य वपाया मेदसो जुषतां हविर्होतर्यज। ये२ ० यस्येमे हिमवन्तो महित्वा० विधेम वौ २ षट् स्वैः। पशुपुरोडाशे ध्रुवा असदन्नित्यभिमर्शनं। पशुपुरोडाशस्य पुरोनुवाक्या। य आत्मदा बलदा यस्य० धेम। ओम्। होता यक्षत्प्रजापतिमुपांशु पुरोलाशस्य जुषतां हविर्होतर्यज। ये२ यजामहे येन द्यौरुग्रा पृथिवी च दृल्हा० धेम। वौ २ षट्। इलोपह्वाने सर्वेषां मयीदमिति जपः। होतुस्तु उपहूतो ऽयं यजमान इत्यतः प्राङ्मयीदमिति जपः। द्वियजमानके। उपहूताविमौ यजमानावुत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविरजुषन्तामिति तस्मिन्नुपहूतः। बहुयजमानके उपहूता इमे यजमाना उत्तरस्यां इत्यादि। अत्र केचिदूहान्तरं कुर्वते। तच्छाख्यविरुद्धत्वादस्माभिर्नाद्रियते। अथ पिन्वस्वेत्यादि सर्वे यजमाना बर्हिषदं पुरोलाशमभिमृशेयुः। अत्र पितर इति गृहपतिः कुर्यात्। अमीमदन्त इति च। हृदयादीनामासादनोत्तरकालं ध्रुवा अस-

इत्यादिनोहितयज्ञपतिशब्देन गृहपतिः सर्वाणि हृदयादी-न्यालभते। ततः सर्वे यजमानाः पाहि मां यज्ञन्यमिति मन्त्रेणा-त्मानमभिमृशेयुः। पशोः पुरोनुवाक्या। यः प्राणतो निमिषतो महित्वा॰ धेम। श्रोम्। होता यक्षत्प्रजापतिं उपांशु॰ छागस्य हविषः कद्देवं प्रजापतिः उपांशु॰ जुषतां हविर्होतर्यज। ये३॰ हे यं क्रन्दसी अवसा तस्तभाने ॰धेम उपांशु ॰वौषट्। देवेभ्यो वनस्पतेः पुरोनु॰ होता यक्षद्वनस्पतिं यत्र प्रजापतेः उपांशु छागस्य॰ यज। ये३॰ वनस्पते रशनया नियूयेत्यादिका याज्या। ततः सर्वे यजमानाः अग्ने वायो विद्युदिति ध्यानं कुर्वते। अनुप-दस्यमिति च॰ पिप्रीहि पु॰ होता यक्षदग्निं स्विष्टकृतम॰ सोमस्य प्रिया धामान्ययाट्॰ प्रजापतेः उपांशु छागस्य हवि॰ अग्ने यद्-द्येति याज्या इलायां पूर्ववत्। ब्रह्मणो देव सवितरित्यत्र द्वियज-मानके यज्ञपती बहुयजमानके यज्ञपतीनित्यूहः। देवी जोष्ट्री॰ वसु वार्याणि यजमानाभ्यां द्वियजमानके॰ यजमानेभ्य इति बहु-यजमानके। यूहनं सर्वे सह कुर्युः। अग्नये ऽन्वारभेयुर्मन्त्रं ब्रुवाणाः। प्रजापतेर्वनस्पतेरुज्जितिमिति प्रजापतिर्वनस्पतिस्तमित्यादि। द्विय-जमानके अग्निमद्य होतारमवृणीतामिमौ[1] यजमानौ पचन्तौ पक्तीः पचन्तौ पुरोडाशं बध्नन्तौ॰ प्रजापतये उपांशु॰ छागं। सूपस्था॰ ऽभवत्॰ प्रजापतये छागेन॰ नपादवृणीतामिमौ[2] यजमानौ बहुभ्य आ संगथेभ्यः (वा॰ सं॰ २१. ६०)। एष मे देवेषु॰ न्यद्-स्ताभ्यामा च शा॰ ब्रूहि। बहुयजमानके अग्निमद्य होतारम-

१ and २ C (in marg) च (after मौ)।

वृणीतेमे यजमानाः पचन्तः पक्तीः पचन्तः पुरोडाशं बध्नन्तः प्रजापतये उपांशु छागं। सूप० वत्० प्रजापतये० छागेन० नपाद्वृणीतेमे यजमाना बङ्भ्य आ संगयेभ्यः। एष मे देवेषु० न्यदुस्तान्येभ्य आ च शास्ता० ब्रूहि। सूक्तवाके। इदं द्यावापृथिवी० श्रोमन्वती वामस्मिन्यज्ञे यजमानौ द्यावापृथिवी स्तामिति। अग्निर्हवि० सोमो हवि० प्रजापति० उपांशु हवि० वनस्पतिर्हवि० देवा इत्यादि० देवंगमायामाशासाते इमौ यजमानौ। इयोर्नक्षत्रनामनी शर्मान्ते उच्चार्यावसानं। असुकशर्मा असुकशर्माणाविति। ततो इयोरपि द्वे व्यावहारिकनामनी शर्मान्ते उच्चार्य उत्तरां देवयज्यामाशासाते भूयो हविष्करणमाशासाते आयुराशासाते सुप्रजास्त्वमाशासाते दिव्यं धामाशासाते यदनेन हविषाशासाते तदश्यास्तां तदृध्यास्तां तदाभ्यां देवा रासन्ताम्० मानुषाः। उभे चैनौ[1] द्यावापृथिवी इत्यादि द्वियजमानके। बहुयजमानके श्रोमन्वती वो ऽस्मिन्यज्ञे यजमाना द्यावापृथिवी स्तां० अग्निर्हवि० सोमो हवि० प्रजापतिः उपांशु० हवि० वनस्पतिर्ह० देवा इत्यादि देवंगमायामाशासत इमे यजमानाः। गृहपत्यादीनां सप्तदशानां सप्तदश नक्षत्रनामानि शर्मान्तान्युच्चार्यावसानं। असुकशर्मा असुकशर्मा असुकशर्मा असुकशर्माण इति। ततस्तेषामेव सप्तदश व्यावहारिकनामानि शर्मान्तान्युच्चार्यासुकशर्मा असुकशर्मा असुकशर्मा असुकशर्माण उत्तरां देवयज्यामाशासते भूयो हविष्करणमाशासते सुप्रजास्त्वमाशासते दिव्यं धामाशासते यदनेन हविषाशासते तदशासुस्तदृध्यासुस्तदेभ्यो देवा

---

[1] C (orig) उभे च नो, in marg उभे चैनाविति वा चैनानिति वा।

रामन्तां॰ मानुषाः। उभे चैनान्[१] द्यावापृथिवी इत्यादि। ततः पत्नीसंयाजेषु गृहपतिः अनिष्टे गृहपतौ गार्हपत्ये स्रुवेण जुहोति। यं वां देवा इति। होतुर्हृदयशूलोपस्थानं। गृहपतिराप्यायतां ध्रुवा हविषा हुतेन ध्रुवामाप्याययति। गृहपतिरेव समिष्टयजुर्हूयमानमन्वारभते। पूर्णपात्राभिमर्शनादि प्राशनान्तं सर्वं सर्वे यजमानाः कुर्युः। प्राजापत्ये पशौ श्रिष्टमग्नीषोमीयवत्। तत उखासंभरणादियाजुर्वैदिककर्मणो ऽन्ते यथासंभकीर्णमग्नीनां समारोपः। ततः सर्वेषां मन्थनं। ततो दीक्षाकाले पुनर्गृहपत्यरण्योः संवदन्ते। य इतो ऽग्निर्जनिष्यते॰ य इतो ऽग्निर्जनिष्यते॰ पशुबन्धस्थाने अनेन सूक्तेनेति विकारः। ततः पुनः सप्तदशाग्न्यायतनानि गोमयेनोपलिप्तानि कृत्वा पूर्वं गृहपतिर्गार्हपत्यं स्थापयति। तदुत्तरेण पूर्वान्तेन ब्रह्मादयः स्वान्स्वानग्नीन् स्थापयन्ति ततो गृहपतिः प्रथमं भूमिसंस्कारपूर्वकमाहवनीयमुद्धृत्य स्वकीययोररण्योः स्वावग्नी समारोहयते। एवमितरे ब्रह्मादयो यथाक्रमं गृहपत्यरण्योः स्वौस्वावग्नी समारोहयन्ति। निर्मथ्याग्नी विहृत्य दैविकवरणं। तत्र गृहपतिश्चन्द्रमा[२] नो दैवो ब्रह्मा इति उपांशु त्वं मानुष इत्युच्चैरेवं कुर्यात्। तथा आदित्यो नो दैव उद्गाता त्वं मानुषः। अग्निर्नो दैवो होता त्वं मानुषः। वायुर्नो दैवो ऽध्वर्युस्त्वं मानुषः। प्रजा-

१ C (orig) उभे च नो; in marg. उभे चैनानिति वा। २ C in marg. चन्द्रमा नो दैवो ब्रह्मा। उपांशु। उच्चैस्त्व मानुष॰। आदित्यो नो दैव॰। अग्निर्नो दैव॰। वायुर्नो। दैवो प्रजापतिर्नो दैव॰। ऋतवो नो दैवा॰। द्वियजमानके बहुयजमानके गृहपति।

पतिर्नो देवः सदस्यः त्वं मानुषः। एतश्रो नो दैव्या होतारश्विनो यूयं मानुषाः। दैविकवरणानन्तरं पठितत्वाद्दैविकवरणाङ्गत्वात् सर्वे ऋता भर्गोभर्गो म इत्यादिकं मन्त्रं जपन्ति। ततो देवयजनजोषणं। ते पुरस्तादेव दीक्षाः प्रसवाञ्ककल्पयन्त इति श्रुतेः। प्रागेव दीक्षा-प्रसवकल्पनं। इष्टागनं। अप्सु दीक्षा। ततो दीक्षणीया। प्रथम-मग्न्यन्वाधानं। ब्रह्मा संस्कारादि करोति। पञ्चदश सामिधेन्यः। एत्यभिव्याहरणादि इष्टकापशौ व्याख्यातं। आवाहने। अग्निमग्न आवह। सोममावह। अग्नाविष्णू आवह। वैश्वानरमावह। आदि-त्यानावह। देवाँ इत्यादि। ये २ °हे स्वाहाग्निं स्वाहा सोमं स्वाहा-ग्नाविष्णू स्वाहा वैश्वानरं स्वाहा आदित्यान् स्वाहा देवा इत्यादि। वार्त्रघ्नावाज्यभागौ। प्रधानस्य पुरो° अग्नाविष्णू महि तत्° एतत् श्रोम् ये२ अग्नाविष्णू मयि धाम° एतत्। वौषट्। एतावानं वैश्वानर° मीमहे। श्रो। ये° वैश्वानरं नाभिं यज्ञानां° देवा२ वौ२षट्। त्यान् नु क्षत्रियाँ अव °हुये। श्रोम्। ये२° हे आदि-त्यान्धारयन्त आदित्यासो जगत्° एणानि। वौ२षट्। नित्यः स्विष्टकृत्। इलायां उपहूताविमौ यजमानौ द्वियजमानके बहु-यजमानके उपहूता इमे यजमाना इत्यस्य स्थाने अस्य यज्ञस्यागुर उदृचमशीयेति[1] तस्मिन्नुपहूताः। सूक्तवाके। [2]देवंगमायामाशासाते इमौ यजमानौ अस्य यज्ञस्यागुर उदृचमशीयेत्याशासाते[3] द्विय-जमानके। देवंगमायामाशासत इमे यजमाना अस्य यज्ञस्यागुर उदृ-

१ C (orig.) उदृचमशीयेति तस्मिन्नुपहूत in marg शिषीवही तस्मिन्नुपहूत...।
२ C adds in marg, यजमानौ याथार्थ्यवौ स्वाम्। ३ C in marg शिष...वौ।

चमसीयेत्याशासते बहुयजमानके। अन्यत्सर्वं पशुना व्याख्यातं। अध्वर्युमन्वारभ्योद्गमणानि जुह्वत गृहपतिप्रमुखा सर्वे यजमाना मनो मे मनसा दीक्षतामित्यादिभि पञ्चभिर्मन्त्रै पश्चाकृतीरनुमन्त्रयेरन। प्रायणीयेष्टि प्रकृतिवत्० क्रयश्च। आतिथ्यपि प्रकृतिवत्। सोमाप्यायने सुत्ये उदृचमश्नीयेति सुत्यादिले० सुत्या उदृचमश्नीयेति सुत्यावकृते। अग्नीषोमीयस्य पशुपुरोलाशमनु देवसूभ्यो हवींषि निर्वपन्ति। यजम्रेषाणि। आशुकानां सविते सत्यमसवायाशूनामग्नये गृहपतये श्यामाक सोमाय वनस्पतये नैवारो बृहस्पतये वाचस्पतये हायनानामिन्द्राय ज्येष्ठाय रुद्राय पशुपतये नाम्बो[१] मित्राय सत्याय वरुणाय धर्मपतये इत्यष्टौ हवींषि। आशुका पुनःप्ररूढा व्रीहय। आशव पञ्चयपाकिनो व्रीहय। उत्तरे चरव हायना रक्तशालय। स्वयजाता व्रीहयो नाम्बा[१]। तेषां याज्यापुरोनुवाक्या। आ विश्वदेवं स प्रसिचे० अग्निर्होता गृहपतिर्हव्यवालग्नि० त्वं च सोम नो वशो मह्या देवानां पदवी कवीना० बृहस्पते प्रथम वाचो अग्र इषैरिव सखिभिर्वावदद्भि० इन्द्र वय महाधन उरु न० यथा नो अदिति करत् उप ते स्तोमान्पशुपा इवाकर० मित्रस्य चर्षणीधृतो महा आदित्य० इम मे वरुण श्रुधी हव यल्कि चेद वरुण दैव्ये जने। अग्नीषोमीये सर्वमिष्टकापशुवत्। इत्योपक्रान्तसूक्तवाकयोर्दीक्षणीयावत्। सवाजपेयदादशाहकरणकाले पदार्थसुखावबोधार्थं इत्तां पद्धतिं प्रदर्श्य प्रकृतमनुसरामि।

१ the first letter is indist nctly wr tten

८. अथ पूर्णकुम्भा अपो बिभ्रत्यो मार्जालीयं परियन्तीत्यये वक्ष्यते। ताश्च दास्यो भवन्तीति कात्यायने। मार्जालीयं दास्यः परियन्ति। ताभ्यस्तदर्थं प्रत्येकं यावत्यस्ता भवन्ति तावत्संख्याकान् नवान् नूतनान् कलशान् घटान् उपकल्पयन्ति उपस्थापयन्ति[१] यजमानाधिकारिणः।

## ५.

१. विततो विस्तीर्णो वरूथः संनाहो यस्मिन् तं विततवरूथमश्वरथमश्वयुक्तं रथमुपकल्पयन्ति संनिधौ कुर्वन्ति यजमानपुरुषाः।

२. धनुः प्रसिद्धम्। इषवश्च। तानुपकल्पयन्तीति।

३. उपकल्पयन्तीति शेषः। राजानं देशाधिपतिं। राजमात्रं क्षत्रियमात्रम्[२]। तं कीदृशमिति। आजेरस्तारं। आजिः संग्रामस्तत्रेषुव्यसनसमर्थम्। व्यत्ययो बहुलमित्यनेनाजेरिति सप्तम्यर्थे षष्ठी।

४. राज्ञो ऽलाभे राजमात्रस्यालाभे वैश्यो ऽन्यो वा य एतत्कर्म कर्तुं जानाति स एव कुर्यात्।

५. आग्नीध्रायतनादुत्तरस्मिन् संनिहितप्रदेशे प्राच्यौ प्रक्के प्राग्दिङ्गमनशीले स्थूणे शाखे विमिन्वन्ति निखनन्ति। किमर्थम्। आखणाय[३] वेधाय।

६. तदाखणं चर्मणाभिवितन्वन्ति अभिविस्तृतं कुर्वन्तीत्यर्थः। तत्कीदृशं कुर्वन्तीत्यपेक्षायां विशेषणत्वेनोच्यते। इलसंवर्तं वा। वेती-

---

१ C om २ A om ३ MSS खाखखाय।

ष्टाविकल्पः। दला भूमिस्तया सर्वतं तिरोहितं यथा स्यात् तथा कुर्वन्ति। स्थूणयोरन्तराले किंचित्खनित्वा भूमिदलग्रमभिवितनुयुः। दलाशब्दस्य ड्यापो संज्ञाछन्दसोर्बहुलमिति (६. ३. ६३) ह्रस्वः। अथ वोत्करमुच्छ्रितं स्थूणयोरन्तराले भूमेरूर्ध्वमभिविततं कुर्वन्तीति। एतद्विशेषणमर्थान्तरेणापि व्याख्यातुं शक्यते[१]। कथम्। उद्गतं करात्[२] हस्तप्रमाणादूर्ध्वं गतमित्यर्थः। स्थूणयोरन्तराले भूमेः सकाशात् हस्तमात्रं शङ्क्वोर्ध्वं चर्मणाभिनिविद्धं[३] कुर्वन्तीति। उत्करमिति कुगतिप्रादय इति (२. २. १८) समासः। कात्यायने तु उत्तरेण चात्वालं वशाचर्म कटे विशाख्यां वास्तीर्णं वोच्छ्रितं वा विध्यत्यनिष्पत्तमिति (१३. ३. १३) वेध्यस्थानान्तरमस्ति तेषां तत्रैवास्तु। अस्माकं तु स्थानस्य कण्ठोक्तत्वादाग्नीध्रमुत्तरेणैव वेधकरणं युज्यते।

७. राजा वा राजमात्रो वा एतमाखण्ड[४] विध्यतीत्यग्रे (१७. १५. ४) वक्ष्यते। तत्कथं विध्यतीत्यपेक्षित उच्यते। तदाखण्डम्। वेध्यं सपत्त्रेण शरेण नातिविध्यति। पत्त्रपर्यन्तं निर्गमयतीत्यर्थः।

८. आग्नीध्रागारस्य करणमन्तर्वेद्यर्धमिति कात्यायनवचनादर्धं बहिर्वेदि भवत्यर्धमन्तर्वेदीति तस्मादाग्नीध्रागारस्य जघनप्रदेशे वेदेर्बहिःप्रदेशे अवटं खनन्ति।

९. ऐन्द्रय ऋषभः प्राजापत्यश्चाश्च उपालम्भ्यावित्यग्रे (१७. ७. ८) वक्ष्यते। तमवटमेतस्य ऋषभस्य चर्मणा चर्माद्युत्तरलोमानि

---

१ C व्याख्यायते। कर्तुं शक्यते। २ A उद्गातं करात् C उद्गतम् तं करात्।
३ C चर्मणाभिविद्धं। ४ MSS ०ण्ड०।

प्राग्ग्रीवाणीत्युक्तत्वात् प्राचीनग्रीवेण वोदीचीनग्रीवेण वा उपरिलोम्ना चर्ममयैर्दारकैरभिघ्नन्ति ।

१०. आहन्ति दुन्दुभिमित्यग्रे (१७. १४. ११) वक्ष्यते । तस्मिंकाले तं भूमिदुन्दुभिं तथैव ऋषभस्य उपालम्भ्यस्य लाङ्गूलेनाघ्नन्ति । लाङ्गूलं पुच्छं तेन वादयन्ति ।

---

## ६.

१. अथानन्तरं शूद्रजातिः स्त्री आर्यजातिः पुरुषः । ईदृग्लक्षणौ स्त्रीपुमांसौ । षण्ढः प्रजननासमर्थः । खलतिः खल्वाटः । ईदृग्लक्षणं पुरुषद्वयं उपकल्पयन्ति । संनिधौ कुर्वन्ति दीक्षितपुरुषाः । षण्ढश्च खलतिश्च षण्ढखलति[१] । सर्वो द्वन्द्वो विभाषा एकवद्भवतीत्येकवद्भावः । स नपुंसकमिति (२. ४. १७) नपुंसकत्वाद्ध्रस्वता षण्ढखलति ।

२. एतस्मिन्समुपक्रान्ते महाव्रतसामग्र्यां तदेतद्यत्किंचिदाक्षिप्यते तत्सर्वं पुराणं जीर्णमुत्स्रष्टव्यं न कर्तव्यं वचनात् ।

३. दशमे ऽहनि पत्नीसंयाजान्संस्थाप्य सदः हविर्धाने च समूहन्ति संमार्जयन्ति ।

४. आग्नीध्रागारं पत्नीनां शालां च समूहन्ति मार्जयन्ति । विभाषा सेनासुराछायाशालानिशानामिति (२. ४. २५) शालाशब्दान्तस्य[२] तत्पुरुषस्य नपुंसकता । नपुंसकत्वाद्ध्रस्वो नपुंसके प्रातिपदिकस्येति (१. २ ४७) प्रातिपदिकस्य ह्रस्वः ।

---

१ A षण्ढखह्लति C षण्ढखल्लतिश्च षण्ढखल्लति । २ C ins. तस्य ।

५ अथ अनन्तरमेव नवैर्नूतनै कुशैर्बर्हिर्भिर्वक्ष्य घन सदसि हविर्धानयोराग्नीध्रे पत्नीशालाया च धिष्ण्येष्वपि च [1]महावेदे प्रदेशेषु स्तरण कुर्वन्ति अध्वर्य्वादय ।

६ स्तरणवर्हिर्भ्य कतिपयान् कियत कुशभारान् अपहृत्य प्रातर्वृसीकरणार्थं निदधति कुत्रचित्प्रदेशे स्थापयन्ति । वृसीशब्देन दर्भमयो वर्तुलाकार आसनविशेषो ऽभिधीयते ।

---

७.

१ अथानन्तरमध्वर्यवो महारात्रे महाव्रतार्थं प्रातरनुवाकमुपाकुर्वन्ति देवेभ्य प्रातर्यावभ्यो ऽनुब्रूहीत्यनेन प्रैषेण ।

२ अनूक्त प्रातरनुवाको यथा परिमहस्र सहस्रपरिमितं प्रातरनुवाकमनुब्रूयात् ।

३ सर्वमह पञ्चविंशस्तोमक भवतीति ।

४ माहेन्द्रस्तोत्रे राजन साम भवतीति ।

५ अग्निष्टोमसस्थमेतदहर्भवतीति ।

६ अथ एते स्तोमा राजनपृष्ठस्य परिष्टवनार्थं भवन्ति । एते के । त्रिवृत्पञ्चदश सप्तदश एकविंश इति ।

७ ऐन्द्राग्न सवनीयो ऽस्वहमिति कात्यायनवचनादैन्द्राग्नो वा । [2]ऐकादशिनाना वा य कश्चिदेक [3] सवनीयो भवति ।

८ सवनीयस्य पशोरेसावुपालम्भ्यो भवत ।

---

१ C, s वदे and o: पत्नी च। २ A C दशा०। ३ A in दवेद।

९. उपालम्भ्ययोरैन्द्र उच्चैर्भवतीति ।

१०. उपालम्भ्योः प्राजापत्य उपांशु भवतीति ।

११. वपामार्जनान्तं पशुकर्म कृत्वा आक्रमणात्तदेतत्प्रेङ्खमिश्रं प्रेङ्खबन्धनार्थं यत्किंचिद्रज्ज्वादि तत्सहितं बहिर्वेदि वेदेर्बहिःप्रदेशे[१] नदीतडागादौ प्रक्षाल्य अथवा चात्वालात्पुरस्तादभ्युद्धृतैर्जलैः[२] प्रक्षाल्यान्तरेण चात्वालोत्करौ तीर्थेन प्रपद्योत्तरेणाग्नीध्रीयं धिष्ण्यं पर्यावृत्य पूर्वया द्वारा सदः प्रहृत्य [३]होतुर्धिष्ण्यस्योत्तरतःपुरस्तात्प्रागग्रं प्रेङ्खफलकं विशाखौ वंश रज्जुं चोपस्थापयन्ति होत्रादयः ।

१२. प्रशास्त्रादीनां यस्ययस्य हस्तादि वेदेर्बहिर्भवति[४] तदप्येवमेव प्रक्षाल्य यथा संचरः संप्रसर्पणे भवति उत्तरेणाग्नीध्रीयं धिष्ण्यं गच्छन्ति ये प्रत्यञ्चो धिष्ण्यानतिक्रामन्तीत्यनया व्यवस्थया (६. १२. १२) यावद्गृहपती एकाहे सदसश्च दक्षिणेनाग्नीध्रीयं धिष्ण्यं गत्वा प्रशास्त्रादयो ऽच्छावाकपर्यन्ता धिष्ण्यवन्तो यथोक्तेन संचरेणाग्नीध्रं प्रविश्योत्तरेणाग्नीध्रीयं धिष्ण्यं हृत्वा पूर्वया द्वारा सदः प्रविश्य धिष्ण्यानग्रेण हृत्वाच्छावाकधिष्ण्यमुत्तरेण हृत्वा [स्वस्य स्वस्य धिष्ण्यस्य पश्चादानीय उत्तरतो धिष्ण्यं][५] तत्रतत्र स्थापयन्ति । अच्छावाकस्त्वपरया द्वारा सदः प्रहृत्य उत्तरेण धिष्ण्यं स्थापयति ।

१३. [६]स्वमतस्थापनार्थं परमतं दर्शयति । तस्य महाव्रतस्य पैङ्ग्यशाम्कम्हङ्गारयोर्मतेन चैष्टुभं *प्रात सवनं स्यादिति ।*

---

१ C ०देशेन । २ A ०भ्युद० । ३ C om उत्तरत । ४ A वृक्षादेर्व० । ५ C om । ६ A Om

## ८.

१. यदुक्तं तस्य त्रैष्टुभं प्रातःसवनं स्यादिति तदनेन विरुध्यते। छत्त्रिन्यायात् । तस्य विशो विशो वो अतिथिमिति द्वादशर्चमाज्यं द्वादश वै मासाः संवत्सरः संवत्सरस्यैवाप्त्यै तस्मिन्नेते द्वे छन्दसी भवतो गायत्र्यश्चानुष्टुभश्चेति श्रुतेः ।

२. तस्य विशो विशो वो अतिथिमित्येतस्य द्वादश ऋचः अर्धर्चावसानाः शस्त्वाग्निं नरो दीधितिभिररण्योरित्येतत्सूक्तमाद्याव-रहितं शंसति । अग्निं नरो दीधितिभिररण्योरित्येतत्पञ्चविंशत्यृच-मुपसंशंसति । तस्मिन्नेते द्वे छन्दसी भवतो विराजश्च त्रिष्टुभश्चेति श्रुतेः ।

३. तदग्निं नर इत्येतदादिष्टशस्त्रम् । आदिष्टं कथितं शस्त्रं शंसनधर्मो यस्य । अर्धर्चशो वा प्रातःसवनमित्येतस्मा भूदित्येवमर्थं सूत्रम् । विराजो ऽर्धर्चशः शस्त्वा त्रिष्टुभः पच्छ इति ।

४. तस्य त्रैष्टुभं प्रातःसवनं स्यादित्येतस्मात्सूत्रान्मण्डूकप्लुतिन्या-येन तस्येत्येतत्पदमनुवर्तते । तस्य महाव्रतस्य त्रैष्टुभः प्रउगो भवतीति।

५. [1]त्रैष्टुभं प्रउगस्येत्यर्थः ।

६. कुविदङ्गेत्येतस्मादुत्तरं यावत्तर इति ।

७. विषुवति मध्यमाच्छन्दोमात्त्रीणि तृचानि प्रथमे चोत्तमं च (११. १२. १३) प्रथमात्त्रीणीति । अतश्चोर्दां चतुर्ऋचेण सुप्र-तीकमित्येतद्भवति ।

---

१ A त्रैष्टुभस्य प्रउग इत्यर्थः C त्रैष्टुभः प्रउगस्येत्यर्थः । cf १० ८ ६ Comm

८. एष वा उ कर्दास्त्रैष्टुभस्तृचक्लृप्तो वामदेव्यः प्रउग इति श्रुतेः।

९. त्रैष्टुभं[1] प्रउगस्येति संबध्यते।

१०. पूर्ववद्व्याख्या।

११. पूर्वाणि त्रीणि[2] तृचानि वासिष्ठानि। इदमपि वासिष्ठम्। तथापि वामदेव्यः प्रउग इत्युच्यते छत्त्रिन्यायेन।

१२. स त्रैष्टुभः प्रउगस्तृचक्लृप्तः। क्लृप्तानि तृचानि यस्य। यद्यपि निष्ठान्तस्य पूर्वनिपातः प्राप्नोति तथापि[3] वाहिताग्न्यादिषु पूर्वनिपातबाधः (२. २. ३७)।

१३. पङ्क्तिस्त्रिष्टुब्जगतीनामिति त्रिष्टुभां[4] पङ्क्तःशंसने ऽपि प्राप्ते वचनमर्थवंशो वा प्रातःसवनमित्येतस्य बाधनार्थम्।

१४. वाशब्दो ऽवधारणार्थः। ऐकाहिकमेव प्रातःसवनं स्यादित्यर्थः। तदाहुर्नं त्रैष्टुभं प्रातःसवनं स्यान्मोहयति क्लृप्तच्छन्दसो यज्ञमुखमैकाहिकमेव स्यादिति श्रुतेः।

१५. स्वमतपरमतभेदेन प्रातःसवनस्य क्लृप्तिर्जातेत्यर्थः।

---

९.

१. अथ प्रातःसवननिरूपणानन्तरं माध्यन्दिनं सवनं क्रमप्राप्तं निरूप्यत इत्यर्थः।

२. आ त्वा रथं यथोतय इत्येवमाद्यास्त्रिंशः शस्त्रप्रारम्भणीया प्रतिपद्भवन्ति।

---

१ C त्रैष्टुभः। २ C om. त्रीणि। ३ C तथा वाहिता॰। ४ C त्रैष्टुभां।

३ इद वसो सुतमन्ध इत्येवमादिरनुचराख्यस्तृचो भवति ।

४ एष प्रतिपदनुचरलक्षणो विधिर्नित्य प्राकृत एव एकाहात्प्रकृतिभूतादग्निष्टोमादायते । अत्रापि भवतीत्यर्थः । इन्द्रनिहवादिवत् प्रकृतिविकृतिभावेन प्राप्तो ऽप्येष विधिर्विस्पष्टार्थं क्वचिदनूद्यते ।

५ सूक्तविहृद्धावन्त्य इति (७ १८ १०) प्राप्तस्य पुनर्वचनं विस्पष्टार्थम् ।

६ पञ्चस्त्रिष्टुप्जगतीनामिति प्राप्ते वचनं[1] प्राकृतधर्मस्मरणार्थम् ।

७ निष्केवल्यस्य महत्तया मरुत्वतीयस्य कस्यचिदतिरिक्तशङ्का[2] स्याच्छन्दोमवत् तन्निवृत्त्यर्थं वचनम् । इति एतावदेव मरुत्वतीयमेतदधिकमिति ।

---

१०.

१ एतत्सूत्रमारभ्यैवेति प्राहेति (१७ १७ १०) यावत्तदन्तर्गतस्य सकलस्य पदार्थकलापस्य निष्केवल्याङ्गताज्ञापनार्थमिदं सूत्रम् । अथानन्तरं क्रमप्राप्तं निष्केवल्यशस्त्रं कर्मोच्यत इत्यर्थः ।

२ कौषीतकिमतो ऽयं पञ्च स्विनिलिङ्गाम् ।

३ मरुत्वतीयग्रहणानन्तरं होता मैत्रावरुणौ स्वानयेदिति पैङ्ग्यस्य मतम् ।

---

१ C पुनर्वचनं विस्पष्टार्थं । प्राकृतधर्मस्मरणार्थं च ।   २ Con ति ।

४. दानवाचनान्वारम्भणवरवरणव्रतप्रमाणेषु यजमानं प्रतीयादिति यजमानस्यैव प्रमाणं प्राप्नोति। अत्र तु समानकर्तृताविरोधाद्धोतुरेव प्रमाणता। स्वं धिष्ण्यं जघनेन स्वस्य धिष्ण्यस्य पश्चाद्भागे चतुरङ्गुलाधिकं पदं होता प्रमिमीते।

५. तस्य [१]चतुरङ्गुलपदस्य पश्चात्प्रदेशे उदीचीनाग्रं फलकं निदधाति।

६. तस्य फलकस्य उभयतो दक्षिणप्रदेशे फलकाद्बहिः[२] उत्तरप्रदेशे च स्वकीयपदयोर्हस्तयोश्चतुरङ्गुले उपदधाति। सर्वत्र तु क्षामत्ययाम्लत्वात् खानयेदिति योज्यम्।

७. [३]हस्तद्वयनिहितचतुरङ्गुलाभ्यां[४] बहिःप्रदेशे स्वपरिजनैर्दक्षिणपूर्वे लेखाद्वयं कारयित्वा प्रेङ्खावटौ दक्षिणपूर्वौ खानयति होता।

८. उत्किरौ धूलितौ प्राञ्चौ वोदञ्चौ वा उत्किरन्ति निक्षिपन्ति खनितारः।

९. तयोरवटयोस्ते विशाख्यौ ये पूर्वं तस्यैव अन्यस्य वा उदुम्बरस्य छिन्ने ते दक्षिणपूर्वे आरोप्य उत्तराग्रं वंशं रज्जुबन्धनशाखां तयोर्विशाख्योरुपरि अभ्यादधाति होता।

१०. यजमाननिवृत्त्यर्थं होतृग्रहणं। भूमिस्थो होता शीर्षसंमितं वंशं करोतीत्यर्थः।

११. अन्यीयसि होतर्यूर्ध्वबाहुसंमितं वंशं कार्यम्।

१२. ते विशाख्यौ दृढपर्यूहे दृढनिखाते पर्यूपति परितो

१ C स्वपदु॰। २ C om फलकाद्बहिः। ३ A ॰द्वयनिहितप॰। ४ C ॰ङ्गुला।

दृढयति[1] यथा न व्यथेयाताम्। न कम्पेयाताम्। सुदृढे करोतीत्यर्थः।

१३. तच्चतुर्धान्तेषु वितर्दयतीत्युक्तम् (१७. १. १४)। तेषु सच्छिद्रेषु अन्तेषु अधस्तात्फलकं रज्जुदये ग्रन्थिदयं[2] बद्धा रज्जोश्चतुर्भिरन्तैश्चतुर्षु छिद्रेषु परिव्ययति यथा न संभ्रश्येत। रज्जुच्छिद्रेषु भंशनभिया ग्रन्थिचतुष्टयं कर्तव्यमित्यर्थादवगीयते।

१४. दक्षिणरज्ज्वन्तद्वयं गृहीत्वा दक्षिणां मेङ्खस्थूणामुत्तरेण वंशस्योपर्यन्योन्यनिर्गमनेन रज्ज्वन्तौ गृहीत्वा बध्नन्ति होतुः परिजनाः।

१५. उत्तररज्ज्वन्तद्वयं गृहीत्वा उत्तरां मेङ्खस्थूणां दक्षिणेन वंशस्योपरि अन्योन्यनिर्गमनेन रज्ज्वन्तौ गृहीत्वा बध्नन्ति होतुः परिजनाः।

१६. तन्मेङ्खफलकं सुदृढं बद्धा तथा प्राश्नुति अधः प्रक्षिपति यथा प्रक्षिप्तमुपरि भूमेः प्रादेशमात्रेण स्याद्भवतीति।

१७. तस्य फलकस्याधस्तात्प्रदेशे प्रागग्रैरुदगग्रैश्च दर्भैरुपोहति।

१८. तत्फलकमभिनिबद्धं[3] यथा भवति तथा पर्यूपति दृढीकरोति। यथा न व्यथेत न प्रकम्पेत।

१९. तत्फलकं संबाध्य सुदृढं बद्धोत्तरस्यां मेङ्खस्थूणायामपाश्रयति[4] उत्तरस्यां विशाख्यां प्रतिमुञ्चतीत्यर्थः।

२०. तत्फलकं महत्तीयशंसनानन्तरं यथास्थानं स्थापयेद्धोता।

---

१ A दृढयति। २ C ins द्वयं। ३ A अभिनिविदं। ४ A अपाश्रयति।

## ११.

१. माहेन्द्रग्रहणानन्तरमध्वर्युः सदस्येति आगच्छति।

२. होतृधिष्ण्यस्यापतो ऽध्वर्युः प्राङ्मुख उपविशति।

३. तं होतृधिष्ण्यस्याग्रत उपविष्टमध्वर्युं होता आह अध्वर्य उप नु रमा३ इति।

४. स होता उत्तरां मेढीस्थूणामध्वर्युं च उत्तरेण गत्वा प्राग्द्वारेण निष्क्रम्य पूर्वद्वारेणाग्नीध्रगृहं प्रपद्य आग्नीध्रीयं धिष्ण्यमुत्तरेण पर्येति आवर्तनेन सर्वतो गत्वा पश्चात्प्राङ्मुख उपविश्य दक्षिणजान्वक्तः सन् स्रुवेणाज्यस्थाल्याः सकाशादाज्यं गृहीत्वा वक्ष्यमाणैर्मन्त्रैरष्टावाकृतीर्जुहोति।

---

## १२.

१. अष्टानामाकृतीनामियं प्रथमा।

२. मन्त्राणामल्पाक्षरत्वात्तिसृणामाकृतीनामत्रोत्तरत्रापि[1] सहोपादानम्।

३. गवे स्वाहेत्येवमादिभिस्त्रिभिर्मन्त्रैः स्वाहाकारान्तैरपरास्तिस्र आकृतयो होतव्याः।

४. यदिदमित्यादिना मन्त्रेणाष्टमीं कृत्वा वक्ष्यमाणं करोति।

५. स्रुवं स्थाल्यां मुक्त्वा वक्ष्यमाणं करोति।

---

१ A •त्रामीनामत्त्रोत्तर•।

६. उत्तरेणाग्नीध्रीयं[1] धिष्ण्यं पर्येत्याग्नीध्रस्य हात्पूर्वया द्वारा निःसृत्य सदसो ऽग्रे गत्वा[2] अन्तःपात्याद्युत्तरवेदिपर्यन्तरेखा स्रुतिसंज्ञका। तामुत्तरेण प्राङ्मुखस्तिष्ठन्परिमादसंज्ञकान् जपाञ्जपति।

७. अथैतान्परिमादाञ्जपाञ्जपति। कीदृशेषा परिमादसंज्ञेति चिन्त्यते। रूढा वा [3]यौगिकी वेति। अत्र योगो न दृश्यते। अथ कथंचित् दृश्येत तथापि रूढिर्योगाद्बलीयसीति रूढिरेवाश्रयणीया।

८. अथ परिमादाञ्जपादनन्तरमत्रैव[4] सदसः पुरस्तात् स्रुतिमुत्तरेणैव तिष्ठन्पूर्वार्धपक्षं पुच्छाद्यङ्गयुक्तमग्निचयनमुपतिष्ठते होता।

---

## १३.

१. नमस्त इत्यादिना मन्त्रेण चयनस्य पूर्वभागमुपतिष्ठते।

२. नमस्ते रथन्तरायेत्येवमादिना मन्त्रेणाग्निचयनस्य दक्षिणं पक्षमुपतिष्ठते।

३. नमस्ते बृहत इत्येवमादिना मन्त्रेणाग्निचयनस्योत्तरं पक्षमुपतिष्ठते।

४. नमस्ते वामदेव्यायेत्येवमादिना मन्त्रेणाग्निचयनस्य मध्यमुपतिष्ठते।

---

१ C दक्षिणेन instead of उत्तरेण। २ A ०पर्येत्य। ३ C ०नितेवेति।
४ C ०मादाञ्जपानन्त०।

५. नमस्ते यज्ञायज्ञीयायेत्येवमादिना मन्त्रेणाग्निचयनस्य पुच्छमुपतिष्ठते।

६. यद्यपि यजुःशाखिनां महाव्रते चयनस्य नियमो ऽस्ति तथाप्यस्मच्छाखायामेतस्मादेव सूत्रारम्भसामर्थ्यान्महाव्रते चयनस्य विकल्प इत्यनुमीयते। यदुत्तरवेदावग्निराहितो[1] भवति तथा सति समिद्धस्य दीप्तस्याग्नेरेव पूर्वार्धादिभागान् कल्पयित्वा क्रमेणोपतिष्ठत इत्यर्थः।

७. आदित्यदर्शनाय कुत्रचिद्बलोपस्थास्यत इति मत्वैव तिष्ठन्नित्युच्यते। अथेत्यानन्तर्ये।

८. केचिदेवं वदन्ति। सदसः पुरस्तात्स्तुतिमुत्तरेण स्थित आदित्यमपश्यन् शालाया आकाशं कृत्वा तदन्तरालेनादित्यं दृष्ट्वोपतिष्ठते।

९. [2]शालाभेदनस्यायुक्तत्वात् यस्मिन्देश आदित्यो ऽस्ति तद्देशस्थमेवादित्यं ध्यात्वोपतिष्ठत इति सिद्धान्तः।

१०. आदित्यमुपतिष्ठत इत्युक्तम्। तत्रायं मन्त्रः करणत्वेन[3] विनियुज्यते।

११. अथ अनन्तरं दक्षिणेन मार्जालीयं सदः प्रविशेत् पूर्वोक्तेन संचरेण प्रेङ्खफलकस्य पश्चाद्गच्छेत्।

१२. प्रेङ्खस्य पश्चात्प्राङ्मुख उपविश्य तत्प्रेङ्खमन्वारभ्याविमुञ्चन्नासत आसीताथ समधिरुह्येति (१७. १६. ५) यावत्।

---

१ C ०ग्निरचितो। पूर्वार्धादिभ०। २ C शालाभेदे न युक्तत्वाद्। ३ A मन्त्रकरण०।

१४.

१. स होता पुरस्तात्प्रथमं छन्दोगैः शीर्षण्यान् शिरोरूपाम् ऋचाभिगादयेत्। गापयति।

२. स होता पुरस्तात्प्रथममेवाध्वर्युणा सह संवादं कुर्यात्। कथमित्याकाङ्क्षिते आह।

३. इतिकरणः संवादानन्तर्गत एव संवादस्यार्थ उच्यते। मह्या जज्ञानं प्रथम पुरस्तादियं पित्रे राष्ट्रेत्यग्रे विश्वे देवा मम शृण्वन्तु यज्ञिया इत्येतास्विस्र ऋचः स तूष्णींशंस इत्येतस्य द्वादशसंख्याकपादसमुदायस्य तूष्णींशंससंज्ञा। हे अध्वर्यो तस्मिंस्तूष्णींशंसे प्रतिपादं[1] द्वादश प्रतिगरास्त्वया देया इत्यर्थः। आत्मनो विहृतत्वात्पदानुषङ्गानां वैपरीत्येन शंसनात्प्रतिगरस्यापि[2] वैपरीत्यमाशङ्क्य निराचष्टे[3]। होतैवमाह। हे अध्वर्यो अहं आत्मानं विहृतं पदानुषङ्गांश्च विहृतान् शंसिष्यामि तच्च त्वया अविहृत एव प्रतिगरो दातव्यः।

४. अत्रापि इतिकरणः संवादान्तताज्ञापनार्थः। अथ अनन्तरं होता प्रस्तोतारमाह। हे प्रस्तोतः तव यदा सप्त स्तोत्रियाः परिशिष्यन्ते तदा नः अस्मान् प्रतिब्रूतात्[4]। अवसरो वक्तव्यः। तस्मिन्नवसरे मम इदं वक्ष्यमाणं सं महानित्यादि शस्त्रमस्ति।

५. परशाखीयमपि क्रमज्ञापनार्थमुच्यते। अथानन्तरमध्वर्युः पार्ष्ठिकं स्तोत्रमुपाकरोति।

---

१ A ins इति। २ A वैपरीत्यम्। ३ A निराक्रियते। ४ C ०मिब्रति A ०ब्रूयात्।

६. अथेतरे दीक्षिताः प्रतिपुरुषं हरीः कुर्वत इत्युक्तम्। यत्र काले उद्गातासन्द्यारोहणं करोति तदानन्तरमेव प्रस्तोताप्रतिहर्तारावेव[1] हस्यावारोहयतः।

७. एतत्सूत्रकरणसामर्थ्यादेव दीक्षितानां हरीकरणकाले उपगातारो ऽपि प्रतिपुरुषं हरीः कृत्वास्मिन्काले ऽध्यारोहेयुरिति ज्ञायते।

८. कदाचिदपि पत्न्यः प्रथमं न प्रवादयेयुरित्येतदर्थमिदं सूत्रम्। प्रथमं वीणावादनमुद्गातैव कुर्यात्।

९. तमुद्गातारमनु पश्चात्पत्न्यो ऽपि वीणावादनं कुर्युः।

१०. पूर्वद्वारादिषु स्थापितान् दुन्दुभीन् वादनैर्वादयन्ति यजमानपुरुषाः।

११. तं तस्यैव लाङ्गूलेन काले (१७. ५. १०) भूमिदुन्दुभिमाघ्नन्तीत्युक्तम्। अतो ऽस्मिन्नवसरे तं दुन्दुभिमृषभस्य लाङ्गूलेनाहन्ति।

१२. स्तोत्रोपाकरणकाले बहवो घोषाः कर्तव्या इति सूत्रान्तरम्। तस्मादस्मिन्नवसरे महावादिनो [2]घोषान् कुर्वन्तीति।

१३. अथ या मार्जालीयं पर्यन्त्यो भवन्ति ताभ्यः प्रत्येकं नवान् कलशानुपकल्पयन्तीत्युक्तम्। अथानन्तरमुदकपूर्णान् घटान् बिभ्रत्यो दास्यो मार्जालीयं परियन्ति परिभ्रमणं कुर्वन्तीत्यर्थः।

१४. मार्जालीयं परिगच्छन्त्यो दास्यो हैमहा२ इदं मधिदं मधु इत्येतां वाचं वदन्ति।

१५. अप्रादक्षिण्येन त्रिवारं भ्रमणं कुर्वन्तीति।

---

१ C °र्तारावपि तावेव। २ A बहुघो°।

१६. तत ऊर्ध्वमप्रदक्षिणगमनानन्तरं प्रदक्षिणं निस्तूष्णी परियन्तीति।

---

## १५.

१ अथैनमश्वरथमुपकल्पयन्तीत्युक्तम्। अथ एतमुपक्लृप्तं रथमश्विनवमरे युञ्जन्त्यध्वर्यव क्व प्रदेशे युञ्जन्तीत्यपेक्षिते उच्यते।

२. दक्षिणवेद्यसस्य पुरस्ताद्भागे युञ्जन्ति।

३. यथासपन्नं चक्षिय सनद्धस्तीषु धनुरादाय तं रथमातिष्ठति.

४. स राजा वा राजमात्यो वा अभितो वेदिं प्रदक्षिणं वर्तमानो भ्रमन्नुत्तरेणाग्नीध्रं प्राच्यौ प्रक्रे स्तूपे (१७. ५. ५) विभिन्नन्त्याखणायेत्युक्तलक्षणमेतमाखण क्षि हत्वा विध्यतीति।

५. तमाखणं पत्नसंदितेन शरेण नातिविध्येत। आखणमलग्नमेव[1] शरं करोतीत्यर्थं।

६ क्षि प्रदक्षिणं विध्यतीति वेधस्य क्षित्वे सिद्धे ऽपि द्वितीयतृतीयशराभ्यां सपत्नवेधो मा भूदिति सूत्रात् आखणे चयो ऽपि शरा मलग्ना एव कर्तव्या।

७ तं रथं प्राञ्चमुदञ्चमुत्तरपूर्वस्यां दिशि श्रश्नन्ति शिथिलयन्त्यध्वर्यव।

८ तं रथं तत्रैव उत्तरपूर्वस्यामेव विमुञ्चन्ति योक्तार।

---

१ M-- व्याख्य०।

९. अथ यस्मिन्नवसरे प्रस्तोता स्तोत्रियाणां सप्तक परिशिष्य वेलेत्याह तदा होत्रा किं कर्तव्यमित्युच्यते।

१०. अथ प्रस्तोत्रा वेलेत्युक्ते होता दक्षिणेन प्रादेशेन भूमिलग्नाङ्गुष्ठेन प्रेङ्खफलकं भूमिं च सहैव संस्पृशन् संमहान् महत्या दधादिति मन्त्रं जपति।

११. अथ प्रेङ्खफलकस्योपरि प्रागग्रं प्रादेशं निधाय स देवो देव्या दधादिति मन्त्रं जपति।

१२. अथ प्रेङ्खफलकादुपरि प्रादेशमात्रे आकाशे प्रागग्रं प्रादेशं धारयन् सं ब्रह्म ब्राह्मण्या दधादिति मन्त्रं जपति।

१३. अथ प्रेङ्खफलकमग्रतः समीपे कृत्वा तस्मिन्प्रेङ्खफलके ऽग्रतः स्थिते त्रिरभ्यन्य त्रिःकृत्वः श्वासं मुक्त्वा त्रिरभ्यवानिति त्रिःकृत्वः श्वासं प्रतिगृह्णातीत्यर्थः :

---

## १६.

१. अथ अनन्तरमेतत्प्रेङ्खफलकमुरसा हृदयेन संस्पृश्य संलग्नं कृत्वा प्रेङ्खफलकस्य दक्षिणं भागमात्मनो ऽतिहरन् हृदयात्पृथक् कुर्वन्नर्को ऽसीत्यादिकं मन्त्रं जपति। इतिकरणश्च मन्त्रान्त इति मन्त्रान्तज्ञापनार्थ इतिकरण.।

२. अथ दक्षिण भागमात्मसंलग्नं कृत्वा उत्तरभागमात्मनो ऽतिहरन् रुद्रास्त्वेत्यादिक मन्त्रं जपति।

३. अथोत्तर भागमुर सलग्न कृत्वा दक्षिणं भागं हृदयमननप्रदेशात्पृथक् कुर्वन्नादित्यास्त्वेत्यादिकं साम्नाय्यायेत्येवमन्तं मन्त्रं जपति।

४. अथ दक्षिणं भागमात्मसंसृष्टं[1] कृत्वा उत्तरं भागमात्मनो वियोजयन् विश्वे त्वा देवा इत्यादिकं कामप्रायेत्येवमन्तं मन्त्रं जपति ।

५. अथ मेढ्रफलकरज्जू अन्तरेण समधिरुह्य आरुह्य प्रागग्रौ पादौ कृत्वा भूमौ सुस्थितौ करोति ।

६. कृतव्याख्यानम् ।

७. अथ भूमौ स्थापितौ पादौ मेढ्रफलकस्योपरि दक्षिणपूर्वौ नीत्वा[2] उपेत्याथाग्निमुखादयस्तिष्ठन्तौ युक्तमन्तःपदक्षिणभागोन्नतमु-पस्थं कृत्वा दक्षिणपार्श्वप्रदेशेन[3] प्रागग्रेण दक्षिणेन प्रादेशेन[4] मेढ्र-फलकस्य पश्चाद्भागमुपस्पृशति । प्रजापतिदेत्येवमादिना मन्त्रेण । इतिकरणो मन्त्रान्तज्ञापनार्थः ।

८. कृतव्याख्यानम् ।

---

## १७.

१. अथ प्राञ्चमुभयहस्तसंनिवेशं कृत्वा[5] सं वाग्निम्यादिकं स्वर्ग-मिथ्यमित्येवमन्तं मन्त्रं जपति ।

२. कृतव्याख्यानम् ।

३. स होता विरष्टो नाभौ गस्वरौ इन्द्रभद्रेषो दधा[6]

---

१ C मेढ० । २ C [illegible] । ३ C om. म । ४ C om. प्रादेशेन । ५ A ins. [illegible] । ६ C (in marg.) ins. म ।

भवति तथा विनिनीषमाण उपवचणं[1] स्तुतिपर आस्ते [2]यावत्स्तोत्रं प्रवदन्ति ।

४. प्रस्तोतृप्रतिहर्तृउद्गातृब्रह्मयर्थ्यतिरिक्ताः[3] सर्वे गृहपतिसहिता दीक्षिता ऋत्विजो वा यत्र अथ समधिरूपयेत्येतस्मिन्नवसरे होता प्रेङ्खावरोहणं करोति तदा हवीरधिसर्पेयुः धिष्ण्यवन्तो धिष्ण्यसंनिधौ अपरेण होतुः पश्चादिति प्रकृतिसिद्धम् ।

५. यदा उद्गातृणामुत्तमा स्तोत्रिया परिगिर्यते तदा स्तोत्रे स्तूयमाने वाद्यमानान् दुन्दुभीनवहणन्ति । उपरमयति होता ।

६. स्तोत्रे स्तूयमाने वाद्यमानं भूमिदुन्दुभिमुपरमयति ।

७. उद्गातुरासन्द्यारोहणकाले कुर्वन्ति घोषं घोषकृत इत्युक्तम् । अस्मिन्नवसरे उत्तमस्तोत्रियापरिग्रेपे[4] ते ऽप्युपरमन्तीति ।

८. अथ अस्मिन्नप्यवसरे दास्यो मार्जालीयं परिभ्रमन्ति पूर्ववदिति नोक्तत्वात्सकृदेवेति गम्यते ।

९. ता दास्यस्तानुदकपूर्णान् घटान् मार्जालीये निनीय उपनिधाय तत्रैवसुक्त्वा यथागत गच्छन्तीति ।

१०. वाग्यमनावध्यर्थं सूत्रम् ।

११. प्रस्तोत्रा एपेति प्रोक्ते होता वाग्यमनं करोति तावद् यावदनुवषट्कारं करोति ।

१२. प्रतिहारसंनिधावाहावं बुद्धिस्थं करोतीत्यर्थः ।

१३. उत्तमात्प्रतीहारादूर्ध्वमाहूय (७. १० २.) शंसतीत्युक्तात्तदनन्तर एव आहावो युक्तः ।

---

१ A om व। २ C ins तावत्। ३ C om बध्वर्यु। ४ C स्तोत्रियाय।

१४. यथास्य होतुर्वाक् वाणी सर्वा अन्या वाचो ऽतिक्रम्य[1] वदति तथातितरामुच्चैराहूय चिरंपांशु हिंकृत्य तूष्णींशंसं शंसतीति संबन्धः ।

१५. पूर्वसूत्रे आहावधर्मोपदेशः । अत्र तमेवाहावमनूद्य तूष्णीं-शंससंबन्धं विधाय तस्य तूष्णींशंसस्यातः परं विधिरुच्यत इति शेषः ।

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारसदाचरणं चायुष्यमिति द्विरभ्यस्तम् ।

इति महाव्रतभाष्ये प्रथमो ऽध्यायः समाप्तः ।



१ C ऽतम्यते ।

# अथाष्टादशोऽध्यायः।



१. यथास्य वाक् सर्वा अन्या वाचोऽतिवदेदित्यनेन प्रकारेण उच्चैस्तरामाहावं कृत्वाहावान्तेन प्रणवेन प्रथमस्य हिंकारस्य प्राणसंधानं कृत्वा मकारेणावसानं कार्यम्। ततो द्वितीयो हिंकारो मकारान्तः कर्तव्यः। ततस्तृतीयं हिंकारं मकारान्तमेव कृत्वा प्राणसंततं तूष्णींशंसस्य संधानं कार्यम्। श्रुतिरपि प्रथमस्य हिंकारस्याहावेन सह प्राणसंधानं दर्शयति। हिंकारेण प्रतिपद्यत एतदुक्थम् प्राणो वै हिंकारः प्राणेनैवैतदुक्थं प्रतिपद्यत इति। प्रतिपदः प्राणरूपेण संस्तवात्प्राणसंततमाहावस्य हिंकारेण प्रथमेन गम्यते। ननु आहावस्योच्चैष्ट्वाद्धिंकारस्योपांशुत्वात्सहसंधानं न युज्यत इति चेत्। सत्यम्। न दोषः। आश्वलायने उपांशुयाजे प्रणवयेयजामहवषट्काराणामुच्चैष्ट्वे याज्यापुरोनुवाक्ययोरुपांशुत्वे प्राणसंधानस्य दर्शनात् प्राणसंततः प्रणवः पुरोनुवाक्यायास्तथागूर्वषट्काराविति। आगूरिति तेषां येयजामहस्य संज्ञा। एवमत्रापि उच्चैराहावं कृत्वा उपांशुधर्मकेण मकारान्तेन हिंकारेणावसानं ततोऽसंहितमेव द्वितीयं हिंकारं मकारान्तं कृत्वा ततस्तृतीयेन मकारान्तेन हिंकारेण संततेन तूष्णींशंसपादस्य[1] संधानं कार्यम्।

---

१ A तूष्णींशंस।

२. अह्ना अह्नानमित्याद्यानां तिसृणामृचां तूष्णींशंससंज्ञा। ताश्चोपांशुधर्मकाः सप्रणवो द्वितीयस्य चतुर्थस्येति (७. १६. ५) प्राप्ते[1] प्रणवमकुर्वन्[2] पच्छः शंसेत्। अथैतं तूष्णींशंसमुपांशु शंसति। वाग्वा एतदहः[3] मनस्तूष्णींशंसो मनसैव तद्वाचं समर्धयतीति श्रुतेः।

३. मध्यमया माध्यन्दिनसुचैस्तरां मरुत्वतीयान्निष्केवल्यमिति (८. १४. ३. ४) सकलस्य निष्केवल्यशस्त्रस्य मरुत्वतीयशस्त्रादुच्चैस्तरां मध्यमस्वरे प्राप्ते ऽपि शस्त्रारम्भे आहावस्योपांशुत्वात्तूष्णींशंसस्योपांशुत्वादात्मने वाचमुत्सृजतीत्यात्मशब्देन सकलं परिधानीयान्तं शस्त्रमुपलक्ष्य प्रकृतिप्राप्तो मध्यमस्वरो ऽनूद्यते।

४. तस्य पञ्चविंशः स्तोमो राजनं पृष्ठमित्युक्तम् (१०.७.३.४)। तस्य पृष्ठस्यायं स्तोत्रियस्तृचः। ननु स्तोत्रियं शस्त्रानुरूपं शंसन्तीति स्तोत्रियानुरूपयोः सर्वत्र साहचर्यम्। कथं तर्ह्यत्रानुरूपाभाव इति कथं ज्ञायते ऽत्रानुरूपाभाव इति। अनुक्तत्वादिति ब्रूमः। नैतद्युक्तम्। नवर्चमिदं सूक्तं तन्मध्ये प्रथमस्तृचः स्तोत्रियत्वेन विहितः साहचर्याद्परो ऽप्यनुरूपत्वेनानुमीयतां को दोष इति चेत्। न हि वचनमन्तरेण द्वितीयस्तृचो ऽनुरूपत्वेन भवितुमर्हति। अनुरूपाभावे ज्ञापकमप्यस्ति चिरेणाक्रियते स्तोत्रिये निविदं परिधानीयाया इति (१८. २१. ३)। त्रिष्वेव स्थानेष्वाहावविधानात् ज्ञायते नात्र कश्चित्तृचो[4] ऽनुरूपत्वेन शस्यत इति चेदुच्यते तर्ह्याहावेन[5] भाव्यम्। न तु नास्ति तस्मात्तदभाव एव[6] वैषम्याद्पि द्वितीयस्तृचो ऽनुरूप-

१ C प्राप्त। २ C (in marg) शंसमीयमनो कुर्वन्। ३ A एतदहरुक्ति C चदहमन॰। ४ C कश्चेत्। ५ A नर्हमिर्विहेन। ६ C om. एव।

त्वेन न भवति। कथं वैषम्यम्। स्तोत्रियस्य प्रथमस्य तृचस्यान्त्यो ऽर्धर्च उत्सृज्यते न द्वितीयस्य तृचस्य तस्मादपि द्वितीयस्तृचो नानुरूपत्वेन प्रसक्तव्य इति। पञ्चविंशात्मसरूपसिद्ध्यर्थमेव तस्य शंसनं युज्यते। तस्माद्यानुरूपाभाव इति मन्तव्यम्।

५. पञ्चविंशात्मके आत्मनि प्रथमायाः सकृद्ग्रहणे एता नवर्चः संख्येयाः।

६. स एष आत्मा पञ्चविंश इत्यग्रे (१८. १. ११) वक्ष्यते। तस्मिन्नात्मनि एता अष्टौ संख्येयाः।

७. पञ्चविंशात्मकमध्ये गण्यते।

८. पञ्चविंशात्मनि मध्ये गण्यन्ते।

९. प्रथमायाः सकृद्ग्रहणेनैतास्त्रयोविंशतिसंख्याका भवन्ति।

१०. संपद्यत इति शेषः।

११. तदिदास भुवनेषु ज्येष्ठमिति एवमादिकः पञ्चविंशत्यृक्संख्याकः पञ्चविंश आत्मसंज्ञको[1] भवति।

१२. तमात्मानं नदेन नदं व ओदतीनामित्येतया पादश उपसृष्टं संयुक्तं शंसति।

१३. पूर्वसूत्रे नदेनोपसृष्टं शंसतीत्युक्तम्। तत्र न ज्ञायते नदशब्देन किमुच्यते इति। प्रदर्शनार्थं प्रतीकग्रहणम्। नदशब्देनैयमृगुच्यत इत्यर्थः।

१४. तं नदेनोपसृष्टं शंसतीत्युक्तम्। उपसर्गस्तूभयथापि भव-

---

१ A om आत्म।

तीति त्रैष्टुभानां पादानां पूर्वप्रयोगनियमार्थं वचनम्। तमेव प्रयोगप्रकारं विवरीतुमाह।

१५. तदिदास भुवनेषु ज्येष्ठं नर्दं व ओदतीनाम्।

१६. यतो जज्ञ उग्रस्त्वेषनृम्णो नर्दं योयुवतीनो इति।

१७. सद्यो जज्ञानो नि रिणाति शत्रून्पतिं वो अघ्न्यानामिति।

१८. अनु यं विश्वे मदन्त्यूमा धेनूनामिषुध्यसोमिति।

१९. एवं नर्देन विहृतामित्यर्थः।

२०. प्रथमा व्यतिरिक्ता। उत्तरा द्वाविंशतिमृचो[1] नर्देन विहृता[2] अनावृत्ताः शंसति।

२१. एवं नर्देन विहृता तदिदासीयसूक्तस्य[3] या तृतीया ऋक् तस्या उत्तरमर्धर्चमुत्सृजति नदस्योत्तरम्। एवं द्वावर्धर्चावुत्सृजति। स्वादोः स्वादीयः स्वादुना सृजा सं पतिं वो अघ्न्यानाम्। अदः सु मधु मधुनाभि योधीः धेनूनामिषुध्यसो इति।

२२. तौ इत उद्धृतावर्धर्चौ द्विपदामामिमा नु कमित्याद्यानां पुरस्ताच्छंसेत्।

२३. पूर्वोक्तं पञ्चविंशाख्यमात्मानं शस्त्वा तदनन्तरं सूददोहसं शंसेत्। सूददोहःशब्देन[4] किमुच्यत इति प्रदर्शनार्थं प्रतीकग्रहणं ता अस्य सूददोहस इति। अर्धर्चशःशंसनं प्राप्तमेवानूद्यते।

---

१ A ०तिर्च० C ०त्रिच०। २ C om. नर्देन विहृता वा। ३ C om. तदिदासीय A in marg ४ C ०दोहस इति।

## २.

१. अथो यमेवैतन्मृन्मयं यजुर्मयं साममयं पुरुषं संस्कुर्वन्तीति श्रुतौ पुरुषरूपेण संस्तवात्तस्य शीर्षसंबन्धीनि शीर्षण्यानि चीणि वा अस्य शीर्ष्णः कपालानि भवन्तीत्यर्थवादात्त्रीण्येव तानि भवन्ति।

२. इन्द्रमिद्गाथिन[1] इन्द्रो दधीच उद्वेदभि श्रुतामघमुद् त्यं जातवेदसमित्येतेषु[2] सामगाः स्तुवन्ति। अत एतान्येव शंसेत्। तचेन्द्रमिद्गाथिन इत्यत्र तृचे प्रथमाद्तीयाचतुर्थीषु स्तुवते अतः ताः शंसेत्।

३. छन्दोगवशात्पचान्तरमेतत्।

४. ते छन्दोगा यदि तथा कुर्वन्ति तदास्माभिः किं कर्तव्यमित्यत आह।

५. नवर्चमिति शेषः।

६. छन्दोगानां विकल्पो ऽस्ति नवर्चे स्तोतव्यं तृचे वेति।

७. छन्दोगैः प्रथमे तृचे स्तुते ऽस्माभिः किं कर्तव्यमित्याह।

८. इन्द्रमिद्गाथिन इत्यादीनां पञ्चानां तृचानां[3] मध्ये ये द्वे तृचे दृष्टेन्ते उद् त्यं जातवेदसमित्येतस्मात्तृचात्परे शंसेत्।

९. महति शस्त्रे विस्मृतिशङ्कया प्राप्त एव शस्त्रधर्मः[4] सर्वत्रानूद्यते।

---

१ A C (sec. h) om. the vers इन्द्रेण सं हि contained in the text of the Sūtra. C in marg. उभिष्टनोजमा। २ C (in marg) पञ्चानां तृचानां।
३ A om. तृचानां। ४ C शस्त्रधर्मं।

३.

१. पुरुषस्य ग्रीवारूपमित्यर्थः।

२. अस्य तृचस्य शाखान्तरीयत्वात्सकलपाठः।

३. तं देवं तृचमित्यर्थः।

---

४.

१. अथैतामर्चां शंसति। सा वै त्रिष्टुप् भवतीति श्रुतेः।

२. ग्रस्यधर्मः प्राप्त एवानूद्यते।

३. अस्तोत्रियत्वे ऽपि ककुप्कारप्रापणार्थं[1] वचनम्।

४. अत्राप्यननुरूपत्वात् ककुप्कारप्रापणार्थं[2] वचनम्।

५. प्राप्त एव ग्रस्यस्यानुवादः।

६. अर्धर्चशंसनं प्राप्तमेवानूद्यते।

७. तदिमौ पच्छौ व्यतिषजत्यविहृतायेति श्रुतेः।

८. अथैतं प्रस्तर्कं शंसति। ता वै तिस्र ऋचो भवन्ति[3]। चौणि वा अस्य पाणेः पर्वाणि भवन्तीति श्रुतेः।

९. निगदव्याख्यानम्।

---

१ A ins. म। २ A om. प्रापणार्थं। ३ C ins इति।

## ५.

१. इयं द्वितीयाचा। ऋचाशब्देन[1] वाकुरुच्यते। त्वया त इन्द्र स्थविरस्य बाह्व इति वाकोरभिप्रेति श्रुतलात्।

२. कृतव्याख्यानम्।

३. पूर्ववद्व्याख्यानम्।

४. कृतव्याख्यानम्।

५. शस्त्रभेदाभावात्।

६. कृतव्याख्यानम्।

७. पचव्यतिषङ्गनार्थम्।

८. सुगतार्थम्।

९. कृतव्याख्यानम्।

१०. अयमपि माशानुवादः

११. प्रहस्तकसंज्ञकं तृचमित्यर्थः।

---

## ६.

१. वक्ष्यमाणानीत्यर्थः। चतुरुत्तराणि चतुर्विंशत्यक्षरादीनि चतुर्भिश्चतुर्भिरक्षरैरधिकानां सप्तानां छन्दसां सप्त तृचानि।

२. गायत्र्युष्णिगनुष्टुब्बृहतीनामित्यर्थः।

३. सुगतार्थम्।

---

१ C ऋचशब्देन।

४. दाभ्यामवसायदाभ्यामवसाय्येकेन प्रणौतीति धर्मकम्।

५. पृथक्सूत्रकरणं मन्त्रभेदात्[1]।

६. गतार्थम्।

---

७.

१. गायत्रीदृचत्युष्णिहामित्यर्थः।

२. एतया ऋचा[2] अशीतित्वात्मके गायत्रीछन्दस्क ऋग्गणः मारभ्यते।

३. अशीतिमध्ये गण्यन्ते।

४. अशीतिमध्ये दृचा गण्यन्ते।

५. अशीतिमध्ये गण्यन्ते।

६. अशीतिमध्ये गण्यन्ते।

७. तानि समस्तानि परिगणितानि चत्वारिंशत्तृचानि भवन्ति।

८. पूर्वो भाग इत्यर्थः।

९. अपरो भाग इत्यर्थः।

१०. गायत्र्यशीतिमध्ये गण्यन्ते।

११. १२. १३. १४. १५. resp अशीतिमध्ये गण्यन्ते।

१६. शीर्षण्यपमध्ये उष्णिहमोजसेति दृचः सुतः। तस्मिन्यद्य छन्दोगाः स्तुवन्ति तदाच तमुद्धरेत्।

---

१ C मन्त्रभेदात्। २ C आयया instead of ऋचा।

१७. यदि शीर्षण्यतृचमध्ये अस्मिन् स्तुवते तथाप्यशीतिमध्ये उद्धरेदेव ।

१८. अशीतिमध्ये गण्यन्ते ।

१९. तानि समस्तानि उत्तरभागसंबन्धीनि चत्वारिंशत्तृचानि भवन्ति ।

२०. गायत्र्यशीत्या उत्तरो भागः । इयमेव दक्षिणं पार्श्वं गायत्री सव्यमौष्णिही मध्यं बार्हतीत्यात्मनो ऽङ्गसंपादनं दृष्टम् । अतश्च कपलशब्दो भागवचन इति युक्तम्। पूर्वोत्तरभागकरणप्रयोजनं चिन्त्यम् ।

२१. आहावच्छपलादन्तराशंसनम् ।

---

८.

१. बृहतीसंबन्धिनीमशीतिं मारभत इत्यर्थः ।

२. बृहतीसहस्रं संपद्यत इति वक्ष्यते । तत्रेमाः प्रत्यक्षबृहत्यो ऽन्याः संपादिताः ।

३. ता विंशतिः प्रत्यक्षबृहत्य इत्यग्रे ( १८. १०. ४ ) वक्ष्यते। तत्रैतास्तिस्रो भवन्ति ।

४. विंशतिमध्ये गण्येते ।

५. विंशतिमध्ये गण्यन्ते।

६. चत्वारिंशत्प्रगाथानां पुरतः परतश्च विंशतिर्विंशतिः प्रत्यक्षबृहत्यः शस्य : पुरतः शस्यन्ते ता एताः प्रत्यक्षबृहत्यः।

७. शस्यन्त इति वाक्यशेषः।

८. ते चत्वारिंशत्प्रगाथा इत्यग्रे (१८. १०. १२) वक्ष्यते। तत्रैते चत्वारो भवन्ति।

९. रायस्काम इत्येतां द्विपदामुद्धृत्य मो षु लेत्यादिकाश्चत्वारः प्रगाथा भवन्ति।

१०. चत्वारिंशन्मध्ये भवन्ति।

११. [1]चत्वारिंशति प्रतिप्रतीकं द्वौद्वौ भवतः।

१२. चत्वारिंशन्मध्ये गण्यन्ते।

१३. चत्वारिंशत्प्रगाथेषु गण्येते।

१४. चत्वारिंशन्मध्ये गण्यन्ते।

१५. प्रगाथा भवन्ति।

१६. यः शक्र इत्यादीनां षण्णां प्रगाथानां मध्ये त्रयः प्रशस्यन्ते त्रीन्परिशिनष्टि। उत्तरचत्वारिंशतः प्रारम्भणार्थम्।

१७. ये निविदः पूर्वतः प्रत्यचष्टहतीविंशतिद्वयमध्ये[2] त इमे चत्वारिंशत्प्रगाथाः।

---

९.

१. अथ चत्वारिंशत्प्रगाथानन्तरमित्यर्थः।

२. प्रत्यचष्टर्चयो भवन्ति।

---

१ A ins. प्रगाथा। २ C ०ध्ये।

३. महे चन त्वामित्यादीनां विंशतिं शस्त्वानन्तरं सूददोहसं शंसति।

४. निविद्धीयते यस्यां सा निविद्धानीया।

५. तां निविद्धानीयां पच्छः शस्त्वा शोंसावो३ इत्याहूय निविदं दधाति।

६. तां निविदं पच्छः पादेन व्यवगृह्य समयसूक्तां शस्त्वा इत्यर्थः।

७. निवित्पदानां मध्ये यदुत्तममन्त्यं तेन प्रणवं कृत्वा सजातेभिरिन्द्रया सेदु हव्यैरित्येतां निविदा सह निवित्संलग्नां शंसतीत्यर्थः।

८. तां सजातेभिरित्येतां त्रिष्टुभावन्तरेण त्रिष्टुम्बैविदी[१] वैश्वामित्रावर्कवत्यावभिरूपे इति श्रुतेः।

---

## १०.

१. यथा निविदः पूर्वभागे गायत्र्यशीतिः सूददोहा विंशतिः प्रत्यचदहत्यः चत्वारिंशत्प्रगाथाः पुनर्विंशतिः प्रत्यचदहत्यः सूददोहा निविद्धानीया निविचेत्येवं क्रमः तथा निविदुत्तरभागेऽपि निवित्संशंसनीया[२] सूददोहाः पञ्चविंशतिः प्रत्यचदहत्यः चत्वारिंशत्प्रगाथाः पुनर्विंशतिः प्रत्यचदहत्यः सूददोहा औष्णिह्यशीतिरिति।

२. महे चन त्वामद्रिव इत्यादिपञ्चविंशतेर्याः पञ्च परिशिष्टास्ताः[३] शंसति।

---

१ A त्रिष्टुम्बैविदि। २ A (in marg.) सजातेभिरिति। ३ A in marg. त्वा त्वा रथ इत्याद्याः।

३. प्रत्यवरूढवत्यो भवन्ति ।

४. परिशिष्टाभिः पञ्चभिः सहेत्यर्थः ।

५. उक्तार्थम् ।

६. तेषां चैनादृत्त इत्युक्तम् । तान् प्रथमतः शंसति ।

७. चत्वारिंशति प्रगाथा भवन्ति ।

८. चत्वारिंशति भवति ।

९. चत्वारिंशति भवन्ति ।

१०. प्रगाथा भवन्ति ।

११. चत्वारिंशत्प्रगाथेषु गण्यन्ते ।

१२. सूक्तपङ्क्ते ऽष्टाविंशतिः प्रगाथास्तन्मध्ये द्वावुद्धृत्य षड्विंशतिप्रगाथान् शंसति ।

१३. पूर्वे चतुर्दश वालखिल्यानां षड्विंशतिरेवमेते चत्वारिंशत्प्रगाथा भवन्ति ।

---

११.

१. सुगमम् ।

२. प्रत्यवरूढवत्यो भवन्ति ।

३. अस्मिन् सूक्तद्वये दश प्रत्यवरूढवत्यो भवन्ति ।

४. ते सूक्ते अर्धर्चशस्ये शस्त्वा च पार्हतप्रगीतिसमाम्नानन्तरं सूदोहसं शंसति ।

---

## १२.

१. एतयोष्णिक्छन्दस्कामशीतिं प्रारभते।

२. तानि षट्त्रिंशत्तृचानीत्यग्रे (१८. १२. ७) वक्ष्यते। तन्मध्ये एतान्येकादश भवन्ति।

३. एतस्मिन्नुक्ते षट्त्रिंशत्तृचमध्ये दश तृचानि भवन्ति।

४. षट्त्रिंशन्मध्ये भवन्ति।

५. षट्त्रिंशन्मध्ये भवन्ति।

६. षट्त्रिंशन्मध्ये भवतः।

७. तानि समस्तानि षट्त्रिंशत्तृचानि भवन्तीत्यर्थः। एताः षट्त्रिंशत्प्रत्यचौष्णिहस्तृचाः(?)।

---

## १३.

१. औष्णिह्यशीतिसंपादनार्थम्।

२. चतुःशतमध्ये गण्यन्ते।

३. चतुःशतमध्ये गण्यन्ते।

४. चतुःशतमध्ये सूक्ते भवतः।

५. चतुःशतमध्ये सूक्ते भवतः।

६. चतुःशतमध्ये सूक्ते भवतः।

७. चतुःशतमध्ये भवन्ति।

८. औष्णिह्यगीतिमध्ये शंसतीत्यर्थः।

९. औष्णिह्यगीतिमध्ये शस्यन्ते।

१०. द्वादशौष्णिह्यगीतिमध्ये भवन्ति।

११. शस्त्रधर्मः प्राप्त एवानूद्यते ऽसंदेहार्थम्। इन्द्राय साम गायतेति तद्यदेतदन्ततः शंसति संविद्धाभिरुष्णिग्भिर्वंशं समारोहाणीति श्रुतेः।

---

१४.

१. वशशब्देन वशर्षिसंबन्धि सूक्तं लक्ष्यते। अर्धर्चशस्यमौत्सर्गिकम्।

२. वशशब्देन किमुच्यत इति संदेहव्युदासार्थं प्रतीकग्रहणं यावतः पुरुवशो इति।

३. विशेषस्त्वर्धर्चशस्यमपवदति। तस्य वशस्य सप्तदशी ऋग् जगतीछन्दस्का। तां पच्छः शंसति।

४. द्वाभ्यामवसायद्वाभ्यामवसायैकेन प्रणौति पङ्क्तीनामिति (७. १६. २) पङ्क्तिशंसनधर्म उक्तस्तद्धर्मकाः शंसन्तीत्यर्थः।

५. द्वाभ्यामवसायद्वाभ्यामवसायैकेन प्रणौति पङ्क्तीनामित्युक्तम्। तदिह न भवति वचनात्।

६. अग्निसूक्ते छन्दोवङ्ग्लाप्ताशो ऽपि शस्त्रधर्मो ऽनूद्यते।

७. तौ पुरस्ताद्द्विपदानां शंसतीत्युक्तम् (१८. १. १९)। अतो ऽत्र शंसनं वचनात्।

८. अर्धर्चद्वयं मिलितं स्त्रीत्वविशिष्टेन तच्छब्देन परामृश्यते। सा

स्वादोः स्वादीयः स्वादुना सृजा सं पतिं वो अघ्न्यानाम्।

अदः सु मधु मधुनाभि योधीर्धेनूनामिपुध्यसो॥

इतीयमृक्[1]। तत आत्मन एवोत्सृज्यते। अतो ऽत्र शस्तव्या एवे-त्येतदर्थं वचनम्।

९. सूददोहसः परिगणनमिदम्। आत्मनो ऽसंभवात्। ता अत्र सूददोहस इत्येषा अत्र द्विपदानां प्राक्शंसने चतुर्विंशति-कृत्वः शस्ता भवति।

---

## १५.

१. अथेति वशशंसनानन्तरम्।

२. ता एकविंशतिर्द्विपदा इत्यत्र (१८. १५. ७) वक्ष्यते। तत्रैताः पञ्च गण्यन्ते।

३ ४. ५. resp. एकविंशतिमध्ये गण्यन्ते।

६. आ धूर्ष्वस्मै दधाताश्वान्। वज्रमेको बिभर्ति हस्त आ-हितम्। अया वाजं देवहितं सनेमेत्येतास्विह एकविंशतिमध्ये गण्यन्ते।

७. *ता एता एकविंशतिर्द्विपदा भवन्ति। ताः पच्छः शसन्ते।*

---

(१).१० १२० १। = १९ १।

१६.

१. गायत्रीशंसमिति द्वाभ्यामवसायैकेन प्रणौति द्वाभ्यामवसायैकेनाष्टाचरस्तु प्रणवनीयः (७. २६. १०) इत्येतद्धर्मयुक्तम्।

१. एकेनावसाय सप्तपदानां द्वाभ्यां प्रणौति द्वाभ्यामवसाय (७. २६. ११) द्वाभ्यामित्येतद्धर्मव्यावृत्त्यर्थमिदं सूत्रम्। शंसं गायत्रीमुत्तरामिति उत्तरा गायत्रीवच्छस्तव्येत्यर्थः। द्वाभ्यामवसायैकेन प्रणौति।

२. विस्पष्टार्थं वचनम्।

---

१७.

१. आवपनमिति छन्दसामन्वर्थसंज्ञा। कियन्ति छन्दांस्यत्रोप्यन्ते। जागतपाङ्क्तवैराजानुष्टुभानि। एकाधिकसूक्तत्वचानि शंसतीत्यर्थः। चतुरुत्तरतृचेषु छन्दसामानुलोम्येन तृचानि प्रक्षन्ते। अत्र तु तद्विपरीत्यम्। अथो एतान्येव पुनर्वाचोनि भवन्तीति श्रुतो दृष्टत्वात्।

२. जगतीच्छन्दस्का।

३. जगतीच्छन्दस्काः पद्येका त्रिष्टुप्[1]।

४. प्राप्त एव शस्यधर्मो ऽनूद्यते विस्पष्टार्थम्।

५. द्वाभ्यामवसाय द्वाभ्यामवसायैकेन प्रणौति पङ्क्तीनामित्येतद्धर्मकम्।

[1] Com. the last three words.

६ अत्रापि मान्न एव धर्मो ऽनूद्यते ।

७. एतानि चत्वारि छन्दांस्यावपनसंज्ञकान्यवरोहेण शस्तव्यानि।

---

१८.

१. आनुष्टुभमिति समूहार्थे भिक्षादित्वादण् (पा० ४. १. ३७. ३८)। अनुष्टुप्समुदायं शंसतीत्यर्थः। समाम्नायं समाम्नायक्रमविशिष्टम्। गायन्ति त्वेत्यारभ्य शाम इत्येत्येतत्पर्यन्तं समाम्नायक्रमेणानुष्टुप्समुदायं शंसतीत्यर्थः। गायन्ति त्वेत्यस्य प्रथमतृचस्यतुरुत्तरतृचेषु शस्तत्वात्परित्यक्तः।

२. आनुष्टुभे गच्छन्ते।

३. अनुष्टुप्समुदाये गच्छन्ते।

४. गच्छन्ते[1]। अस्मिन् सूक्ते षडेवानुष्टुभः॥ मत्स्यपायि ते मह इत्येकपातिनीषु दशसु बृहतीषु शस्तत्वादुत्सृष्टा। उभयोः सूक्तयोरन्त्यात्त्रिष्टुबुत्सृष्टा।

५. गच्छन्ते।

६. अन्त्या पङ्क्तिरुत्सृष्टा।

७. गच्छेते।

८. अन्त्या पङ्क्तिरुत्सृष्टा।

९. अस्मिन्सूक्ते षडेवानुष्टुभ[1]।

---

[1] Com the first six words

१०. अन्त्यस्तृचो गायत्रः परित्यक्तः ।

११. स मन्त्रथा अविदध इति हचमकेवत्तेन सम्रद्धं गायत्र्युत्तमा तया समृद्धमिति श्रुतेः ।

१२. गच्छेते ।

१३. नव गच्छन्ते ।

१४. पञ्च गच्छन्ते ।

१५. तत्सर्वमानुष्टुभमनुष्टुप्समुदायो ऽर्धर्चशः शस्यते ।

---

१९.

१. अथानन्तरमेतत् वक्ष्यमाणं त्रिष्टुभां शतं शंसेत् ।

२. इन्द्रस्य नु वीर्याणि प्र वोचमित्येतत्पञ्चदशर्चं त्रिष्टुप्शते प्रथमं शस्यते ।

३. या न ऊतिरवमा या परमेत्येतत्सवर्चं शंसति ।

४. यो जात एव प्रथमो मनस्वानित्येतत्पञ्चदशर्चम् । चकारः सर्वत्र समुच्चये ।

५. द्वादशर्चं चैतत् ।

६. अष्टर्चपञ्चर्चे विश्वामित्रस्य शंसेद्विश्वामित्रो ऽयमनदपश्यदिति श्रुतेः ।

७. विश्वामित्रस्य शंसेदित्युक्तम् ।

८. एकविंशर्चे वामदेवस्य शंसेदासं घ्नतद्देवासामिति श्रुतेः ।

८. यत्तर्चे वसिष्ठस्य शंसेदासिष्ठं ह्येतद्देवानामिति श्रुतेः। एवमेतत्परिधानीयामक्षकृणने त्रिष्टुभां शतम्।

१०. तत्र त्रिष्टुप्शते वासिष्ठसूक्तादये[१] उदु ब्रह्माण्यैरत श्रवस्येत्येतस्य सूक्तस्य पुरस्तात्पदानुपङ्गान्वक्ष्यमाणान्करोति।' तदर्थं यो व्यतीं रफाणयदित्येतस्मिंस्तृचे प्रथमाया अर्धर्चं शस्त्वा उपरमति। यूयं पात स्वस्तिभिः सदा नोऽयो व्यतीं रफाणयत्सुयुक्तां उप दाशुषे इति।

---

## २०.

१. तक्वो नेता तदिद्वपुरतीदु शक्र ओहतो इति।

२. यथा उपमा यो अमुच्यतेन्द्रो विश्वा अति द्विष इति।

३. यथा भिनत्कनीन ओदनमर्भको न कुमारको इति।

४. यथा पच्यमानं परो गिराधि तिष्ठन्तं रथमिति।

५. यथा स पवन्नद्दियं शृगं पित्रे मात्रे विभुक्रतो[२]। उदु ब्रह्माण्यैरत अवस्या इति।

६. शोंऽसावो२ एवेदिन्द्रं वृषणमिति।

७. त्रिष्टुप्शते मक्षकृणितत्वात्संदेहव्युदासार्थं प्राप्तार्थानुवादः।

८. नितरां परिधानीयां शस्त्वा सम्राळसीत्यादि जपित्वा महदसीत्यादि जपति।

---

१ C ins. वा।  २ ऋग्वेद ८ ६९ १३-१५

## २१.

१. चतुर्विंशतिकृत्वः शस्तापि सूददोहास्ता अस्य सूददोहस इत्येषा सकृदेव गण्यते । यावच्छस्त्रं शस्ते यावत्य ऋचः शस्यन्ते तावतीनां सहस्रं बृहत्यः संपद्यन्त इत्यन्वयः । तं नर्देनोपसृष्टं शंसतीत्युक्तम् । अतो नर्दं व ओदतीनामित्येषा ऋगुपसर्जनी । सा [1]पञ्चविंशतिकृत्वः शस्तापि बृहतीसंपत्त्यर्थं गण्यत एव । ऋते तूष्णीं शंसमिति ब्रह्म जज्ञानमित्येतास्तिस्र ऋचो बृहतीसंपत्तये[2] न गण्यन्ते ।

२. स्तोत्रियायाह्वावो ऽनुरूपाय धाय्यायै प्रगाथाय सूक्ताय निविदे परिधानीयायै चेत्यनेन सप्तसु स्थानेषु प्राप्त आहावस्त्रिष्वेव नियम्यते ।

३. स्थाननियमार्थं सूत्रम् ।

४. पिबा सोममिन्द्र मन्दतुत्वेति ।

५. होत्रा याज्याया वषट्कारे सजपेन कृते प्राक् अनुवषट्कारात् । प्रासर्पकाः प्रेङ्खं अश्नन्ति ईषदिमुञ्चन्ति ।

६ आगच्छन्तमध्वर्युं [समाहृतभक्षहस्तं शाला प्रेङ्खात्प्राङ्][3] प्रेङ्खसंनिधावेवारोहति[4] । न तु धिष्ण्योपरि ।

७. धिष्ण्यस्य पश्चात्सुखासनार्थम् ।

८. यद्दं प्रतिगृह्णन् यमिमं प्रजयमिति मन्त्रं जपति ।

---

१ A ms. चात्मनि प्रत्युषसुपस्था चो । २ A संपत्ते C संपत्तये । ३ C om the words enclosed in brackets. ४ A चवरोहति ।

९. प्रकृत्यनुवादः क्रमार्थः।

१०. अस्मिन्नहनि भवतीत्यर्थः।

११. तस्यातिग्राह्यस्य उप मा यन्तु मज्जय इत्येवमादिना मन्त्रेण भक्षः कार्यः।

१२. क्रमार्थो ऽनुवादः।

१३. प्रकृत्यनुवादसहितविशेषेण सम्यक् प्रोक्तमिति।

---

## २२.

१. अथ माध्यन्दिनसवनक्लृप्तेरनन्तरम्। अतो हेतोर्यतो माध्यन्दिनं सवनं क्लृप्तमित्यर्थः। अतस्तृतीयसवनं कल्पते।

२. प्रकृत्यनुवादो विस्पष्टार्थः।

३. एष प्रतिपदनुचरलक्षणो विधिर्नित्य[१] एकाहात्प्रकृतिभूतादग्निष्टोमात्तायते[२]। अत्रापि क्रियते।

४. सुगमार्थम्।

५. इदमपि तथा।

६. इदमपि तथा।

७. एतस्मिन्सूक्ते एतावान्विशेषः। ऋग्द्वयमर्धर्चशः शस्यं छन्दोविशेषत्वात्। इतरासां पच्छो ऽविशेषात्[३]।

---

१ A नित्य एव यत एकाहाच्च। २ A om. तायते। ३ A ऽविशेषात्। A adds the following passage इद च सूक्त सलिलसवन्धि गौरिर्मिमाय सलिलानीति तनत्यायाम्ब्वभिधानात् सलिलस्यानापप्रत्वाच सूक्तस्य तथा च श्रुति सलिल छोतदेवानामिति।

८. ऐकाहिके निविदं दधातीति श्रुतेः।

९. यद्यपि पञ्चजनीया परिधानीया सर्वत्र वैश्वदेवस्येत्युक्तं तथापि विस्पष्टार्थमनूद्यते।

१०. इतिशब्देन तत्सवितुर्वृणीमह इत्यादि सर्वं परामृश्यते। एवंविधमत्र वैश्वदेवशस्त्रं भवति।

---

२३.

१. अथानन्तरमाग्निमारुतं शस्त्रं वक्ष्यत इति शेषः।

२. सुगमार्थमेतत्।

३. इदमपि विस्पष्टार्थम्।

४. ते सामगा यदि यज्ञायज्ञीयमग्निष्टोमसाम कुर्वन्ति।

५. यज्ञा यज्ञा वो अग्नये देवो वो द्रविणोदा इति स्तोत्रियानुरूपौ प्रगाथौ यज्ञायज्ञीयस्येत्युक्तम् (८. ६. ५)।

६. प्रगाथानां ककुप्कारशंसनमुक्ता सर्वत्र यज्ञायज्ञीयस्येत्युक्तम्।

७. [1]यदि सामगा इलांदसंज्ञकमग्निष्टोमसाम कुर्युरिति शेषः। तदा सति किं स्यादित्याह।

८. संलग्नौ स्तोत्रियानुरूपावित्यर्थः।

९. छन्दोगापेक्षया विकल्पः।

१०. [अग्ने तवेत्यादीनां द्वादशानामृचां शंसनप्रकार इत्यर्थ.।

---

१ C अग्निष्टोमसामे इलांदं साम कु०।

इत्यादि सामाग्ने तवेति प्रथमे तृचे गेयमिति पचे उक्तौ स्तोत्रियानुरूपौ। यदि त्वग्ने तवेति तृचद्वये सुवीरंस्तदाग्ने तवेति षट् स्तोत्रिय अग्निनेति षडनुरूप इति ][१] प्राप्तमेवैतद्विस्पष्टार्थमनूद्यते।

११. छन्दोगा यदि अतिच्छन्दःसु अग्निष्टोमसाम कुर्वन्ति।

१२. एतावपि संलग्नावेव स्तोत्रियानुरूपौ। कियांस्तु विशेषस्तमाह।

१३. अतिधृतिच्छन्दस्त्वात्षष्ठीमुद्धृत्य तत्स्थाने सप्तमीं कृत्वा एवंविधो ऽनुरूपः कार्यः।

१४. छन्दोगापेक्षया विकल्पः।

१५. विविधाश्चत्वारो ऽर्धर्चा भवन्ति यस्मिन् शंसने तद्विचतुरम्। एकेनावसाय सप्तपदानां द्वाभ्यां प्रणौति द्वाभ्यामवसाय द्वाभ्यामिति (७. ९ ६. ११) शस्त्रधर्मेण न पदं च पुनःपदं चान्तरेणावान्यादिति (कौ० ब्रा० २ ३. ६) पदपुनःपदमध्ये ऽवसानरहितविशिष्टाश्चत्वारो ऽर्धर्चा भवन्ति यस्मिञ्छस्त्रे तदेवंविधं विचतुरं शस्त्रम्। शंसनमतिच्छन्दसामग्निं होतारं मन्ये दास्वन्तमित्यादीनां स्तोत्रियानुरूपाणां भवतीति प्राप्तमेवानूद्यते। अपूर्वस्यार्थान्तरस्यासंभवात्।

१६. बृहद्रथन्तरपृष्ठ्यतिरेकेण योन्यनुशंसनस्य निषेधो ऽस्ति। अतो ऽत्रापि योन्यनुशंसनं निषिध्यते। न ह्यन्येषां पृष्ठानां योनिः शस्या भवतीति ह स्माह कौषीतकिरिति श्रुतेः।

---

१ The words enclosed in brackets are omitted in C

१७. सूक्तं भवतीत्यर्थः ।

१८. वैश्वानराय पृथुपाजसे प्रयज्यवो मरुतो वह्निरित्येतान्याग्निमारुतशस्त्रे निविद्धानानि सूक्तान्युक्तानि ।

१९. इतिशब्देन मरुत्वतीयप्रभृतीन्येतस्याह्नः सर्वाणि सूक्तान्युक्तानीत्यर्थः ।

२०. तदेतदहरग्निष्टोमसंस्थं भवतीत्यर्थः। छन्दोगवशादुक्थ्यसंस्थं[१] भवतीत्यर्थः। अथ यदभिजितं (१२. १७. ४) विषुवन्तं बृहत्पृष्ठं विश्वजितं महाव्रतीयमहरित्युक्थ्यानि कुर्युरिति विंशिकान्युक्थानीत्युक्तम् ।

२१. अग्निष्टोमसंस्थमेतदहः परिसमाप्य प्राक् प्रातरनुवाककालादेतां[२] रात्रिं वसन्ति निर्यापारा यथासुखं स्वपन्ति सत्रिणः।

---

२४.

१. सत्रिण इति शेषः ।

२. यः प्रायणीयो निर्ज्ञातस्वरूपः । उदयनीयोऽपि स एव। विशेषस्तूच्यते ।

३. तत्रोदयनीयातिरात्रे मैत्रावरुणः सर्वानृत्विजः सम्बाध्य वस्त्रादिना बद्धा प्रैषानाह । यद्यपि करणौ बाह्य कर्मणां प्रशातारा-

---

[१] C ins अपि।  [२] C °काले ।

विति करस्नशब्दो बाहुवचनस्तथाप्यत्र तदवयवभूतानां नखानां वाचकः करस्नानिति बहुवचनानुपपत्तेः[१]। करे स्नान्ति दहन्तीति करस्ना[२] नखा धातूनामनेकार्थत्वात्। बहुकरस्नसंप्रेषणप्रयोजनम-दृष्टोत्पत्तिरेव।

४. ते दीक्षिता गवामयनस्य प्रथमे मासे दीक्षितवसनानि दीक्षाकाले यानि[३] धृतानि तान्येव वसते वसनार्थं धारयन्ति। वाशब्दो ऽत्रावधारणे।

५. तानि प्रथममासधृतानि दीक्षितवसनानि नवरात्रार्थं कस्मिं-श्चित्प्रदेशे स्थापयन्ति।

६. यानि दीक्षितवसनानि प्रथममासि धृतानि नवरात्रार्थं निहितानि तान्युत्तममासे परिधानार्थं धारयन्ति। केचिदुत्तराय च मासायेत्येवं पठन्ति। तदयुक्तम्। उत्तरमासस्य नवरात्रान्तर्गतत्वाद्विषुवतः परेषु चतुर्ष्वहःसु पुनर्विधानं व्यर्थं स्यात्। तथा पूर्वोत्तरपटलयोर्दीक्षितवसनपरिधाने वैषम्यं स्यात्। यथा[४] प्रथमपटले प्रथममासे दीक्षितवसनानि धृतानि पुनश्च विषुवतः पूर्वेषु चतुर्ष्वहःसु नवरात्रैकदेशभूतेषु एवमेवोत्तरपटले ऽपि विषुवतः परेषु चतुर्ष्वहःसु दीक्षितवसनानि धृत्वा उत्तममासे द्वात्रिंशदहरात्मके धारयितव्यानि। उत्तराय च मासायेत्येतस्मिन्पाठे एवं न स्यात्। अतश्च वैषम्यम्। तस्मादुत्तमाय च मासायेत्ययमेव पाठः साधीयान्।

---

१ A ॰पद्य। २ C ins न। ३ C om है and धानि। ४ C ins हि।

७. अथेतराग्रप्रथमोत्तममासनवरात्रवर्जितान् दश मासान् अजिनानि पाविश्यात्[1] कृष्णाजिनानि दीक्षाव्रतव्यतिरिक्तानि परिधानयोग्यानि कृत्वा वा वसते परिधत्ते। अथवा आर्द्राण्युदकक्लिन्नानि वसनानि वसते परिधत्ते। एवं मासविशेषे वसनविधौ[2] दृष्टप्रयोजनाभावाददृष्टं कल्पनीयम्।

८. तस्मिन्नुदयनीयातिरात्रे संस्थितकर्माणि समाप्तिसंबन्धीनि कर्माणि क्रियन्ते ऽध्वर्य्वादिभिः।

९. अहर्गणे व्युत्क्रामतामन्वहं वसतीवरीग्रहणं चेत्युक्तं (१३. ४. २७. २८) कातीयसूत्रे। तदेतस्मिन्न भवति।

१०. इह मद[3] एव मघवन्नित्यतिशेषमाह द्वितीयप्रभृतिष्विति (१०. १. ११) यदुक्तं तदिह न भवति।

११. सत्त्रिण इति शेषः। सर्वेषां यागाधिकाराद्बहुवचनम्।

१२. सत्त्रिणश्चमसाध्वर्यवश्च।

१३. सत्त्रिभिरिति शेषः।

१४. ते दीक्षिता यदि यज्ञागारेषु समहामतं सत्त्रान्तरं प्रारब्धुकामा भवेयुस्तथा सति शेषमिश्रमादधत एव। डुधाञ् धारणपोषणयोरिति धारणार्थो दधातिरिह ज्ञातव्यः।

१५. यदि सत्त्रान्तरमारप्समाना न[4] भवेयुस्तथा सत्त्रादीप्य[5] प्रविशन्तीत्युक्तत्वात्सर्वान्यज्ञागारानग्निसात्कुर्वते। तथा सति शेषफलकमपि तत्रैव प्रक्षेप्तव्यमित्यर्थः।

---

१ A पाविश्यात्। २ C वसनविशेषविधौ। ३ C इहमद।
४ Com न। ५ A त्वादिष्य।

१६. अवभृथमवैतीत्यत्र निर्ज्ञातपदार्थस्वरूपः।

१७. प्रायणीययोदयनीया व्याख्यातेत्यत्र।

१८. मैत्रावरुणी वशानूबन्ध्या पयस्या वेत्यत्र।

१९. व्यत्ययो बहुलमिति तस्या इति षष्ठ्यर्थे चतुर्थी। अनूबन्ध्याया वपाकर्मणि समाप्ते[१]। वेदेरर्धद्वयमस्ति उत्तरार्धं दक्षिणार्धं च दक्षिणार्धे ऽप्यर्धद्वयम्। पूर्वार्धमपरार्धं च। तस्माद्दक्षिणापरार्धाद्बहिः[२] पश्चाद्भागे पटकुटीं[३] कृत्वा सर्वे दीक्षिताः केशश्मश्रुवपनं कुर्वते।

२०. वैधवपनं कक्षाद्यवर्जमिति निषेधो ऽस्ति। तद्बोधनार्थं सर्वाणीत्युक्तम्।

२१. स्मृतिप्राप्तमपि विशिष्टस्नानार्थमनूद्यते। विशेषश्च बहुकालमस्नातत्वात्सर्वमलापकर्षः।

२२. चन्दनकेसरसुगन्धितिलकमाल्यसुवर्णवस्त्रसुवर्णाभरणादिभिः स्वशरीराणि सुभूषितानि कुर्युः। स्नानमलंकरणं च पत्नीनामपि समानं मलिनताविशेषात्।

२३. स्वलंकृता दीक्षिता उष्णीषान् शिरोवेष्टनानि पर्यस्यन्ति बध्नन्ति। आ केशानां संजननात्। केशोत्पत्तिं मर्यादीकृत्य।

२४. परिशेषं वपायागोत्तरानुष्ठेयं कर्मशेषम्। अनूबन्ध्यायै अनूबन्ध्यायाः संस्थापयन्ति समापयन्ति।

२५. पदयशलान्ता अनूबन्ध्या संतिष्ठते समाप्यते।

---

१ A समाप्तो C समाप्तो। २ A वेदे instead of बहि.। ३ A पर्णकुटीं।

२६. तस्यामनूबन्ध्यायां संस्थितायां समाप्तायां गृहपत्यरण्योः यथासंप्रकीर्णमेकीकृतानामग्नीनां समारोपं कृत्वा ततः ।

२७. गृहपतिप्रभृतयश्शालाद्वोत्करावन्तरेण उपनिष्क्रमणं कुर्वन्ति ।

२८. शामित्रकदेवयजनप्रदेशादुत्तरत उत्तरस्मिन्प्रदेशे उद्धतावोक्षिते सप्तदश अग्न्यायतनानि अग्निस्थानानि कृत्वा ततः ।

२९. तानि गोमयोपलिप्तानि कृत्वा ।

३०. तत उदवसानीयेष्टिमुपक्रम्य गृहपत्यरण्योः सर्वेषां मन्थनं कृत्वा गृहपतिब्रह्मादयः स्वान् स्वानग्नीन्संस्थापयन्ति ।

३१. प्रणीताप्रणयनं कृत्वा गृह्येतिकर्तव्यतया इदं विष्णुरित्यनेन सर्वे पूर्णाहुतीर्जुह्वति ।

३२. नाना उदवसानीयाभिरिष्टिभिर्यजेरन् । य आहिताग्नयो भवन्तीत्यनेन अनाहिताग्नीनामपि सत्रासनं दर्शयति ।

३३. ये अनाहिताग्नयः सत्रिणस्ते गृहपतिमेव उदवसानीययेष्टा[1] उपासीरन् । उदवसानीयाकाले गृहपतिसमीपे उपविशन्तीत्यर्थः । गृहपतिमेवेत्येवकारकरणं नेदिष्ठिप्रतिषेधार्थम् । मुख्यं गृहपतिमेव न नेदिष्ठिनमिति । अथवा तद्देवत्यैः स्थालीपाकैर्यजेरन्नाहिताग्नय इति छान्दोग्यभाष्ये ।

३४. उत्थाय चाग्निष्टोमः सहस्रदक्षिणः पृष्ठशमनीय[2] इति (१२. १४. ७) य उक्तस्तस्य इष्टकयानुष्ठानं भवति ।

---

१ A ॰ष्टा ।　　२ Mss. शम॰ ।

२५. विकल्पेन न भवतीत्यर्थः ।

२६. यस्मिन्पक्षे यजेत तस्मिन्पक्षे एते एव सत्रिण ऋत्विजो भवन्ति । स काममेवेत्याद्येकवचननिर्वादेन[1] गृहपतेरेव पृष्ठशमनीयो[2] भवतीत्यवसीयते । अस्य गृहपतेः पृष्ठशमनीययागे एते एव सत्रिण ऋत्विजः स्युरित्यर्थः । सत्रिणः सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्निति । शाखान्तरश्रुतिस्तु एकैको यजमान अन्यान्यान्षोडशषोडश ऋत्विजो वृत्वा पृथक् पृथक् पृष्ठशमनीयं करोतीत्यपि च ।

२७. तेभ्यः सत्त्वऋत्विग्भ्यः तद्द्याद्देयं स्यात् पृष्ठशमनीये । सहस्रं गावो विभज्य देया इत्यर्थः ।

२८. अत्र उदयनीयातिरात्रसमाप्तौ[3] संवत्सरसत्त्रं समाप्तं भवतीत्यर्थः ।

२९. अथशब्दो मङ्गलार्थः । अतः होत्रनुष्ठानविचारानन्तरं होत्राणामेव मीमांसा होत्रकाणामेव विचारो ऽवशिष्टः । तस्मातः । तस्य होत्रकानुष्ठानस्य अत एव उक्तादेव शास्त्रान्निर्वाह इत्यर्थः । यथा । ऐकाहिकं वा (११.१०.६) प्रातःसवनमित्यत्र वाशब्दस्यावधारणार्थत्वात् प्रातःसवने होत्रकाणामैकाहिकान्येव शस्त्राणि । चतुर्विंशे ऽभिजिति विषुवति इन्द्रपृष्ठे विश्वजिति महाव्रते च षष्ठादिति (१२.६.७) माध्यन्दिने सवने[4] पार्ष्ठिकात्षष्ठादेव ।

---

१ A ॰देन C ॰देन । २ Mss ष्ठ throughout. ३ C ॰रात्रि॰ ।
४ C उभयो सवनयो instead of माध्यन्दिने सवने ।

अथ यदभिजितं विषुवन्तं बृहत्पृष्ठं विश्वजितं महाव्रतीयमहरि-त्युक्थ्यानि (१२. २७. ४) कुर्युश्चातुर्विंशिकान्युक्थानीत्युक्थ्यसंस्थे चातुर्विंशिकानीत्यादि।

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्य-मिति

इति महाव्रतभाष्ये द्वितीयो ऽध्यायः[1] समाप्तः।

१ A ॰कल्पसूत्रव्याख्यायामष्टा॰ C इति शाङ्खायनसूत्रभाष्ये ऽष्टादशो ऽध्याय।

## CORRECTIONS

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| P. | 7, | line | 8 | read | पौषा॰ | instead of | षौषा॰ |
| ,, | 13 | ,, | 21 | ,, | C | ,, ,, | A C om |
| ,, | 14 | ,, | 16 | ,, | ऽदभ्ये॰ | | |
| ,, | 38 | ,, | 4 | ,, | धम्मागम् च मघान | | |
| ,, | 61 | ,, | 18 | ,, | क्षुधा॰ | | |